Madras University Sanskrit Series No. 19.

KHANDADEVA'S

# BHĀṬṬA-DĪPIKĀ

[ UTTARAṢATKA — PART II ]

WITH

# THE PRABHĀVALĪ

OF

## ŚAMBHU BHAṬṬA

*Edited by*

Panditaraja

S. SUBRAHMANYA SASTRI, M.A.,

*Junior Lecturer in Sanskrit,*

*University of Madras.*




UNIVERSITY OF MADRAS

1952

Price Rs. 16/-

मद्रपुरीयविश्वविद्यालयसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १९

# भाट्टदीपिका

## श्रीशम्भुभट्टविरचितप्रभावलीसंवलिता

[ उत्तरषट्कम्—अध्यायाः १०, ११, १२. ]

संपादकः

एस्. सुब्रह्मण्यशास्त्री

न्यायवेदान्तविद्वान्, मीमांसकशिरोमणिः

मद्रपुरीयविश्वविद्यालयः

१९५२

मूल्यम्— रू. [illegible] ]

## अथ दशमाध्यायस्य प्रथमः पादः

(१)—विधेः प्रकरणान्तरेऽतिदेशात्सर्वंकर्म स्यात् ॥ १ ॥ अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

---

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तः तं बालकृष्णं पितरं नमामि ॥ २ ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥ ३ ॥

यद्यप्यत्र गुरोः कृतावपि मयाप्युद्भाव्यते काचनाऽ-
सम्भूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्वियं मे मतिः ॥ ४ ॥

**विधेः प्रकरणान्तरे निर्देशात्।** बाधाभ्युच्चययोः अध्यायार्थत्वे अर्थभेदादध्यायभेदापत्तेः तच्चिन्तयाऽतिदिष्टपदार्थानामियत्ता एका निरूप्यते इति प्राचां ग्रन्थेष्वेकार्थत्वमुक्तम्। तत्रेयत्तायाः न्यूनातिरेकरूपायाः फलतः सिद्धायाः शास्त्रार्थत्वाभावेन निरूपणे प्रयोजनाभावान्न तामादाय तदिति सूचयितुं एकस्य बाधस्यैवार्थलोपप्रत्याम्नाननिषेधैः सिद्धस्य शास्त्रार्थत्वेन निरूपणीयत्वं उत्सर्गतोऽपवादतश्च । अपोदिते च तस्मिन् अभ्युच्चयोऽर्थसिद्ध इति नाध्यायार्थ

**तदेवमूहे सिद्धेऽधुनाऽतिदिष्टानां पदार्थानामु**त्सर्गापवादाभ्यां **विकृतौ बाधो निरूप्यते। तत्र बाधो नाम प्रकृतिसम्बन्धिनः पदार्थस्य विकृत्यङ्गत्वग्राहकप्रमाणाभावः। न तु पदार्थाभावमात्रम्, प्रकृतावेव नित्ये यथाशक्तिप्रयोगे तत्सत्त्वेन बाधव्यवहारापत्तेः। नापि विकृतौ सः, नित्यविकृतिप्रयोगे तदापत्तेः, पशुपुरोडाशे प्राकृतपदार्थाभावेन प्रसङ्गेऽपि बाधत्वापत्तेश्च। अस्ति चेदं कृष्णलचरौ, प्रकृतिसम्बन्धिनोऽवघातस्य वितुषीभावरूपप्रयोजनलोपेन सतोऽप्यतिदेशस्य विकृत्यङ्गत्वग्राहकत्वाभावात्। अस्ति च कुशानां प्रकृतिसम्बन्धिनां शरैः प्रत्याम्नानेन कार्यसिद्धौ अतिदेशेन विकृत्यङ्गत्वाभावात्तेषु। 'न होतारं वृणीते' इत्यादिपर्युदासवशाच्च होतृवरणादेर्विकृत्यङ्गत्वाभावात्तेष्वपि। अत्र विकृत्यङ्गत्वग्राहकप्रमाणाभावस्य घटादावपि सत्त्वादाद्यं विशेषणम्।** नित्यप्रयोगे **प्रसङ्गस्थले चातिदेशस्यैव विकृत्यङ्गत्वग्राहकप्रमाणस्य सत्त्वादन्त्यम्।**

**यद्यपि च प्रसङ्गस्थले अन्यत एवोपकारलाभान्न तस्मिन् प्रयोगे प्रयाजादि**पदार्थस्याङ्गत्वं, **तथाऽपि सर्वत्र प्रकृतौ विकृतौ वा पदार्थानामन्यत उपकारालाभे प्रयाजादिभिस्तत्तत्प्रधानस्योपकुर्यात्, उपकारलाभे तु तैरेव करणनिष्ठयोग्यतां कुर्यादित्येवंविधस्यैव प्रमाणस्य कल्पनान्न विकृत्यङ्गत्वग्राहक**प्रमाणासत्त्वम्। अत एव प्रकृतेरपि **दैववशान्नैमित्तिकविकृतिप्रयोगान्तः पाते प्रसङ्गसिद्धिरव्याहता।**

**अत्र चान्यसम्बन्धिनोऽन्याङ्गत्वग्राहकप्रमाणाभाव इत्युक्तौ विकृतिसम्बन्धिन उपहोमादेः प्रकृतिसम्बन्धिनः प्रयाजादेर्वा ज्योतिष्टोमाङ्गत्वग्राहकप्रमाणाभाववत्त्वात् बाधापत्तेः प्रकृतिविकृतिपदोपादानम्। अत्र च प्रकृतिशब्दो नातिदेशनिरूपकपरः, विकृतिशब्दो वा नातिदेशवत्परः। तथात्वे गृहमेधीयस्य वस्तुतो दर्शप्रकृतित्वाभावेन तत्र प्रयाजादिबाधे निरुक्तलक्षणाव्याप्तेः। अपि तु दर्शादिसम्बन्ध्यङ्गप्रकारकज्ञान**विशेष्यपरो **विकृतिशब्दः, प्रकृतिशब्दश्चोक्तविशेष्यतानिरूपकप्रकारपरः, तच्च ज्ञानं सौर्यादावति-**

---

इत्यभिप्रेत्याह—**उत्सर्गापवादेति। नित्यप्रयोगे इति।** वैकृते इति शेषः। **पदार्थस्याङ्गत्वमिति।** ततश्च प्रसङ्गे प्रयाजादीनामङ्गत्वाभावे विशेषणाभावप्रयुक्तविशिष्टाभावविधया विकृत्यङ्गत्वग्राहकप्रमाणाभावात् बाधत्वापत्तिरित्याशङ्कार्थः। **प्रमाणासत्त्वमिति।** यथा प्रकृतावेव अन्यत उपकारलाभे तज्जनकपदार्थाननुष्ठानेऽपि न तदुपदेशासत्वं, एवं पशुपुरोडाशादिविकृतौ पुरोडाशोद्देश्यकप्रयाजानुकूलकृतौ प्रयाजादेः कारकत्वाभावेन अङ्गत्वस्याभावात् तदननुष्ठानेऽपि न तदसत्वमित्याशयः। **अत एव प्रकृतेरपीति।** एतच्च प्रकृतेर्विकृत्यन्तः पातकथनं न्यायव्युत्पादनमात्रम्, न तु प्रमाणायातमिति स्वयमेम दैववशादित्युक्त्या सूचितम्। **विशेष्यपर इति।** दर्शादिसम्बन्ध्यङ्गवानिति विशिष्टज्ञाननिरूपितविशेष्यताशालिपरो विकृतिशब्दः। तथाविधज्ञानीयविशेष्यतानिरूपकानि यान्यङ्गानि तेषु प्रकारतयाऽन्वितदर्शादिपरः

**देशवाक्यजन्यं प्रमारूपं, गृहमेधीये तु 'आज्यभागौ यजति' इत्येतद्वाक्याभावमापाद्य तार्किकम्। अत एवोभयसाधारण्येन दोषाजन्यज्ञानत्वेनानुगमः। अत एव ज्योतिष्टोमादौ दोषेण** विकृतित्वभ्रमे **प्रयाजादिबाधे नातिव्याप्तिः।**

अस्तु वा **गृहमेधीयवृत्तिप्रयाजादिबाधस्याहवनीयादिबाधवत् स्वरूपेणाध्यायार्थत्वाभावेऽपि प्रसङ्गसङ्गत्यैव दशमाध्यायनिरूप्यत्वम्।**

**एवं च यद्धर्मावच्छिन्नस्य** यत्प्रकृतिसम्बन्धित्वविशिष्टस्य **तद्विकृतिभूतयदङ्गत्वग्राहकप्रमाणविषयत्वाभावः तद्धर्मावच्छिन्नस्य तत्र बाधितत्वमिति निष्कृष्टोऽर्थः फलितः। यदि तु निरुक्तबाधस्याप्यध्यायान्तरे क्वाचित्कं निरूपणं सम्भाव्येत तथाऽपि दशमे तस्य प्राधान्येन निरूपणान्न** काचित्क्षतिः। **इष्यत एव हि तन्त्रावापनिरूपणस्य तृतीये प्रासङ्गिकं निरूपणं** सर्वपृष्ठायां, **नामधेयत्वादेश्च दर्वीहोमादावष्टमादौ॥**

अत एव भाष्यकारोक्**तमपि बाधलक्षणमतिप्रसक्तमपि नातीवासङ्गतं, तथाहि —यद्विशेषादर्शने यस्य शास्त्रस्य यद्विषये यादृशनिश्चयजनकत्वं तादृशनिश्चयस्य तद्विशेष-**

---

प्रकृतिशब्द इत्यर्थः। **विकृतित्वभ्रम इति**। तेन भ्रमेणातिदेशप्राप्तत्वबुद्ध्या केषाञ्चिदङ्गानामबाधितप्रयोजनानां भवति ज्योतिष्टोमेऽनुष्ठानं, न भवति चार्थलोपादिना निवृत्तानाम्। तत्र यो निवृत्तानां बाधः तस्मिन्नलक्ष्ये बाधे नातिव्याप्तिरित्यर्थः। पदेनाहवनीयबाधे आहवनीयस्य सर्वहोमसाधारणतया उपदेशेनैव प्राप्त्याऽतिदिष्टत्वाभावात्, पदहोमस्याप्यन्यनिरूपितविकृतित्वाभावेनातिदेशानुपपत्तेः नातिदिष्टपदार्थप्रकृतिविकृतिघटितं लक्षणं संभवनीत्याशङ्कापरिहारं सूचयितुं पक्षान्तरमाह—**अस्तु वेति**। यथैव आहवनीयबाधोऽलक्ष्यत्वादेव न स्वरूपेणाध्यायार्थः। किन्तु प्रसङ्गतो निरूप्यत्वेन तन्मध्यपतितः, तथा गृहमेधीये प्रयाजादिबाधोऽपीत्यर्थः। **प्रकृतिसम्बन्धित्वविशिष्टेति**। प्रकृतिसम्बन्धित्वघटितेत्यर्थः। तथा च प्रकृतिसम्बन्धित्वेन रूपेण यद्विकृत्यङ्गत्वग्राहकं प्रमाणं तदभाव इति फलिते प्रयाजादितत्तदङ्गव्यक्तेर्दर्शादिसम्बन्धित्वेन रूपेण गृहमेधीयाङ्गत्वग्राहकं प्रमाणमेवाप्रसिद्धमिति न तदभावः सिद्ध्यति; एवमाहवनीयस्यापीति न लक्ष्यत्वं तद्बाधयोरित्यर्थः। **न काचित् क्षतिरिति**। अध्यायान्तरे प्रसङ्गतो निरूपणान्न क्षतिरित्यर्थः। **सर्वपृष्ठायामिति**। सर्वपृष्ठायां षट्कर्माणि। तेषां षण्णामपि रथचक्रमात्र एकः पुरोडाशः ततः स्विष्टकृदिडादि तत्तत्कर्माङ्गत्वादावृत्त्या [1]कर्तव्यमिति पूर्वपक्षं प्रापय्य तन्त्रत्वं सिद्धान्तितं तृतीयपञ्चमपादे। तद्यथैव तृतीयाध्यायाविषयीभूतमपि प्रसङ्गान्निरूपितं एवं बाधोऽपीत्यर्थः। **अत एव भाष्यकारेति**। अन्यत्र प्रसङ्गतो[2] निरूपणेऽपीह प्राधान्येन

---

1. B. त्वादवश्यक

2 A. प्रसङ्गे

दर्शनेनाप्रामाण्यनिश्चय एव तद्विषये तस्य शास्त्रस्य बाधः। भवति च शरपदादिरूपविशेषादर्शनेऽतिदेशशास्त्रस्य कुशाहवनीयादिविषये, तत्तदुद्देश्यसम्बन्धनिश्चायकत्वं तस्य तद्विशेषदर्शनेनाप्रामाण्यनिश्चय इति तद्विषये तस्य शास्त्रस्य बाधः। इदं च यद्यपि रागप्राप्तानृतवदनादिबाधे असम्भवि, तथाऽपि तस्य प्रासङ्गिकनिरूपणीयत्वाङ्गीकारात् न क्षतिः। इदं हि बाधसामान्यलक्षणं अध्यायान्तरस्थश्रुतिलिङ्गादिबाधसाधारणमपि प्राधान्येनेहैव निरूपणीयत्वात् यथा नासङ्गतं तथा ममापीति न कश्चिद्दोषः। परं तु अतिदेशोपजीवित्वस्य भाष्यकारोक्तबाधेऽवच्छेदकावच्छेदेनासम्भवात् तदनङ्गीकारः॥

अस्य च बाधस्योहोपजीवित्वाभावेऽपि ऊहस्यातिदिष्टपदार्थधर्मत्वेनातिदेशप्रत्यासन्नत्वात् तदुत्तरं निरूपणे कृत एवावसर इति ऊहेनापि सङ्गतिः॥

अयं च बाधस्त्रिविधिः अर्थलोपात् प्रत्याम्नानात्प्रतिषेधाच्चेति। तत्रान्त्यभिन्नबाधोपोद्घातत्वेनेदं प्रतिपादनीयम्, यत्प्राकृतपदार्थानामुपकारानादरेण स्वरूपेणैव न विकृतावतिदेशः। येन प्रकृतिदृष्टकार्यासम्भवे विकृतावेवादृष्टं प्रयोजनान्तरं कल्पयित्वा बाधाभावश्शङ्क्येत। विकृतेस्तु फलानुकूलयोग्यताजननार्थमुपकारस्यैवापेक्षितत्वात् पदार्थानां च स्वतः क्षणिकत्वेन योग्यताजननेऽयोग्यत्वादुपकारद्वारैव प्रकृतौ योग्यताजननेनोपकारस्यैव तज्जनने योग्यत्वावसायात् विकृतिभावनया च सादृश्येन प्रकृतिभावनोपस्थितौ तदव्यवहितान्वयिनोऽवान्तरोपकारस्यैव सन्निहितत्वात्तेषामेवाकाङ्क्षासत्तियोग्यत्वैः प्रथमं अतिदेशो, न तु पदार्थानां, तेषां तु तत्पृष्ठभावेन॥

---

निरूपणादेवेत्यर्थः। **रागप्राप्तेति।** रागप्राप्तेऽनृतवदने प्रापकशास्त्राभावान्न शास्त्राप्रामाण्यनिश्चयरूपलक्षणसम्भव इत्यर्थः। पूर्वं नातीव सङ्गतमित्युक्तौ 'नातीव' पदेन सूचितं किञ्चिदसङ्गतत्वं दर्शयति—परन्त्विति। **अवच्छेदकावच्छेदेनेति।** भाष्यकारमते बाधस्वरूपस्यातिदिष्टपदार्थघटितत्वाभावात् कदाचिदपि बाधत्वावच्छेदेनातिदेशोपजीवित्वं न लभ्यत इति अतिदेशोत्तरमेवास्यारम्भे प्रमाणाभावः। मम तु तस्य तद्घटितत्वात् सामानाधिकरण्येनापि लभ्यते तदुपजीवित्वमिति पुनस्तदनन्तरमेवारम्भः, अतस्तस्यानङ्गीकार इत्यर्थः। **अतिदिष्टपदार्थधर्मत्वेनेति।** अतिदिष्टपदार्थगतरूपान्तरात्मकत्वेन ऊहस्यातिदेशप्रत्यासन्नत्वादतिदेशोत्तरमूहनिरूपणे कृते एव बाधस्यावसर इत्यवसरसङ्गतिः, न हेतुहेतुमद्भाव इत्यर्थः। **अर्थलोपादिति।** साध्यसाधनयोरन्यतरस्यासम्भवोऽर्थलोपः, तेन पवमानेष्टिष्वग्निहोत्रहवणीबाधसङ्ग्रहः। आम्नानस्य प्रातिकूल्यं तत्कार्यकार्यर्थान्तरविधायकत्वम्, तादृशार्थान्तराक्षेपकत्वं वा प्रत्याम्नानं, तेन सप्तदशशरावे शरावाणां मुष्टिनिर्वापप्रत्याम्नानत्वसिद्धिः। निवृत्तितात्पर्यकं शास्त्रं प्रतिषेधः, तेन पर्युदास 'इडान्तत्व' शास्त्रसङ्ग्रहो द्रष्टव्यः। प्राभाकरपार्थसारथिमतभेदेन द्वय्यां गतौ प्रथमतः

तत्र च द्वयी गतिः तत्तदवान्तरोपकाराणामेवाग्नेयसंबन्धित्वेन रूपेण क्रोडीकारादाग्नेयोपकारव्यक्तिसमानजातीयोपकारैस्सौर्यस्योपकर्तव्यं इत्येवंविधवाक्यकल्पनयोपकारेष्वतिदिष्टेषु पश्चात्तज्जनकापेक्षायां तज्जनकप्राकृतपदार्थानां पृथगतिदेशकल्पनम्। न चैवं विकृतौ तादृशोपकारबाधेऽपि पदार्थानामेवोपकारान्तरकल्पनया करणापत्तेरूहबाधोच्छेदापत्तिः। उपकारजनकापेक्षायामेव पदार्थातिदेशस्य कल्पनेन तद्बाधे तस्यैवाकल्पनात्, पदार्थातिदेशस्यैव प्रथमतः कल्पनेऽपि वा वचनातिदेशनामातिदेशयोरिव निरूपितरूपाणामेव पदार्थानामतिदेशात् प्राकृतोपकाराभावे उपकारान्तरकल्पनानुपपत्तेश्च।

वस्तुतस्तु उपकारजनकापेक्षायामपि पृथक्पदार्थातिदेशकल्पने गौरवात् पदार्थविशिष्टोपकाराणामेक एवातिदेशः। प्रकृतिवत् तत्तत्पदार्थजन्यांस्तत्तदुपकारान्विकृतौ कुर्यादिति। शास्त्रस्य तु पृथक्पृष्ठतो वाऽतिदेशकल्पने नैव किञ्चित्प्रमाणं पश्यामः। तत्त्वं तु प्राकृतयोग्यताजनकैर्विकृतियोग्यतां प्रकृतिवज्जनयेदित्येवातिदेशः। जनकत्वं चोपकारवत् पदार्थेऽप्यविशिष्टमित्येक एवोभयोरतिदेशः। अतिदेशलक्षणं च पदार्थमादायोपपन्नतरम्। अत एवापेक्षितत्वादिनोपकारणामेवातिदेशः पदार्थानां तु तदाक्षेपादेव करणमिति न तेषां विकृत्यङ्गत्वमित्यपास्तं, तथात्वे उपकारत्वस्याप्यतिदेश्यतावच्छेदककोटिप्रवेशे गौरवापत्तेः। उपकाराणां प्रकृतावपि करणनिष्ठयोग्यतारूपफलप्रयुक्तपदार्थानुनिष्पन्नानामिह पदार्थाक्षेपकत्वकल्पने गौरवाच्च। अतिदेशैक्येऽपि च प्रकृतिवद्भावस्याप्यतिदेशाच्च पदार्थानामुपकारमनादृत्यातिदेशः। एवं च यत्र प्राकृतोपकाराभावस्तत्र तज्जनकपदार्थस्य नैवातिदेशः॥

न चैवमपि प्रत्युपकारं प्रतिपदार्थं वाऽनन्तातिदेशस्य कल्पने गौरवादेकस्यैवातिदेशस्य पदार्थान्तरप्राप्त्यर्थमावश्यकस्य बाधितपदार्थप्रापकत्वापत्तिः, एकस्यैवातिदेशस्य

---

प्राभाकरमतमाह—तत्तदवान्तरेति। प्राभाकरमते पार्थसारथ्युक्तदूषणापत्तिमनूद्य दूषयति—न चैवमिति। पार्थसारथिमतमाह—वस्तुतस्त्विति। ननूपकारातिदेशवाक्येऽस्मिन् प्रकृतौ यादृशोपकारद्वारा अङ्गत्वेनावधारितस्य तादृशोपकारद्वारैवान्याङ्गताबोधकं प्रमाणमित्यतिदेशलक्षणस्याव्याप्तिः। उपकाराणामुपकारान्तराभावात् अङ्गत्वस्याप्यभावाच्चेत्याशङ्कां परिहरति—अतिदेशलक्षणञ्चेति। उभयसाधारण्येनैकातिदेशकल्पने सति उपकारजनकाङ्गभूतपदार्थघटितत्वस्यापि तद्वाक्ये सत्वात् तल्लक्षणमुपपद्यत एव। येषान्तु मते केवलमुपकारस्यैवातिदेशवाक्ये निवेशः तेषां मत एव प्रत्युत तदसम्भव इति सूचयितुं तरपः प्रयोगः। अत एवेति। अतिदेशलक्षणासम्भवादेवेत्यर्थः। प्रकृतियोग्यताजनकैरित्येवं पूर्वनिर्दिष्टेऽतिदेशवाक्ये प्रकृतिवदिति निवेशितम्। तत्कृत्यं दर्शयति—अतिदेशैक्येऽपि चेति।

बाधितपदार्थांशे तात्पर्यविषयत्वाकल्पनात्। अत एव तादृशविषये तच्छास्त्रं यद्वस्तुतस्तद्-दतिरिक्तविषयमेव॥

न चैवं प्रसक्त्यभावात् बाधानापत्तौ सुतरां प्राप्तबाधानापत्तिः, विशेषादर्शन-निमित्तकभ्रान्तिप्रसक्त्यैव तदुभयाङ्गीकारात्। अत एव क्लृप्तस्य बोधकस्य विशेषविषयता-प्रतिबन्धकत्वमेव प्राप्तबाधत्वमित्युक्तं कौस्तुभे। स चायं बाधस्त्रिविध इत्युक्तम्। तत्रान्त्ययोरुदाहरणं वक्ष्यते॥

अर्थलोपाद्बाधस्य तु विकृतिविशेषे 'स्वयं दिनं बर्हिर्भवति' इति। अत्र स्वतश्छिन्न-बर्हिषि लवनप्रयोजनस्य स्तरणोपयोगिमूलाग्रावयवसंयोगनाशस्य प्रतियोग्यभावेनानु-त्पत्तेरर्थलोपेनाध्वर्युकर्तृकस्य प्रयोगान्तःपातिनो वैधस्य लवनस्य तदङ्गभूतासिदादाना-देश्च बाधः॥

यत्तु मूले वर्णकान्तरेण 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलामायुष्कामः' इत्यु-दाहृत्य कृष्णलेषु वितुषीभावरूपप्रयोजनाभावादवघातस्य बाध इत्युक्तं, तत् कृष्णलानां प्रदेयचरुप्रकृतित्वं कृत्वाचिन्तया॥

वस्तुतस्तु—कृष्णलानां सत्यपि घृताधिकरणकथाचनिकाग्निसंयोगमात्ररूपे श्रपणे वैशद्याभावेन कृष्णलप्रकृतिकचरुरूपार्थान्तरोत्पत्तौ प्रमाणाभावात्तेषामेव प्रदेयत्वावगतेः आग्नेयप्रकृतिकत्वेन प्रदेयपुरोडाशधर्माणां पर्यग्निकरणादीनां प्राप्तावपि प्रदेयप्रकृति-भूतव्रीहिधर्माणां तेषु प्राप्तौ प्रमाणाभावात् न वैतुष्याभावप्रयुक्तोऽयं बाधः॥

न च व्रीहिधर्माभावे निर्वापस्याप्यभावात् 'निर्वपेत्' इत्यनुवादानुपपत्तिः प्राकृत-वैधनिर्वापाप्राप्तावप्यर्थप्राप्तलौकिकपृथक्करणरूपनिर्वापस्यैव तेन यागलक्षणार्थमनुवादात्। न च चोदनालिङ्गातिदेशेनावघातप्राप्त्यभावेऽपि चरुशब्दस्य नामातिदेशविधया चरु-धर्मातिदेशकत्वमङ्गीकृत्यावघातप्राप्तिराशङ्कितुं शक्या। चरोः प्रकृतावविहितत्वेन तद्धर्माणामप्रसिद्धेः। सौर्यादावतिदेशप्राप्तानां धर्माणामत्र विधानाङ्गीकारेऽप्यवघातत्वस्य तद्धर्मत्वाभावाच्च॥

---

तदुभयाङ्गीकारादिति। प्राप्तबाधत्वपदार्थाप्रापकत्वरूपोभयाङ्गीकारादित्यर्थः। क्लृप्तस्येति। लिङ्गादिकल्प्यश्रुतीनां क्लृप्तत्वाभावान्न तद्बाधे प्राप्तबाधत्वम्। अस्यैव तु तदिति भावः। यद्यप्य-तिदेशवाक्यस्यापि कल्प्यत्वं तथापि शरवाक्यप्रवृत्तिसमये सत्त्वमात्रेण क्लृप्तत्वं द्रष्टव्यम्। बला-बलाधिकरणे उक्तं कौस्तुभे इत्यर्थः। शतकृष्णलमिति। मध्यमयवत्रयमेकः कृष्णलः, तेन शतसङ्ख्येन तुलितं सुवर्णं शतकृष्णलशब्दार्थः। तद्धर्मत्वाभावाच्चेति। नामातिदेशे हि ये चरुधर्माः तेषां प्राप्तिर्भवेत्। न तु तत्प्रकृतिभूतव्रीहिधर्मावघातादीनां चरुधर्मत्वाभावे प्राप्तिरित्यर्थः।

**न च चरुशब्दोऽयं कृष्णलानां** चरुप्रकृतित्वावगमार्थः **इत्यपि शक्यं वक्तुम्। कृष्णलजन्यद्रव्यान्तरानुत्पत्तौ तेषु तत्प्रकृतित्वस्य बाधितत्वात्। अतश्चरुशब्दोऽयमचरावेवाग्निसंयोगरूपश्रपणवत्त्वसादृश्यात् गौणस्सन्नाग्नेयप्रकृतित्वसाधककठिनत्वापरपर्यायविशदत्वसादृश्योपोद्बलकोऽनुवाद इत्युक्तमष्टमे ॥**

**'घृते श्रपयति' इत्यनेन हि न** श्रपणं विधीयते **विक्लित्त्यभावेन श्रपणासम्भवात् अपि तु लक्षणया घृताधिकरणकाग्निसंयोगमात्रं ; तेन कृष्णलानां प्रदेयत्वात् प्रदेयधर्माः पर्यग्निकरणादयः प्राप्येरन् न त्ववघातादय इति** न तत्र वैतुष्याभावप्रयुक्तो बाधः। **स तु परं सवनीयहविरन्तर्गतलाजाख्यपरिवापे। तत्र हि धानाप्रकृतित्वेन यवानामिव लाजप्रकृतित्वेन व्रीहिषु प्राप्तावघातस्य वैतुष्यासम्भवादेव बाधः। वैतुष्यं हि प्रकृतौ** प्रदेयपाक**साधनत्वेन प्रयोजनं न तु स्वरूपेण, प्रकृते च तस्य प्रदेयपाके विरोधित्वादसम्भवः। सतुषद्रव्यस्यैव भर्जने लाजनिष्पत्तेः। अत एव** धानवत् **भर्जनोत्तरमपि**

---

**चरुप्रकृतित्वावगमेति।** शतकृष्णलपदचरुपदयोः समानाधिकरणयोरेकार्थत्वानुरोधेन शतकृष्णलपदे बहुव्रीह्याश्रयणे आवश्यके अन्यपदार्थे चरौ षष्ठ्युपात्तः सम्बन्धः प्रकृतिस्वरूप एवावगम्यत इत्यर्थः। **न श्रपणं विधीयत इति।** प्रकृतितः प्राप्तं अर्थलोपान्निवृत्तं प्रतिप्रसवविधया विधीयते। अथवा श्रपणान्तरम्। उभयथापि पौष्णे चरौ प्रकृतिभूततण्डुलेषु पेषणपदार्थस्य साकल्येन सम्भवेन तद्विध्युपपत्तावपि इह विक्लित्त्यनुकूलव्यापाररूपस्य श्रपणपदार्थस्यैव विक्लित्त्यसम्भवे साकल्येनानुष्ठातुमशक्यत्वेन तदसम्भवादित्यर्थः। **न तत्र वैतुष्याभावप्रयुक्तो बाध इति।** यद्यपि स्वयं दिते बर्हिषीव प्रतियोगितुषाभावादपि वैतुष्यरूपप्रयोजनलोपोऽस्त्येवेति तत्प्रयुक्तोऽप्ययं शक्यते वक्तुं, तथाप्यतिदेशस्यावघातविषयताप्रतिबन्धकत्वेन अस्याकारणत्वं युज्यते। प्रयोजनालोचनात्पूर्वमेवोद्देश्यतावच्छेदकरूपानाक्रान्तत्वेनावघातप्राप्त्यभावनिश्चयसत्वे तत्प्राप्तिभ्रमस्य कथमप्यनुदयेनेह अर्थलोपात् बाधस्वीकारे प्राप्तबाधत्वानापत्तेः। स्वयं दिते बर्हिषि तु उद्देश्यतावच्छेदकरूपस्य बर्हिष्ट्वादेः सत्वेन तदवच्छिन्नत्वयोग्यतावत्त्वात् प्राप्तस्य लवनस्य केवलं प्रयोजनलोपादेव बाध इति वैषम्यम्। **प्रदेयपाकेति।** सतुषस्यैव पुरोडाशकरणे मध्ये तुषाणां विक्लित्त्यसम्भवेन पुरोडाशपाकासम्भवापत्तेः वैतुष्यं पाकसाधनत्वेनैव प्रयोजनमित्यर्थः। यद्यपि तण्डुलनिष्पत्तिरेवास्य प्रयोजनं तथापि तस्या अपि तेनैव[1] रूपेण प्रयोजनत्वात् अन्ततस्तेनैव रूपेण प्रयोजनत्वमित्यभिप्रायेणेदम्। **धानावदिति।** अयञ्च वक्ष्यमाणद्वितीयपादान्त्याधिकरणदर्शितभाष्यकारवार्तिककारमतभेदेनान्वयदृष्टान्तो व्यतिरेकदृष्टान्तश्च ज्ञेयः। यः पूर्वं लाजादि-

---

1. A. तस्या विहितेनैव

**नाघाघातः लाजत्वब्याघातापत्तेः। अत एव तदा नखादिनैव लौकिकं वितुषीकरणं; अतस्तत्र युक्तो वैतुष्याभावप्रयुक्त एव तदसम्भवः॥**

अत एवार्थलोपस्थले **नार्थस्य स्वरूपेणैव लोप उपयोगी, अपि तु कथंचिदपि विशेषणाभावप्रयुक्तो विशेष्याभावप्रयुक्तोऽन्यप्रयुक्तश्चेत्यादि द्रष्टव्यम्। वस्तुतस्तु तत्रापि न द्वारलोपाद्बाधः श्रपणविध्याक्षिप्तोपादानकतण्डुलरूपद्वाराभावेन व्रीहिधर्माणामतिदेशेनाप्रवृत्तेः; अपि तु लाजत्वान्यथाऽनुपपत्त्यैव तत्र व्रीहिमात्रग्रहणमित्युक्तं कौस्तुभे॥**

**एवं वा—'वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान्।** तं बर्हिषदं कृत्वा **शम्यया स्फ्येन च व्यूहेदिदमहममुं चामुं च व्यूहामीति। यं द्विष्यात्तं** ध्यायेत् **च यदधोऽवमृद्येत्**

---

द्रव्येषु अवघातस्य[1] बाध उक्तः, यश्च प्रत्याम्नाननिषेधातिरिक्तनिमित्तेन बाधः क्वचिदग्रे निरूपयिष्यते, स सर्वोऽपि पूर्वोक्तनिमित्तत्रयव्यतिरिक्तस्य निमित्तान्तरस्यानुपलम्भात् कथञ्चिदर्थलोपनिमित्तकृत एवेति सूचयितुं विवक्षितार्थलोपस्वरूपं विविच्य दर्शयति—**अत एवार्थलोपस्थल इति।** यथा कृष्णले विक्लत्त्यसम्भवादेव स्वरूपेणैवार्थस्य विशेष्यभूतस्यैव लोपात् श्रपणबाधे स्वरूपेणैव अर्थलोपो निमित्तं भवति तथैव सर्वत्रेति नार्थः। तथात्वे कृष्णलेषु स्वयं दिते बर्हिषि च तुषाभावरूपवैतुष्यस्य संयोगनाशस्य च प्रत्यक्षमुपलम्भेनार्थलोपानापत्तेः। अतः संयोगनाशरूपार्थस्य [तुषाभावस्य च] संयोग[ादि]रूपविशेषणाभावप्रयुक्त एव वैतुष्य[ादि]रूपार्थलोपः। भर्जनोत्तरं सतुषलाजावस्थायान्तु तुषसत्वेऽपि [2]लाजत्वरूपान्यप्रयुक्त एव वैतुष्यार्थलोपः। [3]**वस्तुतस्तु** तण्डुलनिष्पत्तिद्वारा प्रदेयसिद्ध्यर्थत्वेनैव वैतुष्यस्य प्रयोजनत्वोपपत्तेः प्रदेयलाजस्वरूपसिद्ध्यर्थत्वाभावात् [4]प्रत्युत तद्विघातकत्वादेव तल्लोपो युक्तः।

**परमार्थतस्तु** भर्जनात्पूर्वमुत्तरं वा प्राकृतप्रणाडीद्वारा अपूर्वसाधनत्वावच्छिन्नोद्देशेन विहितावघातस्योद्देश्यतावच्छेदकरूपानाक्रान्तेषु लाजप्रकृतिव्रीहिषु कृष्णलवदेव नैव प्राप्तिरिति नेदमप्युदाहरणम्। किन्तु चर्वादिषु पेषणबाध एवेति ध्येयम्। एवञ्च यत्र द्वारलोपादिप्रयुक्तो बाधः सोऽर्थलोपप्रयुक्त एवानया रीत्या ज्ञातव्य इति तात्पर्यार्थः।

**एवं वा**

**शम्या** चतुरङ्गुला, **स्फ्यः** काष्ठखड्गः। **तं बर्हिषदं कृत्वेति।** अत्र च नवचरुनिष्पत्त्यनन्तरमिदं विभागापरपर्यायं व्यूहनं शम्यादिगुणकं विधीयते, तदानीं प्रकृतौ व्यूहन-

---

1. A. adds वा
2. A. reads लाजत्वनाशरूप
3. A. तत्फलं
4. B. प्रकृतः A. प्रतत

यच्च स्रुच्य आश्लिष्येत्। तद्विष्णव उरुक्रमायावद्यति' इति श्रुतम्। अत्र चतुर्थवाक्ये तच्छब्दपरामृष्टद्विविधतत्तद्द्रव्यदेवतोभयविशिष्टस्य यागस्य प्रक्षेपांशे तत्तद्द्रव्यसंस्कारकस्यावद्यतिना लक्षणया वैश्वदेवयागाङ्गतया विधानम्। तत्र च कर्मसमानाधिकरणस्य यच्छब्दस्य निमित्तत्वप्रतिपादकत्वाभावेऽपि यत्तच्छब्दाभ्यामेकवाक्यत्वप्रतीतेः 'यदधोऽवमृद्येत्' इत्यादिलिङा प्रयोजकत्वापरपर्यायहेतुत्वाभिधानात् तस्य शेषित्वेनासम्भवे निमित्तत्वावसायात् तद्भेदे च वाक्यभेदावश्यकत्वादनुषङ्गेण निमित्तद्वयेऽप्येकं नैमित्तिकविधानं, तेनान्यतरसन्निपातेऽप्येतत्। उभयसन्निपाते तु तन्त्रेण कालैक्यात्॥

अत्र चाष्टमोक्तरीत्यैकदेवताकत्वात् सत्यपि शब्दद्वये आग्नेयविकारत्वात्तदीयधर्मप्राप्तौ वैश्वदेवतन्त्रमध्यपातेन प्रयाजादीनां प्रसङ्गसिद्धावपि आवाहनस्य वैश्वदेविका-

---

स्याभावेन प्राप्त्यभावात् व्यूहनान्तरत्वकल्पने गौरवापत्तेश्च। किन्तु यस्मिन्नेव काले प्रकृतौ यदेव व्यूहनं विहितं तदेवातिदेशप्राप्तेः पूर्वं तत्तद्गुणविशिष्टत्वेन विधीयत इति चतुर्धाकरणकालीनं व्यूहनं चरुं शलुरूपं ध्यात्वा तन्नाम गृहीत्वा 'इदमहम्' इति मन्त्रेण कुर्यात्। तथाच प्रकृतिप्राप्तहस्तकरणत्वस्य बाध इत्यर्थः फलितः। बर्हिषदं कृत्वेति तु अतिदेशप्राप्तबर्हिषत्करणस्यानुवादः, अथवा स्थालीस्थस्यैव चतुर्धाकरणकर्तव्यतायाः प्रकृतौ विकल्पिताया निवृत्त्यर्थो विधिर्वा। एवं चतुर्धा विभागे क्रियमाणे यदवमर्दितं भूमौ पतति यदि वा स्रुच्यमाश्लिष्यति तदा तद्द्रव्यको यागो विष्णवे उरुक्रमायेत्यनेन विधीयते। तद्व्यूहनकाले इदमिदमहं ब्रह्मभागं व्यूहामीत्यादिप्रयोगः श्रीविद्यारण्यस्वामिभिरधिकरणमालायां लिखितः।

वस्तुतस्तु तदानीं ब्रह्मभागत्वेनोल्लेखे मानाभावात् अमुं शलुं व्यूहामि अमुं शलुं व्यूहामीति द्विरुच्चारणेन समुच्चितशम्यास्फ्यायुधाभ्यां रेखाद्वयकरणेन चतुर्धाकरणे कृते 'इदं ब्रह्मण' इत्यादिव्यादेशमात्रानुष्ठानं युक्तम्। सर्वथा चतुर्धाकरणकाल एवेदं न तु पूर्वम्। एवञ्च निमित्तस्य भावित्वेन सन्देहात्र वैश्वदेविकावाहनकाले विष्णोरुरुक्रमस्यावाहनमिति सिद्धान्तो घटते। इतरथा चरुनिष्पत्त्यनन्तरमेव व्यूहने सति तदनन्तरमनुष्ठेयस्य आवाहनस्य काले निमित्तसदसद्भावनिश्चयस्यैवापत्तौ सन्देहानुपपत्तेः। यद्यपि वैश्वदेविकचरोरनेकदेवत्यत्वान्नाग्नेयविकृतित्वेन चतुर्धाकरणप्राप्तिः' तथापि बोधायनमते आग्नेयातिरिक्तेऽपि तद्विधानान्नासम्भवः इति। कथं तथाभूतोऽधः पातः संश्लेषो वा निमित्तमित्येतत्प्रदर्शयितुं वाक्यार्थं वर्णयति- अत्रेति। नैमित्तिकविधानमिति। तथाच वाक्यभेदाङ्गीकारात् अभ्यासात्कर्मभेद इति भावः। अष्टमोक्तरीत्येति। देवतात्वाश्रयप्रतिपाद्यार्थैकत्वरूपैकदेवतात्वस्य सादृश्यघटकत्वे-

वाहनेनैतदीयदेवतास्मरणासंभवात् प्रसङ्गसिद्ध्यनुपपत्तेरवश्यकर्तव्यस्य तस्य किं वैश्वदेविकदेवतावाहनकाले तदनन्तरं करणं उत निमित्तसम्पातानन्तरमेव कालं क्रमं च बाधित्वेति चिन्तायां—

क्रमकालबाधे प्रमाणाभावात् निमित्तसन्निपातात्पूर्वमेव कार्यम्। न च स्थालीस्थचरुव्यूहनेऽधोवमर्दनादेर्नियतत्वाभावात् निमित्तासम्पाते यागाभावेनावाहितदेवतायाः कोपापत्तिः, नवमे विग्रहादिनिराकरणेन तदनापत्तेः। न चैवमप्यनुष्ठापकस्य निमित्तस्याभावात् तदानीमकरणं, निमित्तस्य फलकामनावत् प्रधानमात्रानुष्ठापकतया तदङ्गानुष्ठापकत्वाभावात्। इतरथा विकृतौ प्राकृतस्य निमित्तस्य फलकामनाया वा अभावेन प्रयाजादीनां करणानापत्तेः। अङ्गिभूतस्य प्रधानस्यैवाङ्गप्रयोजकत्वसम्भवे तत्प्रयोजकस्य फलकामनादेः प्रयोजकत्वकल्पने गौरवाच्च॥

न च तर्हि प्रधानस्यापि तदानीमभावादावाहनकरणानापत्तिः, प्रकृताविव भाविन एव तस्यावाहनानुष्ठापकत्वेन तदुपपत्तेः। न च निमित्तसन्देहेन तस्य भावित्वे नियामकाभावः, भावित्वसन्देहस्य प्रतिबन्धकवशेन प्रकृतावपि सत्त्वेन तत्सम्भावनाया एवावाहनानुष्ठापकत्वादिति प्राप्ते—

सत्यपि प्रतिबन्धकादिना भावित्वसन्देहे स्वानुष्ठापकसत्त्वप्रयुक्तप्रधानचिकीर्षाया एव प्रकृतावावाहनाद्यङ्गप्रयोजकत्वात्। इह च स्वानुष्ठापकस्य निमित्तस्यासत्त्वेन तत्प्रयुक्तप्रधानचिकीर्षाया असत्त्वान्न तदानीमावाहनानुष्ठानं निमित्तानन्तरं तु तत्करणं भवत्येव। न च क्रमकालयोर्बाधः, पशुपुरोडाशीयाज्यभागादेरिव तद्बाधे बाधकाभावात्॥

वस्तुतस्तु—कालो नैव केनचिद्विहितः। क्रमस्त्वाज्यभागदेवतावाहनानन्तर्यरूपो भवन्मतेऽपि बाध्य एव, वैश्वदेविकदेवतावाहनानन्तरं क्रियमाणत्वात्। तदानन्तर्य

---

नोक्तत्वादित्यर्थः। कालं क्रमं चेति। दर्शपूर्णमासयोर्हि जौहवाघारानन्तरं आज्यभागदेवतयोरावाहनं, तदुत्तरं प्रधानदेवतावाहनं, तदुत्तरं आज्यभागप्रयाजाननुष्ठाय प्रधानानुष्ठानमिति क्रमः। स एव वैश्वदेवे विकृतिभूतनैमित्तिके चास्मिन् यागद्वयेऽतिदेशतः प्राप्ताज्यभागयोः प्रयाजादिवत् प्रसङ्गसिद्धः तद्देवतावाहनानन्तरं यथा वैश्वदेविकदेवतावाहनं प्रधानसम्बन्धित्वादनुष्ठेयं एवं विष्णुरुरुक्रमदेवतावाहनमपि—इत्येवं यः क्रमः, यश्च सामिधेनीप्रयाजयोः मध्यतनस्तदीयः कालः तदुभयानुग्रहः कार्यः, अथवा तयोर्बाध इति संशयकोटितात्पर्यार्थः। स्वानुष्ठापकेति। स्वपदं यस्य चिकीर्षा तत्परम्। पशुपुरोडाशीयाज्यभागादेरिवेति। पशुयागीयानि यान्यङ्गानि तेषां पुरोडाशाङ्गत्वेन अननुष्ठानं वक्ष्यते। अत एव पशावाज्यभागयोर्निषेधात् तयोरननुष्ठाने

तु नैवातिदेशेन प्राप्तं, विकृतावेव मुख्यक्रमेण क्रमकल्पना तु तस्य निमित्तानन्तर्यरूप-स्थानविरोधादशक्यैव। अतो नात्र कस्यचित्प्राप्तस्य बाधो न वाऽर्थलोपादीति ध्येयम् ॥१॥

---

## (२)—इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

अन्वारम्भणीया किं ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयादिष्वतिदेशप्राप्ततया कर्तव्या उत लुप्तद्वारकत्वान्निवर्तत इति चिन्तायां—

कर्तृसंस्कारद्वारा दर्शपूर्णमासारम्भाङ्गमियमिष्टिरिति स्थितम्। आरम्भश्च यद्यन्वाधानादिरूपः प्रथमः पदार्थः यदि वा वृत्तिकारमतानुसाराद्ध्यवसायरूपस्सङ्कल्पः सर्वथा तस्य दीक्षणीयादौ सत्त्वात्कर्तव्यैवान्वारम्भणीया। यदि तु नवमोक्तरीत्या अप्रवृत्तप्रवर्तनमेवारम्भः तद्विषयत्वात्तु पदार्थेष्वारम्भशब्दप्रयोगः, तच्च नवमोक्तरीत्यैव दर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंसासमानकालीनतदवच्छिन्नोद्देश्यताकप्रवृत्ति--विषयत्वं, अन्यस्य नवमोक्तरीत्यैव दुर्वचत्वात्, —अत्र पदकृत्यान्यपि तत्रैव बोध्यानि; तदाऽपि तस्य दीक्षणीयादौ सत्त्वादन्यविकृतिष्विव कर्तव्यैव सा ॥

तथा हि—दीक्षणीयाप्रथमप्रयोगवृत्तितदीयपदार्थे अस्ति दीक्षणीयात्वावच्छिन्नो-द्देश्यताकप्रवृत्तिविषत्वं दीक्षणीया मे जायताम्' इत्याकारकेच्छयैव तद्विषयकप्रवृत्तेर्जाय-मानत्वात्, तदानीं तादृशप्रवृत्त्यन्तरस्याजातत्वेनोक्तविधध्वंसासमानकालीनत्वाच्च। अतश्च दीक्षणीयया यक्ष्ये' इत्येवंविधतत्सङ्कल्पात्पूर्वमेव कर्तव्याऽन्वारम्भणीयेति प्राप्ते—

---

जौहवाघारानन्तर्यं प्रधानदेवतावाहने भवति। न त्वाज्यभागदेवतावाहनानन्तर्यम्। पशुपुरो-डाशार्थन्त्वावश्यके आज्यभागानुष्ठाने तु जौहवाघारानन्तर्यरूपो यः तदीयदेवतावाहने क्रमः स यथा बाध्यते, अस्य तदानीमनुष्ठानाप्रसक्तेः, एवमिहापि वैश्वदेविकावाहनकाले तदावाहनानुष्ठाना-प्रसक्तेरेव तदानन्तर्यं बाध्यत इत्यर्थः। **स्थानविरोधादिति।** निमित्ते सति नैमित्तिकस्या-नुष्ठेयत्वेनोपस्थितौ तस्यानुष्ठानं स्थानक्रमेण भवति। तेन दुर्बलो मुख्ययोरेव क्रमो न भवतीति न तेन क्रमेणाङ्गेषु क्रमकल्पना शक्येत्यर्थः। स्पष्टार्थमन्यत्।

---

**इष्टिरारम्भसंयोगात्।**

**अन्यविकृतिष्विवेति।** न दर्शपूर्णमासप्रकृत्यारम्भेण सर्वविकृत्यारम्भ इति आरम्भभेदात् विकृतिष्वप्यन्वारम्भणीया भवतीति **आरम्भणीया विकृतौ न स्यात् प्रकृतिकाल-**

'दीक्षणीया मे जायताम्' इत्याकारकेच्छानुत्पत्तावपि 'साङ्गो ज्योतिष्टोमो जायतां' इत्याकारकेच्छात एव 'दीक्षणीयया यक्ष्ये' इत्येवंविधसङ्कल्पविषयकप्रवृत्तेस्सम्भवेन तादृशसङ्कल्परूपाध्यवसायस्य दीक्षणीयात्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावात्। सा हि साङ्गत्वप्रकारिका इच्छा न तु दीक्षणीयात्वप्रकारिका अतस्तज्जन्यप्रवृत्तौ दीक्षणीयात्वावच्छिन्नोद्देश्यताकत्वाभावात् तद्विषयीभूतस्योक्तविधसङ्कल्पस्य निरुक्तप्रवृत्तिविषयत्वाभावेन तद्द्वारलोपात् नान्वारम्भणीया।

अत एव 'साङ्गेन ज्योतिष्टोमेन यक्ष्ये' इत्येवंविधमहासङ्कल्पविषयकप्रवृत्तेरेव वस्तुतो दीक्षणीयाविषयकेच्छाजन्यतया दीक्षणीयोद्देश्यताकत्वेन तत्सङ्कल्पात्पूर्वमेव दीक्षणीयाद्यङ्गत्वेन सा कार्येत्यपास्तं, तदिच्छायाः 'साङ्गो ज्योतिष्टोमो मे जायताम्' इत्याकारकत्वेन अङ्गत्वेन रूपेण दीक्षणीयाविषयत्वेऽपि दीक्षणीयात्वेन तद्विषयत्वाभावात्। अतो द्वाररूपार्थलोपान्न ज्योतिष्टोमारम्भे न वा दीक्षणीयारम्भे सा कार्येति सिद्धम्। विस्तारेण चैतदस्माभिर्नयविवेकविवरण एव निरूपितम् ॥ २ ॥

---

मध्यत्वात् कृता पुनस्तदर्थेन इत्यधिकरणे द्वादशद्वितीयपादे वक्ष्यते। तद्वत् विकृतित्वाविशेषादिहापि भवेदिति पूर्वपक्षकरणात् तदपवाद इति सूचितम्। तद्विषयत्वाभावादिति। वस्तुतस्तु वैकल्पिकाना आदितः अवधारणसिद्ध्यर्थं अमुकसाम्ना अमुकदक्षिणेनेत्येव सङ्कल्पे उल्लेखेऽपि साङ्गेनेत्यर्थस्योल्लेखे प्रमाणाभाव एवेति ध्येयम्। न ज्योतिष्टोमारम्भ इति। यदारम्भेण [1]सर्वाङ्गानुष्ठानं तस्य ज्योतिष्टोमस्य आरम्भकर्तृसंस्कारार्थत्वेनापूर्वे ज्योतिष्टोमेऽनतिदेशादेव न सा। यत्र तु दीक्षणीयादौ सम्भव्यतिदेश तत्रारम्भरूपद्वाराभावादेव न सेत्यर्थः।

---

1 B. सर्वेणानुष्ठान

## (३)—प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥

**अत एव यत्र राजसूयादौ इष्टिपशुरूपाणि प्रधानान्येवान्यप्रधानसंयुक्तानि, तत्र सत्यपि** तेषां प्राधान्ये, तत्तदिष्ट्या यक्ष्ये' इत्यादिसङ्कल्पस्य **'तत्तदिष्टिर्मे जायताम्' इत्याकारकेच्छामन्तरेणापि 'राजसूयो मे जायताम्' इत्याकारकराजसूयत्वप्रकारकेच्छाजन्यप्रवृत्त्याऽप्युत्पत्तिसम्भवेन तत्तदिष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावात् न ततः पूर्वं तावदारम्भणीया, न वा राजसूयेन यक्ष्ये' इति महासङ्कल्पात्पूर्वं, तस्यापि राजसूयत्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेन तत्तदिष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावात्। न हि राजसूयत्वं दर्शपूर्णमासनिष्ठप्रकृतितानिरूपितविकृतितावच्छेदकं, तस्य सोमयागेष्वपि सत्त्वेनातिप्रसक्तत्वात्। अत एव यत्र चातुर्मास्यादावाग्रयणादौ वा नातिप्रसक्त चातुर्मास्यत्वादि, तत्र प्रतियागं भिन्नातिदेशकल्पने सत्यपि तस्योद्देश्यतावच्छेदकत्वे न काचित् क्षतिः॥**

---

**प्रधानाच्चान्यसंयुक्तात्।**

**तेषां प्राधान्ये इति।** अनेन च न भवत्वन्याङ्गतयाऽनुष्ठीयमानदीक्षणीयादिषु पृथगारम्भाभावात् आरम्भणीया। समप्रधानतयाऽनुष्ठीयमानदर्शपूर्णमासविकृतिषु आरम्भस्य साधारण्यादापद्यत एव द्वारसत्वे सेति विशेषाशङ्काऽधिकरणभेदे हेतुत्वेन सूचिता। अत एव विशेषाशङ्काया सुनिरस्यत्व सूचयन्नेव सिद्धान्तेनैवोपक्रमते—**तत्तदिष्ट्या यक्ष्य इति।** प्रकृतौ हि दर्शपूर्णमासपदाम्नानात् प्रकरणाच्च दर्शपूर्णमासारम्भाङ्गत्वे सति दर्शपूर्णमासत्व अविवक्षित सदपि अविवक्षित व्रीहित्व स्रुवादिव्यावृत्तिमिव करोत्येव सोमयागादिव्यावृत्तिम्। ततश्चेष्ट्यारम्भार्थेयमिति शास्त्रार्थावधारणमासीत्। प्रकृते यदि राजसूयत्व इष्टित्वसमनियतमेव भवेत् तदा तत्त्वावच्छिन्नस्य दर्शपूर्णमासविकृतित्वात् उद्देश्यतावच्छेदकरूपाक्रान्तत्वात् तदारम्भे प्रसज्येत सा। तदेव तु नास्तीत्याह—**न हीति।** तथाच येन रूपेणारम्भो न तद्रूपावच्छिन्ना दर्शपूर्णमासविकृति प्रसिद्धा, येनातिदेशात् सा प्राप्येत। येन तु रूपेण विकृतित्वमनुमत्यादीनां तत्रोद्देशो सत्यपि न द्वारभूतारम्भसत्वमिति भाव। ननु चातुर्मास्यत्वरूपेण विकृतित्वाभावे तदारम्भे कथमारम्भणीयाप्राप्तिरित्याशङ्का परिहरति—**अत एवेति।** चातुर्मास्यत्वस्य आग्रयणत्वस्य चानेकप्रधानवृत्तित्वेऽपि इष्टित्वसमनियतत्वाव्यभिचारेण तद्विषयसङ्कल्पस्य

**वस्तुतस्तु प्रकृतावपि दर्शपूर्णमासत्वं** नोद्देश्यतावच्छेदकं **अपि त्वाग्नेयत्वादिकमेव कालैक्यात्तु** तन्त्रेण करणम्। 'दर्शपूर्णमासाभ्यां **यक्ष्ये' इत्यस्यापि च आग्नेयादिभिर्यक्ष्ये इत्येवार्थः। ततश्च विकृतावपि चातुर्मास्यादौ तत्तद्यागत्वमेवोद्देश्यतावच्छेदकं कालैक्याच्च तन्त्रेण करणम्। 'चातुर्मास्यैर्यक्ष्ये' इत्यस्य च तत्तद्यागैर्यक्ष्ये' इत्येवार्थ इति** न कश्चिद्विरोधः। **अतस्तत्र भवत्येव तदारम्भेऽन्वारम्भणीया॥**

**प्रकृते तु सत्यपि तत्तदिष्टित्वादेरुद्देश्यतावच्छेदकत्वे तत्तत्सोमत्वादेरप्युद्देश्यतावच्छेदकत्वात् नान्वारम्भणीया। प्रकृतौ हि 'दर्शपूर्णमासावारप्स्यमाणः' इत्यनेन दर्शपूर्णमासयोर्विशेषणत्वनिर्देशादपूर्वसाधनत्वलक्षणावेळायां प्रकृतापूर्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नत्वे सति** निरुक्तकारणतानवच्छेदकानवच्छिन्नत्वमुद्देश्यता**विशेषणं विवक्षणीयं, अतश्च राजसूये तादृशोद्देश्यताभावान्नान्वारम्भणीया। अत एव प्रकृतौ 'अग्निहोत्रं दर्शपूर्णमासौ च मे जायेताम्' इत्याकारकेच्छाऽपि नोद्देश्यताघटिका। अन्यथा अग्निहोत्रीयप्रथमप्रयोगीयाद्यपदार्थस्यापि तादृशोद्देश्यताकप्रवृत्तिविषयत्वात् तत्राप्यन्वारम्भणीयापत्तेः। अतस्तादृगिच्छोत्तरं 'दर्शपूर्णमासौ जायेताम्, इत्याकारिकेच्छा जायते; सैव उद्देश्यताघटिकेति ध्येयम्॥ ३॥**

---

भवतीष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वमिति न बाधकमिति भावः। **नोद्देश्यतावच्छेदमिति।** तथात्वेऽसोमयाजिनोऽग्नीषोमीयाद्यकरणे सति [1]तद्विकृतौ अन्वारम्भणीयानापत्तेरित्यर्थः। **तन्त्रेण करणमिति।** आरम्भणीयाया इति शेषः। कथं तर्हि दर्शपूर्णमासाभ्यां यक्ष्ये इति सङ्कल्पस्य आग्नेयोद्देश्यकप्रवृत्तिविषयत्वमित्यत आह—**दर्शपूर्णमासाभ्यामिति। न कश्चिद्विरोध इति।** ततश्च 'चातुर्मास्यैर्यक्ष्ये' इति सङ्कल्पस्य तत्तदिष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वे न विरोध इत्यर्थः। **निरुक्तकारणतानवच्छेदकेति।** अपूर्वं चेह यदिच्छाविषयत्वेनोद्देश्यं तज्जन्यत्वेन ग्राह्यम्। तथा 'दर्शपूर्णमासौ च भूयात्' इतीच्छाविषयजन्यं यदपूर्वं तन्निष्ठकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नत्वमाग्नेयाद्युद्देश्यतायां यथाऽस्ति तथा तादृशकारणतानवच्छेदकसोमत्वानवच्छिन्नत्वमप्यस्ति। प्रकृते तु 'राजसूयो मे जायताम्' इतीच्छाविषयत्वरूपेणोद्देश्यता अनुमतीष्टिजन्यापूर्वनिष्ठकार्यतानिरूपितकारणतावच्छेदकावच्छिन्ना। तथा न निरुक्तकारणतानवच्छेदकसोमयागत्वानवच्छिन्ना। सोमयागस्यापि तादृशैकेच्छाविषयत्वात्। अतो न तदारम्भेऽन्वारम्भणीयेति।

---

1. A. तदारम्भे तद्विकृतौ वा

(४)—तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥ न वाऽङ्गभूतत्वात् ॥ ७ ॥ एकवाक्यत्वाच्च ॥ ८ ॥

एवमन्वारम्भणीयायां सत्यपि दर्शपूर्णमासप्रयोगबहिर्भावे **नैवान्या अन्वारम्भणीया** कार्या, 'अन्वारम्भणीयेष्ट्या यक्ष्ये' इति सङ्कल्पस्य 'साङ्गौ दर्शपूर्णमासौ मे जायेताम्' इत्याकारकेच्छाजन्यप्रवृत्त्याऽप्युत्पत्तिसम्भवेनान्वारम्भणीयात्वावच्छिन्नोद्देश्यताकप्रवृत्ति — विषयत्वाभावात्। अत एव वैमृधे **चातुर्मास्याद्यङ्गभूतवैश्वानरपार्जन्याधिकारपश्वादौ पवमानेष्टिष्वपि च नान्वारम्भणीया।** अन्वारम्भणीयायां तु **तृतीयोक्तपवमानेष्टिन्यायेनापि नान्वारम्भणीया। एवं वैमृधेऽपि न वैमृधः ॥ ४ ॥**

---

तस्यान्तु स्यात् प्रयाजवत्।

**प्रयोगबहिर्भावे इति।** दीक्षणीयाद्यङ्गेष्टीनां प्रधानप्रयोगान्तःपातात् प्रधानारम्भात् पृथगारम्भाभावेन मा भूदारम्भणीया। अन्वारम्भणीयायास्तु य इष्ट्येति वाक्यप्राप्तपर्वकालत्व-बाधेन भविष्यदारम्भार्थत्वसामर्थ्यात् प्रधानारम्भपूर्वकालीनत्वावगतेः न प्रधानारम्भेणारम्भ इति पृथगारम्भसत्त्वात् अतिदेशेन अस्यामारम्भणीयान्तरं प्राप्तमेवेति विशेषाशङ्काऽनेन सूचिता। **अत एव वैमृधे इति।** वैमृधादीनामङ्गानां प्रयोगबहिर्भूतानां दर्शपूर्णमासविकृतित्वेऽपि पृथगिच्छाविषयत्वाभावादेवेत्यर्थः। चातुर्मास्याङ्गभूतायामन्वारम्भणीयेष्टौ कर्मान्तरभूतायां आर-म्भात् पूर्वं क्रियमाणायां द्वौ यागौ, वैश्वानरो द्वादशकपालः पार्जन्यश्चरुः अधिकारपशुः प्रसिद्धः। पवमानेष्टिग्रहणञ्चाधानाङ्गत्वपक्षाभिप्रायेण। वैमृधाद्यपेक्षयाऽन्वारम्भणीयायां विशेषान्तरमाह —**अन्वारम्भणीयायान्त्विति।** यथैव पवमानेष्टीनां प्रकृत्यङ्गत्वाङ्गीकारेऽपि यत्किञ्चिदिति-कर्तव्यताकपवमानेष्ट्युपेतसकलाङ्गसम्बन्धेनैव प्रकृतेः पूर्णतां परिकल्प्य पवमानेष्टिषु प्रकृत्यङ्गेषु अतिदेशकल्पनात् येषामङ्गानां प्रकृतौ स्वाङ्गसम्बन्धेन निराकाङ्क्षत्वं तेषामेव प्रयाजादीनामतिदेशः, नतु पवमानेष्ट्यादीनां, तेषां अङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात् इत्यादितृतीयोक्त-पवमानेष्टिन्यायेन नातिदेशः पवमानेष्टिषु पवमानेष्टीनाम्। तथैवारम्भणीयाभावनाया अपरिपूर्ण-त्वान्नातिदेश इत्यर्थः। उक्तं च तन्त्ररत्ने—स्वाङ्गमात्रापेक्षो दर्शविधिः, न त्वङ्गाङ्गान्यपेक्षते। तेनापर्यवसितेऽप्यारम्भणीयाविधौ तदीयकिमंशपूरणमात्रेणैव स्वाङ्गाकाङ्क्षापूरणात् लब्धात्मा दर्शविधिः इत्थंभावविशिष्टं तं विधत्ते। विहिते च तदीयमित्थम्भावमारम्भणीया स्वीकुर्वाणा स्वात्मान-मलब्धात्मकत्वान्न स्वीकरोति। प्रयाजानेव तु लब्धात्मकान् गृह्णातीति वैषम्यं वैमृधेऽपि द्रष्टव्यमिति।

## (५)—कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥

साद्यस्के 'खलेवाली यूपो भवति' इति श्रुतम्। तत्र यदि तावद्दृष्टादृष्टसंस्कारगण एव यूपः यदि वा तज्जन्यमदृष्टान्तरं यदि वा तादृशादृष्टविशिष्टं काष्ठं सर्वथा तस्य न खलेवाल्या अभेदान्वयः, बाधात्, छेदनादिसर्वसंस्काराभावेन तादृशादृष्टस्य खलेवाल्यामुत्पत्तौ प्रमाणाभावाच्च। अतस्तत्र जघन्ये यूपपदे यूपकार्यपशुनियोजनं लक्षयित्वा तत्रायूप एव खलेवाली विधीयते। तदिह कार्यप्रयुक्तानामञ्जनादीनां यूपधर्माणां प्राप्तौ किं यूपाहुतिः कार्या न वेति चिन्तायां—

दृष्टार्थत्वाच्छेदनादीनां धर्माणां लोपेऽप्यारादुपकारकतया तस्याः पशुनियोजनद्वारा पश्वपूर्वार्थत्वादञ्जनादिवत्करणम्। न च 'यूपमच्छेष्यता होतव्यम्' इति वचने

---

यत्तु प्रकाशकारैरुक्तं—यथा'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्र वाजपेयकरणकबृहस्पतिसवव्यतिरिक्ताङ्गको यः प्रयोगः 'वाजपेयेन स्वाराज्यकामो यजेत'इति विहितः तदनुवादेन तदुत्तरतया तद्बहिर्भूतो बृहस्पतिसवो विधीयमानः इतराङ्गविनियोगानन्तरं विधीयते, एवमिहाप्यारम्भात् पूर्वत्वेन विधानात् आरम्भरूपसङ्कल्पप्रभृति अपवर्गपर्यन्तो यः प्रयोगः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विहितः तत्प्राक्तनतया तद्बहिर्भूतारम्भणीया विधीयमाना इतराङ्ग[1]विनियोगोत्तरमेव विधीयते। तदा च प्रयाजादीन्यङ्गानि प्रकृतौ विनियुक्तानीत्यतिदिश्यन्ते। आरम्भणीया तु स्वविधिकाले न प्रकृतौ विनियुक्तेति नातिदिश्यते, एवं वैमृधोऽपीति। तत् वैमृधस्य प्रयोगान्तःपातेन समानतन्त्रतयाऽनुष्ठानपक्षे इतराङ्गानामिव साधारण्येनैव विनियोगात् वैमृधे वैमृधातिदेशनिवारणेऽव्यापकमित्युपेक्षितं पूज्यपादैः। किञ्च सङ्कल्पप्रभृति अपवर्गपर्यन्तप्रयोगात् बहिः अन्वारम्भणीयायाः अनुष्ठानेऽपि प्रकरणाविशेषे सति नेतराङ्गसाधारणैकविनियोगविधिविषयत्वमित्यत्र नैव किञ्चित्प्रमाणमित्यलं विस्तरेण।

---

### कर्म च द्रव्यसंयोगार्थम्।

**साद्यस्के इति।** साद्यस्कः सोमयागविशेषः। तस्य यवक्षेत्रं महावेदिः। तदीयखलमुत्तरवेदिः। तत्रत्ये च बलीवर्दबन्धनाय निखाता मध्यपरपर्याया स्थूणा खलेवाली यूपस्थाना-

---

1. A. इतराङ्गप्रयोगो

अच्छशब्दस्य **प्राप्तुमित्यर्थत्वावगतेः गमनार्थकत्वाच्छिण्धातोः यूपं प्राप्तुं यद्गमनं तदर्थत्वस्य लृङ्श्रुत्याऽवगतेर्गमनस्य च प्रकृतौ छेदनार्थत्वात् यूपाहुतेरपि प्रकृतौ छेदनोद्देश्यकगमनार्थत्वप्रतीतेः खलेवाल्यां छेदनाभावेनार्थलोपाद्यूपाहुतेर्बाध इति वाच्यं, गमनस्यानुषङ्गिकछेदनजनकत्वेऽपि 'यूपमच्छेष्यता' इति यूपप्राप्तिमात्रफलकगमनार्थत्वस्यैव प्रतीतेः। प्रकृतेऽपि खलेवाल्या यूपस्थानापन्नत्वात् तत्प्राप्त्युद्देश्यकगमनसम्भवेन च्छेदनाभावेऽपि यूपाहुतेरुपपत्तेः। न हि खलेवाल्यां तत्प्राप्तिनिमित्तकगमनाभावः, यत्र यवक्षेत्रे खलेवाली तत्र शालाकरणार्थं गमनावश्यकत्वेन तस्यैव तत्प्राप्त्युद्देश्यकत्वात्। 'परिधौ पशुं नियुञ्जीत' इत्यत्र परिधिच्छेदनार्थं गमनस्यावश्यकत्वेन तत्र यूपाहुतेर्भवन्मते आपत्तेश्चेति प्राप्ते—**

**न यूपाहुतिः पशुनियोजनप्रयुक्ता अपि तु 'यूपमच्छेष्यता' इति वचनाद्यूपत्वोत्पादिका छेदनादिवत्। यूपत्वं हि न पार्थसारथेरिव दृष्टादृष्टसंस्कारगणः, समुदायस्य समुदाय्यनतिरिक्तत्वेनानेकशक्तिकल्पनापत्तेः। अतो लाघवादाहवनीयादिपदवदेवादृष्टान्तरे तद्विशिष्टकाष्ठे वा यूपत्वमित्युक्तं, तदपि दीक्षाकालकर्तव्यकतिपयच्छेदनादिधर्मजन्यमेव न त्वञ्जनादिजन्यमपि। अत एव तेषां यूपस्वरूपे आनर्थक्यादग्निसम्मार्गादिवदपूर्वसाधनत्वलक्षणया पशुनियोजनार्थत्वमेवेत्युक्तं नवमे ॥**

**अतो यूपाहुतिरपि 'यूपमच्छेष्यता' इति लृङ्श्रुत्या** यूपप्राप्तिफलक**गमनार्था यूपच्छेदनानुकूलगमनार्था वा सती यूपत्वोत्पादिकैव। अत एव यूपाहुतिरिति समाख्याऽप्युपपद्यते। खलेवाल्यां च च्छेदनादीनामर्थलोपेन बाधात् सर्वसंस्काररूपसामग्र्यभावेन यूपत्वानुत्पत्तेरर्थलोपादेव न यूपाहुतिः एवं परिधावपि ॥ ५ ॥**

---

पत्रा तदङ्गपशुनियोजनार्थं विहितेत्यर्थः। **अच्छशब्दस्येति**। अव्ययस्येति शेषः[1]। **इत्युक्तमिति**। नवम इति शेषः। **यूपप्राप्तिफलकेति**। एतच्च यूपपदस्यादृष्टपरत्वात् तादृशादृष्टसिद्ध्यर्थगमनद्वारा साक्षादेव तददृष्टोत्पादकत्वमुक्तं भाष्याभिप्रायेण। गमनस्य च्छेदनद्वारेणैव यूपप्राप्त्यर्थत्वात् होमस्यापि गमनार्थत्वद्वारा च्छेदनार्थत्वमेवार्थापत्त्या भवतीति तद्वारा तु यूपप्राप्त्यङ्गं[2] सत् यूपाङ्गमित्यभिप्रेत्य यत् तन्त्ररत्नादिषु यूपोत्पादकच्छेदनार्थत्वमुक्तं तदभिप्रायेण यूपच्छेदनानुकूलगमनार्था वेति पक्षान्तरं द्रष्टव्यम्। **अधिकरणमालायान्तु** यूपपदस्य खादिरकाष्ठपरत्वमङ्गीकृत्य तस्मिन् शास्त्रीयच्छेदनादिसंस्कारयोग्यतायै यूपाहुतिः कर्तव्या येन तत्काष्ठमग्रे यूपो भवतीत्यर्थः कृतः। स भाष्याद्यनारूढत्वादुपेक्षणीयः। इयञ्च यूपाहुतिः

---

1. A. adds स्पष्टार्थमन्यत्।

2. B. adds फलप्राप्त्यङ्गं

(६)—स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥ अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत ॥ ११ ॥ समाख्यानं च तद्वत् ॥ मन्त्रवर्णश्च तद्वत् ॥ १३ ॥

तत्रैव "स्थाणौ स्थाण्वाहुतिं जुहोति" इति प्रकृतौ विहिता स्थाण्वाहुतिः कार्या न वेति चिन्तायां—

स्थाण्वाहुतेर्यूपत्वोत्पादकत्वे प्रमाणाभावादारादुपकारकत्वेन पशुयागाङ्गत्वावगतेः कर्तव्यैव सा। न चात्र 'यूपमच्छेष्यता' इत्यस्य तृतीयान्तस्य कर्त्राख्याते ऽनुषङ्गेण यूपत्वोत्पादकत्वकल्पना सम्भवति। च्छेदनादिना व्यवायाच्च सुतराम्। न च स्थाणु-संस्कारद्वारा यूपत्वोत्पादकत्वकल्पना, स्थाणोस्सप्तम्या गुणत्वावगमेन संस्कार्यत्वानु-पपत्तेः। होमेन तस्य प्रतिपत्त्यजननेन प्रयाजशेषन्यायासम्भवाच्च। न च यूपवियुक्त-स्थाणोः कश्चिदुपयोगः येन संस्कार्यत्वमाशङ्क्येत। अत एव यस्य कस्यचिदेव स्थाणोरधिकरणत्वेन प्राप्तत्वात् 'स्थाण्वाहुतिः' इत्यपि सप्तमीसमासेनैव नामधेयम्। न चाहुतिशब्दस्य शौण्डादिगणपाठाभावात् सप्तमीसमासानुपपत्तिः, तथात्वेऽपि संज्ञायामपि सप्तमीसमासविधानेन तदुपपत्तेः। न च तदानीं 'अरण्येतिलकाः' इति-

---

आपस्तम्बसूत्रे आहवनीये गमनात् पूर्वं विहिता। "यूपमच्छेष्यता होतव्यं, नहि दीक्षितस्याग्नौ जुहोति, आज्यञ्चारणिं चादाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति" इति भाष्यकारलिखितवचनात्तु मथिताग्नौ यूपान्तिके वेति विकल्पो ज्ञेयः।

---

स्थाणौ तु। स्थाण्वाहुतिमिति। यूपच्छेदनेन वियुक्तं यत् काष्ठं स स्थाणुः, तत्र वनस्पतिदेवत्याऽऽहुतिः स्थाण्वाहुतिशब्दार्थः। अत्र भाष्ये तन्त्ररत्ने च यूपमच्छेष्यतेत्यनु-षङ्गेणास्य यूपार्थत्वमुक्तमयुक्तमिति दर्शयति—न चात्रेति। कर्त्राख्यात इत्यनेनायोग्यत्व-मनुषङ्गासम्भवे हेतुत्वेनोक्तम्। च्छेदनार्थगमनं हि यूपमच्छेष्यतेत्यस्यार्थः। नहि यूपं च्छिनत्तीति विधिना सह तदनुषक्तुं योग्यं, च्छेदनकाले तदर्थगमनासम्भवेन अनन्वयात्। अतस्तेनानन्वितत्वेन व्यवायान्नानुषज्येतेति सुतरामित्यनेनोक्तम्। प्रतिपत्त्यजननेनेति। ततश्च तत्र दृष्टार्थत्वानुरोधेन विभक्त्योर्लक्षणाङ्गीकारेऽपि इह तदलाभेन तदङ्गीकारोऽयुक्त इत्यर्थः। नामधेयमिति। वस्तुतस्तु स्थाणोः प्रापकान्तरशास्त्रस्यादर्शनात् गुणविधिपर एवायं शब्दः स्थाण्वधिकरणिकामाहुतिं कुर्यादित्यर्थः। जुहोतौ धात्वर्थोऽनुवादः साधुत्वमात्रार्थः। एवञ्च

**वदलुक्प्रसङ्गः** हलदन्त एव **तद्विधानेनोकारान्ते तदप्रसक्तेः**। अत एव **क्लृप्तप्रवृत्ति-निमित्तेन सप्तमीसमासोपपत्तौ न कर्मषष्ठीमङ्गीकृत्य षष्ठीसमासाङ्गीकारेण संस्कार-कर्मत्वकल्पना**। इतरथा **आघारस्यापि प्रयाजीयचतुर्गृहीतसंस्कारकत्वापत्तेः**। अतो यस्मिन् **कस्मिंश्चित्स्थाणौ खलेवाल्यादावपि पश्वङ्गभूता स्थाण्वाहुतिः कार्यैवेति प्राप्ते—**

सप्तम्या **अधिकरणत्वेन स्थाणोर्गुणत्वेऽपि प्रयोजनाकाङ्क्षायां वैमृधन्यायेन पदान्तर-कल्पनया यूपोपयुक्तस्थाणुसंस्कारार्थत्वावगतेस्तद्द्वारा यूपत्वोत्पादिकैवैषा। इष्यते च गुरुधृताया अपि स्रजः पूजादिना संस्कारः शिष्यैः। अत एव होमजन्यं स्थाणु-निष्ठमेवादृष्टं** स्वजन्यवृत्तित्वसम्बन्धेन **यूपत्वोत्पादकम्। अत एव यूपानुनिष्पन्नस्थाणा-वेवायं होमः, न तु स्थाण्वन्तरप्रयोजकः। एवं प्रोक्षणादिवददृष्टविधयाऽपि सन्नि-पत्योपकारकत्वलाभेन नारादुपकारकत्वकल्पना युक्ता,** प्रकरणकल्प्य**श्रुतिकल्पनायां**

---

होतृचमसशब्दवत् संज्ञात्वेऽपि न क्षतिरिति ध्येयम्। **हलदन्त एवेति**। 'संज्ञायाम्' (पा—२-१-४४) इति स्वतन्त्रसूत्रेण विहितेऽप्यत्र समासे 'हलदन्तात् सप्तम्याः संज्ञायाम्' इति (पा. ६—३—९) सूत्रेण विहितस्यालुकः हलदन्त एव विधानेनेह तदभावे अप्रसक्तेरित्यर्थः। यत्तु षष्ठीसमासाङ्गीकारेण संस्कारकर्मत्वं सिद्धान्तेऽङ्गीकृतं तदपि दूषयति—**अत एवेति**। **इतरथेति**। आघारवाक्ये आघारपदं आरादुपकारककर्मणो नामधेयत्वेन क्लृप्तम्। तदेव "चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य"ति वाक्ये आघारमिति द्वितीयान्तमिति तस्मिन्नेवाघार-नामके कर्मणि चतुर्गृहीतस्य साधनत्वं स्वीक्रियते। न तु क्लृप्तनिमित्तपरत्वत्यागेनाघारपदस्य क्षारणरूपार्थान्तरकल्पनया चतुर्गृहीतसंस्कारकत्वमाघारहोमयोः। ततश्चेह क्लृप्तत्यागेन संस्कारकत्वकल्पने तयोरपि तदापत्तिरित्यर्थः। **अतो यस्मिन्निति**। यद्यपि वा 'आव्रश्चने जुहोति' इति वाक्यान्तरोपसंहारेण यूपाव्रश्चनस्थाणोरेवाधिकरणत्वं भवेत् तथापि तस्मिन्नेव देशे विधीयमानाऽऽरादुपकारिकैवेति सूचयितुं अनास्थया **यस्मिन् कस्मिंश्चिदित्युक्तम्। सप्तम्येति**। अस्य गुणत्वेऽपीत्यनेनान्वयः। **स्वजन्यवृत्तीति**। स्वपदं स्थाण्वाहुतिजन्यादृष्टाश्रयपरम्। तथाच स्थाणुसंस्कारार्थत्वेनास्याविधाने स्थाणुस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसम्बन्धित्वलक्षणायां यूपप्रकरणात् यूपरूपादृष्टाश्रयकाष्ठप्रकृतित्वस्यैव घटकत्वेनाश्रयणात् नानुपपत्तिरिति भावः। समानेऽदृष्टार्थत्वे सति येन हेतुना सन्निपत्योपकारकत्वं युक्तं तं दर्शयति— **प्रकरणकल्प्येति**। आरादुपकारकत्वे प्रकरणकल्प्यश्रुत्या विनियोगकल्पना विलम्बिता। सन्निपातित्वे तु स्ववाक्यो-पात्तद्वितीयान्तपदश्रुत्या क्लृप्तेति लाघवम्। एतच्चोपकार्योपकारकयोः क्लृप्तसम्बन्धलाघवस्या-

**गौरवात्**, आधारे तु **आरादुपकारकत्वेऽपि परप्रयुक्तद्रव्योपजीवित्वलाभान्न तत्संस्कार-कत्वकल्पना ॥**

**वस्तुतस्तु—प्रकरणकल्प्यश्रुतिकल्पनागौरवभिया तत्रापि 'चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य' इत्यत्र तस्येति** कर्मषष्ठ्यङ्गीकारेण **सुतरां संस्कारकर्मत्वाङ्गीकार इति न्यायसुधोक्तमेव सम्यक्।** परं तु 'अभीषू वा **एतद्यज्ञस्य यदाघारौ, वर्म प्रयाजाः' इति यज्ञाङ्गत्वश्रुतेः प्रयाजाङ्गत्वानङ्गीकारः। अतो यूपानुनिष्पन्नस्थाणोः खलेवाल्यादाव-भावादुत्पाद्ययूपत्वाभावाच्च न स्थाण्वाहुतिः। यूपाहुतेस्तत्र** असत्यपि **संस्कारकर्मत्वे 'यूपमच्छेष्यता' इति वचनेन साक्षादेव यूपत्वोत्पादकतया विहितत्वादकरणमिति विशेषः ॥ ६ ॥**

---

प्युपलक्षणं, आरादुपकारकत्वे तस्यापि कल्प्यत्वादिति भावः। **आघारे त्विति।** द्रव्यान्तर-प्रयोजकत्वकल्पनापत्तिगौरवपरिहारार्थं हि सन्निपातित्वं आरादुपकारकत्वतो लघुभूतमित्या-श्रीयते परकीयस्यैव संस्कार्यत्वात्। तल्लाघवं तु आरादुपकारकताश्रयणेऽपीह लभ्यत इति न तत्परिहारार्थं संस्कारकत्वकल्पनेत्यर्थः। **कर्मषष्ठ्यङ्गीकारेणेति।** पदान्तरकल्पनस्येहाभावात् **सुतरामि**त्युक्तम्। तर्हि न्यायसुधोक्तस्य सम्यक्त्वे किमिति तत्त्यागेन आरादुपकारकत्वाङ्गीकारः इत्यत आह—**परन्त्विति।** एवञ्च[1]प्रयाजविकृतिषु अतिदेशः सिद्ध्यति। अन्यथा यदङ्गं चतुर्गृहीतं तत्संस्कारकर्मणः तदङ्गत्वस्यैवापत्तौ तदभावे [2]तदसिद्ध्यापत्तेरिति भावः। **अभीष्विति।** अभीशरावित्यर्थः। **असत्यपीति।** सत्यपि यूपरूपादृष्टार्थत्वे कस्मिं-श्चित्सन्निपत्य संस्काराजननात् न संस्कारकर्मत्वमित्यर्थः।

---

1. A. प्रयाजविकृतिषु
2. A. तत्सिद्ध्यापत्तेः

## (७)—प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥

स्वाहाकारप्रयाजे, **सत्यपि 'स्वाहाकारं यजति' इति वचनेन 'विष्णुं यजति' इतिवत् स्वाहाकारदेवताविधौ याज्यामन्त्रवर्णे अग्न्यादीनां प्रधानादिदेवतानां प्रत्यभिज्ञायमानानां प्रकाशनात्** स्विष्टकृद्वदेव **मन्त्रांशे तत्तद्देवताप्रकाशनार्थत्वावगतेर्युक्त एव सौर्यादौ अग्निपदस्थाने सूर्यपदोहवदग्नीषोमादिपदानां** बाधः। **न हि तदा तत्रत्याग्न्यादिपदानां स्वाहाकारवाचित्वकल्पने प्रमाणमस्ति, स्विष्टकृद्वत् तत्तद्देवतासंस्कारकत्वेऽपि प्रकृतयागाङ्गत्वोपपत्तेः। 'अग्न आज्यस्य वियन्तु' इति मन्त्रेण हे अग्निपदलक्षितस्वाहाकार! त्वयि तुष्टे तत्तत्प्रधानादिदेवतास्सर्वा यक्ष्यमाणाः संतुष्टा भवन्तु इत्यर्थाङ्गीकारात्। अतःस्वाहाकारयाग उद्देशांशे परमारादुपकारकस्स्यात्, न तु मन्त्रांशेऽपि स्विष्टकृद्वदेव तत्तद्देवताप्रकाशकत्वोपपत्तेः॥**

---

**प्रयाजे च तन्न्यायत्वात्।**

अत्र प्राचीनैः मन्त्रान्तर्गतदेवतावाचकपदोद्देशस्यैव यागघटकदेवतोद्देशपदार्थत्वमङ्गीकृत्य पूर्वपक्षे यदा द्वितीयान्तस्वाहाकारपदेन देवतासमर्पणं तदा स्वाहाग्निमित्यादि याज्यामन्त्रान्तर्गताग्न्यादिपदानां तत्तत्प्रधानदेवतावाचिनामपि स्वाहाकारदेवतावाचित्वस्य रूढ्याङ्गीकारात् तस्य चानुपयुक्तानुपयोक्ष्यमाणदेवतात्वेन संस्कारानर्हत्वात् उद्देशांशेन संस्कारकत्वायोगेन आरादुपकारक एवायं स्वाहाकारयाग इति पूर्वपक्षं प्रापय्य, स्वाहाकारपदस्य नामधेयत्वसम्भवेन देवतापरत्वे विधिगौरवापत्तेः मन्त्रवर्णप्राप्तयक्ष्यमाणाग्न्यादिदेवताकत्वात् तत्स्मारकत्वोपपत्तेः उद्देशांशेन संस्कारकर्मत्वमेवेति सिद्धान्तितम्। तत्र चातुर्थिकाश्रयिष्वित्यधिकरणोपपादितरीत्या अग्नय इदं न ममेत्युच्चारणस्यैव देवतोद्देशपदार्थत्वं न तु मन्त्रगततस्येति भेदमङ्गीकृत्य, यथैवैकदेवताकत्वे सति उद्देशांशेन मन्त्रांशेनापि तद्देवतास्मारकत्वमुपपद्यत एव, तथा तयोर्भिन्नदेवतावाचकपदघटितत्वेऽपि येनैव कर्तुं शक्यतेऽन्यदीयदेवतास्मरणं तावन्मात्रेणाप्युपपद्यत एवान्यतरस्य स्मारकत्वं समानन्यायात्। अतः स्वाहाकारस्य देवतात्वेऽपि मन्त्रस्य यक्ष्यमाणदेवतास्मारकत्वोपपत्तेःमन्त्रगताग्न्यादिपदेषु, ऊहबाधयोः सम्भवेन, फलभेदाभावान्न पूर्वपक्षेऽभिनिवेष्टव्यमिति विशेषं सूचयन् सिद्धान्तमेव प्रतिजानीते—**स्वाहाकारप्रयाजे इति। स्विष्टकृद्वदिति।** स्विष्टकृद्यागे हि 'अग्नये स्विष्टकृते समवद्यति'इति वाक्येन विहिते चतुर्थ्या अग्निः स्विष्टकृद्देवता विहिता। नहि मन्त्रे सैवोपात्ता, अन्यासामप्युपादानात्। अतस्तद्देशोऽन्यदेवतास्मारकत्वेऽपि मन्त्रस्यास्य स्विष्टकृद्यागाङ्गत्वं तथेहाप्युपपद्यत एवेत्यर्थः। **पदानां बाध इति।** यद्यप्यग्नीषोमादिपदेष्वप्यस्त्यूहः तथापि सङ्गत्यर्थं प्राधान्येन बाधस्यैव

वस्तुतस्तु—न स्वाहाकारस्य द्वितीयया देवतात्वाभिधानं, स्वाहाकारशब्दस्य स्वाहाकारं यथा स्यात् तथेति णमुलन्तत्वादिनाऽपि सम्भवेन अकारान्तत्वस्य सन्दिग्धत्वात्। अतः प्रथमविधिप्रकारलिप्सया मन्त्रवर्णप्राप्तस्वाहाकारपदवत्वं प्रवृत्तिनिमित्तीकृत्य स्वाहाकारशब्दो नामधेयमेवेत्युक्तं कौस्तुभे। देवताश्चास्मिन् यागे मन्त्रवर्णप्राप्ता यक्ष्यमाणा अग्न्यादय एव सूक्तवाकवत्। अतश्चायं याग उद्देशांशेऽपि तद्वदेव तत्तद्देवतासंस्कारकः मन्त्रांशेऽपि, न तु स्विष्टकृद्वन्मन्त्रांश एव संस्कारकः, उद्देशांशे त्वारादुपकारक इति, सिद्ध एवायमर्थ उत्तरविवक्षया स्मार्यत इति द्रष्टव्यम्॥ ७॥

## (८)—तथाऽऽज्यभागाग्निरपीति चेत्॥ १६॥ व्यपदेशाद्देवतान्तरम्॥१७॥ समत्वाच्च॥ १८॥

दर्शपूर्णमासयोः 'अग्नीषोमाभ्यामाज्यभागौ यजति' इति श्रुतम्। तत्र सङ्ख्यया कर्मभेदेऽप्येकैकस्मिन् यागे अग्नीषोमयोर्व्यासज्यवृत्ति देवतात्वं, द्वन्द्वान्ते श्रूयमाण चतुर्थ्या परस्परसहितानामेव देवतात्वप्रतीतेः। द्वित्वं परमधिष्ठानाभिप्रायेण। अतश्च द्वयोरप्यग्नीषोमदेवतासंस्कारकत्वं, मन्त्राः पुनर्मनोतान्यायेनोभयलक्षकाः। द्विरुच्चारणाच्चाधिकतरस्संस्कारो देवतान्तर इवावाहनस्वाहाकारादौ न विरुद्ध्यते॥

अथ वाऽस्तु 'अथाग्नये सोमाय इत्याज्यभागाभ्यां चरति' इति शाखान्तरवचनादस्यामपि शाखायां प्रत्येकमेव देवतात्वं, द्वित्वस्य देवतात्वपर्याप्त्यधिकरणभेदकत्वे

---

दार्ष्टान्तिकतयोपादानम्। स्वाहाकारपदार्थसन्देहे सति विवक्षितार्थग्रहणे निर्णायकमाह—**प्रथमविधीति**। **स्वाहाकारपदवत्त्वमिति**। करणं कारः; यदीयमन्त्रे स्वाहाशब्दस्य करणं उच्चारणमस्ति तादृशस्वाहाकारपदवन्मन्त्राङ्गकत्वं प्रवृत्तिनिमित्तीकृत्येत्यर्थः। द्वितीयापेक्षया मन्त्रवर्णस्य प्राबल्यादपि न स्वाहाकारस्य देवतात्वमित्यभिप्रेत्याह—**देवताश्चेति**। **उत्तरविवक्षयेति**। आज्यभागादिषु करिष्यमाणप्रधानदेवतास्मारकत्वविचारे दृष्टान्तविवक्षयेत्यर्थः।

---

**तथाज्यभागाग्निरपीति चेत्।**

अत्र **प्रकाशकारैः** अग्नीषोमाभ्यामिति समासोत्तरं चतुर्थीद्विवचनेन प्रत्येकं देवतावगतेः यथासङ्ख्यमन्वयोपपत्तिरुक्ता। सा अग्नीषोमीये पशाविव व्यासज्यवृत्तिदेवतात्वस्यैवापत्तेरयुक्तेति सूचयन्नेव पूर्वपक्षमाह—**तत्रेति**। अतः प्रत्येकं देवतात्वं युक्त्यन्तरेण साधयति—**अथवेति**। **द्वित्वस्येति** इयञ्च युक्तिः अग्नये सोमायेति पृथक् चतुर्थ्याम्नानात् देवतात्वभेदे सत्येव

**सम्भवति सम्बन्धान्तरेणाधिष्ठानाभिप्रायत्वकल्पने प्रमाणाभावाच्च। अतश्चैक आग्नेयः अपरस्सौम्यः।** तत्र सौम्यस्य **देवतासंस्कारकत्वासम्भवेऽप्याग्नेयस्याग्निदेवतासंस्कारकत्वं पूर्ववत्।** न चैकस्मिन्विधौ **एकांशे आरादुपकारकत्वं इतरांशे सन्निपत्योपकारकत्वमित्येवं वैरूप्यापत्तिः, आश्रयिकर्मान्तरवदार्थिकविध्यन्तरकल्पनया तदुपपत्तेः। अत एव श्रूयमाणविधौ अग्नीषोमयोर्गुणत्वेनैवान्वयेन तत्पदेऽपि वैरूप्याभावाच्च। अतोऽत्रापि संस्कारकर्मत्वमिति प्राप्ते—**

आवाहनादिमन्त्रेषु **सोमात्पूर्वोत्तरमग्नेः द्विः पाठात् पूर्वोऽग्निः आग्नेयदेवतातो भिन्न इति क्रमपर्यालोचनयाऽवगम्यते।** अभिन्नत्वेऽपि **वा स उद्देशांशं प्रत्याग्नेयादाविव गुणभूत एव,** इतरथा **पशौ द्वयोराज्यभागयोः प्रसक्त्यभावेन प्रतिषेधानुपपत्तेः।**

---

अभ्युच्चयत्वेन द्रष्टव्या। इतरथा अग्नीषोमीयमित्यत्रापि मनोतास्थकेवलाग्निपदप्रयोगज्ञापकबलात् अग्नीषोमौ देवते यस्येति विग्रहापत्तेः द्विवचनोपात्तद्वित्वस्य चतुर्थीद्विवचनोपात्तद्वित्वस्येव देवतात्वपर्याप्त्यधिकरणभेदकत्वापत्त्या तदुत्तरतद्धितेन प्रत्येकदेवतात्वस्यैवापत्तेः। तथोपांशुयाजेऽपि 'अग्नीषोमावाज्यस्य यजन्' इति वाक्ये द्विवचनज्ञापकबलात् मन्त्रवर्णकल्प्यविधावपि प्रत्येकमेव तत्कल्पनापत्तेश्च। अतः प्रत्येकं चतुर्थ्युपादानमेव मुख्या युक्तिः न तु द्विवचनमिति भावः। **तत्र सौम्यस्येति।** अन्यत्र सोमस्य देवतात्वाभावादित्यर्थः।

यदपि **प्राचीनैः** सिद्धान्तोपपादकत्वेनोक्ताया वैरूप्यापत्तेः एकपदप्रतिपाद्ययोर्मध्ये एकस्याग्निमपेक्ष्योपादेयविधेयगुणभावात् अपरस्य यागस्य सोममपेक्ष्य उद्देश्यानुवाद्यप्रधानभावादेकपदे वैरूप्यम्। एवं यजावपि। एवमग्नीषोमाभ्यामित्यत्र तु अग्नेरुद्देश्यानुवाद्यप्रधानभावात् सोमस्य च उपादेयविधेयगुणभावात् न केवलं समासरूपैकपदे वैरूप्यम्; किन्तु एकप्रसरत्वाभावात् सामर्थ्यविघातेन त्र्यङ्गप्रथमभक्षवत् समासानुपपत्तिरपि। **इयांस्तु विशेषः**—यत्तत्र पूर्वार्धोत्तरार्धयोरन्योन्यमेवोद्देश्यविधेयभावः। इह तु नान्योन्यं, किन्तु अन्यं प्रतीति व्याख्यानं **प्रकाशकाराणां** तदप्यनूद्य प्रतिबन्द्या दूषयति—**न चैकस्मिन्निति।** स्पष्टार्थम्। एवञ्च एकस्यैव पशुपुरोडाशयज्यर्थस्यांशभेदेनोभयार्थत्वेऽपि न ऐकरूप्यैकप्रसरताभङ्गदोषः, तथेहापीति भावः। एतेन यागदेवतयोर्द्विवचनेन द्वित्वं श्रूयमाणं समानेनैव केनचिद्धर्मेणोपपद्यते। न हि तत् उभयरूपत्वाश्रयणे सम्भवतीति सिद्धान्ते **तन्त्ररत्नोक्तमपास्तम्। आवाहनादिमन्त्रेष्विति।** 'अग्निमग्न आवह, सोममावह' अग्निमावाह' इत्यादिमन्त्रेषु द्विः पाठ इत्यर्थः। स एवाग्निः द्विः पठितो नितरां स्मरणायेति न तद्द्विःपाठवैयर्थ्यमित्यतः पक्षान्तरमाह—**अभिन्नत्वेऽपि वेति। इतरथेति। अयमर्थः**—अग्नेययागदेवतास्मारकत्वे हि तदङ्गमात्रः

गृहमेधीये **चाग्नेयस्याज्यभागस्य क्लृप्तोपकारकत्वाभावेनापूर्वत्वानापादकत्वात् सौम्य-पुनश्श्रवणस्य वैयर्थ्यापत्तेश्च। सौम्यमात्रविधानेनापूर्वत्वकल्पने आग्नेयांशे आरादुप-कारकत्वेन** विधौ वैरूप्यापत्तेश्च। **अतः प्रकृतावेव तस्य आरादुपकारकत्वात् सौर्यादा-वप्यग्निदेवत्यत्वमेव न तु अग्निदेवताया बाधः, सूर्यदेवताया वा ऊह इति सिद्धम्॥ ८॥**

---

सन् तन्मात्रविकृतावेवातिदिश्येत न तु सान्नाय्यविकृतौ पशौ, प्रकृत्यङ्गत्वाभावात्। अतः तयोः प्रसक्त्यभावान्निषेधानुपपत्तिरिति। **गृहमेधीये चेति।** गृहमेधीयेष्टिः अनेकदेवत्यत्वात् अग्नीषोमीयविकारः। नहि तत्र आग्नेयमात्रोपकारकत्वेन क्लृप्तस्य आग्नेयाज्यभागस्य क्लृप्तोप-कारकत्वेन प्राप्तिरस्ति, येन तत्पुनः श्रवणं अपूर्वार्थं भवत् इतराङ्गपरिसङ्ख्यार्थं समर्थं स्यात्। किन्त्वप्राप्तत्वात् सोममात्रविधायकमेवापद्यत इति चोदकपरिलोपकप्रमाणाभावेन चोदकस्य निश्शङ्क प्रवृत्तौ प्रयाजाद्यारादुपकारकाङ्गान्तरवत् सौम्याज्यभागस्यापि तत एव प्राप्तेः तत्पुनर्विधिश्रवणवैय-र्थ्यापत्तिरित्याशयः। **विधौ वैरूप्यापत्तेश्चेति।** वैकृताज्यभागविधौ एकस्याऽऽग्नेयाज्य-भागस्यारादुपकारकत्वेन अपरस्य सन्निपत्योपकारकत्वेन विधाने वैरूप्यापत्तिरित्यर्थः। न चैतावतापि अग्नीषोमीयपुरोडाशे अग्नेः सोमस्य च देवतात्वात् तत्संस्कारकत्वोपपत्तौ किमित्यारादुप-कारकत्वाश्रयणमिति वाच्यम्। देवतात्वेनानुभूतस्यैवेह दृष्टार्थत्वानुरोधेन संस्कार्यत्वाश्रयणेन तयोः प्रत्येकं तदभावे संस्कार्यत्वायोगात्।

---

(९)—पशावपीति चेत् ॥ १९ ॥ न तद्भूतवचनात् ॥ २० ॥ लिङ्गदर्शनाच्च ॥ २१ ॥ गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥२२॥ अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् ॥ २३ ॥ व्यूढवचनं च विप्रतिपत्तौ तदर्थत्वात् ॥२४॥ गुणोऽपीति चेत् ॥ २५ ॥ नासंहानात्कपालवत् ॥ २६ ॥ ग्रहाणां च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥ ग्रहाभावे च तद्वचनम् ॥ २८ ॥ देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ अविरुद्धोपपत्तिरर्थापत्तेश्शृतवद्गुणभूतविकारस्स्यात् ॥ ३० ॥ स द्व्यर्थस्स्यादुभयोश्श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥ विप्रतिपत्तौ तासामाख्याविकारस्स्यात् ॥ अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥

दैक्षे 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयपशुपुरोडाशमनु निर्वपति' इति श्रुतः पशुपुरोडाशयागोऽपि नोद्देशांशेन पशुदेवतासंस्कारकः, उभयत्र तद्धितान्तनिर्देशाविशेषेणोभयोरप्यारादुपकारकत्वावसायात्। न च पशुयागस्य ज्योतिष्टोमाङ्गत्वेन फलवत्त्वादस्यैव तदीयदेवतासंस्कारकत्वमिति वाच्यं, सोमप्रकरणाविशेषेण तत्रापि विनिगमनाविरहात्। पशुपुरोडाशसमाख्यायाः पश्वङ्गकत्वेन तदुत्तरकालकत्वेन वोपपत्तेः। न च वपाभ्यासमात्राङ्गत्वं तत्राप्यभिप्रेतम्। अतः पूर्ववदारादुपकारक एवायम्॥

---

**पशावपीति चेत्।**

**पश्वङ्गकत्वेनेति।** तथा च पशुपुरोडाशपदयोः यागलक्षणावश्यकत्वे वैपरीत्येन पशुयागोऽङ्गं यस्य तथाभूतः, अथवा प्रकरणाज्ज्योतिष्टोमाङ्गत्वे पशुरिव पुरोडाश इति समासेन यथा पशुः सोमयागाङ्गं तथाऽयमित्यर्थः। न च वैमृधन्यायेनास्य वपायागात्परं क्रियमाणस्य तन्मात्राङ्गत्वात् नोभयथापि तत्समाख्योपपत्तिरित्यत आह—**न चेति।** यथैव कालार्थसम्बन्धविधानेनाप्युपपत्तौ न पुनस्तदङ्गत्वपर्यन्तस्य व्यापारस्यान्यतो लभ्यस्य सिद्धान्ते कल्पना, तथैव

एवं च सौत्रामण्यामाश्विनसारस्वतसुत्रामदेवताकेषु पशुषु 'ऐन्द्रवारुणसावित्राः पुरोडाशा भवन्ति' इत्यादिना अपूर्वा विधीयमाना नोत्कृष्टा भवन्ति, इतरथा यत्र तद्देवत्याः पशुयागास्तत्रोत्कर्षापत्तिरिति प्राप्ते—

वाचनिकपशुयागधर्मसन्दष्टत्वादस्य तदङ्गत्वावगतेस्तदीयदेवतासंस्कारकत्वमेव । अत एव पशुपु ोडाशसमाख्याऽपि पश्वङ्गत्वेनैवोपपन्नेति न तस्य वपाभ्यासमात्राङ्गत्वापत्तिरप्याशङ्क्या । पशुपदस्यापि स्ववाक्ये श्रुतत्वान्न वपाभ्यासांशे वैमृधन्यायाशङ्काऽपि । अतश्च 'वपया प्रचर्य' इत्ययं कालार्थ एव संयोगः क्रमार्थो वेत्यन्यदेतत् ॥

यत्तु सौत्रामण्यामन्यदेवताकानामुत्कर्षापत्तिरिति, तन्न, इन्द्रादिदेवत्यपशुषु न्यायादेव तत्तद्देवत्यपुरोडाशसिद्धेर्विधिवैयर्थ्यात् । अतश्च तद्वाक्ये न पशुपुरोडाशयागोद्देशेन देवतान्तरविधिः तथात्वे पुरोडाशपदे तद्द्रव्यकयागलक्षणापत्तेः । किन्तु पुरोडाशोद्देशेनैवाभ्युदितेष्टिवत् । तत्र च यागापेक्षायां योग्यतयैव पशुपुरोडाशयागस्यैवातिदेशप्राप्तस्य सम्बन्धः, अन्यस्य पुरोडाशद्रव्यकत्वाभावात् । अतस्तस्य कार्यपृष्ठभावेन

---

ममापीत्यर्थः । **पूर्ववत्** । आग्नेयाज्यभागवदित्यर्थः । **उत्कर्षाद्यापत्तिरिति** । आदिपदेन सौत्रामण्यामेव निवेशे तन्मन्त्रगतदेवतापदानां प्रधानदेवतालक्षणापत्तिर्गृह्यते । यदत्र प्रकाशकारैः पशुतन्त्रमध्यपातात् स्थानमेव पश्वङ्गत्वे प्रमाणं सिद्धान्ते उपन्यस्तं तत् स्थानापेक्षया प्रकरणस्य बलवत्त्वात् ज्योतिष्टोमाङ्गत्वस्यैवापत्तेः पश्वङ्गत्वासाधकत्वादयुक्तमित्यभिप्रेत्य महाप्रकरणापेक्षया बलवतोऽवान्तरप्रकरणस्य सिद्धान्ते हेतुत्वं दर्शयति—**वाचनिकेति** । तैत्तिरीयशाखायां षष्ठाष्टके [षष्टकाण्डे] तृतीयप्रपाठके नवमानुवाके पूर्वं शामित्रवपाभिघारणादिधर्मान् विधाय दशमानुवाकारम्भे 'पशुमालभ्य पुरोडाशं निर्वपति, समवमेवैनमालभते । वपया प्रचर्य पुरोडाशेन प्रचरति' इत्यादिना पुरोडाशप्रचारं विधायाग्रे 'त्रिः पृच्छति शृतँहविः शमितः' इत्यादिना पाशुकानां बहूनां धर्माणां विधानात् वाचनिकाङ्गसन्दंशमध्ये पशुपुरोडाशयागस्य विधानमित्यर्थः । **संस्कारकत्वमेवेत्येवकारेणादृष्टार्थत्वेन** सोमाङ्गत्वव्यावृत्तिः । **इत्यन्यदेतदिति** । यद्यमुं क्त्वाप्रत्ययमनुपादायैव केवलं पुरोडाशयागविधिरत्र स्यात् तथापि पाठादेव वपायागानन्तर्यक्रमस्य कालस्य च प्राप्तेः न तद्विधानमर्थवत् । अतः अथ जिह्वाया इत्यत्राथशब्दस्येव पाठप्राप्तक्रमानुवादकत्वमेव क्त्वान्तशब्दस्येत्यनास्थया सूचितम् । अनुत्कर्षवादिना प्राकृत एव पुरोडाशयागोऽथवा तस्मिन् देवतान्तरं वा विधेयत्वेन वक्तव्यम् । तदुभयमपि दूषयति—**इन्द्रादिदेवत्येति** । **अभ्युदितेष्टिवदिति** । यथाऽभ्युदितेष्टौ कर्मान्तरत्वाभावसिद्धान्ते प्राचां

प्राप्तस्यापि वाचनिकदेवतान्तरसम्बन्धात् प्राकृतकार्यमात्रबाधेऽपि तस्याप्राकृतकार्यान्तर-कल्पनया तत्रैव निवेशान्नोत्कर्षः ॥

यानि तु सौत्रामणीप्रकरण एव तत्तत्पशुदेवत्यानि 'आश्विनं गृह्णाति' इत्यादिना सुरापयोद्रव्यकाणि ग्रहणानि विहितानि, तेष्वैन्द्रवायवादिग्रहणेष्विव यागापेक्षायामति-देशप्राप्ते पशुपुरोडाशयाग एव देवताविशिष्टग्रहणसंस्कृतद्रव्यविनियोगविधिः नान्यत्र, आश्विनादिदेवत्यत्वस्यान्यत्रासम्भवात्। प्रधानभूतपशुयागेषु चोत्पत्तिशिष्टपश्ववरोधेन द्रव्यान्तरनिवेशानुपपत्तेः। अतो विभिन्नद्रव्यदेवतासम्बन्धद्वयादुत्पन्नवाक्यशिष्टात्प्रयाजै-कादशत्वन्यायेन पशुपुरोडाशयागस्याभ्यासस्सम्पद्यते। तत्र चाश्विनादिदेवत्यस्य प्राकृतमेव कार्यं, ऐन्द्रादिदेवत्यस्य त्वप्राकृतमिति सूत्रभाष्यकारयोरभिप्रायः॥

वार्तिककारस्य तु न तावत्सुरादिद्रव्यस्य पशुपुरोडाशे विनियोगस्सम्भवी तस्यैतद्विध्य-भावे देवतान्तरावरुद्धत्वेनाश्विनादिदेवत्यत्वस्य तत्र प्रकृतौ विकृतौ वाऽप्रसिद्धेः। वक्ष्य-माणरीत्या तत्र पुरोडाशद्रव्यकत्वस्याप्यौपदेशिकत्वेन सुरादिद्रव्यस्य निवेशानुपपत्तेश्च। नाप्यतिदेशप्राप्तप्रयाजादौ निवेशः, तत्राङ्गभूतक्लृप्तदेवतावरोधेन ग्रहणाङ्गभूतदेवतायाः प्रसङ्गेनोपकारकत्वानुपपत्तेः। अतो गुणात्कर्मान्तरमेव प्राकृतपशुपुरोडाशकार्यापन्नं दर्शपूर्ण-मासप्रकृतिकं विधीयते॥

न चैवमावाहनमन्त्रेण देवतास्मरणेऽपि स्वाहाकारादिमन्त्रेण दार्ढ्यार्थं पुनस्स्मरणवत् पशुपुरोडाशस्यापि पुनःकरणापत्तिः, प्रकृतावाम्नानाद्यनुरोधेन तथा कल्पनेऽपि विकृतावाघार-मन्त्रेण प्राकृतमन्त्रबाधस्येवेहापि पशुपुरोडाशबाधोपपत्तेः॥

---

मते प्राकृतद्रव्योद्देशेन देवतान्तरविधानं तद्वदित्यर्थः। **वार्तिककारस्य त्विति।** तुशब्दात्परं अभिप्राय इत्यस्यानुषङ्गः। **तस्यैतद्विध्यभावे इति।** पशुपुरोडाशयागस्य सुरापयोद्रव्यकाश्वि-नादिदेवत्यग्रहणविध्यभावे उपदिष्टेन्द्रवरुणसवितृदेवतावरुद्धत्वेनेत्यर्थः। **वक्ष्यमाणरीत्येति।** न चैवमित्यादिना वक्ष्यमाणाशङ्कानिरासपरग्रन्थे इन्द्रादिवाक्ये द्रव्यदेवताविशिष्टप्राकृतपुरोडश-यागस्यैव विधाने पुरोडाशद्रव्यस्याप्युत्पत्तिशिष्टत्वमित्यर्थः। **उपकारकत्वानुपपत्तेरिति।** आतिदेशिकदेवतान्वयात् प्रागेव ग्रहणसम्बन्धिदेवतान्वयनिरासाय क्लृप्तेत्युक्तम्। ततश्च क्लृप्तोपकारत्वेन प्राकृतयैव निराकाङ्क्षत्वान्नोपकारकत्वमित्यर्थः। **दर्शपूर्णमासप्रकृतिकमिति।** एतच्चौषधद्रव्यकत्वादष्टमे सोमनामातिदेशनिराकरणेन दर्शपूर्णमासप्रकृतिकत्वं साधितमेवेह स्मरणार्थमुक्तम्। **पशुपुरोडाशस्यापीति।** प्राकृतस्येति शेषः। **आघारमन्त्रेणेति।** हिरण्यगर्भमन्त्रो हि समन्त्रकातिदेशप्राप्तप्राकृताघारे निविशमानः प्राकृतमन्त्रबाधेन निविशते

नन्वेवं पशुपुरोडाशस्य सौत्रामण्यामप्राप्तेः कथं तत्रैन्द्रादिदेवतान्तरविधिः, कथञ्चित्प्राप्तावपि वोपकारपृष्ठभावेनैव पदार्थप्राप्तेः प्रकृते च देवतान्तरविधानेन प्राकृतोपकारस्य वस्तुतोऽनतिदेशात् तत्पृष्ठभावेन पशुपुरोडाशयागस्यातिदेशासम्भवात् कथं तत्र देवतान्तरविधिरिति चेत् ॥

अत एवैन्द्रादिवाक्ये द्रव्यदेवताविशिष्टप्राकृतपशुपुरोडाशयागस्यैव गृहमेधीये 'आज्यभागौ यजति' इति वदप्राकृतकार्यार्थतया विधेयत्वाङ्गीकारात् । न च तद्वदिह पशुपुरोडाशयागस्यैव प्रत्यभिज्ञाभावः, 'यद्वै सौत्रामण्यां व्यृद्धं तदेव समृद्धं यदन्यदेवत्याः पशुपुरोडाशाः अन्यदेवत्याः पशवः' इत्यर्थवादस्यैव प्रत्यभिज्ञापकत्वात् । अतोऽप्राकृतकार्य एव पशुपुरोडाशः सुरादियागास्तु कर्मान्तरमेव प्राकृतकार्यापन्नम् । अत एव 'नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः' इति लिङ्गमपि । पुरोडाशास्तज्जन्यदेवतास्मरणानि, न विद्यन्ते, अपि तु ग्रहजन्यान्येव तानीति व्याख्येयम् ॥ ९ ॥

---

इति सिद्धान्तः । तत्रापि तव मते स्मृतिदार्ढ्यार्थं समुच्चयापत्तिरित्यर्थः । कथञ्चिदिति । प्रधानदेवतास्मरणरूपोपकारकाकाङ्क्षयेत्यर्थः । आज्यभागौ यजतीतिवदिति । अयञ्च प्राकृतस्यैव पुनर्विधिरित्येतावन्मात्र एव दृष्टान्तो न त्वप्राकृतकार्यार्थत्वांशेऽपि । गृहमेधीये तयोः तदर्थत्वाभावात । अप्राकृतकार्यार्थतयेति । प्राकृतप्रयोजनाभावेन लुप्तस्य पशुपुरोडाशयागस्य अदृष्टार्थं प्रतिप्रसवविधया विधेयत्वाङ्गीकारादित्यर्थः । व्यृद्धमिति । सौत्रामण्यां प्राकृतकार्याभावेन प्राकृतपुरोडाशयागलोपाच्च विगतऋद्धिमत्वं प्रसक्तं तदेवान्यदेवत्यपुरोडाशविधानेन देवतान्तरागमात् समृद्धमेवाभूदित्यनेन प्राकृतानां प्रत्यभिज्ञेत्यर्थः । सुरादिद्रव्यकपुरोडाशयागापेक्षया प्राकृतपुरोडाशयागसत्वे कथं "नैतेषां पशूनाम्" इति लिङ्गं तदभावविषयमुपपद्यत इत्यत आह—अत एवेति । प्रयोजनं पूर्वपक्षे आग्नेयाज्यभागवत् पशुविकृतौ आग्नेयसवनीयादौ नोहः, न वाऽग्नीषोमपदबाधः । सिद्धान्ते विपरीतमिति स्पष्टत्वान्नोक्तम् ।

---

(१०)—चरुर्हविर्विकारस्स्यादिज्यासंयोगात् ॥ ३४ ॥ प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥ ओदनो वाऽन्नसंयोगात् ॥ ३६ ॥ न द्व्यर्थत्वात् ॥ ३७ ॥ कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३८ ॥ गुणमुख्यविशेषाच्च ॥ ३९ ॥ तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥ लिङ्गदर्शनाच्च ॥ ४१ ॥ ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥ अपूर्वव्यपदेशाच्च ॥ ४३ ॥ तथा च लिङ्गदर्शनम् ॥ ४४ ॥ स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥ एकस्मिन्वा विप्रतिषेधात् ॥ ४६ ॥ न वाऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात् पात्रलाभस्स्यादनियमोऽविशेषात् ॥ ४७ ॥ चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥

---

**चरुर्हविर्विकारः स्यात् ।**

अत्र च सौर्यवाक्ये चरुशब्दस्य स्थालीवचनत्वेन पूर्वपक्षः, ओदनवचनत्वेन सिद्धान्तः प्राचीनैरुक्तः । तत्र त्रिवृच्चर्वश्ववालाधिकरणे चरुशब्दस्योदनवाचित्वे निर्णीते कथमत्र पूर्वपक्षोत्थानमित्याकाङ्क्षायां **प्रकाशकारैः** एवं विशेषाशङ्का प्रदर्शिता—यद्यपि तत्र वाच्यनिर्णय एव कृतः तथापि उपादाननिर्णय एवासावर्थवादात् घृतवत् कृतः, वाच्यन्तूभयमपीति । यद्वा स्थाल्येवार्थः तत्त्यागेन तु उपादाननिर्णयस्तत्रोक्तः वाक्यशेषात् ।

> गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
> वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ (तं. वा. १-३-४)

इति न्यायेनेति । सौर्यवाक्ये तु तादृगर्थवादाभावात् स्थाली ग्राह्येत्याशङ्क्य निरस्यत इति । तत्र निर्णीतार्थाक्षेपेणाधिकरणान्तरारम्भदर्शनेऽपि तस्यैवान्यथात्वकल्पनायामनौचित्यात्, आक्षेपहेतोश्चान्यस्यादर्शनात् विशेषाशङ्कायामपरितुष्य अन्यथा विचारमूलं दर्शयति—**अत्रेति** । त्रिवृच्चर्वश्ववालाधिकरणस्य **सन्दिग्धेषु वाक्यशेषादित्यधिकरणेन** गतार्थत्वाशङ्कानिराकरणाय उभयवाच्यभावानङ्गीकारेण स्थालीमात्रवाचित्वनिश्चयेनैव तदधिकरणे पूर्वसिद्धान्तपक्षयोर्व्युत्पादि-

अत त्रिवृच्चर्वश्ववालाधिकरणे चरुशब्दस्यौदनवाचित्वं, वाक्यशेषात्, न तु लोकप्रसिद्धया स्थालीवाचकत्वं, लोकप्रसिद्धेर्लाक्षणिकत्वेनाप्युपपत्तेरित्यस्यार्थस्य विचारितस्य प्रयोजनं बाधोपयोगितया कथ्यते। स्थालीवाचित्वे हि 'सौर्यं चरुम्' इत्यादौ स्थाल्या अनदनीयत्वाद्धविष्ट्वानुपपत्तेस्सम्बन्धसामान्ये तद्धितमङ्गीकृत्य स्थाली सूर्यदेवत्यहविःपाकसाधनत्वेन विधीयते। ततश्च कपालस्य बाधः॥

वस्तुतस्तु—तदाऽपि आग्नेयविकारत्वे एव प्रमाणाभावात् सान्नाय्यविकारत्वे च स्थाल्याः प्राप्तत्वेनाविधेयत्वात् सम्बन्धसामान्ये तद्धिताङ्गीकारे प्रमाणाभावाच्च कृष्णलवत् स्थाली हविष्ट्वेनैव विधीयते। अतश्च प्राकृतस्य हविष एव बाधः॥

ओदनवाचित्वे तु तस्य हविष्ट्वेनैव योग्यत्वात् पुरोडाशस्य बाधः। तत्रापि चरुशब्दस्य याज्ञिकप्रसिद्धया अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकौदनवाचित्वस्य तृतीये

---

तत्वेन आद्यपक्षेणेह विशेषाशङ्काया अनुदय एव। वाक्यशेषानुगृहीतयाज्ञिकप्रसिद्धेरेव शक्तिग्रहे बलवत्त्वेन तत्र गौणत्वकल्पने प्रमाणाभावेन ओदन एव शक्तावधारितायां द्वितीयेनापि प्रकारेण तदाक्षेपासम्भवात् तस्या अनुदय एव। अतः तदधिकरणप्रयोजनकथनपरत्वेनैवास्यारम्भो युक्त इति भावः। इहैव प्रयोजनकथने सङ्गतिं प्रदर्शयितुं बाधोपयोगितयेत्युक्तम्।

अत्र चरुर्हविर्विकारः स्यादिज्यासंयोगादित्यादिभिः नवभिः सूत्रैः द्विपूर्वपक्षकं भिन्नमधिकरणम्। स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतत्वादिति चतुःसूत्र्या द्विपूर्वपक्षकं पृथगधिकरणं तदुत्तराणि तस्मिन् पेषणमर्थलोपात् स्यादित्यादीनि दशसूत्राणि तानि प्रपूर्वाधिकरणपूर्वोत्तरपक्षप्रयोजनकथनार्थानि, अथ वाऽधिकरणान्तरपराणीति प्राचीनैः कृतामधिकरणभेदरचनां प्रयोजनकथनव्याजेन एकहेलयैव लाघवात् सुगमप्रकारेण दर्शयति—स्थालीवाचित्वे हीति। प्रमाणाभावाच्चेति। यथैव सम्बन्धसामान्यपरत्वे प्रमाणाभावः तथैव द्रव्यदेवतासम्बन्धस्य कल्पकस्याभावे यागकल्पनैव न स्यादित्यपि दूषणान्तरं ज्ञेयम्। कृष्णलवदित्यनेन अनदनीयस्यापि वचनाद्धविष्ट्वे बाधकाभावः कृष्णलवदेव सूचितः। एवं स्थालीवाचित्वेन पूर्वपक्षे प्रयोजनद्वयमुक्त्वा सिद्धान्ते प्रयोजनमाह—ओदनवाचित्वे त्विति। योग्यत्वादिति। औषधद्रव्यकत्वसामान्येन पुरोडाशस्थानापन्नत्वात् पुरोडाशस्य बाध इत्युक्तम्। ओदनवाचित्वस्येति। एतच्च अनवस्रावितान्तरूष्मपक्वौदने चरुशब्दमुपचरन्तीति शास्त्रदीपिकालिखनानुसारेणोदनप्रकृतिकत्वमुक्तम्। वस्तुतस्तु पिष्टकचरावपि चरुशब्दप्रयोगस्योदनत्वाभावेऽपि तृतीये उपपादितत्वान्नोदनपर्यन्ते शक्तिः। किन्तु परस्परासंलग्नत्वरूपवैशद्यनिमित्तकौदनत्वानवच्छिन्ने साक्षात्तण्डुल-

**स्थापितत्वात्तस्य च स्थालीमन्तरेणै**कस्मिन्नपि **कपाले पाकानुपपत्तेः कपालस्य तद्गताष्टत्वादेश्चार्थलोपाद्बाधः ।**

**अत एव स्थाल्याश्चरुपाकान्यथाऽनुपपत्त्यै**वार्थप्राप्तत्वेन **कपालस्थानापन्नत्वाभावात् न** कपालधर्मा **आसादनप्रोक्षणादयस्तत्र कार्याः। एवं चरौ संयवनाभावात् तदर्थाः प्रणीतास्तद्धर्माश्च न भवन्ती**त्युक्तमेव। **एवं पेषणस्यापि पुरोडाशसिद्ध्यर्थत्वेन चरुसिद्धेस्त**द्व्यतिरेकेणापि **जायमानत्वाच्चरौ पेषणस्य बाधः।** एवमुपधानादीनां **कपालधर्माणामपि ॥**

वस्तुतस्तु **'कपालान्युपदधाति' इत्यत्र कपालत्वस्य व्रीहित्ववदविवक्षितत्वात् हविःपाकाधिकरणत्वस्य च स्थाल्यामपि सत्त्वात् हविःपाकसाधनीभूतगार्हपत्यादेरिवोपधानस्यापि याज्ञिकाचारसिद्धस्य प्राप्तिरविरुद्धा। अत एव तत्र न** पाकविशेषत्वस्यापि **व्रीहित्वादिवदेव विवक्षा ॥**

---

जन्येऽथवा तत्प्रकृतिकपिष्टजन्ये चरावेव तत्प्रयोगः। अत एवानवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वमेव चरुत्वमुभयसाधारणं तृतीये स्थापितं पूज्यपादैः। अत एव एतादृशशास्त्रीदीपिकालिखनानुरोधादनवस्रावितावस्रावितानुवृत्तविशदपाकलक्षणौदनविषयत्वं चरुशब्दस्याङ्गीकृत्य पिष्टकचरौ चरुशब्दप्रयोगं स्वीकृतवतो न्यायसुधाकारस्य मतखण्डनं प्रकाशकाराणामयुक्तमिति मया तत्रैवावेदितम्। **एकस्मिन्नपीति।** अल्पपरिमाणत्वाच्चरोः पाको नेत्येतावतैव न कपालनिवृत्तिः किन्तु महत्येकस्मिन् कपाले तत्सम्भवेऽपि बहिरूष्मणः कपालप्रयोजनस्येहानपेक्षणात् अन्तरूष्मजनकत्वाभावादपि निवृत्तिं सूचयितुं अपिशब्दः। **अर्थप्राप्तत्वेनेति।** उदकधारणरूपार्थानुरोधेन प्राप्तत्वमित्यर्थः। **उक्तमेव,** नवमे इति शेषः। **तद्व्यतिरेकेणापीति।** यत्र आहत्य पेषणं तत्र पिष्टेनैवागत्या क्रियमाणे पौष्णादिचरौ चरुत्वाविघातात् अगत्या प्रयोजनाविरोधीत्यनुष्ठेयम्। इहतु तदभावेऽपि प्रयोजनसिद्धेः बाध इत्यपि नोक्तम्। अत एवोभयथापि चरुशब्दस्योपपत्तौ सन्देहे 'अदितिमोदनेन' इति वाक्यशेषादोदनरूप एव चरुरिति सामान्यमुखेन बोधिते सौर्यवाक्येऽपीह तस्यैव ग्रहणं सिद्धं मत्वैव सूत्रभाष्यकारादिभिरपि अर्थस्य पिष्टस्य स्वरूपेणैव लोप उक्तः। पूज्यपादैस्तु पिष्टस्यापि चरुत्वाविघातकत्वात् न स्वरूपेणैव पिष्टस्य लोपः, किन्तु प्रयोजनस्यान्यतो निष्पत्त्यैव लोपस्सूचित इति ध्येयम्। एवञ्च पौष्णं चरुमिति युक्तमेव सामानाधिकरण्यमुपपन्नं भवति। **एवमुपधानादीनामिति।** उपधानं अङ्गारेषु कपालानां स्थापनम्। आदिपदेन तदङ्गमन्त्राणां ग्रहणम्। एवमुपधानादीनां **प्राचां** मतेन लोपमुपपाद्य स्वमतेन बाधं साधयति—**वस्तुतस्त्विति। पाकविशेषत्वस्यापीति।**

एवं 'पात्राण्यासादयति' इत्यादावपि पात्रत्वस्याविवक्षितत्वात् तत्साधनताश्रयत्वस्यैव विवक्षितत्वेन स्थाल्यामपि तद्धर्मप्राप्तिरविरुद्धा। अतश्च चरौ एतावन्तो धर्माः स्थालीसादनं, प्रोक्षणं, 'आदेवयजं वह' इति अङ्गारनिरूहणं, 'ध्रुवासि' इत्यूहेन स्थाल्यधिश्रयणं, तस्यां लौकिकजलं तप्तं कृत्वा 'घर्मास्स्थ' इत्यूहेन तण्डुलप्रक्षेपः, पर्यग्निकरणं, अग्ने हव्यं रक्षस्व' इति प्रैषः, 'आप्यायतां' इत्यभिघारणं, 'श्रृत उत् स्नाति' इत्युद्वासनं, 'भार्द्रः प्रथस्नुः' इति पुनरभिघारणमित्यादयः प्रत्येतव्याः ॥ *

---

एतेनोद्देश्यतावच्छेदकरूपाक्रान्तत्वेऽपि हविरधःपाकविशेषसाधनतारूपद्वाराभावात् तस्य लोप इत्यपास्तम्। द्वारतायामेव पाकत्वेन विवक्षाऽभावात्। ध्रुवासीति। ध्रुवमसीति प्राकृते मन्त्रे ध्रुवासीत्यूहो बौधायनानाम्; ध्रुवोऽसीत्यापस्तम्बानाम्। एवं घर्मास्थेत्यत्रापि भेदः। अर्थलोपो बुद्ध्येति। तत्र पेषणे[1] चूर्णीभावरूपे पिष्टेन पिण्डरूपार्थलोपः अङ्गाराणां कपालेषु स्थापनस्य हविरधोभागे पाकोऽर्थः तस्य स्थाल्यां लोपः। कपालोपधानानन्तरं 'यानि घर्मे' इति मन्त्रजपः कपालयोगजपः; बौधायनानां तस्य कपालयोगाभावादेव लोपः। संयवनार्थे पात्र्यां पिष्टप्रक्षेपः संवापः। तत्र संयवनरूपार्थस्य लोपः। संयवनमुदकमिश्रणं पिष्टस्य पिण्डीकरणञ्च। तत्र पिण्डरूपार्थस्य लोपः। प्रथनं तस्याकाररूपोऽर्थः तस्य लोपः। त्वक्करणं उदकेन

---

* इत ऊर्ध्वं वियमानेन बाधास्त्वित्यादिग्रन्थेनेमान्यधिकरणानि व्याख्यातानि। तत्सूत्रपाठस्तु—

(११) तस्मिन् पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥ अक्रिया वा अपूपहेतुत्वात् ॥ ५०

(१२) पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥

(१३) संवपनं च तादर्थ्यात् ॥ ५२ ॥

(१४) सन्तापनमधश्श्रयणात् ॥ ५३ ॥

(१५) उपधानं च तादर्थ्यात् ॥ ५४ ॥

(१६) पृथुश्लक्ष्णे वाऽनपूपत्वात् ॥ ५५ ॥

(१७) अभ्यूहश्चोपरि पाकार्थत्वात् ॥ ५६ ॥

(१८) तथाऽवज्वलनम् ॥ ५७ ॥

(१९) व्युद्धत्यासादनं च प्रकृतावाश्रुतित्वात् ॥ ५८ ॥

1. पौर्ष्णं चरुमित्यत्रेत्यर्थः A. चूर्णन

बाध्यास्तु-प्रणीताः, पेषणं, स्थाल्या उपरि अङ्गारस्थापनं, कपालयोगजपः, संवापः, संयवनं, पिण्डीकरणं, प्रथनं, त्वक्करणं, हविष्यङ्गारभस्माद्यारोपः, आप्यनिनयनं, सदनकरणं, भस्माद्युद्धारः व्युद्धरणं, तस्य प्रकृतावार्थिकत्वात्, 'यस्य आत्मा' इत्यधस्तात् प्रत्यञ्जनमित्यादयः। अत्र सर्वत्रार्थलोपो बुद्ध्याऽनुसन्धेयः॥ १०॥

इति श्रीखण्डदेवविरचितायां
भाट्टदीपिकायां
दशमाध्यायस्य
प्रथमः
पादः

---

पुरोडाशश्लक्ष्णीकरणं, तस्य त्वगेवार्थः, तस्य लोपः। अङ्गाराभ्यूहनस्य भस्माद्यारोपस्य आदिपदसङ्गृहीतस्य तृणैरवज्वालनस्य-च उपरिपाकः प्रयोजनम्, तस्य लोपः। आप्यनिनयनं अङ्गुलिप्रक्षालनस्थालीप्रक्षालनजलस्य वेद्यां निनयनं, तस्य पिष्टसंपर्कनाशोऽर्थः, तस्य लोपः। सदनकरणं पात्र्यां, तस्यार्थः सादनं तस्य लोपः। वेदेन भस्माद्युद्धारः, तस्य भस्मसंयोगनाशोऽर्थः, तस्य प्रतियोगिसंयोगाभावादेव लोपः। आर्थिकत्वादिति। कपालेभ्यो विभक्तरूपेण निष्कासनरूपस्य व्युद्धरणस्य प्रकृतावासादनार्थत्वाच्चरावपि आसादनसत्वात् अलुप्तार्थत्वात् प्राप्तिः सम्भवत्येवेति तन्निराकरणाय तस्यार्थिकत्वोक्तिः। ततश्च तस्यार्थिकत्वेन अनतिदेशादेवाप्राप्तिः। प्रकृतौ पात्रीप्रतिष्ठापनानुरोधेन कपालसहितस्य तदसम्भवेऽपि इह स्थालीसहितस्यैवासादनसम्भवेन प्रयोजनाभावान्निवृत्तिरूपो बाधः। अत एवाशक्यत्वात् बोधायनोक्तं समन्त्रकमधः प्रत्यञ्जनमपि नेत्यर्थः। अत्र च दशसूत्र्योक्तानां दशानां पेषणादीनां यो बाध उक्तः स तदतिरिक्ताना-मप्यर्थलोपाद्बाधसम्भवेन न्यायादेवोहितुं शक्यत्वात् तन्नियमकरणोपलक्षणमिति सूचयितुं बुद्ध्येति पदोपादानम्।

इति श्रीखण्डदेवान्तेवासिकविमण्डन-
शम्भुभट्टविरचितायां
भाट्टदीपिकाप्रभावल्यां
दशमाध्यायस्य
प्रथमः पादः

---

# अथ दशमाध्यायस्य द्वितीयः पादः.

(१)—कृष्णलेष्वर्थलोपादपाकस्स्यात् ॥ १ ॥ स्याद्वा प्रत्यक्षशिष्टत्वा-
त्प्रदानवत् ॥ २ ॥

कृष्णलचरौ पाकः कर्तव्यो न वेति चिन्तायां—कृष्णलानामेव हविष्ट्वात् तेषां च श्रपणमन्तरेणापि तत्त्वादर्थलोपादकरणम्। यत्तु 'घृते श्रपयति' इति तत्प्रकरणे वचनं, तन्न श्रपणविधायकं, तत्तत्फलानुकूलव्यापारस्यैव पच्याद्यर्थत्वेन स्थापितत्वात्, प्रकृते च रूपरसादिपरावृत्तिरूपविक्लृत्त्याख्यस्य फलस्यासम्भवेन श्रपणानुपपत्तेः। अपि तु कृष्णलानां घृताधिकरणकत्वविधायकम्। श्रपयतिस्तु तण्डुलपाकेऽपि द्रवसंयोगसत्त्वात् लक्षणया तदनुवादः। अतश्च न तत्राग्निसंयोगरूपस्तापोऽपि कार्यः येन तत्पृष्ठभावेन गार्हपत्योऽपि प्राप्येतेति प्राप्ते—

घृताधिकरणत्वस्योत्पत्तिवाक्यादेव प्राप्तेरेतद्वाक्यवैयर्थ्यप्रसङ्गादग्निसंयोग एवात्र

---

### अथ द्वितीयः पादः

कृष्णलेष्वर्थलोपादपाकः स्यात्। द्रवसंयोगसत्त्वादिति। यथैव तण्डुलानां द्रवीभूत-जलसंयोगेन भवति श्रपणं, तथैवेह द्रवीभूतघृतसंयोगात् इह श्रपणमिवेत्येवं श्रपणसादृश्यमादा-यानुवादःसन् प्रक्षेपमात्रविधायक इत्यर्थः। गार्हपत्योऽपीति। 'गार्हपत्ये हवींषि श्रपयति' इति वचनेन हविषोऽग्निसंयोगेन पाके कर्तव्ये गार्हपत्यस्य विधानादग्निसंयोगस्यैव विधानाभावेऽप्राप्ति-रित्यर्थः। पाकाविनेति। मुख्यपाकासम्भवे केनचिद्धर्मेण श्रपणस्य गौणत्वाश्रयणे द्रवद्रव्यादि-संयोगाभावेऽपि फलादीनामग्निसंयोगमात्रेण पाकोपलब्धेरग्निसंयोग एव पाकाविनाभूत इति श्रपणैक-देशभूतेऽव्यभिचारिणि तस्मिन्नेव श्रपयतिधातोर्लक्षणया तस्यैव युक्तो विधिरित्यर्थः।

यत्तु प्राचां ग्रन्थेषु अनुष्णद्रव्यस्योष्णीकरणमेव मुख्यः पाकः, तस्य चेहापि सम्भवाल्लक्षणापि नेति पक्षान्तरमुक्तम्, तदयुक्तमिति सूचयितुं लक्षणयेत्युक्तम्। नहि सर्वावयवावच्छेदेनाग्निसंयोगे विद्यमानेऽपि पुरोडाशे श्रपणविध्यर्थोऽनुष्ठितो भवति। प्रत्युत 'योऽशृत' इत्यर्थवादादावशृतत्वेनैव व्यवहारात्। अतो विजातीयतेजःसंयोगस्यैव पाकत्वे वक्तव्ये विक्लृत्तिजनकतया विना वैजात्यस्यानभिव्यक्तेरग्निसंयोगमात्रे सत्यपि 'तप्तं सुवर्णम्' इतिवत्

पाकाविनाभूतत्वाल्लक्षणया घृताधिकरणकत्वविशिष्टः शुद्धो वा विधीयते। तस्य च लाघवात् प्राकृतस्यैव प्रतिप्रसवतया विधिः। यद्यपि च नाग्निसंयोगमात्रस्य प्रकृतौ पृथग्विधिरस्ति। तथाऽपि श्रपणविधिनैव हविरारम्भकक्रियान्तरविधिवदस्याप्यर्थतो विहितत्वात् प्रतिप्रसवत्वोपपत्तिः। अतश्च तन्मात्राङ्गभूतस्य गार्हपत्यादेरपि पेषणादिप्रतिप्रसवान्तरविधिन्यायेन प्राप्तौ न किञ्चिद्बाधकम्। अत एवात्र मुख्यश्रपणाभावान्नान्ये श्रपणधर्माः कार्याः। अपि त्वग्निसंयोगाङ्गभूता एव, 'प्रधानं नीयमानं हि' इति न्यायेनेति ध्येयम्॥ १॥

---

'पक्वं सुवर्ण'मिति प्रतीत्यनुदयात् विक्लित्तिजनक एव व्यापारे पच्यादीनां शक्तिः। तत्र विक्लित्त्यंशेऽपि तच्छक्तिरस्त्येवेति[1] वादान्तरम्। अतोऽत्र मुख्यार्थबाधे लक्षणैव युक्तेत्याशयः। उत्पत्तिविधौ विशिष्टविधेरावश्यकत्वे तत्रैव लाघवात् घृतस्यापि विधिः, इह तु शुद्धस्य श्रपणस्यैव विधिः घृतपदमनुवाद इति वक्ष्यमाणद्वितीयपादान्त्याधिकरणगतं तन्त्ररत्नोक्तविषयमभिप्रेत्य पक्षान्तरमाह—शुद्धो वेति। वस्तुतस्तु उत्पत्तिवाक्ये तदधिकरणत्वविधौ शक्यार्थनिर्वापलक्षिते याग एवाधिकरणत्वापत्तेर्नाग्निसंयोगाधिकरणत्वं प्राप्यते। इह तु तदर्थं तद्विधाने सति उत्पत्तिवाक्ये कथञ्चित्तदनुवादः सम्भवतीत्यत्रैव विशिष्टविधिर्युक्त इति ध्येयम्। क्रियान्तरविधिवदिति। सम्यक्स्थापनसङ्घट्टनरूपक्रियान्तरविधिवदित्यर्थः। प्रतिप्रसवत्वोपपत्तिरिति। तथा च प्रकृतौ हविः पाकसिद्धिरूपदृष्टप्रयोजनस्येहाभावात् प्राप्तस्याग्निसंयोगस्यादृष्टार्थं प्रतिप्रसवरूपेण विधिरित्यर्थः। प्रतिप्रसवान्तरविधीति। यथैव पौष्णे चरौ पेषणप्रतिप्रसवे सति पेषणाङ्गभूताः कृष्णाजिनशम्यादृषदादयः समन्त्रका भवन्ति तथेहाप्यग्निसंयोगाश्रयहविर्द्वारा[2] गार्हपत्यस्याधिकरणत्वेन सर्वत्र विधानात् द्वारलाभेन भवत्येव प्राप्तिरित्यर्थः। नान्ये इति। पुरोडाशे विद्यमाना उपर्यङ्गारभस्माद्यारोपादयोऽन्ये न कार्या इत्यर्थः। अग्निसंयोगाङ्गभूता एवेति। ते च समन्त्रकोपधानप्रभृतयः कर्तव्या एवेत्यर्थः।

---

1. A. reads शक्तिरस्ति नवेनि

2. A. द्वारैव

(२)—उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥ क्रियेत वाऽर्थवादत्वात्तयोस्संसर्गहेतुत्वात् ॥ ४ ॥ अकर्म वा चतुर्भिराप्तिवचनात् सह पूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥ क्रिया वा मुख्यावदानपरिमाणात् सामान्यात्तद्गुणत्वम् ॥ ६ ॥ तेषां चैकावदानत्वात् ॥ ७ ॥ आप्तिस्सङ्ख्यासमानत्वात् ॥ ८ ॥ सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥ विकल्पस्त्वेकावदानत्वात् ॥ १० ॥ सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यात् अपि वा स्विष्टकृतस्स्यात् इतरस्यान्याय्यत्वात् ॥ ११ ॥ अकर्म वा संसर्गार्थनिवृत्तित्वात् तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥

तत्रैवोपस्तरणाभिघारणे कार्ये न वेति चिन्तायां प्रकृतावदृष्टार्थत्वात्कार्ये एव। न च 'उपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति' इति वाक्यशेषेणानयोस्स्वादिमार्थत्वावगतेः कृष्णलानां चानदनीयत्वेन तदभावाल्लोप इति वाच्यं, देवताया भोगाभावेन तस्यार्थवादमात्रत्वात्। यद्यपि च प्रकृतावेषां नादृष्टार्थता कल्प्येत किन्तु चतुरवत्तसम्पत्त्यर्थतैव, तथाऽपि कृष्णलचरावलोपः। न च तथाऽपि 'चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति वचनेनावदानानुवादेन कृष्णलचतुष्कविधानात्, तेन च चतुरवत्तसम्पत्त्यनुवादात् प्रकृताववदेयचतुष्कस्थानापत्त्यवगतेरुपस्तरणाभिघारणसाधनीभूताज्यस्य बाध इति वाच्यं, तथात्वे वीप्साऽनुवादानुपपत्तेः। न च स्विष्टकृदभिप्रायेणानुवादः; प्रमाणाभावात्, हवीरूपकृष्णलचतुष्कविधानस्याङ्गुष्ठपर्वमात्रस्थानापन्नतयाऽपि सम्भवेन प्रधानमात्रेऽपि वीप्सोपपत्तेश्च।

---

उपस्तरणाभिघारणयोः।

**वीप्सानुवादानुपपत्तेरिति।** प्राकृतावदाने चतुरवत्तसम्पत्त्यर्थमेव कृष्णलचतुष्कविधानेनाप्याज्यबाधेन सकृच्चतुरवत्तसम्पत्त्युपपत्तौ पुनस्तदीयचतुरवत्तस्य अप्राप्त्या तत्संपादकत्वेन द्वितीयकृष्णलचतुष्कस्यान्यतोऽप्राप्तेर्वीप्सानुवादानुपपत्तिः। अतस्तदर्थस्यापि विधौ वाक्यभेदापत्तिरित्यर्थः। **वीप्सोपपत्तेश्चेति।** अङ्गुष्ठपर्वपरिमाणबाधेन कृष्णलचतुष्कस्य हवीरूपस्यैव विधाने तु कृष्णलरूपहविरवदानं यत् द्विरतिदेशतः प्राप्तं, तत्र कृष्णलचतुष्कपरिमाणविधानात्,

चतुरवत्तसम्पत्त्यनुवादस्तु कृष्णलचतुष्कद्वयवदानस्यापि चतुरवत्तसम्पादकत्व-मुपस्तरणाभिघारणसाहाय्येनास्तीति नैव विरुद्ध्यते। अतश्च चतुरवत्तसम्पत्त्यर्थ-त्वादपि कर्तव्ये एवोपस्तरणाभिघारणे। न हि तयोः प्रकृतौ सूक्ष्माणां पुरोडाशा-वयवानां स्रुचि संसर्गापत्तेराहवनीयपातासम्भवेन तद्वयावृत्त्यर्थत्वात् कृष्णलेषु च तत्प्रसक्त्यभावाल्लोप इति वाच्यं, तथात्वे उपस्तरणाभिघारणयोरन्यतरेणापि तत्सिद्ध्या विकल्पापत्तेः धानावपादौ संसर्गाप्रसक्त्या तदनापत्तेश्च, प्रकृतौ चतुरवत्तसम्पत्त्यर्थत्वा-भावे वपादौ पञ्चावदानादिसिद्ध्यर्थमभिघारणस्य वृद्ध्यनापत्तेश्चेति प्राप्ते—

दृष्टार्थत्वायासंसर्ग एव तयोः प्रयोजनं न तु चतुरवत्तसम्पत्तिः, तस्य प्रकृताद्य-विहितत्वात्। 'चतुरवत्तं जुहोति' इत्यत्रावत्तोद्देशेन प्रक्षेपो विधीयते, चतुःपदं तु उपस्तरणाद्यभिप्रायेणानुवादः। इतरथा विशिष्टोद्देशेन वाक्यभेदात्, गौरवाच्च। अतश्च चतुरवत्तस्योद्देश्यत्वेनैवाप्रसिद्धौ विधेयत्वेन सुतरामप्रसिद्धेर्न तत्सम्पत्त्यर्थ-तोपस्तरणाभिघारणयोः। अतोऽसंसर्गमात्रार्थत्वादकरणं कृष्णलेषु तयोरिति मूलानु-यायिनः।

वस्तुतस्तु चतुश्शब्दस्य प्रमादपाठापत्तेरुद्देश्यतावच्छेदककोटिप्रविष्टत्वमस्त्येव। कारकतातिरिक्तसम्बन्धेन विशिष्टस्य व्युत्पन्नत्वाच्च न वाक्यभेदः। अत एवोद्देश्य-त्वान्यथानुपपत्त्या चतुरवदानस्य विधिकल्पना। अत एव वपायां सकृदवदानविधानेऽपि

---

प्रत्येकमवदानद्वये क्रमेणैकैकचतुष्कप्राप्तेर्वीप्सानुवादोपपत्तिरित्यर्थः। न च कृष्णलानामुद्देश्या-वदानविशेषणत्वाद्वाक्यभेदः, तत्सम्बन्धस्यावदाने प्रकरणप्राप्तत्वेन तदप्राप्तेः। सिद्धान्त-युक्तिमनूद्य दूषयति—नहीति। अभिघारणवृद्ध्यनापत्तेरिति। पञ्चावत्ते हि उपस्तरणादीनां प्राप्तिः चतुरवत्तस्थानापत्त्या साधनत्वाद्भवति प्रकृतावेव। यदि तेषां न तत्साधनत्वं तदा तेषामिह प्राप्त्यभावे[1] पञ्चावत्तसिद्ध्यर्थं अभिघारणवृद्ध्यनापत्तिरित्यर्थः। अत्र च हिरण्यश-कलावदानेन पञ्चत्वपूर्तेः सिद्धान्तेऽपि विवक्षितत्वात् अभिघारणवृद्धिपदं न्यायप्राप्तानुवादकमात्रं सत् तस्योपलक्षणं ज्ञेयम्। कारकतातिरिक्तेति। एकस्मिन्नपि पदे विशेषणीभूतार्थस्य यत्र कारकत्वं तत्र तदर्थस्य भावनायामेवान्वयो न तु तत्रत्योत्तरपदार्थे, यथा—आग्नेय इत्यादौ अग्निपदार्थविशिष्टदेवतात्वस्य। यत्र तु न तस्य तत् तत्र तु परस्परमन्वय इत्युपपादितं पौर्णमास्यधिकरणे। ततश्चेह चतुश्शब्दार्थस्य कारकत्वाभावात् उत्तरपदार्थेऽन्वयव्युत्पत्तेर्न वाक्यभेद इत्यर्थः। अत एवेति। वपाभ्यासे हि प्रथमतः स्रुच्युपस्तरणं कृत्वा स्रुचि

1. A. reads प्राप्तेरेवाभावे

प्राकृतस्य चतुरवत्तस्य प्राप्तेर्यद्यपि चतुरवत्तीति निर्देशस्सङ्गच्छते। इतरथा असंसर्गार्थं सकृदेवोपस्तरणाभिघारणप्राप्तेः त्र्यवत्तीति निर्देशापत्तेः। अत उपस्तरणाभिघारणयोः प्रकृतावसंसर्गवच्चतुस्सङ्ख्यासम्पत्तिरपि प्रयोजनम्।

तत्र त्वेतावान् विशेषः—असंसर्गस्यैव मुख्यप्रयोजनता,[1] वैतुष्यवत् दृष्टार्थत्वात्; चतुस्सङ्ख्या तत्सत्त्व एव। अतश्च यथैव नावघातादयो वैतुष्याभावे नियमादृष्टेन प्रयुज्यन्ते अपि तु तत्सम्भव एव, तथा असंसर्गाख्यप्रयोजनसत्त्व एव चतुस्सङ्ख्या-सम्पत्त्या उपस्तरणाभिघारणे प्रयुज्येते नान्यथा। अतश्च कृष्णलेषु नियमादृष्टार्थ-मवघाताकरणवच्चतुस्सङ्ख्यासम्पत्त्यर्थं नोपस्तरणाभिघारणकरणम्। एवं केवलधानादि-यागेऽपि; सवनीयहविष्षु तु सम्प्रतिपन्नदेवताकत्वात्पुरोडाशाद्यर्थं तदनुष्ठानम्। वपाहृदयादौ तु कतिपयावयवसंसर्गस्यैव सम्भावितत्वात् तन्निवृत्त्यर्थं तदावश्यकत्वे पञ्चावदानसम्पत्त्यर्थं तद्द्विवृद्धिरपि कल्पसूत्रकारादिसम्मता सङ्गच्छते। एवं एककाले सर्वहोमेऽपि चतुरवत्तादिसम्पत्त्यर्थं तद्द्विवृद्धिः तत्रापि संसर्गस्य सम्भावितत्वात्। प्रकृते तु संसर्गस्यासम्भावितत्वात् प्रत्युतोपस्तरणादिकरण एव तत्सम्भवान्निवृत्तिस्तयोः॥ २॥

---

हिरण्यशकलावदानं ततोऽखण्डिताया एव वपायाः सकृदवदानं ततो हिरण्यशकलावदानाभिघारणे। एवमनुष्ठाने वपायाः सकृदेव भवत्यवदानम्। तत्र तव मते चतुरवत्तस्यार्थिकत्वेन अनति-देशात्तदप्राप्तौ न 'चतुरवत्ती' इति निर्देश उपपद्यते। प्रत्युत वैकृतविधितः प्राप्त्यालोचने उपस्तरणाभिघारणाभ्यां सह सकृदेवावदानप्राप्तेः त्र्यवत्तीति निर्देशापत्तिरित्यर्थः। **दृष्टार्थत्वादिति।** यद्यपि चतुस्सङ्ख्यासम्पत्तिरप्यनयोर्दृष्टमेव प्रयोजनमुक्तं, तथापि साक्षात्संस्कार्यहविर्वृत्त्यसंसर्गस्यैव प्रयोजकत्वे सम्भवति न हविरङ्गावदानगतचतुःसङ्ख्यानिष्पत्तेर्विप्रकृष्टायास्तत्कल्पनं युक्तमिति तत्सम्पत्तेस्तदनुनिष्पन्नत्वेनाप्रयोजकत्वमेवेत्याशयः। तत्सत्त्व एवेति। प्रयोजिकेति शेषः। **एवं केवलाधानेति।** यथा मृगारेष्टौ। याज्ञिकास्तु धानालाजादिष्वपि तदनुष्ठानं कुर्वन्ति। तत्रापि स्वत एवासंसर्गान्न तयोरनुष्ठानम्। **सम्प्रतिपन्नेति।** एकेन्द्रदेवताकत्वेन सम्प्रति-पन्नदेवताकत्वात् सर्वेषां पुरोडाशादिसवनीयहविषां एकत्रावस्थानेऽपि यत्रैव संसर्गप्रसक्तिः तन्नाशार्थमेव तदनुष्ठानं, नत्वेतावताऽप्रसक्तसंसर्गधानार्थम[1]पीत्यर्थः। **तद्द्विवृद्धिरिति।** हिरण्यशकलावदानेनेति शेषः। **तत्रापि संसर्गस्येति।** वस्तुतस्तु एतादृशसंसर्गसम्भावनायाः

---

1. प्रयोजकतेत्यर्थः

2. A मपि तदित्यर्थः

(३)—भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥ स्याद्वा निर्धानदर्शनात् ॥ १४ ॥ वचनं वाऽऽज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥ वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

**प्रकृतौ शेषभक्षाश्शेषप्रतिपत्त्यर्थाः इति** वक्ष्यते। **शेषप्रतिपत्त्यर्थत्वेऽपि च प्रयाजशेषन्यायेन कर्तुः करिष्यमाणकर्मणि बलाधानार्था अपीत्युक्तं षष्ठे। तत्र च प्रतिपत्तेः प्रयोजकस्य सत्त्वात् कृष्णलेषु कर्तव्या एव ते। यदा तु कृत्वाचिन्तया शुद्धकर्तृप्रीत्यर्थत्वं तदा ते तत्र भवन्ति न वेति चिन्तायां—**

**कृष्णलानामनदनीयत्वेन प्रीत्यर्थयोग्यत्वादर्थलोपाद्बाधः। न च 'हिरण्यस्य निरवधयन्तो भक्षयन्ति चुच्छुषाकारम्' इति वचनेन प्रतिप्रसवः, योग्यतयाऽत्राज्यस्यैव हिरण्याधारस्य भक्षणविधानात् 'हिरण्यस्य निरवधयन्तः' इत्यस्य हिरण्यस्य** त्यक्त्वा **इत्यर्थात्। यदा तु भाष्यानुसारात् 'हिरण्यस्य' इति न पठ्यते तदा आज्यस्यैव निरवधानं दन्तासंयोगः।** अत एव 'चुच्छुषाकारम्' **इत्यप्यनुवादः आज्यभक्षणे तदावश्यकत्वात्। अतश्चाप्राकृतमिदं भक्षणमारादुपकारकं अधिकरणीभूताज्यप्रतिपत्तिर्वेति न तत्र प्राकृतभक्षधर्माः कार्या इति प्राप्ते—**

---

कृष्णलेष्वपि सम्भवात् एककपाले प्रत्यक्षत एवासंसर्गदर्शनात् न्यायेन तयोः मध्यपूर्वार्धोपादानकद्विरवदानस्य च लोप एव युक्तः। आपस्तम्बवचनादेव परं सकृदवदानोपस्तरणे द्विरभिघारणञ्च भवति। अत एव वचनत्वादेव मीमांसान्यायबाधेऽपि न क्षतिरिति ध्येयम्।

---

**भक्षाणान्तु प्रीत्यर्थत्वादकर्म स्यात्।**

**वक्ष्यत इति। इहैव पादे शेषभक्षाश्च तद्वदित्यधिकरणे। त्यक्त्वेति।** अनादृत्येत्यर्थः। एवञ्च 'षष्ठी चानादरे' इति (पा. २–३–३८) सूत्रेण हिरण्यस्येति षष्ठीत्यर्थः[1]। **चुच्छुषाकारमिति।** इक्षुदण्डादिभक्षणे यो रसग्रहणकाले ओष्ठाभ्यां शब्द उत्पद्यते तस्यायमनुकरणशब्दः चुच्छुषेति। तदुपपदककृञ्धातोर्णमुलि कृते इदं रूपं ज्ञेयम्।

---

1. B. adds द्विश्चावदानस्य

प्रधानान्वयस्याभ्यर्हितत्वात् हिरण्यस्यैव भक्षणं न त्वाज्यस्य 'निरवधयन्तः' इत्यस्य दन्तेन पीडनमकुर्वन्त इत्यर्थात्; अतो लाघवात् हविर्भक्षणस्यैव प्रतिप्रसवविधिः। स च चुरुछुषाकारत्वविशिष्टस्य, प्रधानान्वयानुरोधेन पञ्चमविधिप्रकारस्याप्यङ्गीकारात्। वस्तुतस्तु—स्वसंपृक्ताज्याभिप्रायेण चुरुछुषाकारत्वस्याप्यनुवाद एव। अतश्च पेषणन्यायेन कार्या एव भक्षधर्मा भक्षाश्च। कृत्वाचिन्तोद्घाटने तु प्राप्तभक्षानुवादेन दन्तसंयोग एव निषिध्यत इति विवेकः ॥ ३ ॥

---

## (४)—एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥

कृष्णलचरावेव 'एकधा ब्रह्मण उपहरति' इति श्रुतम्। तत्रैकधाशब्दस्यैकप्रयत्नसाध्यत्वाख्ये सकृत्त्वे एककालकत्वाख्ये सहत्वे च लोके प्रयोगात् किमनेन विधीयत इति चिन्तायां—प्रकृतौ इडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षणानां मध्ये सकृत्त्व-

---

प्रधानान्वयस्येति। भक्षयतिपदोपात्तभावनायां कर्माकाङ्क्षयाऽन्वये द्वयोर्योग्यत्वेऽपि पूर्वं प्रस्तुतानां कृष्णलानामेव हविष्ट्वेन प्रधानत्वात् तस्यैव तत्त्वेनान्वयो युक्त इत्यर्थः। प्रधानान्वयस्येत्यत्र षष्ठीसमासः। इत्यर्थादिति। आज्यमात्रभक्षणे हि दन्तपीडनस्य स्वत एवाप्राप्तेः अस्यार्थस्यानुपपत्तिरित्यर्थः। पञ्चमविधिप्रकारस्यापीति। सोमेन यजेतेतिवद्विशिष्टविधिप्रकारस्येत्यर्थः। प्रतिप्रसवविधित्वकृतलाघवे बुद्धे औत्तरकालिकमापतदपि विशिष्टविधौ विशेषणविधिकल्पनाकृतं गौरवं न दोषायेत्यपिना सूचितम्। पेषणन्यायेनेति। पौष्णे चरौ प्रतिप्रसवविधिना पेषणप्राप्तौ तद्धर्मा यथा तत्र भवन्ति तेन न्यायेनेत्यर्थः।

---

1. Ms. चुरुछुषा

**विधानात्** आद्यस्यैव **करणमितरेषां निवृत्तिः। सहत्वविधानाद्वा सर्वेषां यौगपद्यमित्यनियमे प्राप्ते ॥**

**यत एवायं विधिस्साधारणः अत एवातिदेशेन हविस्संस्कारकतया प्राप्तानां भक्षाणां बाधे प्रमाणाभावात् सहत्वमेव सर्वेषां विधीयते। अत्र च तत्तच्छेषभक्षणार्थानां** तत्तद्धरणानामेव**ोद्देशेन साहित्यं विधीयते, भक्षणे नानाकालीनत्वस्य** वक्ष्यमाणत्वात्। **ब्रह्मसम्बन्धश्च** वक्ष्यमाणन्यायेनानुवाद **इति न विशिष्टोद्देशः। अतस्सहत्वविधानात्**काल**स्यैव प्रत्याम्नानाद्बाधः ॥ ४ ॥**

---

## (५)—सर्वत्वं च तेषामधिकारात्स्यात् ॥ १८ ॥ पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥

**तत्रैव 'सर्वं ब्रह्मणे परिहरति'[1] इति श्रुतम्। तदनेन ब्रह्मभागस्य सर्वस्य परिहरणीयत्वविधाने तस्य वा परिहरणीयस्य सर्वत्वविधाने विषिष्टोद्देशापत्तेर्वाक्य**वैयर्थ्याच्च **सर्वोद्देशेन ब्रह्मसम्बन्धो विधीयते परिहारस्य च** पूर्ववाक्ये **उद्देश्यत्वेन प्रत्यभिज्ञायमानत्वादाश्रयत्वम्। अतश्च परिहरतीत्ययमनुवादः। अत एव पूर्ववाक्ये परिहारस्य कर्मापेक्षायां कृष्णलशेषस्य पूर्वप्रकृतस्य प्राधान्येनोपस्थितस्यान्वितत्वात् तत्परिहार एवाश्रयः न त्वन्वाहार्यादिपरिहारः।**

---

### एकधोपहारे सहत्वम्।

**आद्यस्यैवेति**। प्रथमातिक्रमे कारणाभावादित्यर्थः। **तत्तद्धरणानां** तत्तद्दानानामित्यर्थः। **वक्ष्यमाणत्वादिति**। इत एकान्तरिताधिकरण इति शेषः। **वक्ष्यमाणन्यायेनेति**। उत्तराधिकरणे ब्रह्मसम्बन्धविधेर्वक्ष्यमाणेनेत्यर्थः। **कालस्यैवेति**। हरणे नानाकालस्यैवेत्यर्थः। इतरत् स्पष्टार्थम्।

---

### सर्वत्वं च तेषामधिकारात् स्यात्।

**वैयर्थ्याच्चेति**। प्रकृतित एव सर्वस्य ब्रह्मभागत्वेन स्थितस्य परिहारः प्राप्तः। तत एव च परिहरणीयस्यापि सर्वत्वं प्राप्तमेव। अन्यथा एकदेशमात्रस्य परिहारेऽवशिष्टस्य संस्कारलोपापत्तेः। **पूर्ववाक्ये इति**। एकधेति पूर्ववाक्ये इत्यर्थः। एवं गुणफलसंबन्धा-

---

1. ददातीत्यर्थः

अथवा परिहरणोद्देशेनैव ब्रह्मसम्बन्धः प्रकृतिप्राप्तेः पूर्वं विधीयते। तत्फलं चावच्छेदकावच्छेदेन ब्रह्मसम्बन्धविधानात् ब्रह्मभागस्य तत्सम्बन्धप्राप्तावपि पुरुषान्तर-भागस्य तत्सम्बन्धसिद्धिः। सर्वत्वं चानुवादः। अतश्च भागान्तरेषु प्रत्याम्नानात् पुरुषान्तरस्य बाधः। एवं च 'निरवधयन्तो दन्ता भक्षयन्ति' इति बहुवचनं व्याख्येयम्। एतद्बलाद्वा पुरुषान्तरबाधो वैकल्पिकः। पूर्वप्रवृत्त्या विशिष्टप्राकृतभक्षविधानाच्च न वाक्यभेदः ॥ ५ ॥

---

## (६)—पुरुषापनयात्स्वकालत्वम् ॥ २० ॥

सर्वेषां शेषाणां युगपदुपहृतानां युगपदेव ब्रह्मणा भक्षणं उत तत्तत्प्राकृतकाल इति चिन्तायां—परिहारस्य भक्षार्थत्वात् तत्रैवानेन सहत्वं नामान्तरेण विधीयते। इतरथा सर्वत्वस्यापि परिहारमात्रे विधानापत्तेः पुरुषान्तराणामपि भक्षापत्तिरिति प्राप्ते—

सर्वत्वस्य परिहारमात्रे विधावदृष्टार्थत्वापत्तेर्युक्तं भक्षे पुरुषान्तरनिवर्तकत्वं, सहत्वस्य तु परिहारमात्रे विधावप्यदृष्टार्थत्वाभावात् युगपत् सर्वं ब्रह्मणे परिहृत्य तत्तत्काले तेन भक्षणोपपत्तेः न भक्षणे प्राकृतकालबाधः ॥ ६ ॥

---

श्रयणे धातोरत्यन्तपारार्थ्यापत्तेः प्राचीनसम्मतमुद्देश्यविधेयभावं पक्षान्तरेणाह—**अथवेति**। पुरुषान्तरभागेषु ब्रह्मसम्बन्धविधानेन पुरुषान्तराणां निवृत्तेः कथं निरवधयन्तो भक्षयन्तीति बहुवचनमित्यनुपपत्तिं प्राप्तां दन्तेषु कर्तृत्वोपचाराश्रयणेन परिहरति—**एवञ्चेति**। प्राकृतभक्षानु-वादेन ब्रह्मसम्बन्धबाधायानेककर्तृणां दन्तापीडनगुणस्य च विधाने वाक्यभेदापत्तिपरिहारायाह—**पूर्वप्रवृत्त्येति**।

---

### पुरुषापनयात् स्वकालत्वम्।

**अनेनेति**। कृष्णलपरिहारत्वावच्छेदेन परिहारसामान्यं ब्रह्मणे एकस्मिन् काले देयमिति वचनद्वये वाक्यैकवाक्यतयाऽर्थप्रतीतेर्वचनेनेत्यर्थः[1]। **सर्वत्वस्यापीति**। भक्षण-पर्यन्तं सर्वत्वविधानाभावे यावच्छ्रुते परिहारमात्र एव तदापत्तौ ब्रह्मणे सर्वस्य युगपत् दानं अदृष्टा[2]र्थमेवापद्येतेति भक्षेषु पुरुषान्तरव्यावृत्तिर्न स्यात्। अतोऽदृष्टार्थत्वापत्त्या भक्षार्थमेव सर्वस्य ब्रह्मणे परिहरणे विधीयमाने तस्यैव सर्वभक्षः सिद्ध्यति। तथैव दृष्टार्थत्वाय भक्षार्थे परिहारे सहत्वविधौ भक्षणेऽपि सहत्वमुपपद्यत एवेत्यर्थः। स्पष्टमन्यत्।

---

1 A. वचनद्वयेनेत्यर्थः

2. A. अदृष्टार्थं स्पष्टमा

(७)—एकार्थत्वादविभागस्स्यात् ॥ २१ ॥

प्रकृतौ पुरोडाशस्य चतुर्धाकरणं बर्हिषत्करणं च विधाय 'इदं ब्रह्मणः। इदं होतुः। इदमध्वर्योः। इदमग्नीधः' इति व्यादेश आम्नातः, स कृष्णलेषु सर्वस्यैव ब्रह्मणा भक्षणीयत्वान्न कर्तव्यः। न हि होत्रादिसम्बन्धाभावे 'इदं होतुः' इत्यादिव्यपदेशो युज्यते। अतश्च व्यावर्तनीयाभावात् 'इदं ब्रह्मणः' इत्यपि न। न चैवं चतुर्धाकरणस्यापि प्रयोजनाभावः, सर्वपरिहरणीयोद्देशेन सहत्वविधानादेव तदावश्यकत्वात्। यदि तु तत्तत्कालकर्तव्यभक्षणार्थपरिहरणीयानामेव सहत्वविधिरिति विभाव्यते तदा माऽस्तु सूत्रस्वारस्यात्तदपि। बर्हिषत्करणं तु सूक्ष्मत्वात् कृष्णलानां चतुर्धाकरणोत्तरकालाभावाच्च निवर्तेत इत्यन्यदेतत् ॥ ७ ॥

(८)—ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥ परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ दक्षिणायुक्तवचनाच्च ॥ २४ ॥ न चान्येनानम्येत परिक्रयात्कर्मणः परार्थत्वात्॥ २५ ॥ परिक्रीत-

---

एकार्थत्वादविभागः स्यात्।

बर्हिषत्करणमिति। बर्हिष्यवस्थापनमित्यर्थः। इत्यपि नेति। प्रकृतौ 'इदं ब्रह्मण' इति व्यादेशो ब्रह्मसम्बन्धप्रदर्शनार्थः, अथवाऽन्यसम्बन्धनिवृत्त्यर्थो वा स्यात्? आद्ये चतुर्थभागप्रकाशनरूपप्राकृतकार्याभावः। तस्येह सर्वभागप्रकाशकत्वात्। द्वितीये व्यावर्त्यस्याप्रसिद्ध्या तदभाव इति प्रयोजनाभावाल्लोप इत्यर्थः। सहत्वविधानादेवेति। परिहरणीयेषु सर्वेषु सहत्वविधिः परिहरणीयार्थभेदं विनाऽनुपपन्नः चतुर्धाकरणमतिदेशप्राप्तं विभागार्थमनुमन्यते। ततश्चतुर्धा विभज्य भागचतुष्टयमपि सहैव भक्षणार्थं ब्रह्मणे देयमिति शास्त्रार्थावधारणान्न लोप इत्यर्थः। एकार्थत्वादविभाग इति सूत्रे अविभागस्योक्तस्योपपत्त्यर्थं पक्षान्तरमिव दर्शयति—यदि त्विति। प्रत्यक्षविभागं विनापि सम्भावनामात्रेणैव तेषां भेदावधारणोपपत्तेरुपपद्यत एव सर्वसाधारण्येन सहत्वविधिरित्यर्थः। सूक्ष्मत्वादिति। बर्हिषि स्थापने सूक्ष्मत्वादनुपलम्भस्यैवापत्तेरित्यर्थः। अङ्गभूतक्रमकालाद्यनुरोधेन पदार्थलोपे प्रमाणाभावात् सूक्ष्माणामपि पुनरुपलम्भोपपत्तेः न बर्हिषत्करणस्य लोप इत्यन्यदेतदित्यनेन सूचितम्।

---

वचनाच्च ॥ २६ ॥ सनिवन्येव भृतिवचनात् ॥ २७ ॥ नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥

'ऋत्विग्भ्यो दक्षिणां ददाति' इति तत्र तत्र श्रुतं दक्षिणादानं नारादुपकारकं, अपि तु दृष्टार्थत्वलाभायापेक्षितानत्यर्थमेव। नियमादृष्टस्य कल्पनीयत्वाच्च न धर्मविधिवैयर्थ्यम्। अतस्सत्रे स्वत एवानतत्वेन न तत्सिद्ध्यर्थं दक्षिणादानमिति सिद्धम्। अत एव 'नात्र गौर्दीयते' इति नित्यानुवादोऽपि विध्यन्तरशेषत्वात्सङ्गच्छते ॥ ८ ॥

---

(९)—शेषभक्षाश्च तद्वत् ॥ २९ ॥ संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ शेषं च समत्वात् ॥ ३१ ॥ स्वामिनि च दर्शनात् तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥ तथा चान्यार्थदर्शनम् ॥ ३३ ॥

शेषभक्षास्तत्र तत्र द्वितीयासंयोगात् हविःप्रतिपत्त्यर्थाः प्रयाजशेषन्यायेन कर्तुः करिष्यमाणकर्मणि बलाधानार्थाश्च, न त्वानत्यर्थाः तस्याः प्रकृतावानुषङ्गिकत्वेऽपि प्रयोजकत्वाभावात् ॥

अस्तु वा दृष्टप्रयोजनत्वाविशेषात् त्रयाणामपि प्रयोजकत्वं न त्वानतिमात्रस्य। अतस्सत्रे तदभावेऽपि प्रतिपत्त्याद्यर्थं कर्तव्या एव ॥ ९ ॥

---

ऋत्विग्दानं धर्ममात्रार्थं स्यात्।

दानस्यादृष्टार्थत्वेनैव प्रसिद्धेः, ऋतपेये औदुंबरसोमचमसस्याल्पस्य त्रेधातव्यायां सहस्रस्य च दक्षिणात्वेन विधानस्य कर्माननुरूपत्वात्, रजकादिभ्यो भृतिदाने मन्त्रादीनामङ्गत्वस्यादर्शनाच्च दृष्टार्थत्वं दानस्यामन्यमानं प्रति उत्तरं सिद्धान्तेनैवाह—ऋत्विग्भ्य इति। आनत्यर्थमेवेति। भृत्यान् परिक्रीय वशीकारः आनतिपदार्थः। धर्मविधीति। ते च कामश्रुतिपाठादयः। अत एवेति। क्वचित् सत्रेऽयं निषेधोऽर्थादेव प्राप्तेरदक्षिणानि सत्राण्याहुरित्युपक्रमात् सत्रस्तुत्यर्थमनुवादो भवति। अन्यथाऽदृष्टार्थत्वेन प्राप्तस्य निषेधेऽपूर्वविधित्वविकल्पापत्तिरित्यर्थः।

---

शेषभक्षाश्च तद्वत्।

कर्तृसंस्कारकत्वं तन्त्ररत्नादावुक्तं प्रयाजशेषाधिकरणे हविराधारतानियमांशेन हविःसंस्कारत्वखण्डनादेव समानन्यायादयुक्तमित्यतः भक्षणस्यैव स्वोक्तप्रयाजशेषन्यायेन कर्तृसंस्कारत्वं षष्ठे साधितमनुवदति—प्रयाजशेषेति। अस्तुवेति। यथाचात्र प्रयाजशेषन्यायवैषम्यान्न

(१०)—वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात् स्वकर्मत्वात् ॥ ३४ ॥
परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ प्रतिषेधश्च कर्मवत् ॥ ३६ ॥
स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥ न दक्षिणाशब्दात्
तस्मान्नित्यानुवादस्स्यात् ॥ ३८ ॥

परिक्रयणवत् **वरणमपि ऋत्विगानत्यर्थत्वात् सत्रे न कार्यमेव। न हि तददृष्टरूप-ऋत्विक्त्वसम्पत्त्यर्थं, ऋत्विक्त्वस्य दृष्टरूपत्वे प्रमाणाभावस्य तृतीये साधितत्वात्। न वा** ऋतुयाज्यावरणवत् **स्वतन्त्रादृष्टार्थं, प्रमाणाभावात्। सिद्धमपि चैवमादि बाधलक्षणे शिष्यहितार्थं कथ्यत इति विवेकः॥ १०॥**

---

कर्तृसंस्कारत्वं, अत एव न त्रयाणां प्रयोजकत्वं तथोपपादितं मया षष्ठे तत्रैव द्रष्टव्यम्। अत्र च देवतार्थं त्यक्तस्य हविषः पुनरनीशेन यजमानेन दानासम्भवान्न भक्षणाय हविर्दानेन ऋत्विजां परिक्रयपूर्वकवशीकाररूपानतेः सम्भव इति प्राचामुक्तं परिहर्तुं दृष्टप्रयोजनत्वाविशेषादित्युक्तम्। तस्यायमर्थः। नह्यत्रास्ति दानेन प्रयोजनम्। भक्षणादेव यद् दृष्टं प्रयोजनं उत्पद्यते तदेवास्य फलं दृष्टत्वाविशेषात्। उपपद्यते च तस्मात् प्रतिपत्तिरिवानतिरपीति न किञ्चिद्बाधकम्। अत्र चासंसर्गाभावे चतुरवत्तसंपत्तेरिव आनत्यभावे तत्प्रतिपत्तेर्न प्रयोजकत्वमिति नार्थः। त्रिष्वपि परकीयद्रव्यभक्षत्वादिनैव जनकत्वेन शेषसत्वेऽन्यस्याभावासिद्धेः। अतोऽव्यभिचारात् समत्वात् दृष्टत्वाच्च त्रयाणामपि निरपेक्षमेव प्रयोजकत्वमभिप्रेत्य त्रयाणामित्युक्तम्।

---

**वरणमृत्विजामानमनार्थत्वात्।**

**परिक्रयश्च तादर्थ्यादि**त्युत्तरसूत्रेण परिक्रयस्य सत्रेऽकरणं प्रतिपाद्यते। तत्र विशेषाशङ्काभावात् पृथक्करणे प्रयोजनाभावं पश्यन्निवैकहेलयैव दृष्टान्तेन परिक्रयस्यापि सत्रे बाधमाह—**परिक्रयवदिति**। पूर्वं वेतनस्यानमनार्थत्वप्रसाधनात् स्वत एवानतेषु प्रयोजना-भावात्तल्लोपे सति तत्कृतः परिक्रयोऽपि लुप्यते। तथैव वरणस्यापि वरणकाले 'कच्चित् कल्याणिन्यो दक्षिणाः' इत्यृत्विजा प्रश्नकरणेनापि भविष्यद्दानसूचनेनोत्साहजननार्थत्वेनानत्यर्थ-त्वात् तदभावे लोप एवेत्यर्थः। **ऋतुयाज्यावरणवदिति**। सोमे ऋतुग्रहे वृतानामपि पुनर्वरणं यथा अदृष्टार्थं तद्वदित्यर्थः।

---

(११) उदवसानीयस्सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥ न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च ॥ ४० ॥

अनारभ्य 'सत्रादुदवसाय पृष्ठशमनीयेन सहस्रदक्षिणेन यजेरन्' इति श्रुतम्। सोऽयं पृष्ठशमनीयः प्रकृतिविकृतिसाधारणसत्रमात्राङ्गं उत सत्रोदवसाने निमित्ते नैमित्तिकोऽयं स्वतन्त्र इति चिन्तायां—

सत्राणां फलवत्त्वादफलोऽयं बृहस्पतिसवन्यायेन सत्राङ्गम्। यद्यपि वा सत्रोदवसानं निमित्तं तथाऽपि अश्वप्रतिग्रहेष्टिन्यायेन सत्राङ्गम्। न चोत्पूर्वकस्यावस्यतेस्तद्विषयकव्यापारोपरमवाचित्वात्, अङ्गत्वे चास्यापि[1] तद्विषयकव्यापारत्वावश्यंभावादुदवसानोत्तरत्वानुरोधेन स्वतन्त्रफलकल्पनायामपि न दोष इति वाच्यं, एकसत्रोत्तरमपि सत्रान्तरस्य तस्यैव वा कामनावशतः करणसम्भवेन सत्रत्वावच्छिन्नविषयकव्यापारसामान्योपरमस्य कदाऽपि निश्चेतुमशक्यत्वात्। अतस्त्वयाऽपि तद्व्यक्तिप्रयोगोपरम एवोदवसानपदार्थो वाच्यः। स च ममापि सम्भवतीति युक्तमङ्गत्वं बृहस्पतिसवादिवत्। न चैवमङ्गप्रधानयोरेककर्तृत्वाद्यजमानैरेव करणापत्तौ दक्षिणाम्नानानुपपत्तिः तस्या अदृष्टार्थत्वाङ्गीकारेणाकर्मकरेभ्योपि ब्राह्मणेभ्यो दानोपपत्तेः।

वस्तुतस्तु अङ्गत्वेऽपि प्रयोगबहिर्भूतत्वेन पृष्ठशमनीयस्य ऋत्विक्कर्तृकत्वोपपत्तेः बृहस्पतिसव इव दक्षिणाम्नानं न विरुध्यते। 'ये यजमानस्त ऋत्विजः' इत्यनेन हि सत्र-

---

उदवसानीयस्सत्रधर्मा स्यात्।

प्रकृतिविकृतीति। यदि सर्वप्रकृतिभूतसत्रात्मकद्वादशाहप्रकरण एवाम्नानं स्यात् तदा सामान्यवाचिनोऽपि सत्रशब्दस्य विशेषपरत्वं परिकल्प्य प्रकृतिमात्राङ्गमेवापद्येत। अस्य तु अनारभ्याम्नानेऽपि केनचिदतिदेशप्राप्तद्वारेण[2] विधानाभावेन द्विरुक्त्यप्रसक्तेः जयादिहोमवत् विकृतावप्युपदेशेनैव प्राप्तेरविकल्पत्वात् उभयाङ्गमित्यर्थः। अश्वप्रतिग्रहेष्टिन्यायेनेति। यथा ऽश्वप्रतिग्रहेष्टिः यत्कर्माङ्गदाननिमित्ते विधीयमाना तत्कर्माङ्गं तथाऽयमपीत्यर्थः। बृहस्पतिसव इवेति। बृहस्पतिसवे हि प्रतिसवनमेकादश गाव इत्येवं त्रयस्त्रिंशत्सङ्ख्याका गावः चतुर्विंशोऽश्वश्च दक्षिणात्वेनाम्नातः तद्वदिहापि तदाम्नानं न विरुद्ध्यत इत्यर्थः। ऋत्विगन्तरकरणे साङ्गे सत्रे आर्त्विज्योद्देशेन यजमानकर्तृत्वविध्यनुपपत्तिं परिहरति—ये यजमाना इति।

---

1. पृष्ठशमनीयस्यापि

2. A. द्वारेणैव

प्रयोगमध्यवर्तियूपोपसद्दीक्षोद्देशेन सप्तदशारत्नित्वादिविधिवद्यजमानविधानात्; बृहस्पतिसवयूपादावातिदेशिकधर्मप्राप्तिवदिहापि ऋत्विगन्तरस्यैव प्राप्त्युपपत्तिः। अतश्च दक्षिणाम्नानस्याप्युपपत्तेरङ्गमेव पृष्ठशमनीय इति प्राप्ते—

'सत्रादुदवसाय' इत्यत्र उत्पूर्वकस्यावस्यतेः सत्रत्वावच्छिन्नोपधेयफलव्यक्त्युद्देश्यकव्यापारसामान्योपरमवाचित्वात् सत्यपि सत्रान्तरस्याग्रे कर्तव्यत्वे एतत्सत्रोपधेयफलव्यक्तेर्व्यापारान्तराभावेनोदवसानोपपत्तेरङ्गत्वे च तदसम्भवादनङ्गत्वम्। 'वाजपेयेनेष्ट्वा, संस्थाप्य पौर्णमासीन्' इत्यादौ तु प्रयोगसमाप्तिमात्रस्यैवोक्तेर्नाङ्गत्वविघातः। अतस्सत्रोदवसाने निमित्ते नैमित्तिकोऽयं पुरुषार्थतया विधीयते। अतश्च तदकरणे प्रत्यवायः करणाच्च पापध्वंसः। प्रयोजनं—अङ्गत्वे सत्राधिकारिभिः संहत्य ऋत्विगन्तरसम्पादनेन करणं, अनङ्गत्वे तु वक्ष्यते। अत एवातिदेशिकस्य[1] कर्त्रैकत्वस्य

---

उत्पूर्वकस्येति। यद्यप्युपरमापरपर्यायमवसानं समाप्तावपि सम्भवति, तथापि उदुपसर्गार्थस्योत्कृष्टत्वस्य समाप्तौ तदुत्तरं तदीयव्यापारसामान्योपरम एव सम्भवात् उपसर्गबलेन सकलव्यापारोपरमवाचित्वमित्यर्थः। **निमित्ते इति।** यद्यपि वैमृधादिवाक्येष्विवेह न निमित्तत्वप्रतिपादकमस्ति, एवं सत्यपि यद्यत्र निमित्तत्वं क्त्वाप्रत्ययस्यार्थः कल्प्येत तदा वैमृधेऽपि तदापत्तिस्तुल्या, तथापि पौर्णमासीपदस्य वाक्ये कालोपलक्षणत्वेऽपि उद्देश्यसमर्पणेन प्रयोजकत्वरूपफलमपि लभ्यते। समर्पिते च तस्मिन् न पुनर्निमित्तत्वमपि सम्भवतीति न तत्परत्वाश्रयणम्। प्रकृते तु उदवसानानुरोधेन अङ्गत्वे निरस्ते केवलं सत्रपदमुच्चार्यमाणं पराङ्गकालोपलक्षणमेव स्यादिति न प्रवृत्तिविशेषकरत्वम्। अतः सत्रपदस्य प्रवृत्तिविशेषकरत्वलाभाय प्रयोजकत्वरूपफलं लभ्यते यावत् तावदस्य फलं कल्पनीयं भवति। तच्च निमित्तत्वाङ्गीकारेणोपपद्यत इति क्त्वाप्रत्ययस्य सम्बन्धसामान्यार्थकत्वेन निमित्तत्वपरत्वमङ्गीक्रियत इति वैषम्यमित्याशयः। एतच्च प्राचां मतिमनुरुद्ध्योक्तम्। वस्तुतस्तु दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेत्यत्र दर्शपूर्णमासपदयोरिव कालविशेषणतयैव प्रवृत्तिविशेषकरत्वं युक्तमिति[2] ध्येयम्। **वक्ष्यत इति।** एकैकेनापि सत्राधिकारिणा ऋत्विगन्तरसम्पादनेन तदिति वक्ष्यत इत्यर्थः। ऋत्विगन्तरसम्पादनस्य उभयत्रापि तुल्यत्वात् इतरस्य[3] इतरनिरपेक्षताकृत एव विशेषः सिद्धान्ते वाच्यः। स चोत्तरत्र वक्ष्यमाण-

---

1. ज्यौतिष्टोमिकस्य
2. A. युज्यत एवेति
3. A. इतरेतरनिर

**सप्तदशादिना** बाधकल्पकत्वाद्**ध्यायसङ्गतिः** ॥ ११ ॥

---

## (१२) तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात् ॥ ४१ ॥

**अङ्गत्वेऽपि संहत्यैव करणं आख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेन सप्तवाक्य इव विवक्षितत्वात्।** [1] कथञ्चित्**प्राप्तत्वेऽपि संहत्य प्रयोगसिद्ध्यर्थं 'सृष्टी-रुपदधाति' सोमेन यजेत' इत्यादिवद्विशिष्टविध्यङ्गीकारेण प्रयोजनसिद्ध्यर्थं विध्युपपत्तेश्च। स्थितं तावदपर्यवसितम्** ॥ १२ ॥

---

**न्यायाधीन** एवेत्यभिप्रेत्य **वक्ष्यत** इत्युक्तम्। एतच्चाङ्गत्वे सप्तस्योद्देश्यत्वेनोल्लेखः पूर्वपक्षे, स्वसिद्धान्ते निमित्तपापक्षययोरेवेति प्रयोजनान्तरस्याप्युपलक्षणम्। **बाधफलकत्वादिति।** पूर्वपक्षे यदि साक्षादेव पृष्ठशमनीयस्य यजमानैः करणं, यदि वा ऋत्विगन्तरसम्पादनेन उभयथापि कर्तृगतसाप्तदश्यसङ्ख्यया स्वातिदेशप्राप्तकर्त्रेकत्वस्य बाधः। सिद्धान्ते तु वक्ष्यमाणरीत्या प्रत्येकमेव कर्तृत्वात् तदबाधः, सप्तदशसङ्ख्याबहिर्भूतस्य तु निमित्ताभावाद-ननुष्ठानमित्यध्यायसङ्गतिरित्यर्थः।

---

**तेषान्तु वचनात् द्वियज्ञवत्।**

**कथञ्चिदिति।** वक्ष्यमाणसिद्धातन्तयुक्त्येति शेषः। **सृष्टीरिति।** यथैव चयनान्यथानुपपत्त्या प्रकरणाच्च मन्त्रोपधानयोः कथञ्चित् प्राप्तावपि मन्त्रविशिष्टोपधानविधिः इष्टकासंस्कारार्थत्वेन चयनसमानकर्तृत्वप्रत्येकोपधानयोः सिद्ध्यर्थं, उपधाने मन्त्रनियमसिद्ध्यर्थ-श्चाङ्गीक्रियते। तथा संस्कारविध्यन्यथानुपपत्त्यापि सोमस्य कथञ्चित् प्राप्तावपि धर्मसामानविध्यस्य सक्तूनां साधनतायाश्च निवृत्त्यर्थं पुनरपि विशिष्टविधिरूपेण विधानं स्वीक्रियते, एवमिहापि प्रयोजनान्तरसिद्ध्यर्थं प्राप्तस्यापि विशिष्टविधिरूपेण बहुत्वस्य विधानं युक्तमेवेत्यर्थः। **स्थितमिति।** एतत्पूर्वपक्षनिरासेन प्रत्येककर्तृत्वे सिद्धान्तिते सति एकस्य कर्तृत्वं साङ्गे प्रधाने ऋत्विगन्तरसम्पादनं विना न घटत इति तत्सम्पादनस्यावश्यकत्वात् यजमानानामेवार्त्विज्यमिति पूर्वपक्षोत्थानं न भवेदित्यतः अन्तरागर्भिणी कृत्वाचिन्तयाऽऽरभ्यत इत्यर्थः।

---

1. सिद्धान्तरीत्येत्यादिः

(१३) तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥ एकैकशस्त्वप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥

**अनङ्गत्वेन, अङ्गत्वेऽपि वोदवसानसमानकर्तृकत्वानुरोधात् यजमानैरेवार्त्विज्यं कर्तव्यम्। न च तस्य प्रधानमात्राभिप्रायत्वेनोपपत्तिः। साङ्गे समानकर्तृकत्वश्रवणेन 'अप्सवभृथेन चरन्ति' इत्यादावद्भिराहवनीयादेरिव औपदेशिकेन यजमानकर्तृकत्वेनाङ्गेष्वपि ऋत्विक्कर्तृकत्वबाधात् दक्षिणादानस्यादृष्टार्थत्वेनाप्युपपत्तेश्चेति प्राप्ते।**

प्रयोजक**कर्तृत्वेनापि** प्रकृताविव **यजमानकर्तृकत्वोपपत्तेरङ्गत्वेऽनङ्गत्वेऽपि वा सौर्यादावित्रातिदेशप्राप्तऋत्विग्बाधे प्रमाणाभावः। एवं च दक्षिणाश्रुतिराञ्जस्येनोपपद्यते ॥**

**स्थितादुत्तरं**—न पृष्ठशमनीये **संहत्य प्रयोगः, बहुत्वस्य प्राप्तत्वेनाविधेयत्वात्। उदवसाने ह्यनेकेषां सत्रकर्तॄणां कर्तृत्वं प्राप्तमेव। अतस्तत्समानकर्तृकत्वादेव पृष्ठशमनीयेऽपि** तत्प्राप्तिः। **अतोऽयं तावदनुवादः, क्त्वाप्रत्ययस्य हि पूर्वकालत्ववत्**

---

**तत्रान्यानृत्विजो वृणीरन्।**

तन्त्ररत्नदर्शितां सिद्धान्तयुक्तिमनूद्य निराकरोति—**न चेति**। अत्राब्देशस्य साङ्गप्रधानार्थत्ववत् अत्रापि पृष्ठशमनीयेनेति तृतीयाश्रवणात् उदवसानसमानकर्तृत्वस्यापि साङ्गपृष्ठशमनीयार्थत्वं पूर्वपक्ष्युक्तं परिहर्तुं **प्रकाशकारै**रुक्तम् "ये यजमाना इति वाक्येन न प्रधाने सत्रे यजमानत्वेन कर्तृत्वविधानं, किन्तु तदङ्गेष्वेव ; तद्वाक्ये उद्देश्यसमर्पकेण ऋत्विज इति पदेन ऋत्विक्कार्यस्यैव लक्षितत्वात्। इह च ये सत्रकर्तारः तेषामपि साङ्गेऽपि पृष्ठशमनीये विधिः न सत्राङ्गेषु विहितान् यजमानान् कर्तॄन् समानकर्तृत्वेन विधत्ते ; किन्तु सत्रकर्तॄन् ब्राह्मणादीनेव विधत्ते" इति। तदेतादृशसमानकर्तृत्वस्यैव विधाने नियामकाभावात् प्रत्युतार्त्विज्यकर्तृयजमानसमानकर्तृत्वे विहिते सति ब्राह्मणत्वावच्छिन्नसमानकर्तृकत्वस्यापि सम्भवेन शास्त्रस्य महाविषयत्वलाभादयुक्तमित्यभिप्रेत्य अन्यथा समानकर्तृत्वमुपपादयति—**प्रयोजकेति**। तथा च स्वतन्त्रप्रयोजककर्तृत्वसाधारण्येन समानकर्तृत्वे उक्ते सति प्रधाने द्रव्यत्यागादौ साक्षात्कर्तृत्वेनेवाङ्गेषु प्रयोजककर्तृत्वेन तत्समानतोपपत्तिरिति **अपि**नोक्तम्। **प्रकृताविवेति**। दर्शपूर्णमासप्रयोगे साङ्गेऽपि श्रूयमाणं यजमानकर्तृत्वं ऋत्विग्वरणाम्नानानुपपत्त्या साक्षात्परम्परासाधारणमङ्गीक्रियते तद्वदित्यर्थः।

**स्थितादुत्तरम्।**

उक्तपूर्वपक्षं दूषयति—**न पृष्ठशमनीयेति**। **तत्प्राप्तिरिति**। अनेककर्तृप्राप्तिरित्यर्थः।

**समानकर्तृकत्वमप्यनुशासनबलाद्वाच्यम्। न चाव्ययकृत्त्वेनास्य भावशक्तत्वात् क्त्वाप्रकृत्यर्थभूतक्रियाया उत्तरक्रियायामन्वये पूर्वकालत्वसमानकर्तृकत्वयोस्संसर्गत्वेनैव बोधोपपत्तेर्न तयोस्तस्यातिरिक्ता शक्तिरिति वाच्यं, पदार्थानुशासनप्रवृत्तपाणिन्यादेस्संसर्गानुशासकत्वविरोधात्॥**

**किञ्च क्त्वाप्रकृतिभूतधात्वर्थस्यैवोत्तरक्रियासम्बन्धः क्त्वा च संसर्गतात्पर्यग्राहकः इत्युच्यते, अथवा क्त्वार्थभाव एव निरुक्तोभयसंसर्गेणोत्तरक्रियायामन्वेति इति विवेक्तव्यं, तत्र न तावदाद्यः—क्त्वाज्ञानत्वेनैव तात्पर्यग्राहकत्वेऽगृहीतसङ्केतस्यापि तात्पर्यग्रहापत्तेः। तात्पर्यग्राहकत्वप्रकारकज्ञानत्वेन तत्त्वे आत्माश्रयापत्तेः, एकत्वादिशक्तद्वितीयादेः कर्मत्वादिसंसर्गतात्पर्यग्राहकत्वेनैवोपपत्तौ प्रातिपदिकार्थस्यैव कर्मतादिसंसर्गेण क्रियायामन्वयापत्तेः कर्मत्वादौ द्वितीयादेश्शक्त्यनापत्तेश्च॥**

**अत एव नान्त्यः, सङ्ख्याया एव स्वसमानाधिकरणकर्मत्वादिसंसर्गेण क्रियान्वयापत्तेः। अतोऽनुशासनबलात् कर्मत्वादिवदेव पूर्वकालत्वादेरपि वाच्यत्वम्। अस्तु वा तत्, तथाऽपि न दोषः। अतस्तत्तावदनुवादः।** एकेन पदेनानेकेषामुपादाने **प्रतीयमानकर्तृसाहित्यमपि न तावदुदवसाने विवक्षितं, निमित्तविशेषणत्वात्** सत्रे संहत्य कर्तृत्वेऽपि **तत्त्यागे साहित्यं विनैव कर्तृत्वाच्च। यो हि संयोगादिरूपो व्यासज्यवृत्तिधर्मस्तदभावः प्रत्येकवृत्त्येव, किमुत यदा सत्रे बहुवचनानुरोधात् प्रत्येकमेव कर्तृत्वं कर्तृणां परं समुच्चयः, तदा तत्त्यागे साहित्याभावे** कस्सन्देहः? आख्यातोपात्त**बहुत्वावगतसाहित्यं**

---

**एकेन पदेन** उदवसायेत्यनेन। साहित्यं प्रतीयमानमप्यर्थसिद्धसमुदायप्राप्तमनुवाद एव। वस्तुत उदवसानकर्तृरि तदसम्भवादित्यभिप्रेत्याह—**सत्रे इति। कः सन्देह इति।** न केवलं सत्रविषयव्यापारसामान्याभाव उदवसानं उदासीनेऽपि पुरुषे तत्सत्त्वेन तस्य निमित्तत्वापत्तेः। अतः सत्रविषयकव्यापारकर्तृत्वाश्रयसमानाधिकरणो यः तत्कर्तृत्वाभावः कृतिध्वंसरूपः[1] स एव। तत्तत्समानकर्तृत्वञ्च ल्यबन्तेनोच्यते। तत्र कर्तृत्वस्य संयोगादिवद्व्यासज्यवृत्तित्वाभावेन प्रत्येकवृत्तित्वे तदभावस्य प्रत्येकवृत्तित्वादेव साहित्यासम्भवे न सन्देह इत्यर्थः। पूर्वं बहुत्वस्यानुवादत्वेनाविधेयत्वात् नानेकेषां कर्तृत्वप्राप्तिरित्युक्तम्। अधुना तस्यानुवादत्वेऽपि बहुवचनान्तैकपदोपादानलब्धसाहित्यविवक्षायां बाधकाभावात् भवतु संहत्य कर्तृत्वमित्याशङ्कां निराकरोति—**आख्यातोपात्तेति। लाघवमिति।** उदवसानस्या[2]निमित्तत्वात् तद्बलादेवोत्तर-

---

1. B. कृतिव्याप्तिरूपः

2. A. स्य निमि

**तु बहुत्वस्याविवक्षितत्वे अविवक्षितमेव। उदवसाने हि यादृशा निरपेक्षाः कर्तारः तादृशा एव समानकर्तृकत्वबलेन पृष्ठशमनीयेऽवगम्यन्ते। अतः प्रथमावगतनैरपेक्ष्य-बलेन न साहित्यविवक्षा।**

**न च नैरपेक्ष्यानङ्गीकारेऽपि ल्यबन्तोपात्तसमानकर्तृकत्वाविरोधात् बहुत्वस्य तदन्तर्गतसाहित्यस्य च विवक्षोपपत्तिः। विशिष्टविधिगौरवभयेन सम्भवत्प्राप्तिकस्य बहुत्वस्यानुवादाङ्गीकारात्। अत एव पृष्ठशमनीयमात्रविधानात् विधेर्लाघवम्॥**

**न च संस्कारविध्यन्यथाऽनुपपत्त्यादिना सम्भवत्प्राप्तिकस्यापि सोमादेस्सक्तु-व्यावृत्त्यादिरूपप्रयोजनसिद्ध्यर्थं विशिष्टविध्याश्रयणवदिहापि साहित्यसिद्ध्यर्थं बहुत्व-विध्याश्रयणमिति वाच्यं, सोमादिपदवैयर्थ्यभिया तत्र तथाऽऽश्रयणेऽपि प्रकृते बहुवचनस्यावर्जनीयतयाऽनुवादत्वोपपत्तेः। अतः एकैकश्येनैव पृष्ठशमनीयः कार्य इति न तत्र प्राकृतकर्तृत्वबाधः॥ १३॥**

---

## (१४) कामेष्टौ च दानशब्दात्॥ ४४॥ वचनं वा सत्रत्वात्॥ ४६॥

**सारस्वते सत्रे 'प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं निर्वपति तस्यां अश्वां पुरुषीं च धेनुके दद्युः' इति श्रुतम्। तत्र न तावदिहोदवसानवत् प्रस्रवणप्राप्तेर्निमित्तता, येन तद्वदेव कामेष्टेः प्रत्येकमेव ऋत्विगन्तरोपादानेन करणमाशङ्क्येत। सरस्वती-विनशनादारभ्य प्लाक्षप्रस्रवणपर्यन्तं सत्रदेशविधानादेव प्राप्तेरर्थप्राप्तताया अनुवाद-मात्रत्वात्। अतो न तावत्प्रत्येकं करणम्। सत्रवत् संहत्यापि करणे किं ऋत्विगन्तर-मुपादेयं न वेति चिन्तायाम्—**

---

कालस्य तत्समानकर्तृत्वस्य बहुत्वसाहित्यादेश्चार्थतः प्राप्तत्वात् विधानाभावे सति तादृशे पूर्वोक्ते निमित्तनैमित्तिकतया पृष्ठशमनीययागमात्रविधानात् लाघवमित्यर्थः। **अवर्जनीयतयेति।** विभक्तेरावश्यकत्वेन कस्यचिद्वचनस्य प्रयोगे कर्तव्ये साधुत्वार्थं समुच्चितकर्तृसमानकर्तृत्वानुरोधात् बहुवचनमेवोपात्तमित्यवर्जनीयत्वमित्यर्थः।

---

**कामेष्टौ च दानशब्दात्।**

अश्वजातीयां मनुष्यजातीयां च स्त्रियं तथा धेनुद्वयञ्च दद्युरित्यर्थः। दद्युरिति शास्त्र-दीपिकायां लिखितमेवार्थतो धृतम्। भाष्ये "धेनुके दत्वा प्रतियमुनामवभृथमभ्यवयन्ति" इति वाक्यस्य लिखनात्। **अतो न तावदिति।** यदि निमित्तत्वं भवेत् तदा तस्य प्रतियजमान-मुत्पत्तेः प्रत्येकं करणं स्यात्। न त्वेतदस्ति। यत्र लीना सरस्वती यस्मात् कुरुक्षेत्रसमीपे

**दानस्यादृष्टार्थत्वकल्पनाभिया** ऋत्विगानमनार्थत्वावगतेः **ऋत्विगन्तरोपादानम्। न चास्य सत्रत्वेनातिदेशिकस्य ऋत्विक्षु यजमानाभेदस्य प्राप्तेर्न ऋत्विगन्तरोपादानमिति वाच्यं, अस्य सत्राङ्गत्वेन सत्रत्वाभावात्। अत्र हि सारस्वते सत्रे पौर्णमास्युत्तर-प्रतिपदि गोसंज्ञक एकाहः। अमावास्योत्तरप्रतिपदि चायुस्संज्ञकः। अन्तरा शुक्लपक्षे दर्शः कृष्णपक्षे पौर्णमासः इत्येवं क्रमेण क्लृप्तिः। तत्र च सोमयागस्यैव प्राधान्यम्।**

**अस्तु वा तन्त्ररत्नोक्त्या कौण्डपायिनामयनवत् दर्शपूर्णमासयोरपि। कामेष्टे-स्त्वङ्गत्वमविवादमेव। न च तथाऽपि प्रकृतौ द्वादशाहे आर्त्विज्य एव यजमानविधेस्तस्य चाङ्गमात्रविषयत्वात् कामेष्ट्याद्यङ्गेष्वपि तत्प्राप्त्यविरोध इति वाच्यं,** प्राकृतऋत्विक्कर्तव्य-**पदार्थेषु यजमानकर्तृकत्वप्राप्तावपि यूपावटास्तरणबर्हिर्न्यायेनाप्राकृतकार्यापन्नायां कामेष्टौ-तत्प्राप्त्यनुपपत्तेः।** कथं चित्तत्प्राप्तावपि **वा कामेष्ट्यतिदेशेनैष्टिकेन ऋत्विगन्तरस्य विशेषविहितस्य प्राप्तेस्तेन तस्य बाधाच्च। यद्यपि हि अतिदिश्यमानपदार्थविषये द्वयोरप्यतिदेशयोस्सामान्यविषयत्वं, तथाऽपि ऐष्टिकातिदेशे कामेष्टेरेवोद्देश्यत्वात् तस्यैव विशेषविषयत्वम्।**

**एवं सत्यपि यदि 'ये यजमानास्त ऋत्विजः' इत्यस्य सारस्वतसत्रे उपदेशो भवेत्तदा** सौमिकवेद्या **दैक्षादिषु ऐष्टिकवेदिबाधस्येवावभृथाङ्गेषु अद्भिराहवनीयबाधस्येवोप-**

---

विद्यमानात् विनशनात् प्रभृति यतः पर्वतात् प्लक्षवृक्षमूले प्रस्रवति तादृशस्य यथावस्थित-तीररूपदेशस्यैव साङ्गे सारस्वतसत्रे विहितस्यास्यामप्यङ्गभूतायां प्राप्तस्यैवानुवादात्। अतः सारस्वततन्त्रस्य प्रतियमुनामवभृथमित्यनेन कामेष्टेः परतोऽपि विधानात् तत्तन्त्रमध्यपतितायामस्यां प्रधानधर्मत्वेन बलवत् संहत्यकर्तृत्वमेव, नतु स्वधर्मत्वेन दुर्बलं प्रत्येककर्तृत्वमित्यर्थः। **ऋत्विगानमनेति।** यद्यप्यत्र पृष्ठशमनीयवाक्य इव न दक्षिणाशब्दः श्रूयते, येनास्य परिक्रयार्थत्वं स्यात्; तथापि **भक्त्याश्रवणाच्च दानशब्दः परिक्रये** इत्यत्र तृतीये दक्षिणाशब्दं विनापि दानस्य परिक्रयार्थत्वस्य साधनादुपपद्यत एव ऋत्विगानमनार्थत्वमित्यर्थः। **प्राकृत-र्त्विक्कर्तव्येति।** ये यजमाना इति वाक्ये ऋत्विक्पदेन ऋत्विक्कार्यं लक्षयित्वा यजमानविधानेऽपि तत्कार्यस्योद्देश्यत्वसिद्ध्यर्थं तत्प्राप्त्यालोचने यत्क्रत्वोपकारजनकत्वेन प्रसिद्धं अतिदेशतः प्राप्तं तदेवात्रोद्देश्यमिति तत्रैव तद्विधानमित्यर्थः। **कथञ्चिदिति।** साधारणसत्रातिदेशेन यजमानकर्तृत्वप्राप्तावपीत्यर्थः। **सौमिकवेद्येति।** इयति शक्ष्यामहेऽस्यां कर्तुमित्यनेन

देशिकयजमानाभेदेनैष्टिकऋत्विगन्तरबाधो भवेत्। न त्वेतदस्ति तस्य द्वादशाहे पठितत्वेनेह सत्रातिदेशेनैव प्राप्तेः।

न च तथाऽपि तस्य प्रधानीयत्वादैष्टिककामेष्ट्यतिदेशसङ्कोचकत्वं, तस्य स्वरूपेण प्रधानीयत्वेऽपि यजमानाभेदस्यार्त्विज्यपृष्ठभावेन प्राप्तस्याङ्गमात्रविषयत्वेन प्रधानीयत्वाभावात्। अतः कामेष्टौ ऋत्विगन्तरस्याबाध इति प्राप्ते—

प्राकृतलवनादिपदार्थानामासादनार्थबर्हिःपृष्ठभावेनैव प्राप्तेर्यूपावटास्तरणबर्हिषि न प्रापकप्रमाणं, न वा तस्य व्यक्त्यन्तरवर्तिनोऽन्यत्र प्रसङ्गेनोपकारकत्वम्। प्रकृते तु यजमानाभेदस्य द्वादशाहिकऋत्विक्कर्तव्यपदार्थमात्रोद्देशेन विधानात् कामेष्ट्यङ्गभूतऋत्विक्कर्तव्यपदार्थेषु प्रापकप्रमाणाभावेऽपि कामेष्टेस्सत्रमहाप्रयोगमध्यवर्तित्वात् सत्रादौ यजमानैः कृतस्य ऋत्विक्त्वाध्यवसायस्य आसत्रसमाप्तेः कामेष्ट्युत्तरकर्तव्यसत्रपदार्थसिद्ध्यर्थमावश्यकत्वात् तेनैव कामेष्टावुपकारसिद्धेर्न पृथक्स्वसिद्ध्यर्थं वरणभरणाक्षेपः।

प्रकृतौ हि न ऋत्विक्षु यजमानभेदस्साक्षाद्विहितः, अपि तु ऋत्विक्त्वाध्यवसायसिद्ध्यर्थं वरणभरणाम्नानात्स्वार्थिकः। अतश्च तदध्यवसायस्य सत्रार्थमपि स्वत एव सिद्धौ पशुपुरोडाशचोदकेन प्रयाजादेरिव कामेष्ट्यतिदेशेनापि न वरणभरणादेस्तदर्थमतिदेशः। अत एव यत्र सौमिकवेद्युत्तरमपूर्वो दर्शविकारश्श्रुतस्तत्र सौमिकवेद्यैव प्रसङ्गसिद्धेर्नैष्टिकवेदिरपि। न हि तत्र सौमिकवेदिरङ्गं, तस्याः प्राकृताङ्गप्रधानमात्रार्थत्वेन विहिताया अपूर्वाङ्गे उपदेशातिदेशाभ्यामप्राप्तेः। अतस्तत्र प्रसङ्गसिद्धिरेव। कामेष्टेस्तु देशान्तरीयत्वात्प्रसङ्गसिद्ध्यनुपपत्तेरैष्टिकी वेदिरिति, विशेषः। ऋत्विक्षु तु प्रसङ्गसिद्धेर्न

---

विनियुक्तयेत्यर्थः। **तस्येति**। सत्रातिदेशस्येत्यर्थः। **तस्य व्यक्त्यन्तरेति**। लवनादिधर्मस्य एकबर्हिर्व्यक्तिवृत्तिनः अन्यबर्हिर्व्यक्त्युपकारकत्वासम्भवादित्यर्थः। **स्वसिद्ध्यर्थमिति**। स्वाङ्गभूतर्त्विक्त्वाध्यवसायसिद्ध्यर्थमित्यर्थः। **अपूर्वो दर्शविकार इति**। विकृतिभूते सोमयागे इति शेषः। **देशान्तरीयत्वादिति**। अत्र च यत्र पश्चिमदेशस्थपर्वतस्थप्लक्षमूलान्निर्गत्य सरस्वती नदी लयं प्राप्ता स कुरुक्षेत्रसमीपदेशः सरस्वतीविनशनपदेनोच्यते। ततः प्रभृति सारस्वतसत्रस्यारम्भः; तत्र दीक्षोपसत्प्रायणीयासान्नाय्यदर्शपूर्णमासादि कृत्वा ततः शम्याप्रासे कृते यत्र शम्याप्रासो भवति तत्र गार्हपत्यदेशं प्रकल्प्य तत्प्रभृति सौमिकीं वेदिं कृत्वा उत्तरवेद्यां गोसंज्ञकं एकं सोमयागं कृत्वा पुनः शम्याप्रासाद्युत्तरवेद्यन्ते द्वितीयं आयुःसंज्ञकं अहः पुनस्तथैव कर्तव्यम्। एवं पुनः पुनरावृत्तौ क्रियमाणायां प्लाक्षप्रस्रवणदेशप्राप्तौ शम्याप्रासो न कर्तव्यः। तदानीमेव सत्रसमाप्तिरित्यादि कल्पसूत्रेष्वनुष्ठानमुक्तम्। ततश्च प्लाक्षप्रस्रवणदेशात्पूर्वतने शम्याप्रासदेशे सोमयागानुष्ठानात् कामेष्टेश्च प्लाक्षप्रस्रवणदेशे

**ऋत्विगन्तरमिति सिद्धम्। न चैवं ऋत्विगन्तरबाधस्य** प्रसङ्गसिद्धतया **दाशमिकबाध-लक्षणानाक्रान्ततयाऽध्यायासङ्गतिः, अश्वादिदानस्य प्राकृतान्वाहार्यादिदक्षिणाबाधक-त्वस्यापवादात् सङ्गत्युपपत्तेः।**

**यत्तु 'यत्किञ्चित्प्राचीनम्' इत्यादौ भागधर्मत्वपक्षे तद्भागारम्भके वैकृते अपूर्वे पदार्थे उपांशुत्वमिव यजमानाभेदस्यापि ऋत्विक्कर्तव्यप्रयोगधर्मत्वात् तत्प्रयोगारम्भके वैकृतकामेष्ट्यादिपदार्थेऽपि प्राप्त्युपपत्तिरिति सिद्धान्तोपपादनं, तत्—भागधर्मत्व-पक्षेऽपि यत्र स्वातिदेशेन तद्विरुद्धधर्मप्राप्तिः** यथा दीक्षणीयाङ्गादौ **तद्व्यतिरिक्तापूर्वपदार्थेष्वेव तद्धर्मप्राप्तेः कामेष्टौ च स्वातिदेशेन ऋत्विगन्तरस्यैव प्राप्ततयोपेक्षितम्॥ १४॥**

---

विधानाद्देशान्तरीयत्वं द्रष्टव्यम्। **प्रसङ्गसिद्धतयेति।** येषान्तु मते यजमानकर्तृत्वं प्रयोगा-न्वयित्वात् प्रयोगारम्भपदार्थाङ्गं सत् अतिदेशेन सत्रप्रयोगारम्भकपदार्थाङ्गं, ततश्च तत् कामेष्टिरूपापूर्वाङ्गमपि भवति तेषां तु स्वातिदेशप्राप्तऋत्विक्कर्तृत्वस्य यजमानकर्तृत्वेन प्रत्याम्नानात् दाशमिकबाधत्वं भवेत्। न त्वेतदस्ति। तस्य प्रसङ्गसिद्धत्वादित्यर्थः। **अपवादादिति।** पूर्वपक्षे दानस्य दृष्टार्थत्वात् प्राकृतदक्षिणाबाधः। सिद्धान्ते तु अदृष्टार्थत्वान्न कार्यापत्त्या बाध इत्यपवाद इत्यर्थः। न चैतावता प्राकृतदक्षिणाप्राप्तिः शङ्क्या; स्वत एवानतत्वेनार्थलोपाद्बाधो-पपत्तेरिति।

एवं तावत् कामेष्टौ यजमानाभेदस्य उपदेशातिदेशाभ्यामङ्गत्वं नास्तीत्यङ्गीकृत्य स्वमतेन सिद्धान्तमुपपाद्य यैः प्रकाशकारैः शास्त्रदीपिकादिग्रन्थस्वारस्यभ्रमेणातिदेशेनाङ्गत्वमङ्गीकृत्य प्रत्याम्नानबाधेनैव सिद्धान्त उपपादितः तमुपपादनप्रकारमनूद्य दूषयति—**यत्त्विति। यथा दीक्षणीयाङ्गादाविति।** दीक्षणीयायां विहितस्य विशेषस्वरस्य प्रधानमात्रविषयत्वस्य साधितत्वात् तदङ्गेषु अतिदेशप्राप्तमुपांशुत्वविरुद्धं त्रैस्वर्यमेव भवतीति तदतिरिक्तापूर्वपदार्थे स्वातिदेशरहिते यथोपांशुत्वं तथेहापि स्वातिदेशप्राप्तऋत्विक्कर्तृत्वानवरुद्ध एव यजमानकर्तृत्वं भवेदित्यर्थः।

---

## (१५)—द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥

दर्शपूर्णमासयोः 'यदि पत्नीस्संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा तं स द्वेष्याय दद्यात्' इति श्रुतम्। तत्र किमिदं दक्षिणादानमदृष्टार्थं ? उत ऋत्विगानत्यर्थमिति चिन्तायां—

दक्षिणाशब्दस्यानतिकरद्रव्यवाचित्वेन तद्दानस्यानत्यर्थत्वप्रतीतेर्नादृष्टार्थत्वकल्पनोचिता। न चास्याः प्रयोगमध्यवर्तिनिमित्तानन्तर्यबलेन प्रयोगमध्यवर्तितया प्रधानदक्षिणयैव प्रसङ्गसिद्धेर्दक्षिणान्तरानपेक्षत्वादेव नानत्यर्थता, दक्षिणाविधानान्यथानुपपत्त्या आनतिविशेषकल्पनेन तदर्थत्वोपपत्तेः।

अस्तु वा दक्षिणाम्नानबलादस्याः प्रयोगबहिर्भूतत्वमेव। निमित्तानन्तर्यं तु जातेष्टिवत् व्यवधानेऽपि न विरुद्ध्यते। न चैवमपि 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति स्मरणात् ऋत्विजां द्वेष्यत्वानुपपत्तेः द्वेष्यसम्प्रदानकदानस्यानत्यर्थत्वानुपपत्तिः। ऋत्विक्त्वसम्पत्त्युत्तरं तस्य द्वेषनिषेधेऽपि पूर्वं कृतद्वेषस्यार्त्विज्ये बाधकाभावात्। सत्यपि द्वेष्यस्यार्त्विज्यनिषेधे तस्य पुरुषार्थतया निषेधमुल्लङ्घ्यापि क्रतुकरणे वैगुण्याभावाच्च। क्रत्वर्थत्वेऽपि वा निषेधस्य सामान्यविषयत्वेन दक्षिणाम्नानबलकल्प्यद्वेष्यनियमविधिना विशेषविषयेण बाधोपपत्तेश्च। अतोऽस्य दक्षिणात्वात् कर्तव्या एवान्वाहार्यधर्माः, पाकादयस्त्वर्थलोपान्निवर्तन्ते इति प्राप्ते—

न तावदत्र प्राकृतदक्षिणादानानुवादेन गुणमात्रविधिस्सम्भवति, प्राकृतदानकार्यस्यानतेः प्रधानार्थान्वाहार्येणैव निष्पन्नतया प्राकृतदानस्येहाप्राप्तत्वात् तदनुवादेनानेकगुणविधानासम्भवाच्च। अतश्चाबद्धं तच्छब्दवाच्यं गुणद्वयविशिष्टं द्रव्यं द्वेष्यश्च सम्प्रदानमिति उभयविशिष्टं दानान्तरमेवात्र विधेयम्।

---

द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात्। अभिजुहुयादिति। प्रकृतावाहवनीये गार्हपत्ये वा हविषः श्रपणं विकल्पेन विहितमिति यदा गार्हपत्ये पुरोडाशश्रपणार्थं कपालासादनं तस्मिन्नासादिते कपाले पत्नीसंयाजाहुतिः पतेदित्यर्थः। प्रधानार्थान्वाहार्येणैवेति। उपकारपृष्ठभावेनैव पदार्थानामन्यत उपकारालाभेऽतिदेशाङ्गीकारादिह च अन्यतस्तदुपकारलाभान्न तत्पृष्ठभावेन स्वतन्त्रं दक्षिणादानमतिदेशतः प्राप्यते येनानुवादः स्यादित्यर्थः। तच्छब्दवाच्येति। तमिति तच्छब्दः तेनैकेन पदेन एकहायनत्वं पुंस्त्वसमानाधिकरणं गोत्वञ्चेति

**तदपि च न प्राकृतकार्यार्थतया** तस्य पूर्वमेव **निष्पन्नत्वात्**। द्वेष्यकर्तृकत्व**नैयत्यस्य दर्शपूर्णमासयोः प्रमाणान्तरासिद्धतया तत्सम्प्रदानकत्वस्य नैयत्यासम्भवेनानतिविशेषस्यापि कल्पयितुमशक्यत्वाच्च। द्वेष्यसम्प्रदानकदानाम्नानबलादेवास्यां प्रायश्चित्तेष्टौ प्रयोगबहिर्भावे द्वेष्यकर्तृविधिनिमित्तानन्तर्यबाधं प्रयाजाद्यंशेऽतिदेशं चानपेक्षितं प्रकल्प्यानत्यर्थत्वकल्पने तु तवैव गौरवम्। न हीदं फलमुखं, एतत्कल्पनमन्तरेणानतेरवुध्यमानत्वात्। अतो वरमदृष्टार्थमेवेदं दानं प्रयोगमध्यक्रियमाणाया एव प्रायश्चित्तेष्टेरङ्गम्। दक्षिणाशब्दस्तु** तच्छब्दापेक्षितार्थ**समर्पकार्थवादे श्रुतो द्वेष्यानतिकरत्वमात्रेणागत्या कथञ्चिन्नेयः।** अतोऽत्रान्वाहार्य**धर्माणामप्रसक्तत्वादेव निवृत्तिः।** अध्यायसङ्गति तस्तु **पूर्वपक्षे पाकलोपाद्दृष्टव्या ॥ १५ ॥**

---

## (१६)—अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥ यावदुक्तमुपयोगस्स्यात् ॥ ४८ ॥

**'यदि सत्राय संदीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य** नेदिष्ठस्स्यात् **तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् (ता. ब्रा. ९-८-१) ततस्संवत्सरे अस्थीनि याजयेयुः' (९-८-१३) इति श्रुतम्। तत्र योऽयमस्थियागस्संवत्सरे स किं मृताधिकारिकः उत जीवदधिकारिक इति चिन्तायां—**

---

गुणद्वयं परामृष्टमित्यर्थः। **तस्य पूर्वमिति।** अनूयाजेभ्यः पूर्वमेवान्वाहार्यदक्षिणया निष्पन्नत्वादित्यर्थः। **द्वेष्यकर्तृत्वेति।** आर्त्विज्ये इति पूर्वं शेषः। **तच्छब्दापेक्षितार्थेति।** तं स द्वेष्यायेति वाक्ये दानान्तरविधिः। तत्र तच्छब्दापेक्षितार्थसमर्पकः तस्यैकहायनो गौर्दक्षिणेत्यर्थवादः। तत्र श्रुतो दक्षिणाशब्दः आनतिकरत्वसादृश्याद्गौण इत्यर्थः। **अतोऽत्रेति।** पाकादिसर्वान्वाहार्यधर्माणां अप्राकृतकार्येऽस्मिन् दाने प्राप्त्यभावादेव निवृत्तौ कथं प्राप्तबाधत्वेनाध्यायसङ्गतिरित्याशङ्कां परिहरति—**अध्यायसङ्गतिस्त्विति।** पूर्वपक्षेऽतिदेशतः प्राप्तानामन्वाहार्यधर्माणां मध्ये प्राप्तस्य पाकस्यार्थलोपाद्बाधात् तत्सङ्गतिरित्यर्थः।

---

**अस्थियज्ञोऽविप्रतिषेधात्।**

**नेदिष्ठ इति।** कनिष्ठ इत्यर्थः। **संवत्सरे** अतीत इति शेषः। यद्यत्र याजनमेव विधीयेत तदा तत्र जीवतामेवाधिकारप्रतीतेरस्थ्नामधिकारचिन्ता नोदेतीत्यतः दृष्टान्तेन

'एतया निषादस्थपतिं याजयेत्' इतिवदस्थ्नामेवाधिकारप्रतीतेस्तेषां च स्वरूपेण तदसम्भवेऽपि तदुपलक्षितस्य मृतस्यैवाधिकारः। न च तस्य कर्तृत्वासम्भवः, शुक्रान्वारम्भादावस्थ्नामेव प्रयोज्यकर्तृत्वोपपत्तेः। द्रव्यत्यागादौ च जीवद्दशायामेव सर्वैर्मरणसम्भावनया स्वेतरेषामनुमतिदानादनुमतिद्वारा कर्तृत्वोपपत्तेः। अन्यथा मृतस्थाने आनीतेन सह सत्रप्रयोगसमाप्तावप्यनुमत्यभावात्तदीयसंसृष्टद्रव्यत्यागानुपपत्तेः। अतो मृतस्यैवाधिकारः॥

याजनं तु सत्रप्रयोगसमाप्तिकर्तृभिरेव कार्यं, ततस्संवत्सर इत्यादिना प्रयोगसमाप्तियाजनयोस्समानकर्तृकत्वप्रतीतेः। यदि तु ततश्शब्दादानन्तर्यस्यैव प्रतीतिः न तु समानकर्तृकत्वस्यापीति विभाव्यते ततोऽस्त्वनियमः। अयं च नैमित्तिकोऽपि न सत्राङ्गं विभिन्नाधिकारिकत्वात् अपि तु मृतस्यैव स्वतन्त्रफलार्थः।

अत एव षष्ठोक्तरीत्या मृते सत्रफलासम्भवेऽपि एतत्फलोत्पत्तौ बाधकाभाव इत्यवधेयमिति प्राप्ते—

न तावदस्थ्नामेव कर्तृत्वं यागानुकूलकृत्याश्रयत्वरूपस्य तस्य तेष्वसम्भवात्। अतश्च त्वयाऽपि तत्सम्बन्धिमृतजीवलक्षणया तस्याधिकारो वाच्यः। ततश्चाश्रुता जीवदवस्थायां निमित्ताभाव एवानुमतिकल्पना फलकल्पना चेत्याद्यनेकदोषभिया वरमस्थिपदेन स्वसम्बन्धिनो जीवत एव पुरुषान् लक्षयित्वा तेषामधिकारः।

किञ्च—जीवदवस्थायामनुमत्याऽपि किं तदनन्तरमेव स्वत्वमुत्पद्यते उत मरणोत्तरं, नाद्यः—जीवदवस्थायां त्यागानापत्तेः। नान्त्यः—अनुमतेः क्षणिकत्वेन मरणोत्तरस्वत्वोत्पादकत्वानुपपत्तेः। अत एव मरणोत्तरकालीनसत्रप्रयोगसमाप्तावपि षष्ठोक्तरीत्या मृतस्याधिकारात्तदीयं द्रव्यं पृथक्कृत्यैव स्वीयद्रव्यैरेव जीवद्भिः प्रयोगसमाप्तिः कार्येति ध्येयम्। अतश्चानुमतिकल्पयनाया अप्यनुपपत्तेर्मृतस्य कथमप्यधिकारासम्भवेनास्थिपदेन लक्षणया जीवतामेवाधिकारः अस्थ्युपनहनकर्तृत्वादिकं च शक्यसम्बन्धः।

---

यजनविधिं साधयितुमाह—एतयेति। यथा याजनस्य रागतः प्राप्तत्वेन विध्यनुपपत्तेः निषादस्थपत्यधिकारकं यजनमेव विधीयते ण्यर्थस्त्वनुवादः एवमिहापीत्यर्थः। **अधिकारः** फलभोक्तृत्वम्। **तदीयेति**। मृतसम्बन्धिनो द्रव्यस्य अन्येषां त्यागानुपपत्तेरित्यर्थः। एवं समाप्तियाजनयोः समानकर्तृत्वं प्राचां मतेनोपपाद्य स्वयं पक्षान्तरेण विशेषमाह—**यदि त्विति**। **नैमित्तिकोऽपीति**। यथैव प्रमीयेतेति लिङुपात्तं निमित्तत्वमस्थ्याद्युपहननादिक्रियास्वन्वेति तथा याजयेयुरित्युपात्ते यजनेप्यविशेषादित्यभिप्रायेण **नैमित्तिकोऽपीत्युक्तम्**। **षष्ठोक्तेति**।

**अयं च क्रियमाणसत्राङ्गम्। अयं चास्थियागो न सत्ररूप एव। सत्यपि प्रत्यभिज्ञाने याजयेयुरिति णिजन्तप्रयोगबलेनैव कर्मभेदावगतेः। सत्ररूपत्वे हि तत्र यजमानाभेदस्यैव सिद्धेः ण्यन्तप्रयोगानुपपत्तिः विधाने वाक्यभेदात्, यजतिचोदनाचोदितत्वात्। अतश्च तद्वशात् कर्मान्तरमेवेदम्। तत्र चाव्यक्तत्वसादृश्यादतिदेशेनैव ऋत्विक्प्राप्तेर्ण्यन्तार्थोऽनुवाद एव। एतद्विचारस्य चाग्रिमाधिकरणोपोद्घातत्वादध्यायसङ्गतिः ॥ १६ ॥**

---

साङ्गात् काम्यकर्मणः काम्यमानफलोत्पत्तेः सर्वेषां मृतस्य च साङ्गानुष्ठानाभावात् न तत्फलमिति षष्ठोक्तरीत्येत्यर्थः। **स्वीयद्रव्येणैवेति**। अत एव नेदिष्ठस्यापि मृतद्रव्यहारित्वेन मृतद्रव्यत्यागादावधिकारित्वात् सङ्ख्यापूर्त्यर्थं दीक्षाकरणं न; किन्तु तस्यैव दीक्षायां नियमेन विधानात् यथा स्वद्रव्यव्ययं कृत्वाऽवशिष्टानां षोडशानां सम्पादयति साहित्यं तथोपायकरणेन तत्पश्चाच्च स्वीयद्रव्येणैव सप्तदशभिः सह यागः कार्य इत्यर्थः। **क्रियमाणसत्राङ्गमिति**। यद्यपि भाष्यकारलिखनात् सामान्यतः सत्राय दीक्षितानामित्युक्तेश्च सत्रमात्राङ्गत्वं, तथापि यत्सत्रव्यक्तिप्रयोगमध्ये यत्सत्रकर्तुर्मरणं तस्य यः पूर्वसमापितः प्रयोगः तत्सत्रव्यक्त्यङ्गं प्रयोगबहिर्भूतं पृष्ठशमनीयन्यायेन प्रत्येकं जीवदधिकारकम्। तत्कर्तृकश्च तत्तत्सत्रव्यक्तेरेव पूर्वमुपस्थितत्वेन ततः पदेनोपादानादित्यर्थः। **सत्ररूपत्वे हीति**। तथा च तत्र यजमानानामेव कर्तृत्वात् यजेरन्नित्यापत्तौ ण्यन्तप्रयोगानुपपत्तिरित्यर्थः। ननु सत्ररूपत्वे तेषां यजनकर्तृत्वविधाने सति ये यजमाना इत्यनेन याजनस्य प्राप्तत्वात् उपपद्यत एव णिजर्थोऽनुवाद इति न वाक्यभेदापत्तिरित्यतो दूषणान्तरमाह—**यजतिचोदनेति**। नन्वस्याधिकारविचारस्य बाधलक्षणेऽसङ्गतत्वमित्याशङ्क्य एतत्प्रयोजनरूपेण करिष्यमाणबाधविचारोपोद्घातत्वेन परिहरति—**एतद्विचारस्यापीति**।

---

1. A. यथोक्तं

(१७)—यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥४९॥

जीवदधिकारपक्षे **न किञ्चिद्बाधनीयम्। मृताधिकारे तु भवति केषांचिद्बाध इति पूर्वाधिकरणप्रयोजनतयाऽध्यायसङ्गतिरुच्यते।** तत्र ये **कर्तृसंस्कारा ये वा फलिसंस्कारास्ते मृतस्यानुमतिद्वारा कर्तृत्वेन फलित्वेन चावश्यं भवन्त्येव। तत्रापि ये स्वयंकर्तृका मन्त्रप्रोक्षणादयस्तेषां शरीरशुद्ध्यर्थत्वेनास्थिष्वपि करणं, कर्तृत्वं परमनुमतिसत्त्वादध्वर्योरेव। ये त्वध्वर्यु कर्तृकास्तदीय[1] शरीरसंस्कारका अभ्यञ्जनादयस्ते सुतरां भवन्त्येव।**

**ये तु वपनादयः शरीरावयवविशेषसाध्यास्तत्संस्कारका वा तेषां केशादितदवयवाभावे लोप एव। यत्त्वत्र सूत्रादौ जपलोपकथनं तन्नारादुपकारकजपविषयं तत्रानुमति-**

---

**यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तम्।**

अत्र निरस्तेऽपि मृताधिकारे पुनरपि कृत्वाचिन्तया पञ्चसूत्र्या विचारो मूलग्रन्थे उक्तः। तत्फलञ्च सर्वस्वारे यजमानमरणे सति तदुत्तरमनुष्ठानाननुष्ठानविवेक एवेति प्राचामभिप्रायवर्णनं **प्रकाशकारैः** कृतम्। तत्सर्वस्वारे यजमानमरणपुरस्कारेणैव तद्विचारणौचित्येन इह कृत्वाचिन्तात्वेन कृतस्य विचारस्य **गते कर्मास्थियज्ञवद्वदित्येवं** सूत्रेणातिदेशकरणस्य[2] द्रविडमडक-[मण्डक]न्यायतुल्यत्वेनानुचितत्वादयुक्तमित्यभिप्रेत्य भाष्यदर्शितरीत्या पूर्वस्यैव प्रयोजनकथनार्थानि पञ्चाधिकरणानीत्येवं दर्शयति—**जीवदधिकारपक्षे इति।** अत एव वपनदीक्षणीयेष्ट्योरर्थलोपकृतबाधोपपादनं सत्रे युज्यते। न हि तल्लोपकथनस्य प्रयोजनं सर्वस्वारे मरणानन्तरमुपयुज्यते। तथाभूतानां संस्काराणां तत्र प्रागेवानुष्ठानेन तदानीमप्रसक्तेः ततः पूर्वविचारप्रयोजनकथनमात्रपरत्वमेव युक्तमित्याशयः। अत्र च **यदि तु वचनात्तेषां जपसंस्कारार्थमर्थलुप्तं सेष्टि तदर्थत्वादिति** सूत्रे संस्कारसामान्यवाचकपदोपादाने सत्यपि यद्भाष्यकारादिभिर्वपनादिसंस्कारविशेषपरतया व्याख्याय केषाञ्चित् संस्काराणामभ्यनुज्ञानं सूचितं तद्विविच्य दर्शयति—**तत्र ये इति।** एतच्च भाष्यकाराशयवर्णनाभिप्रायकतयोक्तम्[3]। **वस्तुतस्तु** उत्तराधिकरणस्वदर्शितरीत्या शुक्रान्वारम्भणादौ प्रकृतौ यादृशस्य सतो यजमानस्य कर्तृत्वं तस्यैव अतिदेशेन विकृतावनुष्ठानबोधनात् नास्यां तत्र कर्तृत्वमिति वक्ष्यते। तथैव कर्तृत्वे विद्यमानेऽपि

---

1. मृतीय
2. द्रविडमण्डकन्यायः—मण्डकं भक्ष्यविशेषः
3. A. वर्णनरसिकतयोक्तम्

द्वारा प्रधान इवाध्वर्युकर्तृकत्वेऽपि मृतकर्तृकत्वोपपत्तेः। अपि तु वाक्संस्कारकजपविषयम्। एवं दीक्षणीयाया अपि दीक्षोत्पत्त्यर्थत्वात् दीक्षायाश्च यमनियमपरिग्रहानुकूलादृष्टरूपत्वात् यमनियमयोश्च मनआदिसाध्ययोस्तत्प्रणिधानार्थयोश्च तदभावे लोपाद्दीक्षणीयादेरपि लोपः॥ १८॥

---

## (१८)—क्रत्वर्थं तु क्रियेत गुणभूतत्वात्॥ ५०॥

ये तु याजमानाः क्रत्वर्थाः पदार्थास्ते सर्वे अनुमतिद्वारा मृतस्यापि कर्तृत्वसम्भवादध्वर्युणा कार्या एव प्रधानवत्। यत्तु मूले—'शुक्रं यजमानोऽन्वारभते' 'यजमानसंमितौदुम्बरी भवति' इत्यादौ यत्र यजमानस्य गुणत्वं तत्रास्थ्नामेव शुक्रान्वारम्भादावचेतनानामपि स्थाली पचतीतिवदन्वारम्भानुकूलास्थिनिष्ठव्यापाराश्रयतया कर्तृत्वोपपत्तेरस्थिभिरेवान्वारम्भादि कार्यमित्युक्तम्।

---

यादृशस्य येन रूपेणोद्देश्यतया संस्कारार्थत्वं प्रकृतावव‌गतं तादृशोद्देशतावच्छेदकरूपाक्रान्तत्वे सत्येव विकृतावतिदेशतः तत्र तदुद्देश्यकसंस्काराणामनुष्ठानविधानात् तादृशरूपाक्रान्तत्वाभावेनास्थ्नामपि तदनुष्ठानं[1] युक्तमिति ध्येयम्। स्पष्टमन्यत्।

---

क्रत्वर्थं तु क्रियेत।

**स्थाली पचतीतिवदिति।** यदीतरकारकप्रयोक्तृत्वलक्षणं चैतन्यसापेक्षमेव कर्तृत्वं भवेत् तदा अस्थिषु चैतन्याभावेन एतन्न सम्भवेत्। किन्तु यस्य अन्यानपेक्षैतदाख्यातोपात्तव्यापारसमवायसम्भवः स एव कर्ता। स्थाली तण्डुलान् पचतीत्यत्र स्थाल्यां तादृशव्यापारो यथा स्थालीतण्डुलयोर्व्यासज्यवृत्तिसंयोगरूपो भवति तथाऽधिश्रयणमपि तण्डुलधारणरूपं भवति। तत्र संयोगरूपव्यापारमादाय तण्डुलेषु कर्तृत्ववारणाय **अन्यानपेक्षेति**पदम्, तस्य व्यासज्यवृत्तिनोऽन्यापेक्षत्वात्। आख्यातोपात्तव्यापाराश्रयत्वेन एकस्य कर्तृत्वे विवक्षिते सति इतरकारकव्यापारमादाय इतरकारकेष्वतिव्याप्तिवारणाय **समवाय**पदम्। तदानीं तेषु तदुपात्तव्यापारसमवायाभावात्। एवञ्च तण्डुलधारणरूपं व्यापारमादाय स्थाल्यामचेतनायां कर्तृत्वोपपत्तिः। एवमस्थिप्रापणरूपव्यापाराश्रयत्वमादायास्थिष्वप्युपपद्यते तदित्यर्थः।

---

1. तदनुष्ठानमुक्त

तत्रेदं वाच्यं—प्रकृतौ हि 'शुक्रं यजमानोऽन्वारभते' इत्यादौ यजमानपदवाच्यो यागकर्ता जीवात्मैव कर्तृत्वेनोच्यते। शरीरस्य त्ववच्छेदकतामात्रं न कर्तृत्वम्। आत्मनश्च कर्तृत्वं अन्वारम्भानुकूलकृत्याश्रयत्वेनैव। न च मृतस्य तादृशकर्तृत्वसम्भवः। जीवच्छरीरावच्छेदेनैवात्मनि कृत्युत्पत्तिनियमात्। अन्वारम्भानुकूलास्थिनिष्ठव्यापाराश्रयत्वरूपस्य कर्तृत्वस्य प्रकृतावनुक्तेः। अतो वरं प्रधान इव अनुमतिद्वारकं मृतात्मकर्तृत्वमुपपाद्याध्वर्युणैव ते कार्याः॥ १८॥

---

(१९)—काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि॥५१॥

जीवदधिकारपक्षे ये सत्रप्रकरण एव साङ्गसत्रोपरमपर्यन्तव्रताद्याश्रिता गुणकामा विहितास्ते अङ्गत्वादस्थियागस्य तत्करणवेलायामपि कार्याः। मृताधिकारपक्षे तु तस्यानङ्गत्वात् कथञ्चिदङ्गत्वेऽपि वा मृतनिष्ठकामनाया अज्ञानान्नैव गुणकामाः कार्याः।

यत्तु मूले प्राकृतगुणकामानां 'यदि कामयेत वर्षुकः पर्जन्यस्स्यात्' इत्यादीनां मृताधिकारपक्षे अप्रवृत्तिरित्युक्तं तदष्टम एव तेषां विकृतावप्रवृत्तेरुक्तत्वात् कृत्वाचिन्तया कथने प्रयोजनाभावादुपेक्षितम्॥ १९॥

---

(२०)—ईहार्थाश्चाभावात्सूक्तवाकवत्॥५२॥ स्युर्वाऽर्थवादत्वात्॥५३॥ नेच्छाभिधानात्तदभावादितरस्मिन्॥ ५४॥

सूक्तवाकगतानामायुरादिफलानामकाम्यमानानामपि क्रतुप्रयुक्तप्रहरणजन्यत्वेनानुषङ्गिकत्वात्; इतरथा प्रकृतावेव कामनाभावे तत्पदपाठानापत्तेः मृताधिकारपक्षेऽपि आनुषङ्गिकतया जननोपपत्तेः प्रयोक्तव्यान्येव तत्पदानीति प्राप्ते—

असत्यपि तत्कामनाया अनुष्ठापकत्वे स्वरूपेण तस्या आशास्त इत्यनेन प्रकाशिततया अपेक्षितत्वात् मृतस्य चैतत्प्रस्तरप्रहरणजन्यफलेच्छाया बाधितत्वान्न तत्पदपाठः। न चैवं प्रकृतावपि यस्य न तत्फलेच्छा तत्र तत्पदपाठानापत्तिः, अवश्यकर्तव्ये प्रहरणे आनु-

---

**काम्यानि तु न विद्यन्ते**

यदुक्तं तन्त्ररत्नादौ गुणकामानामष्टमेऽनतिदेशे सिद्धेऽपि इह अतिदेशकृत्वाचिन्तयेयमित्युक्तं तन्निरस्यति—कृत्वाचिन्तयेति।

**ङ्किकफलेच्छाभावस्य चेतनेऽसम्भवात्। अतश्च मृतस्येच्छाया असम्भवादिच्छाविषयी-भूतफलाभावेन** न तत्पदपाठः ॥ २० ॥

---

## (२१)—स्युर्वा होतृकामाः ॥ ५५ ॥ न तदाशीष्ट्वात् ॥ ५६ ॥

**'यं कामयेत पापीयान् स्यादिति नीचैस्तरां तस्य याज्यया वषट्कुर्यात्। यं कामयेत वसीयान् स्यादिति उच्चैस्तस्य याज्यया वषट्कुर्यात्' इत्यादिवषट्काराश्रितानां गुण-कामानां होतृकामनयैवानुष्ठानाद्यजमाननिष्ठकामनाभावेऽपि तन्निष्ठफलोत्पत्त्यर्थं गुणे प्रवृत्त्युपपत्तेः मृताधिकारपक्षेऽपि तेषां करणम्। न च विकृतौ गुणकामानामप्रवृत्तिः, वषट्कारस्य 'एष वै सप्तदशः प्रजापतिः यज्ञे अन्वायत्तः' इत्यनारभ्याधीतवचने साक्षाद्यज्ञोद्देशेन विधानात् पर्णतान्यायाभावेन प्रकृतिविकृतिसाधारण्येनोपदिष्टतया विकृतावपीदृशगुणकामप्राप्त्युपपत्तेरिति प्राप्ते—**

**न तावदिदं फलं ऋत्विग्गतं 'यां वै कांचन ऋत्विज आशिषमाशासते यजमानस्यैव तदाशासते' इत्यनेन यजमाननिष्ठत्वस्यैव तृतीये स्थापितत्वात्। न चैतदाशासनमात्रेण**

---

### ईहार्थाश्चाभावात्।

**न तत्पदपाठ इति।** [यद्यपि] यवप्रयोगे व्रीहिपदमात्रत्यागेन सम्भवार्थो मन्त्रो भवत्येव, तथापि मेध इत्यस्य साकाङ्क्षस्य व्रीहीणामित्यत्रान्वयं विना निराकाङ्क्षत्वाभावात् एकस्मिन् वाक्ये साकाङ्क्षतयोपात्तानां पदानां सम्भूयार्थप्रतीतिकारित्वनियमाच्च एकव्रीहिपदार्था-सम्भवे युक्तः सर्वस्यापि विशिष्टार्थाभावे लोपः। प्रकृते "आशास्तेऽयं यजमान" इत्येतद्भागं विनापि अन्येषामर्थबोधकत्वसम्भवेन साकाङ्क्षत्वाभावात् क्रत्वङ्गप्रहरणस्य प्रयोजकस्य सत्वे इतरमन्त्रस्यावश्यकत्वमित्यभिप्रेत्य तत्पदेत्युक्तम्।

---

### स्युर्वा होतृकामाः।

**पापीयान् स्यादिति।** यो यजमानो धनमदेन कृताकार्यशतः तस्य तस्मान्निर्विण्णस्य पुनः पापापरपर्यायदारिद्र्यमेवोत्पद्यते। तथाभूतमतिशयेन दारिद्र्यं स्यादिति कामयेतेत्यर्थः। **वसीयानिति** वसुशब्दात् धनवाचकात् ईयसुनि अतिशयार्थे प्रत्यये टिलोपे च कृते रूपम्। तेनातिशयेन धनं स्यादिति कामयेतेत्यर्थः।

यजमाने फलोत्पत्तिः, प्रकृतौ ऋत्विगिच्छायां सत्यामपि स्वेच्छायामसत्यां यजमानेन गुणविषये होतुरप्रवर्तनात् यजमानेच्छाया एवैतादृशगुणविषयेऽनुष्ठापकत्वावगतेर्न मृताधिकारपक्षे तेषां करणम्। तदेतानि सर्वाण्यधिकरणानि मृतस्य वाऽधिकारो जीवतां वेत्येतदधिकरणप्रयोजनकथनार्थानि ॥ २१ ॥

---

## (२२)—सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्॥ स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५८ ॥

अस्ति सर्वस्वारो नाम यज्ञः 'मरणकामो ह्येतेन यजेत यः कामयेत अनामयस्स्वर्गं लोकमियाम्' इति वाक्येन स्वर्गार्थतया विहितः। अत्र हि न मरणं फलं तस्यानिष्टत्वात्। अनेकोद्देशे वाक्यभेदाच्च। अतो मरणकाम इत्यस्याङ्गीकृतमरण इत्यर्थः। 'आर्भवे प्रस्तूयमाने अग्निं प्रविशति' इत्यनेन चोपायविधानात् मरणमस्याङ्गतया विधीयते। अतश्च मरणोत्तरकालं स क्रतुस्समापनीयो न वेति चिन्तायां मृतस्यास्थियज्ञवत् कर्तृत्वासम्भवात् मरणान्तस्यैव स्वर्गसाधनत्वात् न समापनीय इति प्राप्ते—

'आर्भवे प्रस्तूयमाने औदुम्बरीं सदशेन वाससा परिवेष्ट्य ब्राह्मणाः परिसमापयत मे यज्ञमिति सम्प्रेष्याग्निं प्रविशति' इति वचनेन समापनप्रैषविधानात्तस्य च दृष्टार्थत्वलाभाय लैङ्गिकसमाप्तिविधिकल्पकत्वावगतेस्तद्बलेन च मृतस्यापि ऋत्विक्प्रयोजकत्वोपपत्तेस्समापनीय एव क्रतुः।

---

### सर्वस्वारस्य दिष्टगतौ समापनम्।

**एष वै सप्तदश इति।** आश्रावय, अस्तु श्रौषट् यज येयजामहे वषट् इत्येवं सप्तदशाक्षराणि व्यञ्जनरहितानि तदात्मकः प्रजापतिः यज्ञेऽन्वायत्त इत्यर्थः। **अनेकोद्देशे इति।** स्वर्गस्यापि फलत्वेनोद्देश्यत्वादनेकोद्देश्यत्वमित्यर्थः। **मरणमस्येति।** यदि मरणं प्रधानफलं तदा तस्य प्रधानादेवोत्पत्तेरुपायान्तरविधानं व्यर्थम्। किञ्च न प्रधानमात्रानुष्ठानादिहैव फलोत्पत्तिः अनुपलम्भात। अतः तस्याङ्गतयाऽर्थाद्विहितस्य अनेकोपायप्राप्तौ 'अग्निं प्रविशति' इत्युपायनियमो विधीयत इत्यर्थः। **कर्तृत्वासम्भवादिति।** शिष्टविगर्हादोषपरिहारार्थं अवश्यं समापनाचारमूलत्वेन 'प्रारब्धं समापयेदेव' इत्येवंरूपायां श्रुतौ समाप्तिविधाने प्रारम्भसमानकर्तृत्वप्रतीतेः यस्य प्रारम्भकर्तृत्वं तस्य मृतत्वात् कर्तृत्वासम्भवः। ये तु जीवन्तो ऋत्विजः ते न प्रारम्भकर्तार इति नावश्यकत्वेन तेषां समापनं विहितमिति भावः। अत्र "यज्ञं मे समापयत

---

1. A. प्रारभ्य यजेतैव

**यत्तु कैश्चित् प्रैषस्यैवास्य 'स्वाध्यायोऽध्येतव्यः' इतिवत् समापनविधायकत्वमित्युक्तं, तत् ब्राह्मणा इति सम्बोधनेन** विधिशक्तिप्रतिबन्धात् कर्मकाले प्रयोज्यत्वानुपपत्तेश्चोपेक्षितम्। वस्तुतस्तु—समापनप्रैषाभावेऽपि (सकल) क्रत्वर्थतयैव वरणभरणयोः प्रकृताविवानुष्ठानात् तद्बलेन च जीवदवस्थायामिव मृतावस्थायामपि ऋत्विजां कर्तृत्वोपपत्तिः। अत एव ज्योतिष्टोमादिकर्मान्तरेष्वप्यनयैव दिशाऽन्तरामरणे ऋत्विग्भिस्समापनम्। एवं च प्रैषस्य विधिकल्पकत्वाभावेऽपि समापनस्मारकत्वेनैव दृष्टार्थतेति ध्येयम्॥ २२॥

---

## (२३)—गते कर्मास्थियज्ञवत्॥ ५९॥

**मृते यजमाने अस्थियज्ञे मृताधिकारपक्षे यथा बाध्याबाध्यविवेकस्य सर्वोऽप्यत्र द्रष्टव्यः॥ २४॥**

---

इति प्रैषेण समाप्तिश्चोद्यमाना न शक्यतेऽपह्नोतुं; नहि ब्राह्मणभागगताद्विधेः प्रषस्य कश्चिद्विशेषः। नहि प्रैषे प्रेषकपुरुषस्य स्वातन्त्र्यं, येन पौरुषेयत्वाद्दोषः स्यात्; प्रयोक्तृत्वमात्रं तु ब्राह्मणगतेष्विव विधिषु प्रैषेष्वपि पुरुषाणाम्। अतः प्रत्यक्षमेव विहितं समापनं" इति शास्त्रदीपिकाग्रन्थस्वारस्यानुरोधेन **प्रकाशकारैः** अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते इति न्यायेन यत्र पुरुषस्य स्वातन्त्र्यं तत्र विधिलक्षणाऽभावेऽपि इह तदभावे ब्राह्मणगतेन 'स्वाध्यायोऽध्येतव्य' इति प्रैषेण अनेन च मन्त्राङ्गप्रैषेणानुष्ठानसिद्ध्यर्थं विधौ लक्षणेत्युक्तम्। तदनूद्य दूषयति—**यत्तु कैश्चिदिति। सम्बोधनेति।** सम्बोधनेन प्रेषकपुरुषस्वातन्त्र्यस्यैव प्रतीत्या विधेरनुष्ठापकत्वे स्वातन्त्र्यासम्भवात् विधिशक्तेः स्वातन्त्र्यरूपायाः प्रतिबन्धः। अत एव स्वाध्यायवाक्ये तदप्रतीताविष्यत एव तल्लक्षणा। किञ्चास्य विधित्वे अन्यविधीनामिव प्रयोगकाले उच्चारणमपि नापद्यते। अतो मन्त्ररूपप्रैषेषु न तल्लक्षणा। अपि तु सिद्धवन्मन्त्रप्रकाशनान्यथानुपपत्त्या तद्विधिकल्पनमेव युक्तमिति भावः।

---

**गते कर्मास्थियज्ञवत्।**

**स सर्वोपीति।** ये मरणात् पूर्वकालीनाः स्वयंकर्तृकाः संस्काराः ये वा स्वकर्तृका एव, ये वा अध्वर्य्वादिकर्तृकाः यजमानसंस्कारकाः ते तु जाता एव। ये तु मरणानन्तरं सम्भवत्प्राप्तिकाः तेषु बाध्याबाध्यविवेकः सर्वोऽपि अस्थियज्ञन्यायेन द्रष्टव्य इत्यर्थः।

---

## (२४)—जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥ वचनं वा भागित्वात् प्राग्यथोक्तात् ॥ ६१ ॥

अथ तत्रैव प्रायणीयादौ जीवद्दशायां सूक्तवाके आयुराशासनादेः करणं न वेति चिन्तायां—आयुषो मरणाभ्युपगमेनाप्रार्थनीयत्वाल्लोप इति प्राप्ते—

आर्भवकालपर्यन्तं जन्मान्तरे वा आयुष आशासनसम्भवादलोपः। एवमन्येषामपि फलानां 'उत्तरां देवयज्याम्' इत्यादीनामिह जन्मनि जन्मान्तरे वा आशासनसम्भवादलोपः ॥ २४ ॥

---

## (२५)—क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥

सत्रे वरणभरणयोर्दृष्टार्थत्वाल्लोपेऽभिहिते यत्प्रकृतावदृष्टार्थं ऋतुयाज्यावरणं आत्रेयाय दानं च तत्सत्रे कार्यमेवेति प्रत्युदाहरणमात्रम्। सोमे हि वृते पुन ऋतुयाज्यावरणमदृष्टार्थमेव। एवमात्रेयाय हिरण्यं ददातीत्यपि। न ह्यत्र प्राप्तदक्षिणादानानुवादेनोभयविधिस्सम्भवति वाक्यभेदापत्तेः। अतो दानान्तरमेवावश्यं विधेयम्।

तदपि च न वैश्वामित्रो होता'इत्यादिविशेषविहितातिरिक्तऋत्विक्षु, आत्रेयत्वविधिकल्पनया तदानत्यर्थं, उक्तविधिकल्पननिरपेक्षदक्षिणादानेनैव निराकाङ्क्षायामानतौ विधिकल्पनसापेक्षदानस्य जनकत्वेनान्वयायोगात्। न च पक्षप्राप्तात्रेयऋत्विगानत्यर्थमेव तद्विध्युपपत्तेर्नात्रेयविधिकल्पनं ममापीति वाच्यं, 'हिरण्यमन्तर्धाय जुहोति' इत्यादावुपयुक्तहिरण्यप्रतिपत्त्यर्थत्वेनापि दानस्य दृष्टार्थत्वोपपत्तौ तादृशऋत्विगानत्यर्थत्व एव प्रमाणाभावात्। अतो विनिगमनाविरहाददृष्टार्थमेवेदं दानम्। अत एव नात्राग्नेयीन्यायेन दैववशसम्पन्नऋत्विगात्रेयस्यैव ग्रहणं, आत्रेयत्वस्यापूर्वसाधनतावच्छेदकत्वेनाक्लृप्तेस्तन्न्यायाभावात् ॥ २५ ॥

---

### क्रिया स्यात् धर्ममात्राणाम्।

ऋतुयाज्येति। मधुमाधवादिनामकऋतुदेवत्यग्रहेषु तदीययाज्यापाठार्थं पुनर्होतुर्वृतस्यापि वरणं अदृष्टार्थमित्यर्थः। हिरण्यमन्तर्धायेति। क्रयार्थं नीयमानाया गोः सप्तमे पदे स्फ्येन विलेखनं कृत्वा हिरण्यमन्तर्धायेत्यनेन विहिते होमे उपयुक्तं हिरण्यमित्यर्थः। विनिगमनाविरहादिति। यद्यपि हिरण्यस्य प्रतिपत्त्यन्तराम्नानाभावेऽस्य दानस्य तत्प्रति-

## (२६)—गुणलोपे च मुख्यस्य ॥ ६३ ॥

यत्र प्रकृतौ गुणविशिष्टं कर्म स्वतन्त्रविधिना प्रयोगविधिना वा विहितं तत्र विकृतौ विशेषणीभूतगुणलोपे विशिष्टलोपात् विशेष्यस्यापि कर्मणो लोप इति प्राप्ते—

उपकारपृष्ठभावेन पदार्थानामतिदेशात्सत्यपि विशेषणबाधे विशेष्यबाधस्यान्याय्यत्वात् सत्यपि च प्रकृतौ विकृतौ वा विशिष्टविधौ विशिष्टस्यातिरिक्तत्वात्[1] विशेषणबाधेऽपि प्रकृतौ विकृतौ वा न विशेष्यलोपः। अत एव प्रकृतौ निर्वापानुवादेनाग्निहोत्रहवण्या हवींषि निर्वपति इति वचनेन विहिताया अप्यग्निहोत्रहवण्याः पवमानेष्टिष्वग्निहोत्राभावेनासम्भवेऽपि न निर्वापलोपः।

नन्वग्निहोत्रहवणीशब्दस्य णत्वश्रवणबलेन संज्ञात्वावगतेरग्निहोत्रस्य ततः पूर्वमकरणेऽपि कथमग्निहोत्रहवणीत्वस्य तासु बाधः। अस्तु वा अवयवार्थस्यापि प्रतीयमानत्वात् योगरूढत्वम्। तथाऽपि अग्निहोत्रं होष्यतेऽनयेति व्युत्पत्त्या पवमानेष्टिष्वप्यवयवार्थसम्भवाद्विशेषणबाधानुपपत्तिः। न च भाविव्युत्पत्तेः पुरोडाशकपालादावगत्याऽङ्गीकारेऽपि भाविनि प्रमाणाभावेनान्यत्र तदङ्गीकारे प्रमाणाभावात् भूतव्युत्पत्तेरेव प्रकृतावाश्रिताया इहासम्भवाद्विशेषणबाधोपपत्तिः, न हि पवमानेष्टिषु भूतव्युत्पत्ति-

---

पत्त्यर्थत्वमपि शक्यते वक्तुं, तथापि मैत्रावरुणाय दण्डं प्रयच्छतीत्यत्र मैत्रावरुणस्येव चतुर्थ्या आत्रेयस्य हिरण्यं प्रत्यपि प्राधान्यावगतेः दृष्टार्थत्वलाभात् आत्रेयानत्यर्थत्वेऽस्त्येवं विनिगमकमिति नादृष्टार्थत्वकल्पनं युक्तम्। अतो विधेः पाक्षिकत्वरूपसङ्कोचापत्तिरेव मुख्यं दूषणमिति ध्येयम्।

---

### गुणलोपे च मुख्यस्य।

**णत्वश्रवणबलेनेति।** 'पूर्वपदात् संज्ञायामगः' इति सूत्रेण णत्वस्य संज्ञायां विधानात् संज्ञात्वावगत्या रूढत्वमित्यर्थः। ननु अश्वकर्णपदे पूर्वोत्तरपदविभागाभावेन रूढ्यङ्गीकारेऽपि इह सूत्रेणैव तद्विभागकरणात् कथं तदङ्गीकार इत्यत आह—**अस्तु वेति। अगत्येति।** तुषोपवापकाले प्रकृतौ पुरोडाशसम्बन्धस्य कदापि भूतत्वासम्भवादगतिः। इह तु दर्शपूर्णमासानुष्ठानकालेऽग्निहोत्रहोमस्य तथा पूर्वमनुष्ठानात् सम्भवति भूतत्वमिति नागतिरिति तथाभूताया एव पवमानेष्टिषु अतिदेशतः प्राप्तौ असम्भव इत्यर्थः। यत्तु आधानान्ते पूर्णाहुतिसमीपे 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः' इत्युपक्रम्य तूष्णीमेव होतव्यमिति

---

1. A. विशिष्टस्यानतिरिक्तत्वात्

**स्सम्भवति,** तूष्णीं होमस्य **कर्मान्तरत्वेनाग्निहोत्रत्वाभावादिति वाच्यं, प्रकृतावपि खण्ड-**पौर्णमास्या**माधाने तदहःक्रियमाणेष्टिसान्वारम्भणीयसद्यस्कालपौर्णमासप्रयोगे भूत-व्युत्पत्तेरसंभवेन भाविव्युत्पत्तेरेवाश्रयणीयत्वात्,** पूर्णपर्वण्यपि **मानवसूत्रे अग्निहोत्र-होमस्य पौर्णमासोत्तरं विहितत्वाच्च ।**

**वस्तुतस्तु—**प्रोक्षणीशब्दवत **ल्युडन्तत्वान्नैवात्र कस्यापि कालस्य बोधः। अपि तु स्वरूपयोग्यतया होमसाधनत्वमात्रबोधः, तच्चाकृतेऽपि होमेऽस्त्येवेति चेत्—पुरो-डाशकपालन्यायेन निर्वापवाक्येऽग्निहोत्रसम्बन्धित्वश्रवणात् तत्प्रयुक्तत्वावगतेर्न निर्वा-पोऽग्निहोत्रहवण्याः प्रयोजकः।** अतस्तद्वदेव **येनकेनचिन्निर्वापः। अत एव 'अग्निहोत्र-हवण्या अग्निहोत्रं जुहोति' इत्यत्र 'परिधीन्** परिदधाति' इतिवत् **पुरोडाशकपालन्याया-**

---

होमविधानं तत्रार्थवादेऽग्निहोत्रशब्दसत्वेऽपि नैतन्नैयमिकाग्निहोत्रं येन तमादाय भूतसम्बन्धः शङ्क्येत। तस्य जुह्वा होमविधानेन कर्मान्तरत्वादित्यभिप्रेत्याह—**तूष्णींहोमस्येति। पौर्णमास्यामिति। अयमर्थः।** यदा खण्डा पौर्णमासी तदा पौर्णमास्या अप्याधानकालत्वेन पूर्वपौर्णमास्यामाधाने कृते द्वितीयदिने खण्डपौर्णमासकाललाभात् पवमानेष्ट्यन्वारम्भणीयासहित-सद्यस्कालपौर्णमासानुष्ठानं भवति तदा पूर्वपर्वणि सायमग्निसिद्ध्यभावादग्निहोत्रहोमाप्राप्तेः तादृशप्रकृतौ भूतव्युत्पत्तिर्न सम्भवतीति। **पूर्णपर्वण्यपीति।** यदापि चतुर्दश्यामाधानं उत्तरदिने च पूर्णं पूर्वं तदा तस्मिन्नेव दिने विकृतिकालसत्वात् पवमानेष्ट्यन्वारम्भणीयेष्ट्यो-रनुष्ठानम्। प्रकृतेस्तु तदुत्तरप्रतिपद्येवानुष्ठाने सति पूर्वदिनेऽन्वाधानमात्रं भवति। तदा पूर्वपर्वणि कदाचित् सायमग्निहोत्रानुष्ठानं प्रसज्यत इति सम्भवति भूतव्युत्पत्तिः। तत्रापि **मानवसूत्रे** प्रतिपद्य-नुष्ठेयपौर्णमासोत्तरमेव सायंकालीनाग्निहोत्रहोमस्य विधानान्न सा सम्भवतीत्यर्थः। **प्रोक्षणीशब्द-वदिति।** यथा प्रोक्षणीरासादयेति प्रैषकाले प्रोक्षणजन्यफलोपाधानाभावेऽपि स्वरूपयोग्यतामात्रेण यथा प्रयोगः तथेहापीत्यर्थः। **अतस्तद्वदेवेति।** यथैव चरौ पुरोडाशप्रयुक्तकपालाभावे येन केनापि तुषोपवापः, तथेहापि पवमानेष्टिकाले अग्निहोत्रहवण्या अभावादेव येन केनापि निर्वाप इत्यर्थः। **यद्यपि** तत्र हस्तस्यैव सामर्थ्यात् तुषोपवापे प्राप्तिवत् इहापि तस्यैव प्राप्तौ नान्यापेक्षा **तथापि** पुरोडाशकपालाग्निहोत्रहवण्यभावविवक्षामात्रेण **येन केनचिदिति** पदद्वयेन हस्तस्यैवो-पादानं ज्ञेयम्। **परिदधातीतिवदिति।** परिधिशब्दो हि अग्निपरिधानक्रियायोगनिमित्तकोऽपि परिधानस्येदानीमेवानुष्ठानान्न भूततत्सम्बन्धनिमितः सम्भवति तथापि परिधानक्रियायाः प्रयोजिकायाः सत्वेन भाविसंज्ञयैव वर्तमानः स्वार्थाबाधेनैव वर्तते; पुरोडाशकपालशब्दस्तु नैवमिति न तत्र यथा पुरोडाशकपालन्यायः तथाऽग्निहोत्रहवण्याऽग्निहोत्रं जुहोतीति वाक्यगताग्निहोत्रहवणीशब्दोऽपि

**भावात् अग्निहोत्रस्य प्रयोजकत्वावगतेराद्याग्निहोत्रप्रयोगे भूतव्युत्पत्तेरसम्भवेऽपि नाग्निहोत्रहवणीबाधः।**

याज्ञिकास्तु **आधानाङ्गसम्भाराहरणकाल एव पात्राणामुत्पादनाल्लाघवेन भाव्यग्निहोत्रहवण्यैव पवमानेष्टिषु निर्वापादिकं कुर्वन्ति ॥ २६ ॥**

---

(२७)—मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥ ६४ ॥ न निर्वापशेषत्वात् ॥ ६५ ॥ सङ्ख्या तु चोदनां प्रति सामान्यात्तद्विकारस्संयोगाच्च परं मुष्टेः ॥ ६६ ॥ न चोदनाभिसम्बन्धात्प्रकृतौ संस्कारयोगात् ॥ ६७ ॥

**वाजपेये 'बार्हस्पत्यो नैवारश्चरुः सप्तदशशरावो भवति' इति श्रुतम्। तत्रातिदेशप्राप्ते निर्वापे किं मुष्टिचतुस्सङ्ख्ययोरुभयोरप्यतिदेशप्राप्तयोर्बाधः उत चतुस्सङ्ख्याया एव उत मुष्टीनामेवेति चिन्तायां—'चतुरो मुष्टीन्निर्वपति' इति प्रकृतौ विहितस्य मुष्टिसङ्ख्योभयविशिष्टनिर्वापस्याङ्गभूतयोर्मुष्टिसङ्ख्ययोरातिदेशिकयोरौपदेशिकाभ्यां सप्तदशसङ्ख्याशरावपरिमाणाभ्यां बाधः प्रत्याम्नानेन। निर्वापाङ्गभूतयोरपि मुष्टिसङ्ख्ययोर्निर्वापस्वरूपे वैयर्थ्येन फलतो यागार्थतया समानविषयत्वोपपत्तेः। तत्रापि सङ्ख्यया सङ्ख्यायाः परिमाणेन परिमाणस्येति प्रथमः पक्षः।**

**द्वितीयस्तु मुष्टिसङ्ख्ययोर्यागोपकारकत्वेऽपि निर्वापसम्बन्धित्वेनैव श्रवणान्न यागाङ्गभूताभ्यां सङ्ख्यापरिमाणाभ्यां निर्वापाङ्गभूतयोस्सङ्ख्यापरिमाणयोर्बाधो युक्तः। सप्तदशशरावपरिमितद्रव्यस्य तु चतुर्मुष्टिपरिमितनिर्वापेण संस्कारायोगादर्थात् विरोधावश्यंभावे अन्यतरबाधेनैवोपपत्तौ उभयबाधे प्रामाणाभावः। न च चतुर्मुष्टिपरिमित-**

---

स्वर्थाबाधेनोपपद्यत इति नाग्निहोत्रहवणीबाधः। यद्यपि पवमानेष्टिर्ष्वापे भाविसंज्ञया वृत्तिस्तद्वत् संम्भवति तथापि स्वरूपेणैव तस्या अधुनाऽभावात् प्रयोजकस्याभावे युक्तो बाध इत्यर्थः। यद्यप्यग्निहोत्रहोमस्य प्रयोजकस्य तदानीमसत्वं, तथापि तत्प्रयुक्तायास्तस्याः स्वरूपेणाभावात् अग्निहोत्रसम्बन्धस्य गुणभूतस्य लोपेऽपि प्रधानभूतस्रुग्व्यक्तिबाधे प्रमाणाभावेन सुतराञ्च भाविसंज्ञयैव तत्पदार्थाबाधस्याप्युपपत्तेरतिदेशप्राप्तया तयैव निर्वापो युक्त इति याज्ञिकमतोपपादनव्याजेन कथयति—**याज्ञिकास्त्विति**।

---

वैधनिर्वापस्यावृत्त्याऽपि विरोधपरिहारोपपत्तौ नावश्यमन्यतरस्यापि बाधो युक्त इति वाच्यं, चतुस्सङ्ख्यायाः प्रकृतौ यागीययावद्द्रव्यसंस्कारकनिर्वापवृत्तिमुष्टिपरिच्छेदकत्वेनावृत्त्या तदनुपपत्तावन्यतरबाधस्यावश्यकत्वात्। तत्रापि मुष्टीनां प्राधान्यात् तदङ्गभूतसङ्ख्याया एव बाधः।

तथा हि चतुश्शब्दो विशेष्यनिघ्नो न स्वतस्सङ्ख्यायाः क्रियान्वयं गमयति विशेष्यं मुष्टिपदोपात्तं परिमाणमेव, न तु तद्विशिष्टं व्रीहिद्रव्यं तथैवानुभवात् विशेष्ये बाधाच्च अत एव मुष्टिशब्दस्य परिमाणविशिष्टद्रव्यपरत्वेन विशेष्यनिघ्नत्वेऽपि सङ्ख्याया एकदेशान्वयोऽपि नानुपपन्नः। अतश्च सङ्ख्यायाः परिमाणं प्रत्यङ्गत्वात् तस्या एव बाधः।

वस्तुतस्तु—द्वितीयान्तमुष्टिपदसमानाधिकरणसङ्ख्यापदं परिमाणविशिष्टव्रीहिराशिमेव विशेष्यतया सङ्गृह्णातीति यद्यपि न परिमाणस्य सङ्ख्यां प्रति प्राधान्यं, तथाऽपि सङ्ख्यायाः परिमाणपरिच्छेदद्वारैव तत्परिमितद्रव्यपरिच्छेदकत्वात् परिमाणस्यान्तरङ्गतया बाधानुपपत्तिः, अतो मुष्टिगतां चतुस्सङ्ख्यां बाधित्वा सप्तदशशरावपरिमितव्रीहीणां यावन्मुष्टि निर्वापः कार्य इति॥

सिद्धान्तस्तु—नात्र द्वितीयान्तार्थद्वयस्योद्देश्यतया निर्वापं प्रति कर्मत्वं उद्देश्यानेकत्वेनिमित्तकवाक्यभेदापत्तेः। अपि तु द्वितीयया सक्तुन्यायेन करणत्वं लक्षयित्वा

---

मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात् स्यात्।

प्रायः स्पष्टार्थमेवैतदधिकरणम्। क्वचिदेव तु व्याख्यायते। **विशेष्ये बाधाच्चेति।** व्रीहिरूपविशेष्यस्य अश्वशफपरिमितपुरोडाशपर्याप्तस्याधिकत्वेन तत्र तत्सङ्ख्याया बाधाच्चेत्यर्थः। **अत एवेति।** विशेष्ये बाधादेव शिखी ध्वस्त इतिवत् विशेषणे परिमाणे एकदेशभूतेऽन्वयः सङ्ख्याया नानुपपन्न इत्यर्थः। **व्रीहिराशिमेवेति।** मुष्टिपदस्यैव परिमाणविशिष्टद्रव्यपरत्वमसिद्धं येन तत्सामानाधिकरण्यात् चतुः शब्दस्य तद्वाचित्वं साध्येत इत्याशङ्कानिरासाय द्वितीयान्तेत्युक्तम्। निर्वपतिक्रियाकर्मत्वेनोपात्तस्य मुष्टिपदार्थस्य न परिमाणमात्रवाचित्वं सम्भवति तस्य निर्वापासम्भवात्; अतो निरुप्यमाणव्रीहिराशिपरत्वमेवावश्यकमिति युक्तं तत्सामानाधिकरण्यात् सङ्ख्यावाचिपदस्यापि तद्वाचित्वमित्यर्थः। **परिमाणपरिच्छेदद्वारैवेति।** पूर्वोक्तरीत्या चतुःसङ्ख्यायाः साक्षाद्व्रीहिराशावन्वयस्य बाधात् तत्परिच्छेदकपरिमाणपरिच्छेदकत्वेनैवान्वयावश्यकत्वे सति मुष्टीनां साक्षादेव द्रव्यपरिच्छेदकीभूतानामन्तरङ्गत्वं सङ्ख्यायास्त्वेकान्तरितत्वात बहिरङ्गत्वमित्यर्थः। **वाक्यभेदापत्तेरिति।** एतच्चाप्राप्तेरप्युपलक्षणम्।

**प्रातिपदिकशक्यार्थद्वयस्यैव सङ्ख्यापरिमाणरूपस्य निर्वापभावनान्वयित्वम्। अत एव नानयोर**रुणान्यायेन **विशेष्यनिघ्नत्वमपि। गुणद्वयविशिष्टनिर्वापभावनाविधानाच्च न वाक्यभेदः। गुणद्वयस्य वैशिष्ट्यमारुण्यवत् द्रव्यपरिच्छेदद्वारेणेति न कश्चिद्विरोधः।**

**एवं च सङ्ख्यापरिमाणयोः परस्परमङ्गाङ्गिभावे अन्तरङ्गबहिरङ्गभावे वा प्रमाणाभावादन्यतरबाधे नियामकापेक्षायां प्राथम्यात् सङ्ख्याया अबाधः मुष्टिपरिमाणस्य तु बाधः। न च प्राथम्यजघन्यत्वादेः प्रकृतौ विद्यमानत्वेऽपि विकृतावतिदेशेन युगपत्सर्वाङ्गप्राप्तेस्तस्यामभावात् कथं तस्य नियामकत्वमिति वाच्यं, विकृतावभावेऽपि प्रकृतिदृष्टस्यैव तस्य नियामकान्तराभावे नियामकत्वोपपत्तेः। अतस्सङ्ख्यानुरोधात् सपादचतुश्शरावपरिमितं पात्रं कृत्वा तेन चतुर्वारं निर्वापः।**

**अयं चार्थो भाष्यकारादिभिः कर्कादिभिश्च सर्वैर्निर्णीतः। मम तु प्रतिभाति— साक्षात्साधनीभूताग्निहोत्रहवण्याः मुष्टीनां च बाधापेक्षया सङ्ख्याया एवैकस्या मुष्टिपरिच्छेदद्वारा निर्वापसाधनीभूताया बाध उचितः।**

**वस्तुतस्तु—चतुस्सङ्ख्याकमुष्टिसाधनकवैधनिर्वापावृत्त्या उभयसम्पादनसम्भवे न तस्या अपि बाधः। यागीययावद्द्रव्यसंस्कारकनिर्वापधृत्तिमुष्टिपरिच्छेदकत्वस्य प्रकृतार्थिकत्वेनेह बाधेऽप्यदोषत्वात्।** अत एव जैमिनिसूत्रे **कात्यायनादिसूत्रेषु चौपदेशिकाभ्यां सङ्ख्यापरिमाणाभ्यामातिदेशिकतदुभयबाधं पूर्वपक्षयित्वा तदभाव एव सिद्धान्तितः। तत्त्वं तु ईश्वरो वेत्ति॥ २७॥**

---

**अरुणान्यायेनेरिति।** अरुणाशब्दस्य विशेष्यनिघ्नत्वं टाबाद्यनुरोधेनावश्यमित्येकहायनीरूपविशेष्यपरिच्छेदद्वारैव तदर्थस्यान्वयः क्रयभावनायां भवति। इह तु करणत्वलक्षणया द्वयोरपि साक्षाद्भावनान्वये परस्परनैरपेक्ष्येण द्रव्यपरिच्छेद एव द्वारमिति नानयोः पदार्थयोः पार्ष्ठिकमपि परस्पराङ्गत्वं विशेष्यनिघ्नत्वाभावादेव येनैव रूपेण परिच्छेद्यस्यान्वयः तेनैव रूपेण परिच्छेदकस्यान्वयाभावेऽपि न क्षतिः। कर्मत्वेनान्वीयमानद्रव्यपरिच्छेदकत्वेनापीह सङ्ख्यापरिमाणयोः करणत्वेन निर्वापाङ्गत्वोपपत्तेः। यद्यपि सङ्ख्याया द्रव्यपरिच्छेदद्वारा मुष्टिवन्निर्वापान्वये चतुर्णामेव व्रीहिणां निर्वापापत्तिरनिवार्यैवेति द्रव्यपरिच्छेदद्वारेणेत्यनुपपन्नं, तथापि मुष्टिपरिमाणावच्छेदकताविरोधेन मुष्टिपरिमितद्रव्यपरिच्छेदकत्वमर्थात्कल्प्यमानमपि न मुष्ट्यङ्गत्वं तत्परिच्छेदद्वाराऽऽपादयति। अत एव न कार्यान्तरपरिच्छेदकत्वमपीत्यभिप्रायः। यद्यप्यस्मिन् **स्वमते** भाष्यादिविरोधोऽस्ति तथापि मूलसूत्रविरोधो नास्तीति दर्शयति—**अत एव जैमिनीति। मुष्टिलोपा तु सङ्ख्यालोपस्तद्गुणत्वात् स्यात्** इति प्रथमसूत्रे तुशब्दोपादानेन सूचितं निरसनीयं पक्षद्वयमुत्सूत्रम्। विरोधे सति नियमकारिणः शास्त्रस्याभावादनियमेन मुष्टिसङ्ख्य-

## (२८)—औत्पत्तिके तु द्रव्यतो विकारस्स्यादकार्यत्वात् ॥ ६८ ॥

**'द्यावापृथिव्यां धेनुमालभेत, वायव्यं वत्सं, ऐन्द्रमृषभम्' इत्यादावातिदेशिकस्याजत्वस्य न बाधः, धेन्वादिशब्दानां धानादिगुणमात्रशक्तत्वेनाजत्वे सत्यप्युपपत्तेः। न च** गव्येव **धेन्वादिशब्दानां प्रयोगात् गोवृत्तिगुणेष्वेव शक्तिः। तन्मात्रवृत्तिगुणेषु वैजात्ये प्रमाणाभावेन गोरपि शक्यतावच्छेदककोटिप्रवेशे गौरवात्। 'अवी द्वे धेनू ददाति, अजमृषभम्' इत्यादावन्यत्रापि धेन्वादिशब्दप्रयोगाच्च। गव्येव प्रचुरप्रयोगात्तु गुणविशिष्टायां तस्यां निरूढलक्षणा पार्थादिशब्दवत्।** पङ्कजशब्दस्य **तु पद्मभिन्ने प्रयोगा-**

---

योरन्यतरस्य लोपः इत्याद्यः पक्षः। सङ्ख्यायाः प्राथम्ये सति तस्यैव नियमकारिणः सत्वात् सङ्ख्यानुग्रहो मुष्टीनां लोप इति द्वितीयपक्षोत्तरत्वेन **मुष्टिलोपात्तु सङ्ख्यालोप** इति पक्षान्तरप्रतिपादकं सूत्रं प्रवर्तते। अनेन च मुष्टीनां प्राधान्यात् तल्लोपे सति तद्गुणभूतसङ्ख्याया अपि निवृत्त्यापत्तेः न सङ्ख्यानुग्रहेण मुष्टिलोपः; किन्तु प्रधानमुष्ट्यनुग्रहेण गुणभूतसङ्ख्यालोप एवेति पक्षान्तरे उक्ते मध्ये **न निर्वापशेषत्वात्** इति सूत्रेण सङ्ख्याया निर्वापगुणत्वेन मुष्टिगुणत्वाभावान्न मुष्ट्यनुग्रहः प्रधानत्वात्, अपि तु निर्वापाङ्गभूतयोरन्यतरस्य बाधे मुख्यत्वात् सङ्ख्यानुग्रह इति द्वितीयपक्ष एव साधितः। अनन्तरञ्च **सङ्ख्या तु चोदनां प्रति सामान्यात् तद्विकारः संयोगाच्च परं मुष्टेः** इति सूत्रेण द्वितीयं पक्षं प्रदूष्य सङ्ख्यया संख्यायाः परिमाणेन परिमाणस्य च बाध इत्युभयबाधो यः पूर्वपक्षितः तदुत्तरत्वेन **'न चोदनाऽभिसम्बन्धात् प्रकृतौ संस्कारयोगात्** इत्यन्तिमसिद्धान्तसूत्रस्य प्रवृत्तिः तत्र च यागसम्बद्धाभ्यां सप्तदशशरावाभ्यां न निर्वापसम्बन्ध्युभयबाधो युक्तः विरोधाभावादित्येवमुभयबाधपूर्वपक्षनिराकरणमात्रं प्रतीयते, न त्वेकतरबाधनिश्चयसिद्धान्तः। तत्र यो द्वितीयः पक्षः उभयबाधवादिना निरस्तः तस्य निरासस्य अपवादे कृते उत्सर्गप्राप्तो द्वितीय एव पक्षः सिद्धान्तत्वेन परिगृहीतो भाष्यकारादिभिः। तथैव युक्तिसिद्धतया मुष्ट्यनुग्रहेण सङ्ख्यालोपः; अथवा उभयानुग्रहेणोभयबाध इत्यपि सिद्धान्तपक्षत्वेन शक्यत एव परिग्रहीतुम्। अतो न जैमिनिसूत्रस्वारस्यभङ्गो ममापीत्यर्थः। कात्यायनसूत्राणि च विस्तरभयान्न लिख्यन्ते।

---

**औत्पत्तिके तु द्रव्यतो विकारः स्यात्।**

यथैव नीलादिपदानां गुणे शक्तावपि तद्वति निरूढलक्षणा तद्वदिह धानादिगुणे शक्तस्य गवि प्रयोगो लक्षणयेत्याह—**गव्येवेति**। ननु तर्हि पङ्कजपदस्यापि पङ्कजनिकर्तृरूपे गुण एव शक्तिः, तद्वति पद्मादौ निरूढलक्षणैवास्तु न तु रूढिरित्यत आह—**पङ्कजशब्दस्येति**।

**भावात् पक्षे योगरूढिस्वीकारेऽप्यदोषः। अतश्च लक्षणायां प्रमाणाभावादतिदेशानुरोधेन निरुक्तगुणविशिष्टमजद्रव्यमेव ग्राह्यमिति प्राप्ते—**

पदान्तरसमभिव्याहाराभावे धेनुपदमात्रश्रवणे सर्वत्र गोवृत्तिधानादिगुणस्यैव प्रतीतेर्धेन्वादिशब्दानां शोणादिशब्दवत् गोमात्रवृत्तिविजातीयधानादिगुण एव शक्तिः। वैजात्यं चाश्वरूपमात्रवृत्तिरक्तत्वव्याप्यजातिशोणत्ववत् गोमात्रवृत्तिधानादिनिष्ठमनुभवसिद्धम्। अस्तु वोक्तयुक्त्या गुणविशिष्टगव्येव शक्तिः। अजादिपदसमभिव्याहारे तु धेन्वादिपदस्य लक्षणा। अतश्च गोरुपदिष्टगुणाश्रितत्वादुपदिष्टत्वादेव चाऽजस्य बाधः॥

---

## (२९)—नैमित्तिके तु कार्यत्वात्प्रकृतेस्स्यात्तदापत्तेः ॥ ६९ ॥

**यत्र तु 'वायव्यं श्वेतमालभेत' इत्यादौ श्वेतादिशब्दानामजादिसाधारणगुणवाचित्वं तत्र नाजत्वस्य बाध इति प्रत्युदाहरणमेतत्॥ ५९ ॥**

---

## (३०)—विप्रतिषेधे तद्वचनात्प्राकृतगुणलोपस्स्यात्तेन च कर्मसंयोगात् ॥७०॥

**साद्यस्के—'खलेवाली यूपो भवति' इति श्रुतम्। तत्रातिदेशप्राप्तं खादिरत्वं निवर्तते न वा। तथा चित्रेष्टौ 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यत्र तण्डुले व्रीहियवनियमो निवर्तते न वेति चिन्तायां—**

---

**उक्तयुक्त्येति।** पदान्तरसमभिव्याहृतधेनुपदप्रयोगानुरोधेन विजातीयगुणमात्रे शक्तिः तद्वत्यां गवि निरूढलक्षणा, अथवा पदान्तरासमभिव्याहृतधेनुपदस्य केवलं तादृशगुणवद्द्रव्ये प्रयोगानुरोधेन शक्तिः, पदान्तरसमभिव्याहारे सति तात्पर्यग्राहकबलात् अर्थान्तरे लक्षणेत्यत्र विनिगमकाभावे प्रचुरप्रयोगस्य नियामकत्वात् गव्येव शक्तिः। न च विशिष्टशक्तौ गौरवम्। गुणमात्रशक्तिवादिनापि 'अवी धेनू' इति सामानाधिकरण्योपपत्तये निरूढलक्षणापेक्षयाऽतिरिक्तलक्षणाया आवश्यकत्वेन गौरवस्यापरिहार्यत्वादित्यर्थः।

---

**विप्रतिषेधे तद्वचनात्।**

यूपोद्देशेन खलेवारणसंस्कारविधौ अदृष्टार्थत्वं यूपकार्ये पशुनियोजने तद्विधाने तु दृष्टार्थत्वं भवतीति तदनुरोधेन लक्षणापि यूपपदेऽस्त्वित्याशङ्कामनूद्य निरस्यति —**न चादृष्टेति।**

आद्योदाहरणे तावत् न यूपकार्ये खलेवाली यथावस्थिता विधीयते यूपपदे कार्यलक्षणापत्तेः। किन्तु यूपोद्देशेन खलेवालीत्वं खले वारणक्रियारूपं संस्कारकतया विधीयते। न चादृष्टार्थत्वापत्तेर्लक्षणाङ्गीकारेऽप्यदोषः, निषादस्थपत्यधिकरणन्यायेन तस्याः दोषत्वात्। अतश्च प्रकृतिवत्खादिरमेव यूपं सम्पाद्य तस्य प्रयोगमध्य एव खलेवालीत्वं सम्पादनीयम्।

अस्तु वा खलेवाल्या एव यूपकार्योद्देशेन विधिः, तथाऽपि स्थानापत्त्या इतरधर्मवत् खादिरत्वस्यापि लाभात् यैव वस्तुतः पूर्वं खादिरी खलेवाली सैव ग्राह्येति। एवं तण्डुलेष्वपि चोदकबलेन व्रीह्यादिनियम इति प्राप्ते—

न तावद्यूपोद्देशेन खलेवालीत्वविधिः, तदा हि उद्देश्यसमर्पकं यदि तावत् खलेवालीपदमेव तदा एकप्रसरताभङ्गः। यदि तु यूपपदं तदा सुबन्तयोः परस्परमभेदान्वयाभवात् खलेवालीत्वेन यूपं भावयेत् इत्येवंविधशाब्दबोधनिर्वाहार्थं खलेवालीपदे खलेवालीत्वस्य विशेष्यत्वप्रतिपत्त्यर्थं लक्षणापत्तेः। न च 'दण्डी प्रैषानन्वाह' इतिवत्तदनापत्तिः तत्र शाब्दबोधे दण्डविशिष्टपुरुषस्यैव कर्तृत्वेनान्वयेऽपि प्राप्ताप्राप्तविवेकेन दण्ड एव विधिफलोपपत्तेः। प्रकृते तु यूपकर्मकभावनायां खलेवाल्यास्तत्त्वेनान्वयानुपपत्तेरवश्यं खलेवालीत्वस्यैव भावनायामन्वयो वाच्यः। तस्य च न विशेषणप्राधान्यं विना सिद्धिरिति लक्षणावश्यंभावः॥

तत्र च मुख्ये खलेवालीपदे लक्षणापेक्षया जघन्ये यूपपद एव पशुनियोजनरूपतत्कार्यलक्षणामङ्गीकृत्य तदुद्देशेन खलेवालीविधिर्युक्तः। न च तथाऽपि स्थानापत्त्या खादिरत्वादिप्राप्तिः, प्रकृतौ हि 'यूपे पशुं नियुञ्जीत' इत्येतद्वाक्यमात्रपर्यालोचने पशुनियोजनसमर्थयत्किञ्चिल्लौकिकद्रव्यमात्रग्रहणप्रसक्तौ 'यूपं छिनत्ति' इति वचनात् प्रयोगमध्ये छेदनप्राप्तौ तत्प्रकृतिद्रव्यापेक्षायां 'खादिरो यूपो भवति' इत्यनेन तन्नियमविधिः, अतश्च खादिरत्वस्य पशुनियोजनसाधनीभूतद्रव्यच्छेदनाक्षिप्तप्रकृतिद्रव्यद्वारैव

---

यदि तावत्खलेवालीति। खलेवालीत्यत्र इन् प्रत्ययेन धर्म्यभिधानात् तमुद्दिश्य खलेवारणरूपप्रकृत्यर्थविधाने एकप्रसरताभङ्ग इत्यर्थः। खलेवालीत्वस्येति। वारणक्रियारूपविशेषणस्य प्राधान्येन बोधनार्थं लक्षणापत्तिरित्यर्थः। न चेति। यथा विशिष्टवाचकस्यापि दण्डिपदस्य इनर्थभूतमैत्रावरुणस्य प्राप्तत्वात् विशेष्यपर्यन्तविधायकत्वासम्भवेन दण्डमात्रविधायकत्वस्वीकारे न लक्षणा भवति तथेहापि न तदापत्तिरिति शङ्कार्थः। तत्त्वेनेति। खलेवालीशब्दवाच्यद्रव्यस्य यूपकर्मकभावनायां करणत्वेनान्वयानुपपत्तेः प्रथमत एव विशेषणपरत्वं लक्षणया विना न सम्भवतीत्यर्थः। इतरत् स्पष्टार्थम्।

विधानात् खलेवाल्यां च लौकिकखलेवारणक्रियाप्रयुक्तकाष्ठस्यैव यूपकार्ये विधानात् छेदनलोपेन द्वारलोपात् खादिरत्वनियमस्य लोपः।

एवं चित्रेष्टौ तण्डुलेषु व्रीहिनियमस्यापि। तत्रापि हि प्रकृतौ पुरोडाशमात्रविधिपर्यालोचने लौकिकस्यैव अनोवासोन्यायेन पुरोडाशस्य ग्रहणप्रसक्तौ 'पिण्डं करोति पुरोडाशं श्रपयति' इत्यनेन प्रयोगमध्ये पिण्डकरणपुरोडाशश्रपणादिप्राप्तौ प्रकृतिद्रव्यापेक्षायां व्रीह्यादिवाक्येन तन्नियमविधानात् व्रीह्यादीनामाग्नेयाद्यपूर्वसाधनयागप्रदेयघटकपाकप्रयोजकश्रपणविध्याक्षिप्तोपादानकतण्डुलव्यापारकत्वस्यैव कौस्तुभे व्यवस्थापितत्वात्।

प्रकृते च तण्डुलानां पाकाभावेनोक्तविधव्यापाराभावान्न प्रकृतिद्रव्योपादानं, न वा व्रीह्यादिनियमः, न वा तेषु प्रोक्षणादिधर्मप्राप्तिः। निर्वापस्तु लौकिक एवार्थसिद्धस्तण्डुलानाम्। प्रदेयधर्मास्तु पर्यग्निकरणादयः केचिदर्थलोपाभावे कर्तव्याः। अतस्सिद्धं चित्रेष्टौ तण्डुला व्रीहियवान्यतरभिन्नप्रकृतिका अपि ग्राह्या इति ॥ ३० ॥

---

## (३१)—परेषां प्रतिषेधस्स्यात् ॥ ७१ ॥ प्रतिषेधाच्च ॥ ७२ ॥

यथासिद्धखलेवाल्या एवोपादानाच्छेदननिवृत्तावपि तक्षणादीनामनिवृत्तिं मन्वानं प्रत्युत्तरम्—प्रयोजनाभावान्न तक्षणादीनि। तेषां हि यदि तावत् श्लक्ष्णीभावादि दृष्टं प्रयोजनं ततस्तस्य खलेवारणक्रियाप्रयुक्तस्यैव सत्वेन प्रसङ्गसिद्ध्युपपत्तेः न पार्थक्येन तक्षणाद्यनुष्ठापकतया।

यदि तु दीक्षाकालकर्तव्यपदार्थानामदृष्टरूपयूपत्वोत्पादकत्वस्य स्थापितत्वात् प्रकृते च खलेवारणक्रियाप्रयुक्तकाष्ठविधानेन छेदनादिकतिपयधर्मबाधस्यावश्यकत्वात् सामग्र्यभावेन यूपत्वानुत्पत्तेरयूप एव खलेवाल्यां पशुनियोजनं तदा सुतरां तक्षणादीनां दीक्षाकालकर्तव्यानां पदार्थानामभावः। अत एव नाष्टाश्रीकरणमपि। निखननोच्छ्रयणयोस्तु

---

परेषां प्रतिषेधः स्यात्।

अत्र शास्त्रदीपिकायां च्छेदनतक्षणादयः संस्काराः कर्तव्या न वेति संशयप्रदर्शनावसरे च्छेदनमप्युपात्तम्। तदयुक्तमिति सूचयन् पूर्वपक्षमाह—यथासिद्धेति। वृक्षापादानकं हि कृन्तनं प्रकृतौ विहितं ; नहि तत् यथासिद्धतदुपादाने सम्भवतीति न विचारविषयः। अत एव भाष्ये तन्त्ररत्ने च न तदुपात्तमित्यर्थः। तक्षणादीत्यादिपदेन जोषणाष्टाश्रीकरणनिखननोच्छ्रयणादि गृह्यते। नाष्टाश्रीकरणमिति। समान्तरालेन यूपे अष्टसङ्ख्योर्ध्वरेखाकरणं

अदीक्षाकालीनयोर्यूपस्वरूपार्थत्वाभावेऽपि यत्र क्षेत्रदेशे खलेवाली तत्रैव साद्यस्क-विधानात् प्रसङ्गसिद्धकार्यत्वादेवाभावः ॥ ३१ ॥

---

## (३२)—अर्थाभावे संस्कारत्वं स्यात् ॥ ७३ ॥

**यानि तु** पर्यूहणपरिबृंहणपरिषेचनादीनि **दृष्टार्थानि, यानि च प्रोक्षणाञ्जनादीन्य-दृष्टार्थानि तेषां दीक्षाकालकर्तव्यत्वाभावेन यूपोत्पत्त्यर्थत्वाभावात् यूपदार्ढ्यार्थत्वेन चार्थलोपस्याप्यभावात् पश्वपूर्वसाधनीभूतपशुनियोजनप्रयुक्ततया खलेवाल्यां करणमि-ष्टमेव। एवं परिधावपि** प्रोक्षणादि **बोध्यम् ३२ ॥**

---

अष्टाश्रीकरणम्। अत्र दन्त्यसकारयुक्तास्रशब्दस्य कोणवाचित्वात् धाराणां विधानार्थं तालव्यशकार एव पठनीयः, तद्युक्तस्य तस्य धारावाचकत्वादिति **ध्येयम्**।

तस्य खलेवाल्यां प्रसङ्गसिद्धत्वाभावेन बाधाप्रसक्तेः तन्निवारणार्थमतएवेत्युक्तम्। यत्तु प्रीतिपूर्वकः समे जातमशाखाजं बहुपर्णशाखमप्रतिशुष्काग्रमसुषिरमित्यापस्तम्बसूत्रोक्तलक्षण-लक्षितत्वेन यूपीयवृक्षस्य सेव्यत्वनिश्चयः जोषणं, तस्य तु च्छेदनात् पूर्व एव काल इति इदानीं[1] अष्टावसरत्वात् च्छेदननिरासेनैव निरासः सूचितः।

---

### अर्थाभावे संस्कारत्वं स्यात्।

**पर्यूहणेति।** गर्ते उच्छ्रयणेन यूपे दत्ते 'ब्रह्मवनिं त्वा क्षत्रवनिम्' इति मन्त्रेण प्रदक्षिणं पांसुभिः गर्तस्य पूरणं पर्यूहणं; दत्तानां पांसूनां 'ब्रह्म दृँह क्षत्रं दृँह' इति मन्त्रेण मैत्रावरुण-दण्डेन समभूमितापादनं परिबृंहणं; तस्यां समायां भूमौ 'उन्नम्भय पृथिवीं' इत्यद्भिः परिषेचनं परिषेचनम्। यत्तु **प्रकाशकारैः** मैत्रावरुणदण्डेन भूमेः समक्रिया पर्यूहणं परिबृंहणं बल-वदवधानाख्यमिति व्याख्यातं तत् याज्ञिकाचारमूलभूतकल्पसूत्रदर्शितक्रमविरोधादुपेक्ष्यम्। **प्रोक्षणादीति।** एतच्च परिधित्वानुपमर्दकानर्थलुप्तसंस्कारोपलक्षणम्।

---

1. B. स्पष्टाव

## (३३)—अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् ॥ ७४ ॥

'पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इत्यादिना विहिते धानाद्रव्यके यागे धानावस्थायां भर्जनोत्तरमवघातः कर्तव्यो न वेति भाष्यकारेण विचारितः। तस्यायमभिप्रायः—चोदकेन पाकात्पूर्वमेव यवावस्थायामवघात-विधानात् भर्जनोत्तरं तदप्राप्तेस्तदुत्तरमवघातकरणे च धानात्वव्याघातापत्तेर्न भर्जनोत्तर-मवघातः कार्य इति प्राप्ते—

लोके पूर्वं किञ्चिदवहतानां यवानां भर्जनोत्तरं पुनरवघाते कृते एव धानात्वप्रसिद्धेः प्रयोजनानुरोधेन प्राकृतक्रमं बाधित्वाऽपि 'गुणलोपे च मुख्यस्य' इति न्यायेन भर्जनोत्त-रमपि प्राकृतस्सधर्मकोऽवघातः कर्तव्य एव। न च धानात्वव्याघातः, दृढतरमुसलप्रहारा-

---

अर्थे च विपर्यासे तादर्थ्यात्।

भाष्यकारमते धानामात्रोदाहरणेऽपि वार्तिककारमते मन्थस्यैवोदाहरणत्वात् तद्द्रव्यकयाग-विधिमप्युदाहरति—पितृभ्योऽग्निष्वात्तेभ्य इति। अत्र भाष्यकारेण धानासु धानात्वव्या-घातापत्तेः न कर्तव्यो हन्तिरिति पूर्वपक्षं प्रापय्य 'यथा विघातो न भवति तथा हन्तिः करिष्यते' इति सिद्धान्ते उक्त्वा पुनरुक्तं—"विपर्यसिष्यते तथा न विहनिष्यते; विपर्यासे च क्रममात्रं न कृतं भवति पदार्थस्तु न निवर्तते। अत उक्तं गुणलोपे च मुख्यक्रिया भवतीति। तस्मात् पूर्वं हन्तिं कृत्वा पाकः कार्यः; तत्र हि हन्तिः पाकार्थो भविष्यति। न धानात्वं विहनिष्यत" इति। तत्रोपसंहारग्रन्थालोचने पाकात्पूर्वमवघातो धानासु सिद्धान्तित इति भासते। न त्वेतद्युक्तम्, तथात्वे प्राकृतक्रमेणैव हन्त्यनुष्ठानात् क्रमविपर्यासोक्तेर्विरोधापत्तेः। अतः परस्परविरोधादयुक्तं भाष्यकारीयं धानोदाहरणमिति वार्तिककृता उक्तम्। तत्र धानात्वनाशापत्त्या अवघातो नेति पूर्वपक्षकरणात् सिद्धान्ते च धानात्वनाशाविरोधेनैवावघात-कर्तव्यतास्थापनात् भाष्यकारस्य भर्जनोत्तरकालीनोत्पद्यमानधानावस्थायामेव अवघातकर्तव्यतातद-भावविचारे तात्पर्यप्रतीतेः भर्जनोत्तरमवघातानुष्ठाने प्राकृतक्रमविपर्यासेन तद्ग्रन्थविरोधाभावात् न तदुक्तं दूषणं युक्तमित्यभिप्रेत्य भाष्यकारमतं समर्थयन् आह—तस्यायमभिप्राय इति। अवघात-विधानादिति। एतेन भाष्यकारमतीयपूर्वपक्षोपपादने भर्जनात्पूर्वं यवावस्थायां लौकिक एवावघातः, अतस्तत्र कृष्णाजिनास्तरणादयो नेति प्रकाशकारोक्तमपास्तम्। चोदकेन प्राप्तस्य तस्य पूर्वपक्षेऽदोषत्वात्[1]। दृढतरमुसलेति। एतेन सकृदवघातेन धानात्वाविघातो-

---

1. A. पक्षेऽपीष्टत्वात्

**करणेन तदनापत्तेः। प्रकृतौ हि हविस्सम्पादकवैतुष्यार्थमवघातो यथा हविस्सम्पद्यते तथा कार्यः। अत एव तदनुरोधेन भर्जनात्पूर्वमपि यत्किञ्चिद्वैतुष्यसम्पत्त्यर्थमवघातस्स-**

---

पपादनं कस्यचिदपास्तम्। हन्तेर्दृष्टार्थत्वानुरोधेन वैतुष्यरूपफलपर्यन्तावघातानुष्ठान एव शास्त्रार्थसिद्धेः तदर्थमावृत्तेरेव प्राप्तौ सकृत्करणानुपपत्तेः। यत्तु धानानां पुरोडाशस्थानीयत्वान्न तत्प्रकृतिद्रव्यत्वावच्छिन्नोद्देशेन विहितस्य हन्तेरतिदेशतो भर्जनोत्तरं प्राप्तिरिति **शास्त्रदीपिकायां** दूषणमुपन्यस्तं तत्परिहारार्थमाह—**प्रकृतौ हीति**। अयमर्थः—यत्रादृष्टार्थप्रोक्षणादिविधिः तत्र स्रुवादिषु पुरोडाशावस्थायाञ्च तन्निवृत्तये लक्ष्यमाणापूर्वसाधनताप्रणाल्या मध्ये प्रदेयप्रकृतिद्रव्यत्वस्याप्यावश्यको निवेशः। यत्र तु वैतुष्यरूपदृष्टफलक एवावघातविधिः तत्र वैतुष्यरूपप्रयोजनाभावादेव स्रुवादिव्यावृत्तिसिद्धेः न तत्र तस्यावश्यकता। ततश्च तत्र लाघवादपूर्वसाधनहविष्ट्वेनैव लक्षणायां[1] विधेयसामर्थ्यात् यथा हविः सम्पद्यते तथाऽवघातः कार्य इति निर्णीतस्य शास्त्रार्थस्य प्रकृतौ व्रीह्यवस्थायामेव सम्पत्तेः पुनरकरणेऽपीह भर्जनोत्तरमपि तत्फलस्यावश्यसिद्ध्यर्थं सधर्मकावघातकरणेन तस्य बाधः। अत एव प्रकृतिद्रव्यत्वस्योद्देश्यतावच्छेदककोटावप्रवेशमभिप्रेत्यैव कृष्णलचरावर्थलोपाद्बाधोपपादनं प्राचाम्। इतरथा तेषु प्राप्तेरेवानापत्तेरिति। **'यस्तु विपर्यसिष्यते तस्य न विहनिष्यते'** इत्यादि पूर्वलिखितो भाष्यग्रन्थः। तस्यायं तात्पर्यार्थः—भर्जनोत्तरं हि क्रियमाणो हन्तिः धानात्वाविघाताय विपर्यस्तः कार्यः। पूर्वमवघाताकरणे तथैव यवानां भर्जनेन धानाः सम्पाद्य वैतुष्यार्थमस्यामेवावस्थायां अवघातानुष्ठाने संकष्टमापद्यते। वैतुष्यं यावन्निष्पद्यते तावदवघातः कार्यः। स च समग्रतुषविमोकपर्याप्तः तदा निष्पद्यते यदा प्रहारेषु दार्ढ्यम्। तस्मिंश्च क्रियमाणे धानास्वरूपस्य नाशेन सक्तवो भवन्ति। अतः उभयदोषनिवारणायायमेव भर्जनोत्तरत्वापेक्षया विपर्यासेन ततः पूर्वमपि दृढो हन्तिः कार्यः। अयन्तु कतिपयावशिष्टतुषविमोकार्थं कर्तव्यः। एवमत्यावश्यकस्य पूर्वावघातस्य प्राकृतत्वानपायात् यथाक्रममेवानुष्ठाने सम्पन्नेऽपि यदा स एव भर्जनोत्तरमनुष्ठीयते तदा प्राकृतहविःपाकपूर्वभावित्वापेक्षया विपर्यासो भवति। तस्मिंश्चाश्रीयमाणे हविः सम्पत्त्यव्यवधानेन करिष्यमाणप्राकृतपदार्थमध्ये हन्तेरनुष्ठानात् तत्क्रममात्रं न कृतं भवति। वैतुष्यार्थमत्यावश्यकावघातस्तु न निवर्तते इति। अत एतस्मात्पूर्वमित्युपसंहारः पूर्वावघातस्थापनस्यैव। न त्वत्रत्यपूर्वपक्षस्य प्रतिपक्षतया सिद्धान्तयितव्यस्य धानास्ववघातपक्षस्य

---

1. A. विधि—

**धर्मकः कार्य एव अन्यथा लोकप्रसिद्धधानात्वानिष्पत्तेः। अत एवावृत्तिरपि तदनुरोधेन न दुष्यति।** तत्र पूर्वोऽवघातः **पाकार्थः उत्तरस्तु धानात्वसिद्ध्यर्थं इति न कश्चिद्विरोधः।**

**एवंविधं भाष्याभिप्रायमजानतः** पार्थसारथेस्तद्दूषणाय **प्रयास उपेक्षणीय एव। वार्तिककारस्य तु न द्विरारमवहननामेव धानात्वं, पूर्वमेव सम्यग्वितुषीकृतानां यवानां भर्जने कृते धानात्वाव्याहतेः। अतो यथाप्रकृत्येवावघातस्य भर्जनात्पूर्वमेवानुष्ठानोपपत्तेर्नात्र धाना उदाहरणं अपि तु मन्थः।**

**स च दुग्धमिश्रास्सक्तवः। प्रकृते च अभिवान्या मृतवत्सा गौः तस्या दुग्धं विवक्षितम्। तत्र भर्जितयवतण्डुलानां पिष्ट एव सक्तुत्वप्रसिद्धेर्भर्जनोत्तरमेव पेषणं। प्राकृतक्रमबाधेऽपि हविस्सम्पत्त्यर्थं पेषणस्य गुणलोपाधिकरणन्यायेनैव भर्जनोत्तरं करणोपपत्तेः। न च क्रमान्यत्वे पदार्थानामन्यत्वं, व्युत्क्रमेऽपि तादृशप्रत्यभिज्ञाया अबाधात्। न च प्रकृतौ पेषणस्य पाकार्थत्वं, येनेह भर्जनोत्तरं पाकाभावात् पेषणाभावश्शङ्क्येत। सत्यपि पुरोडाशपाकं प्रति तस्योपकारकत्वे पाकपेषणयोर्द्वयोरपि द्वितीयया द्रव्यसंस्कारार्थत्वात्। अतश्च यथैव प्रकृतौ हविस्सम्पत्त्यर्थमेव पेषणं पाकात्पूर्वमनुष्ठितं तथैवेह सक्तुत्वसम्पत्त्यर्थं पाकोत्तरमनुष्ठानेऽपि न कश्चिद्विरोधः।**

---

निरासतात्पर्यकः। पूर्वोत्तरपक्षयोरेकविषयतायामेव [1]विरोधस्फूर्तौ प्रवृत्तेः। अतो न काचनानुपपत्तिरित्यभिप्रेत्याह—**तत्र पूर्व इति। पार्थसारथेरिति।** यद्यपि भाष्यकारमतं वार्तिककृतैव दूषितमिति तस्यैव नामग्रहणमुचितं, तथापि ये भाष्याभिप्रायं वर्णयन्ति तेषां मतखण्डनं प्रयत्नेन शास्त्रदीपिकायां पार्थसारथिना कृतम्। तस्य वार्तिककृताऽकरणात् तस्यैव तत्र प्राधान्यात न तदुक्तिः।

**वस्तुतस्तु** व्रीहिपदेन शक्यसम्बन्धप्रत्यासत्त्या प्रकृतिद्रव्यत्वावच्छिन्नस्यैव लक्षणौचित्यात् स्वयमपि कृष्णलाधिकरणे तदङ्गीकारेण तथाभूतस्यैवोद्देश्यतोक्तेः भर्जनोत्तरं तदवच्छिन्ने धानास्वरूपे कृष्णलेष्विव नैवावघातस्य प्राकृतस्य प्राप्तिरिति युक्तमेव पार्थसारथिकृतं खण्डनम्। अत एव भर्जनोत्तरं परिवाप इव लौकिकेन नखादिनैव वैतुष्यकरणं लोकप्रसिद्ध्यनुगुणं कार्यम्। **अथवा** यावद्वैतुष्यकार्यपृष्ठभावेनैव प्राकृतावघातप्राप्तेः भर्जनात् पूर्वं तस्मिन् काले तुषाणां नैव सम्भावना। अन्यथा प्राकृतावघातप्राप्तेरेवाभावापत्तेरिति ध्येयम्। वार्तिककारमतोपपादनं स्पष्टार्थम्। **स चेति।** यद्यपि याज्ञिकप्रयोगात् तन्त्ररत्नलिखनाच्च दुग्धमिश्राः सक्तव एव मन्थपदस्यार्थः तथापि उत्पत्तिवाक्ये पृथक् दुग्धपदोपादानात भाविनीं

---

1 A. अविरोधस्फूर्त्यै

अत एव प्रकृतौ पेषणपाकयोः पाठोऽप्यनुवाद एव। अतो वस्तुतो नात्र क्रमबाधोऽपि। तेनात्र भर्जनोत्तरमेव पेषणम्। अवघातस्तु भाष्यवार्तिककारमतयोः पूर्वोक्तरीत्या मन्थेऽपि भर्जनपूर्वोत्तरं पूर्वमेव वा कार्यः। धानापिष्टस्यैव सक्तुत्वात्। परिवापे तु न निर्वापप्रोक्षणादि, नावघातः न वा पेषणमित्युक्तमेव॥ ३३॥

**इति श्रीखण्डदेवविरचितायां**
**भाट्टदीपिकायां**
**दशमाध्यायस्य**
**द्वितीयः पादः।**

---

संज्ञामादाय एकदेशलक्षणया वा मन्थशब्दो व्याख्येयः। **परिवापे त्विति।** **परिवापो** लाजाः। तत्र भर्जनात्पूर्वं लाजोत्पत्त्यसम्भवात् तदनन्तरञ्च सौकुमार्येण लाजस्वरूपनाशापत्तेः तुषसत्वेऽपि नाऽवघातः पेषणन्तु दूरापास्तमेवेति कृष्णलचराववघातप्रसङ्गेनोक्तमित्यर्थः। अत्र च "सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति" इति पूर्वपठितनिर्वपतिपदानुषङ्गेण अतिदेशप्राप्तनिर्वापानुवादबलान्न चरुवल्लोकसिद्धधानानामिह ग्रहणमिति न व्यर्थेयं चिन्तेति ध्येयम्।

**इति श्रीशम्भुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां**
**दशमाध्यायस्य**
**द्वितीयः पादः**

---

# अथ दशमाध्यायस्य तृतीयः पादः

(१)—विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिस्सन्निधानात् ॥ प्रकृतिवत्तस्य चानुपरोधः ॥ २ ॥ चोदनाप्रभुत्वाच्च ॥ ३ ॥ प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधिरविशेषात्प्रवर्तितः ॥ ४ ॥ न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥ कर्मणश्चैकशब्द्यात्सान्निधाने विधेराख्यासंयोगो गुणेन तद्विकारस्स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ अकार्यत्वाच्च नाम्नः ॥ ७ ॥ तुल्या च प्रभुता गुणे ॥ ८ ॥ सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥ तथा भूतेन संयोगाद्यथार्थविधयस्स्युः ॥ १० ॥ विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा योगात्तस्मात्सर्वं प्रधानार्थम् ॥ ११ ॥ समत्वाच्च तदुत्पत्तेस्संस्कारैरधिकारस्स्यात् ॥ १२ ॥

**यस्यां विकृतौ प्राकृताङ्गसम्बन्धेनापूर्वाङ्गश्रवणं यथा 'एकादश प्रयाजान् यजति'** इत्यादौ तत्रातिदेशेनाङ्गानां सामान्यमुखेनैव प्राप्तेःविशिष्य प्रयाजत्वादिनैवोपस्थित्यभावात् **तदवच्छिन्नोद्देशेनैकादशत्वविधानाशक्तेरेकादशत्वविशिष्टप्रयाजविध्यवश्यंभावात् तदा च गृहमेधीयाज्यभागन्यायेन क्लृप्तोपकारप्रयाजपुनर्विधानात् तेनैव पश्वादिभावनाया निराकाङ्क्षत्वादतिदेशाकल्पनेनापूर्वत्वावगतेर्न प्रयाजाद्यतिरिक्ताङ्गकरणमिति प्राप्ते—**

---

अथ तृतीयः पादः

**विकृतौ शब्दवत्त्वात् प्रधानस्य।**

**इत्यादाविति।** आदिपदेन 'हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति इत्यादीनां सङ्ग्रहः। **सामान्यमुखेनैवेति।** उपकाराकाङ्क्षया तेषामेवातिदेशे तत्पृष्ठभावेन पदार्थत्व-

'मद्गृहे धान्यसमृद्धिरस्ति, शष्कुलीं भुङ्क्ष्व' इत्यादौ सामान्यधर्मपुरस्कारेण प्राप्तस्य पदार्थस्य सम्बन्धविधयोपस्थितविशेषधर्मपुरस्कारेणापि प्राप्त्युपपत्तेः प्रयाजपदेन प्रयाजत्वरूपेणानुवादे बाधकाभावात् तृतीयविधिप्रकारलिप्सया प्रयाजोद्देशेनैकादशत्व-सङ्ख्यामात्रविधानेनातिदेशोपजीवितया तद्बाधकत्वानुपपत्तेर्नेतराङ्गनिवृत्तिः ॥ १ ॥

---

(२)—हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥ प्रकृत्यनुपरोधाच्च ॥१४॥ उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥ विध्यतिदेशात्तच्छ्रुतौ विकारस्स्याद्गुणानामुपदेश्यत्वात् ॥ १६ ॥ पूर्वस्मिंश्चामन्त्रत्व-दर्शनात् ॥ १७ ॥

वायव्ये पशौ 'हिरण्यगर्भस्समवर्तताग्रे इत्याघारमाघारयति' इति श्रुतम्। प्रकृतितश्च द्वावाघारौ पूर्वोऽमन्त्रकः प्राजापत्यः उत्तर ऐन्द्रो मन्त्रवान्। तदिह वैशेषिको मन्त्रो न तावदाघारद्वयेऽपि विधीयते वक्ष्यमाणविधया तदसम्भवात्। एकत्रापि पूर्वाघार एव विधीयते तस्य प्रजापतिदेवताकत्वेन मन्त्रस्य सामर्थ्यात्। हिरण्यगर्भादिशब्दा हि प्रजापतौ रूढाः योगरूढा वा। 'स्रष्टा प्रजापतिर्वेधाः' 'हिरण्यगर्भो लोकेशः' इत्याद्यनुशासनात्। 'कस्मै देवाय हविषा विधेम' इति मन्त्रशेषे श्रवणात्, कशब्दस्य प्रजापतौ श्रुतत्वाच्च। अत एव 'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय' इति वाक्यशेषेऽपि सङ्गच्छते। हिरण्यगर्भादिशब्दानां इन्द्रपरत्वे तदनुपपत्तेः। न च पूर्वाघारे प्रकृतौ मन्त्रस्याभावेन मन्त्रनियमादृष्टस्याभावात् तत्र वैशेषिकमन्त्रविधाने तन्नियमादृष्टकल्पनापत्तिः, उत्तराघारे तु तस्य क्लृप्तत्वात् तत्र मन्त्रविधौ लाघवमिति वाच्यम्। लाघवस्य प्रमाणानुग्राहकत्वेन तद्विरोधे लिङ्गान्यथानयनस्यानुचितत्वात्। उत्तराघारे हि हिरण्यगर्भस्यैव देवतात्वकल्पनायां तत्रापि गौरवाच्च।

---

सामान्येनैकातिदेशकल्पनात् विशिष्य प्राप्त्यभाव इत्यर्थः। अतिदेशोपजीवितयेति। एतेन गृहमेधीयाज्यभागविधाने अतिदेशोपजीवित्वाभावात् भवत्येव तद्बाध इति वैषम्यं सूचितम्।

---

हिरण्यगर्भः पूर्वस्य।

हिरण्यगर्भ इति। 'समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम' इति मन्त्रशेषः। द्वावाघाराविति। प्राप्ताविति शेषः।

किञ्च पूर्वाघारेऽपि सर्वत्र मन्त्राभावे ब्राह्मणस्यैव स्मारकतया नियमस्य पञ्चमे उक्तत्वात्। ब्राह्मणनियमादृष्टसत्त्वेन तज्जनकत्वेनैवैतन्मन्त्रविधानोपपत्तेर्लाघवाविशेषः । न च तदृदृष्टं प्रति मन्त्रव्यभिचारः, तत्तत्क्रत्वपूर्वसाधनीभूतादृष्टं प्रति तस्य तस्य करणत्वेनाव्यभिचारात्। इतरथा भवन्मतेऽपि तस्यानिवारणाच्चेति प्राप्ते—

यत्र मन्त्रसामान्यं क्लृप्तं तत्र मन्त्रविशेषविधाने लाघवादुत्तराघार एव निवेशः। वस्तुतस्तु—प्रकृतौ पूर्वाघारे 'न स्वाहेति करोति मन्त्रं च नाह' इति वचनमेव मन्त्राना-म्नानादेव मन्त्राभावप्रसक्तौ नित्यानुवादरूपमपि स्ववैयर्थ्यपरिहारार्थं हिरण्यमन्त्रस्य तत्रानिवेशतात्पर्यग्राहकम्। अत उत्तराघारे प्राकृतमन्त्रस्य बाधः, न तु पूर्वाघारे प्राकृतब्राह्मणस्य। अतश्चायं नित्यानुवादः पूर्वाघारे हिरण्यगर्भमन्त्रस्य परिसङ्ख्या-फलकस्सन्नुत्तराघार एव तस्य विधिं गमयति। सोऽपि च मान्त्रवर्णिकहिरण्यगर्भ-देवताकल्पनयेति तद्बलेनोत्तराघारे प्राकृतेन्द्रदेवताबाधोऽपि नानुपपन्नः।

अस्तु वा—"यो हि खलु वाव प्रजापतिः स उ वावेन्द्रः" इति वाक्यशेषानुसारात् हिरण्यगर्भादिपदे रूढिं परित्यज्य योगमात्रेणेन्द्रपरता 'कस्मै' इत्यत्रापि एकाराध्याहारेण एकस्मै अनन्यसाधारणायेत्यर्थाङ्गीकारः। इतरथा कशब्दस्य प्रजापतिपरत्वे सर्वनामत्वानु-पपत्तेः। सर्वथा उत्तराघारे मन्त्रः ॥ २ ॥

---

पूर्वः स्रौवः, उत्तरो जौहवः। मन्त्रव्यभिचार इति। प्रकृतौ पूर्वाघारे तन्नियमादृष्टस्य ब्राह्मणपाठेन विनापि मन्त्रं जायमानत्वेन व्यभिचार इत्यर्थः। तत्तत्क्रत्वपूर्वेति। दर्शपूर्ण-मासापूर्वसाधननियमादृष्टं प्रति ब्राह्मणस्य भूतिजनकवायव्यापूर्वसाधनत्वावच्छिन्नं प्रति एतन्मन्त्रस्य कारणतेत्येवं विशिष्य कार्यकारणभावकल्पनेन व्यभिचाराभावादित्यर्थः। मन्त्रसामान्यमिति। प्रकृतौ पूर्वाघारे स्मरणोपायाः ब्राह्मणपदमन्त्रकल्पसूत्रोपद्रष्टारः चत्वारः प्राप्ताः। तत्र मन्त्राभावे ब्राह्मणस्यैव स्मारकत्वात् अन्ये निवृत्ताः। विकृतावपि निवृत्तमन्त्राद्युपायानतिदेशो तस्यैव प्राप्तेः तत्र मन्त्रविधानमपूर्वं भवति। उत्तराघारे तु प्रकृतावपि मन्त्राद्यनियतोपायप्राप्तौ यावदैन्द्रो मन्त्रः प्राप्यते ततः पूर्वमेवानेनायं मन्त्रो नियम्यत इति लाघवम्। अतो मन्त्रसामान्यप्राप्तौ विशेषविधिर्युक्त इत्यर्थः। सोऽपि चेति। उत्तराघाराङ्गत्वेन विधिकल्पने आवश्यके इन्द्र-देवताकत्वे बहूनां मन्त्रपदानां लक्षणापत्त्याऽदृष्टार्थत्वापत्तेश्च हिरण्यगर्भस्य देवतात्वेन विधिकल्पनेऽप्यक्षतिरित्यर्थः। सर्वनामत्वानुपपत्तेरिति। संज्ञायां सर्वनामसंज्ञाविध्यप्रवृत्तेः 'काय' इत्यापत्तौ 'कस्मै' इति प्रयोगानुपपत्तेरित्यर्थः।

---

**(३)—संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥ प्रकृत्यनुपरोधाच्च ॥ १९ ॥ विधेस्तु तत्र भावात्सन्देहे यस्य शब्दस्तदर्थस्स्यात् ॥ २० ॥ संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥ विप्रतिषेधात्क्रियाप्रकरणे स्यात् ॥ २२ ॥**

सौमिकचातुर्मास्येषु 'उत्करे वाजिनमासादयति। परिधौ पशुं नियुञ्जीत' इति श्रुतम्। तत्र प्राकृतवाजिनासादनपशुनियोजनोद्देशेन उत्करपरिधिविधाने वाक्यभेदापत्तेरासादननियोजनमात्रोद्देशेन तद्विधाने च स्रुगासादने शाकटीयवृषभनियोजने चातिप्रसङ्गापत्तेरासादनान्तरनियोजनान्तरे एवात्रोत्करपरिधिविशिष्टे विधीयेते वाक्यभेदापादकस्यैव गुणस्य भेदकत्वात्। तयोरपि च न प्राकृतकार्यापन्नतया विधानं, उत्करस्य देशविशेषवृत्तिशङ्कुरूपस्य तीक्ष्णाग्रत्वेन तत्र चिरकालीनप्राकृतकार्यापन्नासादने वाजिनावस्कन्दनापत्तेः, परिधेश्च तनुतरस्यानिखातस्य च पश्वनपक्रमणसाधनीभूतनियोजनसाधनत्वासम्भवात्। अतश्चादृष्टार्थमासादनं नियोजनं च क्षणमात्रं कृत्वा पुनः प्राकृतं वेद्यां यूपे चासादनं नियोजनं च कार्यमिति न ताभ्यां तयोर्बाध इति प्राप्ते—

यद्यप्यासादनान्तरं नियोजनान्तरं विधेयं तथाऽपि प्राशित्रादानवत् प्राकृतकार्यार्थतयैव तद्विधिः, लाघवात्। न चाशक्यता, पृथ्वग्रतासम्पादनेनापि तदुपपत्तेः परिधेः परिमाणविशेषानाम्नानेन स्थौल्यकरणेऽपि बाधकाभावाच्च। अतो युक्तः प्राकृतासादननियोजनयोर्बाधः।

वस्तुतस्तु—प्राकृतासादनादेरेवातिदेशतः पूर्वं प्रवृत्तेनानेन गुणविशिष्टस्य वाजिनाद्युद्देशेन विधानान्न कर्मान्तरत्वमपि। तत्त्वं तु वाजिनोदाहरणे आसादनोद्देशेनोत्करविधानेऽपि, 'वाजिनं निषिच्य अभिघार्य' इति वाजिनस्यैव पूर्वं प्रक्रान्ततया विषयत्वोपपत्तेरतिप्रसङ्गाभावान्न विशिष्टविधिस्वीकारोऽपि। अत उत्करपरिधिभ्यामेव वेदियूपयोर्बाधः ॥ ३ ॥

---

संस्कारे तु क्रियान्तरम्।

**देशविशेषवृत्तीति।** वेदेरुद्धृतानां पांसूनां चात्वालाग्नीध्रमण्टपयोर्मध्यतने देशे तीक्ष्णाग्रतया कृतो यो राशिः स उत्करः तस्य शङ्कुरूपत्वात् तत्र आसादनानुपपत्तिरित्यर्थः। **पृथ्वग्रतेति।** पांसुराशिः पृथ्वग्र एव कर्तव्यः। एवं सति यत्तत्र काष्ठशङ्कुस्थापनं तत् परज्ञानार्यैवेति तदुपलक्षितपांसुराशौ सम्भवत्येवासादनमित्यर्थः।

---

(४)—षड्भिर्दीक्षयतीति तासां मन्त्रविकारश्श्रुतिसंयोगात् ॥ २३ ॥

अभ्यासात्तु प्रधानस्य ॥ २४ ॥ आवृत्त्या मन्त्रकर्म स्यात् ॥२५॥ अपि वा प्रतिमन्त्रत्वात् प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥ २६ ॥ पौर्वापर्यं चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥ तत्पृथक्त्वं च दर्शयति ॥ २८ ॥ न चाविशेषाद्व्यपदेशस्स्यात् ॥ २९ ॥

सोमे 'आज्यस्थाल्या स्रुवेणोपघातं दीक्षाहुतीर्जुहोति' इति श्रुतम्। अत्र च बहुवचनात् सङ्ख्यया कर्मभेदः। मन्त्रषट्काम्नानाच्चोत्तरान्यायेन कर्मषट्कावगतेः न कपिञ्जलाधिकरणन्यायः। दीक्षाहुतिसमाख्यया चैषां दीक्षाङ्गत्वम्। चयनप्रकरणे च मन्त्रषट्कान्तरं पठित्वा 'षड्भिर्दीक्षयति' इत्यनेन तेषां दीक्षार्थत्वं समाम्नातम्। स्वाहाकारान्तानां च तेषां साक्षात् दीक्षार्थत्वायोगात्तदङ्गभूतहोमद्वारैव तदित्यविवादम्। तदनन्तरं च 'द्वादश जुहोति' इत्यनेन पूर्वोपस्थितदीक्षाहुत्यनुवादेन द्वादशत्वविधानात्साग्निके ज्योतिष्टोमप्रयोगे प्रयाजैकादशत्ववत् तदभ्यासः। तत्र किं द्वादशस्वप्यभ्यासेषु अग्निप्रकरणाम्नाता विशेषविहिता एव मन्त्रा द्विरावृत्त्या सामान्यविहितमन्त्रषट्कबाधेन स्युः उतानावृत्ता एव समुच्चयेनेति चिन्तायां—

विशेषेण सामान्यबाधेऽवगते प्रतिप्रधानं गुणावृत्तिन्यायेन मन्त्रावृत्तिस्वीकारेऽपि न कश्चिद्दोष इति प्राप्ते—

---

षड्भिर्दीक्षयतीति।

**उपघातमिति।** उपहत्येत्यर्थकं णमुलन्तमिदं पदम्। **मन्त्रषट्केति।** 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादि मन्त्रषट्कमाम्नातम्। **उत्तरान्यायेनेति।** पूर्वं कपिञ्जलाधिकरणे बहुत्वस्य त्रित्वपर्यवसाने स्थापिते यत्र किञ्चिद्गमकमस्ति तत्राधिकानामपि ग्रहणम्—यथा 'नास्यैतां रात्रिं कुमारा अपि पयो लभन्ते' इति पयोलेशाभावप्रयुक्तकुमारपयः प्राप्त्यभावप्रतिपादनपरार्थवादयोगात् त्रित्वसङ्ख्यातोऽधिकानामुत्तरापदवाच्यानामुत्तरा दोहयतीति वचनविहिते दोहने सर्वासामपि यजमानगवां दोहनं कार्यमित्यपवादन्यायः एकादशे वक्ष्यते। तेन न्यायेनेहापीत्यर्थः। **मन्त्रषट्कान्तरं चेति।** तच्च 'आकूतमग्निं प्रयुजँस्वाहा' इत्यादिकम्। स्पष्टमन्यत्।

---

दीक्षार्थत्वमात्रं तेषां श्रुतं न तु होमार्थत्वं; तत्तु स्वाहाकारलिङ्गात्कल्पनीयं, तस्य चानावृत्त्याऽबाधेनाप्युपपत्तौ बाधावृत्त्योरस्वीकारे प्रमाणाभावात् सामान्यविहितमन्त्रषट्केन समुच्चय एव। यदि हि दीक्षाहुत्यनुवादेनैते मन्त्रा विहितास्स्युः तदा 'अप्स्ववभृथेन चरन्ति' इत्यत्र प्राकृतसर्वहोमेष्वग्निबाधवत् स्यादपि सामान्यविहितमन्त्रबाधः, न त्वेतदस्ति दीक्षार्थत्वस्यैव श्रुतत्वात् ॥ ४ ॥

---

## (५)—अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥ शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

'भाग्ययशश्श्रीकामानां पुनरादधीत' इति श्रुतम्। तथा 'योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत स पुनरादधीत' इति च। अत्र प्रकरणात्पुनश्शब्दयोगाच्च नाधानान्तरं, अपि तु तस्यैव पुनः प्रयोगः काम्यो नैमित्तिकश्च। तत्र काम्यवाक्ये द्वन्द्वोपात्तत्वात् 'अध्वर्युयजमानौ वाचं यच्छतः' इतिवन्नानेकोद्देश्यता। नैमित्तिकवाक्ये तु ज्यानिशब्दो हानिपरः। जीयेत प्राप्नुयात् इत्यर्थः। अनुषङ्गेण वाक्यद्वयाङ्गीकारेऽपि न दोषः। पुनः प्रयोगान्तरप्रकरणे च 'पुनरुत्स्यूतं वासो दक्षिणा पुनरुत्सृष्टोऽनड्वान्' इति श्रुतम्। अत्रापि प्राप्तदक्षिणानुवादेनानेकविधानानुपपत्तेर्वाक्यभेद इष्ट एव। पुनरुत्स्यूतं पाटितं सीवनेन कृतसन्धानं, पुनरुत्सृष्टः भग्नः सन् कृतसन्धानः। अनयोश्च न्यायतो विकल्पे प्राप्ते वचनादिना समुच्चय इति ध्येयम् ॥

---

### अग्न्याधेयस्य नैमित्तिके।

**हानिपर इति।** ज्यानिशब्दस्य 'ज्या वयोहानौ' इति धातुपाठपठितज्याधातुनिष्पन्नस्य वयोहानिरूपार्थत्वेऽपीह पुत्रादिपदसमभिव्याहारात् हानिसामान्यपरत्वाङ्गीकारात् पुत्रनाशं भाग्यनाशं वा प्राप्नुयादित्यर्थः। **पुनरुत्सृष्ट इति।** एतच्च 'पुनर्निष्कृतो रथो दक्षिणा' इति तृतीयस्याप्युपलक्षणम्। पुनरुत्सृष्टः पूर्वं क्षेत्रादौ संयोजितः वार्धक्यवशादुत्सृष्टः। पुनर्निष्कृतः भग्नः सन् कृतसन्धान इत्यर्थः। एवं भेदे सत्यपि पुनरुत्सृष्टो भग्नः सन् कृतसन्धान इति पूज्यपादानां व्याख्यानं त्वरातिशयादेव ज्ञेयम्। **वचनादिनेति।** 'यद्द्वैकृतीर्ददाति' इति

वस्तुतस्तु—अतिदेशप्राप्तेः पूर्वमेवानेकविशिष्टैकदक्षिणाविधानान्न कश्चिद्दोषः। आधाने च 'एका देया षट् देयाः' इत्यादिना दक्षिणान्तरमाम्नातम्। तदिह काम्यनैमित्तिकप्रयोगविशेषपुरस्कारेण विहितया दक्षिणया सामान्यविहिताया एकादिदक्षिणाया बाधः। न च 'दशभिः क्रीणाति' इतिवत् 'उभयीर्ददाति अग्न्याधेयिकीः पुनराधेयिकीश्च' इति वचनेन समुच्चयविधानादबाधः, अस्य पुनरुत्स्यूतादिवाक्यशेषतया तत्स्तावकत्वेन समुच्चयविधायकत्वे वाक्यभेदात्॥

न च 'उपरि हि देवेभ्यो धारयति' इतिवत्सिद्धवन्निर्देशान्यथानुपपत्त्यैव विध्यन्तरकल्पना। कथञ्चिदपि प्राप्तिसत्त्वे 'यज्ञोपवीती हि देवेभ्यो दोहयति' इतिवत्कल्पकत्वानुपपत्तेः। अस्ति हि आद्ये अग्न्याधेयप्रयोगे तासां नैमित्तिकादौ चान्यासां दानेनोभयोः प्रयोगभेदेन समुच्चयप्राप्तिः अतस्तदादायैव स्तुत्युपपत्तेर्विध्यन्तराकल्पनात् बाध एव युक्तः। 'दशभिः क्रीणाति' इत्यादौ तु नैवमिति विशेषः। अत एव 'यद्वैकृतीर्ददाति उभयोरपि तेन दक्षिणाः प्रत्ता भवन्ति' इति लिङ्गमप्युपपद्यते॥ ५॥

---

## (६)—वासो वत्सं च सामान्यात्॥ ३४॥

श्यामाकाग्रयणे 'वासो दक्षिणा' इति श्रुतम्। व्रीह्याग्रयणे च 'वत्सः प्रथमजो दक्षिणा' इति। सा प्राकृतस्यान्वाहार्यस्य निवर्तिका इत्यविवादमेव। न च क्रयाणामिवानत्यतिरेकार्थत्वकल्पनया प्राकृतवैकृत्योः समुच्चयोपपत्तिः। ऋत्विक्सम्पत्तिफलकानतिरूपकार्यस्यैकेनैव सिद्धावानत्यतिरेकस्य निष्प्रयोजनत्वात्। तस्या एवानतेरुभाभ्यां करणे व्रीहियवयोर्व्रीहिप्रियङ्ग्वोश्च समुच्चयापत्तेः। क्रयेषु तु 'दशभिः क्रीणाति' इति वचनात्समुच्चयः। अतः प्राकृतदक्षिणया वैकृतदक्षिणा बाध्यत इत्युत्तरविवक्षया प्राप्यते॥

---

लिखिष्यमाणवचने बहुवचनादिनेत्यर्थः। एकदक्षिणाविधानादिति। ततश्च गुणत्रयविशिष्टदानभावनाविधाने एकवाक्योपादानात् आरुण्यादीनां क्रय इव युक्यो गुणत्रयस्यैकस्मिन् दाने समुच्चय इत्यर्थः। अत एव यद्वैकृतीरिति। यदि प्राकृतिवैकृत्योर्दक्षिणयोः समुच्चयस्तदा मुख्यतयैवोभयानुग्रहसम्भवात् वैकृतिदक्षिणादानमात्रेणोभयानुग्रहवचनं व्यर्थमेव स्यात्। अतः प्रयोगभेदप्राकृतदक्षिणाबाधकृतोभयानुग्रहशङ्कानिरासार्थमेकेनैव वैकृतदक्षिणादानेन उभयानुग्रहः सम्पद्यत इत्यर्थपरतयोपपद्यत एव तद्वचनमित्यर्थः। इतः पञ्चाधिकरणानि स्पष्टार्थानि।

---

(७)—अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥

वैकृती दक्षिणा प्राकृतदक्षिणाकार्यापन्नत्वात्प्राकृतान्वाहार्यादिदक्षिणाधर्मान् लभते इत्यपि तथैव ॥ ७ ॥

---

(८)—दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

वत्से स्थानापत्त्यतिदेशबललभ्यः पाको निवर्तत एव, प्रकृतौ तस्य दक्षिणासाधनीभूतद्रव्यनिष्पादकतया वत्से अर्थलोपात्। न च वत्सस्यापि प्रकृतिद्रव्यत्वेन विधिः। साक्षाद्दक्षिणासाधनत्वसम्भवे परम्पराङ्गीकारे प्रमाणाभावात्। अतिदेशप्राप्तपाकानुरोधेन तदाश्रयणे अन्योन्याश्रयात्। अतश्श्रुतवत्सत्वविरोधान्न पाकः ॥ ८ ॥

---

(९)—पाकस्य चान्नकारितत्वात् ॥ ३७ ॥

वाससि विरोधाभावेऽपि पाकस्य प्रकृतौ दक्षिणाद्रव्यनिष्पादकत्वादिह तदभावेऽपि निष्पत्तेः प्रयोजनाभावाच्चरौ पेषणवदकरणम्। सिद्धमपि चेदं शिष्यहितार्थमुच्यत इति द्रष्टव्यम् ॥ ९ ॥

---

(१०)—तथाऽभिघारणस्य ॥ ३८ ॥

अभिघारणस्य तु प्रकृतावदृष्टार्थत्वात् वासोवत्सादावपि करणे प्राप्ते—

ओदनस्वादिमार्थत्वेन दृष्टार्थत्वसम्भवे अदृष्टार्थत्वकल्पनानुपपत्तेः स्वादिम्नश्चेह प्रयोजनाभावादकरणमेव ॥ १० ॥

---

(११)—द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥ समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥ यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभिसम्बन्धः ॥ ४१ ॥ असंयुक्तास्तु तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारस्स्यात् ॥ ४२ ॥ असंयोगाद्विधिश्रुतावेकजाताधिकारस्स्याच्छ्रुत्याकोपात्क्रतोः ॥ ४३ ॥

शब्दार्थश्चापि लोकवत् ॥ ४४ ॥ सा पशूनामुत्पत्तितो विभागात् ॥ ४५ ॥ अनियमोऽविशेषात् ॥ ४६ ॥ भागित्वाद्वा गवां स्यात् ॥ ४७ ॥ प्रत्ययात् ॥ ४८ ॥ लिङ्गदर्शनाच्च ॥ ४९ ॥

**ज्योतिष्टोमे 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति श्रुतम्। तत्र द्वादशशतसङ्ख्या कुत्र निविशत इति चिन्तायां—**

**'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यनेन विहितं** दक्षिणादानमनूद्य **तस्य 'द्वादशशतं' इत्यनेन तच्छब्दोपस्थापितगवादिसर्वद्रव्योद्देशेन 'पयो व्रतं ब्राह्मणस्य' इतिवत् द्वादशशतसङ्ख्याविधानात् उद्देश्यसाहित्यस्य चाविवक्षितत्वात् प्रत्येकं सर्वद्रव्येषु निवेशः।** गवादिद्रव्याणां **च दक्षिणात्वं 'गौश्चाश्वश्च' इति वाक्ये दक्षिणापदानुषङ्गेण बोध्यं।** यद्यपि च **तन्त्ररत्नकारोक्तरीत्या छान्दोग्यस्थं 'गौश्चाश्वश्च' इति वाक्यं 'तस्य नवतिशतं स्तोत्रीयाः' इत्येतदर्थवादान्तर्गततयाऽन्यपरत्वावसायात् न गवादीनां दक्षिणात्वविधायकं, तथाऽपि आध्वर्यवे अनन्यशेषतया समाम्नातेन ईदृशेनैव षोडशद्रव्ययुक्तवाक्येन गवादिविधानं द्रष्टव्यम्। अथवाऽस्तु दक्षिणादानानुवादेनैव सङ्ख्याविधिः तस्याश्च**

---

**द्रव्यविधिसन्निधौ सङ्ख्या।**

**दक्षिणादानमनूद्येति।** आनतिकरत्वं दक्षिणाशब्दार्थः तस्य "ऋत्विग्भ्यो दक्षिणां ददाति" इत्यनेन प्राप्तत्वात् दक्षिणापदमनुवादः। सङ्ख्यामात्रं तच्छब्दार्थोद्देशेन विधीयत इत्यर्थः। ननु या दक्षिणात्वेनावगता तस्याः ऋत्विग्वाक्येन दानं विधीयते। नहि गवादीनां दक्षिणात्वं केनचिदवगतम्। अतः कथं तदनुवाद इत्याशङ्कापरिहारायाह— **गवादिद्रव्याणाञ्चेति।** तथाच माषश्चेत्यनन्तरं अग्रिमदक्षिणापदानुषङ्गेण तावद्वाक्येन गवादीनां दक्षिणात्वेन विधानम्। तस्यैव दक्षिणात्वेनावगतस्य द्रव्यस्य तृतीयार्थकद्वितीयया ऋत्विग्वाक्ये विनियोगः। तस्येति वाक्यभागे तु सङ्ख्यामात्रविधानम्। दक्षिणापदमनुवाद इत्यर्थः। **यद्यपि त्विति।** तस्य नवतिशतं स्तोत्रीया इति क्रमेण अशीत्युत्तरशतर्चां षट्त्रिंशद्विराजिनीत्वेन स्तुतिं कृत्वा अवशिष्टानां दशानामृचां गवादिदशद्रव्यरूपत्वेन स्तुत्यर्थवचनं "एतस्यां वा इदं द्रव्यं पुरुषः प्रतिष्ठितो यद्गौश्चाश्वश्च" इति, तदन्तेऽपि "एतस्यामेव विराजि प्रतितिष्ठति" इत्युपसंहार इति गौश्चाश्वश्चेति वाक्यं मध्यपतितमर्थवाद एवेति न "तस्य द्वादशशतं दक्षिणा" इत्यन्यत्र

**सर्वेष्वेव** 'वारणो यज्ञावचर' **इतिवद्दक्षिणाद्रव्येषु निवेशः**[1]। **तस्येति प्रकरणप्राप्तक्रतु-सम्बन्धानुवादकमिति प्रथमः पक्षः** ॥

द्वितीयस्तु **न तावत् दक्षिणोद्देशेन सङ्ख्याविधिः, तस्येत्यस्य वैयर्थ्यापत्तेः। नापि द्रव्योद्देशेन, द्रव्याणां बहुत्वेन बहुवचनापत्तेः। पक्षद्वयेऽपि 'गौश्चाश्वश्च' इत्यनेन दक्षिणापदानुषङ्गेण गवादीनां दक्षिणात्वविधाने वाक्यभेदापत्तेश्च। तद्वरमेकवाक्य-त्वाभ्युपगमेन गवादिद्रव्याणि द्वादशशतसङ्ख्या चेत्युभयविशिष्टदक्षिणादानविधानम्। 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यनेन च ऋत्विगुद्देशेन विनियोगः। ततश्च सङ्ख्यायाः पार्ष्ठिकान्वयवेलायां द्रव्यवृत्तित्वबोधे समुच्चितानामेव द्रव्याणां** चशब्दयोगेन **दक्षिणादाने करणत्वप्रतीतेः समुच्चितद्रव्यवृत्तित्वावसायात् सर्वसम्पाद्या सङ्ख्येति पक्षः** ॥

**एवं सति** तस्येत्येकवचनान्तपद**वैयर्थ्यापत्तेः एकद्रव्यवृत्तित्वविशिष्टा सङ्ख्या गवादि-समुच्चितद्रव्याणि चेत्युभयविशिष्टदक्षिणादानविधानावगतेरेकद्रव्यवृत्तित्वमेव तस्याः,**

---

पठितेनैकवाक्यतापन्नमित्यर्थः। **वारणो यज्ञावचर इति**। यथैव वारणत्वादिकं यज्ञपात्रोद्देशेन विधीयमानं अविशेषात् तदङ्गसर्वपात्रपरिच्छेदद्वारैव निविशते। एवं दक्षिणापदस्य तत्साध्य-दानपरत्वमङ्गीकृत्य तदुद्देशेन विधीयमाना सङ्ख्या अविशेषात् तदीयसर्वद्रव्यपरिच्छेदद्वारैव निविशते इत्यर्थः।

अत्र प्राचीनैः पूर्वोक्तमाद्यं पक्षमुपपाद्य द्रव्यसङ्ख्योभयशिष्टदक्षिणादानविध्यङ्गीकारेणैक-स्मिन्नपि द्रव्ये निविष्टायां सङ्ख्यायां विहितसङ्ख्याविशिष्टदक्षिणानुष्ठानसिद्धौ नियमकारणा-भावादनियमः ; अथवा आनन्तर्यान्माषाणामेव सङ्ख्यासम्बन्ध इत्येवं द्वितीयतृतीयपक्षावुपपादितौ। अनन्तरञ्च अरुणैकहायनीन्यायेन परिच्छेदकत्वेन सङ्ख्यायाः सर्वद्रव्येषु निवेशस्य युक्तत्वात् सर्वसम्पाद्येति चतुर्थं पक्षमुक्त्वा तस्येत्येकवचनबलात न सर्वद्रव्येष्विति तं च प्रदूष्य यस्य कस्यचित् द्रव्यस्य सङ्ख्यासम्बन्ध इत्यनियमपक्षं पञ्चममुपपाद्य पशूनामेवेति षष्ठपक्षोपपादने अनि-यमपक्षं पुनरुक्त्वा एकवचनान्तेन तस्येत्यनेन एकसङ्ख्यावच्छिन्नानामेव परामर्शात् एकवचनान्त-पदनिर्दिष्टानां चतुर्णामेव पशूनां सङ्ख्यासम्बन्ध इति सप्तमपक्षोपपादनान्ते गव्येव तत्सम्बन्धः सिद्धान्तितः। तदिदमैन्द्रजालिकमात्रं निष्प्रयोजनञ्चेत्युपेक्ष्य सयुक्तिकतया पक्षचतुष्टयेन पूर्वपक्षकर्तव्यतां मनसि निधाय द्वितीयं पक्षं दर्शयति—**द्वितीयस्त्विति**। अस्मिंश्च पक्षे देयेत्यध्याहारः। **चशब्दयोगेनेति**। चशब्दयोगाच्चशब्दयोगेनेत्युक्तम्। वस्तुतस्तु चशब्दाभावेऽपि एकवाक्योपादानात् आरुण्यादीनामिव समुच्चयावगतेः परिच्छेद्यपरिच्छेदका-काङ्क्षणे सर्वद्रव्येषु सम्भवत्येव पार्ष्ठिकान्वय इति ध्येयम्। **तस्येत्येकवचनान्तपदेति**।

अत एव तस्येत्येकवचनं गवादिद्रव्यसमाहाराभिप्रायमित्यप्यपास्तम्। समाहारवृत्तित्वस्य न्यायादेव प्राप्तौ तस्येत्यस्य वैयर्थ्यापत्तेः। समाहारस्याशाब्दत्वेन परामर्शानुपपत्तेश्च। षष्ठ्यन्तस्य प्राचां मते सुबन्तान्वयव्युत्पत्तेश्च न सङ्ख्यान्वयविरोधः। स्वमते तु पार्ष्ठिकः, पदद्वये लक्षणया वा सङ्ख्यान्वयो बोध्यः। तदपि चैकं द्रव्यं आनन्तर्यान्माषा एवेति तृतीयः॥

माषादिधान्यानां लोके आढकादिपरिमाणान्तरापेक्ष्यैव सङ्ख्याव्यवहारदर्शनात् तावताऽपि भृतित्वाभावाच्च पशुरूपद्रव्यस्यैव तच्छब्देन परामर्शावगतेस्तत्रापि मौल्याधिक्यादश्वानामेवेति चतुर्थः॥

सिद्धान्तस्तु—'न केसरिणो ददाति' इत्यनारभ्याधीतवचनेन लौकिकाश्वदानवत् सामान्यतो विहितेऽपि यत्राश्वविषये स्वेच्छाप्रवृत्तिस्तत्रापि निषेधावगतेरस्य चानिषिद्धगवादिविषयत्वेनाप्युपपत्तेरस्य महोपकारकमुख्यगोमात्रविषयत्वमेव। अत एवै-

---

न च जात्याख्यायामेकस्मिन्निति स्मृत्या जात्याख्यायामेकस्मिन् बहुवचनस्य बहुषु चैकवचनस्य विधानादेकवचनोपपत्तिरिति वाच्यम्। तच्छब्दस्य सर्वनामत्वेन सर्वनाम्नां व्यक्तिवाचिताया एव भाष्ये प्रतिपादनेन जातिवाचित्वाभावेन तदप्रवृत्तेः। एतदधिकरणे भाष्यकारेणास्य सूत्रस्य बहुष्वेकवचनविधायकत्वस्वीकारेऽपि तत्सूत्रादेकस्मिन् बहुवचनस्य विधिप्रतीतेः बहुष्वेकवचनविधायकत्वस्याप्रतीत्या वैयाकरणैस्तथानङ्गीकाराच्च। तावतापि भृतित्वाभावाच्चेति। यथा चाढकादिपरिमाणमपेक्ष्यैव माषादिषु सङ्ख्याव्यवहारो नान्यथा तावतापि च भृतित्वाभावः, तथा भाष्य एव प्रपञ्चितं द्रष्टव्यम्। अश्वानामेवेति। स्वमते[1] बहुमूल्यद्रव्यबहुत्वे ऋत्विगानत्याधिक्यात् मौल्याधिक्यादित्युक्तम्। बहुमूल्यत्वेन गवाश्वयोरेव सङ्ख्येति प्रकाशकारोक्तं पक्षान्तरं दूषयितुं अश्वानामेवेत्येवकारः प्रयुक्तः। गवापेक्षयाऽश्वे मौल्याधिक्यस्य लोकत एव प्रसिद्धिः तेनाश्वस्यैव प्राप्तेः। महोपकारकेति। दर्शनस्पर्शनपूजासेवाकीर्तनस्मरणामेध्यभूवङ्क्रमणाधिवासमूत्रपयोगोरोचनाचर्मद्वारा इष्टसाधनत्वात् महोपकारकत्वम्। प्रत्युत 'नोभयतोदद्भिर्व्यवहार' इति बौधायनेनाश्वविषये विक्रयादिसर्वव्यवहारस्य निषेधकरणात्; तथा गौतमेनापि 'अजाव्यश्वविक्रयो व्रीहियवाजाव्यश्वभूमिधेन्वनडुहश्चैके' इति निषेधकरणात् तेषामनिष्टसाधनत्वमेवेत्यर्थः। अत एव अजादिषु त्र्यधिकग्रहणे निषेधप्रवृत्तेः त्रित्वमेवेति वक्ष्यते। अत एव क्रतं प्रथमत उपादानमपि भवति सङ्ख्यासम्बन्धे नियामकमिति सूचयितुं मुख्येत्युक्तम्।

---

1. A. गुरुमते

कोऽश्वादिर्देय एव। अजादयस्तु कपिञ्जलाधिकरणन्यायेन त्रयः। माषादीनां परिमाणं प्रमाणान्तरात् स्वेच्छया वाऽवधेयम्। सर्वथा गवामेव द्वादशशतम्। अत एव विकृतौ तद्बाधिकायां सहस्रसङ्ख्यायां 'यावदस्य सहस्रस्य गौः' इति निर्देशोऽपि सङ्गच्छते। अत एव सहस्रादीनां गोवृत्तिसङ्ख्याबाधकत्वस्यैव सिद्धेरध्यायसङ्गतिरपि सङ्गच्छते ॥११

---

## (१२)—तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥ परिक्रयाच्च लोकवत् ॥ ५१ ॥ विभागं चापि दर्शयति ॥ ५२ ॥

सेयं दक्षिणा ऋत्विग्भ्यो दीयमाना विभज्य देया न वेति चिन्तायां —

'ऋत्विग्भ्यो दक्षिणां ददाति' इति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वात्

---

देय एवेति। एकस्य दाने विहितत्वेन निषेधाप्रवृत्तेरित्यर्थः। तद्बाधिकायामित्यत्र प्रकृतिप्राप्त-द्वादशशतसङ्ख्या तच्छब्दार्थः। यावदस्येति। 'सहस्रं दक्षिणास्सहस्रं स्तोत्रीयाः यावदस्य सहस्रस्य उत्तराधरा गौर्गवि प्रतिष्ठिता तावदस्माल्लोकादसौ लोक' इति लिङ्गम्, यावदस्येति प्रतीकग्रहणेनोपात्तम्। तत्र गौरिति सामानाधिकरण्यं लिङ्गम्। अत्र च तन्त्ररत्ने अस्य विचारस्य बाधाभ्युच्चयलक्षणेऽनुपयोगेऽपि वासोवत्सदक्षिणाविचारप्रसङ्गात् प्रासङ्गिकी, अथवा प्राकृतदक्षिणाया वैकृतदक्षिणया बाधप्रकारविचारस्याग्रे करिष्यमाणस्य सुखेन प्रवृत्त्यर्थमेवेयं चिन्तेत्येवमुपोद्घातो वा सङ्गतिरित्युक्तम्। तदपेक्षया साक्षादेव बाधोपयोगित्वेन सङ्गतिमाह—अत एवेति। एतेन एतदधिकरणारम्भे तस्य धेनुरित्यग्रिमाधिकरणे च सङ्ख्यान्वये गवादि-समुच्चयाभावोक्तेः अध्यायपादसङ्गतिरिति प्रकाशकारोक्तमपास्तम्। आतिदेशिकपदार्थसमुच्चय-तदभावयोरेवाध्यायार्थतया पादे विचारणीयत्वेन गवादीनामतिदेशप्राप्तत्वाभावेन तदनुपपत्तेः। यदा तु वक्ष्यमाणरीत्या गौणमुख्यसाधारणं कथञ्चित् बाधाभ्युच्चयमात्रमध्यायार्थ इत्युच्येत तदा अस्तु तदपि युक्तमिति ध्येयम्।

---

### तत्र दानं विभागेन।

सेयमिति। गौश्चाश्वश्चेति वचनविहिता दक्षिणा तच्छब्देन परामृश्यते। प्राचीनैः कृतमनियमपूर्वपक्षं नियमकारणसत्त्वादुपेक्ष्य विभागनियमपूर्वपक्षमाह—ऋत्विग्भ्य इति। ऋत्विक्परिक्रयार्थत्वेन तेषां प्रधानत्वान्न बहुत्वं विवक्षितमिति प्रतिप्रधानावृत्तिन्यायेन एकैकस्यैव

**समुदितेभ्योऽविभज्यैव देया।** न चाविभज्यदाने परस्वत्वानुत्पत्तेर्दानपदार्थानापत्तिः 'धेनुर्दक्षिणा' इत्यादावविभाज्यद्रव्यैकत्वे संसृष्टपरस्वत्वोत्पत्तिर्यदिहापि तथोत्पत्तिसम्भवेन तदुपपत्तेः। अतस्तद्वदेव तत्कर्तृकविभागेनैव प्रत्येकस्वत्वोत्पत्तावपि न क्षतिः। वस्तुतस्तु ऋत्विजामिहोद्देश्यत्वेन तद्गतबहुत्वसाहित्ययोरविवक्षितत्वात् 'पृषदाज्येनानूयाजान् यजति' इतिवत् प्रतिप्रधानं गुणावृत्तिन्यायेन प्रत्येकमेकैकस्य समस्तदक्षिणासम्बन्धावगतेर्न विभागप्रसक्तिरिति प्राप्ते—

नात्र ऋत्विजां चतुर्थ्या भाव्यत्वरूपोद्देश्यत्वावगतिः, तस्यास्सम्प्रदानकारकवाचित्वेन लक्षणायां प्रमाणाभावात्। अतो 'वेदविदे गां ददाति' इत्यत्र गोसम्प्रदानोभयविशिष्टदानस्य स्वर्गार्थत्ववत् ऋत्विग्द्रव्योभयविशिष्टदक्षिणादानस्य वैमृधादिवत्पदान्तरकल्पनया ऋत्विगानमनार्थत्वप्रतीतेः ऋत्विग्गतबहुत्वसाहित्यादेर्विवक्षितत्वान्न प्रत्येकं समस्तदक्षिणावृत्तिः। अत एवोभयत्रापि गवादिद्रव्यस्य कर्मत्वे द्विकर्मकत्वभिया सक्तुवत् करणत्वलक्षणैव ॥

किञ्च—दक्षिणाया वाक्यान्तरे जौहवौपभृदादिवदुत्पन्नाया एकस्या एव प्रयाजाद्युद्देशेनेव ऋत्विगुद्देशेन विनियोगादवयवश एव प्रत्येकान्वय इति न प्रत्येकं समस्त-

---

दानम्। किञ्च दानीयं द्रव्यं न यावदृत्विजामुपभोगक्षमं न तावद्दात्यर्थानुष्ठानं विभागेन तु दाने तद्भवतीति विभज्य दानमिति प्राचां सिद्धान्तयुक्तिद्वयम्; तत्रान्त्यामनूद्य पूर्वपक्षे दूषयति—**नचेत्यादिना। तत्कर्तृकेति।** तच्छब्देनर्त्विजां परामर्शः। अत एवानतिकरत्ववाचिदक्षिणाशब्दोऽप्येतादृशे विषये भावितन्मूल्यस्य योग्यतासत्वे भावितद्द्रव्यस्यैव वा भागपर्यालोचनया नेय इत्यर्थः। आद्ययुक्तावपि न विभागसिद्धान्तसिद्धिरित्याह—**वस्तुतस्त्विति।** अत्र तन्त्ररत्नादौ ऋत्विजां सम्प्रदानचतुर्थ्या द्रव्यापेक्षयाप्यभिप्रेयमाणत्वेन प्राधान्यावगतेः तदानत्यर्थं दानमित्युक्तम्। तत्र यदि तदानत्यर्थं दानं तदा आनतेरेवोत्पाद्यत्वेन प्राधान्यान्न ऋत्विजां प्राधान्यप्रसक्तिः। ततश्च ऋत्विक्कार्ये तदानतौ लक्षणायां सम्प्रदानानुपपत्तेः न ऋत्विजां प्राधान्यमित्यभिप्रेत्य तेषां गुणत्वमङ्गीकुर्वन्नेव सिद्धान्तमाह—**नात्रेति। ऋत्विग्द्रव्येति।** अत्र च दक्षिणापदमेवानतिकरद्रव्यवाचकं तद्विशेषसमर्पणं च गौश्चाश्वश्चेति वाक्येनेत्ययमर्थो दक्षिणादानस्येति पुनर्दक्षिणापदेन सूचितः। एतच्च ऋत्विग्वाक्ये दानभावनाविध्यङ्गीकारेणोक्तम्। **वस्तुतस्तु** गोश्चाश्वश्चेति वाक्येऽनेकगुणोपादानात् परस्परसमुच्चितगवादिद्रव्यगोवृत्तिद्वादशशतसङ्ख्याविशिष्टदक्षिणादानभावनाविधिरेव युक्तः तत्रोत्पन्नस्य दानस्यात्र ऋत्विक्सम्बन्धेन विनियोग इति युक्तमेव तेषां प्रधान्यम्; तावतापि प्रत्येकं समस्तदक्षिणाऽऽवृत्यापत्तिं निरस्यति—**किञ्चेति।** नायं ज्योतिष्टोम एव समुदितेभ्यो दाननियमः;

**दक्षिणावृत्तिः। अतस्समुदितेभ्य एव ऋत्विग्भ्यस्सर्वत्र दक्षिणादानम्।** अत एवा-**न्वाहार्योऽप्यविभज्यैव दीयते। न हि 'धेनुर्दक्षिणा' इत्यादावेकधेन्वादावविभाज्यत्ववद्-दन्वाहार्यादौ तदस्ति** येनान्वाहार्या**विभागे समुदितत्वयुक्तिर्न पुरस्क्रियेत।** एवं च **सर्वत्र बहुवचनबलात् समुदितेभ्य एव दाने प्रसक्ते 'तुथो वो विश्ववेदा विभजतु' इति मन्त्रवर्णबलात् 'अग्नीधे ददाति, होत्रे, उद्गात्रे' इत्यादिप्रमाणबलाच्च गमकसत्त्वे विभज्यैव दानम्॥ १२॥**

---

## (१३)—समं स्यादश्रुतत्वात्॥ ५३॥ अपि वा कर्मवैषम्यात्॥ ५४॥ अतुल्यास्स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्यु-पपद्यते दर्शनाद्विशेषस्य तथाऽभ्युदये॥ ५५॥

---

अपि तु तुल्यन्यायात्[1] सर्वत्रापीत्याह—**अत इति।** एवमवयवशः प्रत्येकान्वयेन समुदितेभ्यः समस्तदक्षिणादानप्रसाधनेन यजमानेन दक्षिणादाने विभाग एव कार्य इति प्राचां सिद्धान्तं दूषितमेवेति सूचयन् स्वमते याज्ञिकानुष्ठानानुकूलताप्रदर्शनेन विभागपक्षे अनुष्ठानविरोधमपि दर्शयति—**अत एवेति। येनान्वाहार्येति।** अन्वाहार्याविभागसिद्धौ नाविभाज्यत्वं हेतुः सम्भवति; विभागयोग्यतायाः सत्वात्। अतस्तत्र पूर्वोक्तरीत्या समुदितेभ्य एव विधान-युक्तिः पुरस्कर्तव्या। सा अत्रापि समानेति न विभागसिद्धिरित्यर्थः। एवं न्यायस्य विभागाप्रापकत्वे स्थिते [2]गमकबलादेव क्वचित् विभागप्रदर्शनेन न्यायापवादमाह—**एवञ्चेति।** 'तुथोवो' इत्ययं मन्त्रो हि द्वादशशतविभागे प्रकृतौ विहितः; तत्र विभागप्रकाशकमन्त्राम्नाना-द्विभागः; [3]अन्यत्र तु न्यायेन विभाग इत्यर्थः।

---

1. A. तुल्यन्यायत्वात्
2. B. आगम
3. A. अत्र तु

**विभागोऽप्यसति नियामके सर्वत्र समान एव। प्रयासानुरूप्यादिनियामकसत्त्वे तदानुरूप्येण।** सोमे तु **सत्रस्थदीक्षाक्रमविधायके वाक्ये 'अर्धिनस्तृतीयिनःपादिनः' इति श्रुतसमाख्याबलकल्प्यविध्यन्तरेण प्रतिप्रस्थात्रादिसाधारण्येन अध्र्य्वादिसमाख्याया याज्ञिकप्रसद्धत्वाच्च महर्त्विजां यो विभागस्तदर्धं प्रतिप्रस्थात्रादीनामर्धिनां तृतीयांशस्तृतीयिनां नेष्ट्रादीनां, तच्चतुर्थांशः पादिनामुन्नेत्रादीनां** इत्येवं क्रमेण **बोध्यः** ॥

**अयं च द्वादशशतादावेव, तत्रैव विभागविधानात्;** अश्वादौ तु **समुदितेभ्यो दानम्, तैस्स्वेच्छया साम्येन प्रयासानुरूप्येण वा विभागः कार्यः। एवमन्वाहार्यादावपि।** अधिकरणद्वयेन **विभागकथनं च वक्ष्यमाणाध्वर्यवादिभागबाधोपयोगितया ॥ १३ ॥**

---

**समं स्यादश्रुतत्वात्।**

अन्यत्र प्रयासानुरूप्यस्य नियामकत्वेऽपि द्वादशशतदक्षिणायां न तन्नियामकमित्याह— **सोमे त्विति। इत्येवं क्रमेणेति।** अध्वर्य्वादिशब्दा हि यौगिकाः सन्तो दक्षिणार्धत्वादियोगेनैव प्रवर्तन्त इति तत्कल्पितविधिना तथैव दक्षिणादानविधिः कल्प्यते। दृश्यत एव स्पष्टं तन्मूलकमापस्तम्बादिवचनम् "तुथोवोविश्ववेदा विभजत्विति ता यजमानश्चतुर्धा कृष्णाजिनेन व्युत्तास्य चतुर्थं अध्वर्युभ्यो विभजति यावदध्वर्यवे ददाति, तस्यार्धं प्रति प्रस्थात्रे, तृतीयं नेष्ट्रे, चतुर्थमुन्नेत्रे। एतेनेतरेषां दानमुक्तम्" इति। तथाच समानभागतानिर्वाहाय कल्पान्तरकारैः अष्टाविंशतिभागमेकैकं चतुर्थं भागं प्रत्येकं पञ्चविंशतिधा विभज्य द्वादशद्वादशम् महर्त्विग्भ्यः तदर्धं षट्षट् प्रतिप्रस्थात्रादिभ्यः द्वादशसङ्ख्यायास्तृतीयभागरूपाः चतस्रश्चतस्रो नेष्ट्रादिभ्यः, द्वादशसङ्ख्यायाः चतुर्थभागरूपाः तिस्रस्तिस्र उन्नेत्रादिभ्यो दद्यादित्येवं विहितो यः क्रमः तेन क्रमेणेत्यर्थः। अत एव कल्पान्तरकारैः द्वादशशतस्याष्टाविंशतिसङ्ख्यारूपचतुर्थभागस्य पञ्चविंशतिधाविभागकरणात् तज्ज्ञापकबलादेव निष्कद्वारैवात्र गोदानं, न तु प्रत्यक्षत इत्यपि ध्येयम्; अन्यथा पञ्चविंशतिधा भागे क्रियमाणेऽवशिष्टानां तिसृणां गवां तत्र निवेशानुपपत्तेः। **अश्वादौ त्विति।** यद्यप्यश्वादिविषये विभागाविधानेऽपि अध्वर्य्वादिसमाख्यानां स्वेच्छया विभागेऽपि नियामकत्वं शक्यते वक्तुं तथापि यत्र प्रमाणान्तरेण नियमतो विभागविधानं तत्रैव क्लृप्तदक्षिणार्धत्वादिना उपयुक्ता समाख्या गौरवापत्त्या नान्यत्रापूर्वविभागविधिद्वारा दक्षिणार्धत्वादिविशेषकल्पिकेति[1] नाश्वादौ तथानियम इत्यर्थः। अत एवैतादृशविषये स्वेच्छया विभागा (न) नुष्ठानेऽपि न क्रतोर्वैगुण्यमिति ध्येयम्। **अधिकरणद्वयेनेति।** पूर्वत्र सामान्येन इह विशेषतश्च विभागकथनमित्यर्थः।

---

1. A. दक्षिणार्थत्वातिशय

(१४)–तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्तद्विकार-स्स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥ सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्त-स्मात् समवायाद्धि कर्मभिः ॥ ५७ ॥ चोदनानामनाश्रयाल्लिङ्गेन नियमस्स्यात् ॥ ५८ ॥

**'अथैष भूर्वैश्वदेवः' इत्यनेन विहिते भूसंज्ञके एकाहे 'धेनुर्दक्षिणा' इत्याम्नातं, सा किमश्वादीनां निवर्तिका न वेति चिन्तायां—यद्यपि न मूलोक्तरीत्या गवाद्युद्देशेन प्रकृतौ दक्षिणात्वस्य 'गौश्चाश्वश्च' इत्यनेन विहितत्वादुद्देश्यविशेषणस्य साहित्यस्याविवक्षितत्वेन प्रत्येकं गवादीनां दक्षिणात्वावगतेः** धेनुर्गवामेव **स्थानापत्त्या निवर्तिकेति शङ्कितुं शक्यं, गवादीनामप्राप्तत्वेनोद्देश्यत्वायोगात्।** अनेकोद्देशे **वाक्यभेदाच्च। दक्षिणात्वस्यानतिक-रत्वातिरिक्तस्य दुर्वचत्वेनानतेः फलरूपतया विधेयत्वायोगाच्च। अत एव गवादिद्रव्य-विशिष्टं गोवृत्तिसङ्ख्याविशिष्टं च दानमेव दक्षिणापदवाच्यानतिजनकत्वेन विधीयते।** निरुक्तदानस्य **च 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यनेन ऋत्विगुद्देशेन विनियोगः।** ऋत्विग्विशिष्टस्य **वा तस्यानत्यर्थत्वेन विनियोगेनैव वाऽऽनत्यर्थत्वस्य प्राप्ततया दानानुवादेन ऋत्विङ्मात्रविधिरित्यादि** पूर्वमुक्तम् ॥

---

**तस्य धेनुरिति।**

**धेनुर्गवामिति।** प्रत्येकं प्रकृतौ दक्षिणात्वेऽवगते सति इह दक्षिणोद्देशेन धेनुत्वविधौ तस्यायोग्यत्वादेवाश्वादिषु निवेशासम्भवेन विधेयसामर्थ्यात् गव्येव निवेशेन तत्स्थानापत्तिः। एकदक्षिणायामपि धेनुत्वे सम्पदितेऽपि शास्त्रार्थाहानेरित्यर्थः। **अनेकोद्देशेनेति।** तच्छब्देनैकेन उद्देश्यविधाने तु वाक्यभेदाप्रसक्तावपि तस्येत्येकवचनानुपपत्तिरिति भावः। **निरुक्तदानस्येति।**

यथा आनत्यर्थदानस्य सामर्थ्यादेव कर्मकरेषु ऋत्विक्षु विनियोगो लभ्यत इति ऋत्वि-ग्वाक्यं व्यर्थं, तथापि अनृत्विक्षु चमसाध्वर्युष्वपि कर्मकरत्वेन तदापत्तिवारणाय तत्सार्थक्यम्। यथा च चमसाध्वर्यूणां न ऋत्विक्त्वं तथा तृतीय एव साधितमित्याशयः। अथवा ऋत्विग्वा-क्येनैव विशिष्टदानविधिः। तस्य विहितस्य दानस्य आनत्यर्थत्वेन विनियोग इति पक्षान्तरमाह— **ऋत्विग्विशिष्टस्येत्यनेनैवेति।** दाने ऋत्विक्सम्बन्धे विहिते तस्य आनतिरूपदृष्टद्वारैव प्रयोजनवत्त्वकल्पनात् आनत्यर्थत्वस्यानेनैव वाक्येन प्राप्तत्वेनेत्यर्थः। **पूर्वमुक्तमिति। यद्यपि**

तथाऽपि 'गौश्चाश्वश्च' इत्यत्र गवादीनामानतिजनकत्वं प्रत्येकमेव न तु व्यासज्य-वृत्ति आग्नेयादिवत्, तथाकल्पने प्रमाणाभावात्। न च चशब्देनेतरेतरयोगप्रतीतेः परस्परसहितानां करणत्वावगतिः, तस्य समुच्चयप्रतिपादकत्वेनाप्युपपत्तौ इतरेतरयोगा-प्रतिपादकत्वात्। अतश्च योग्यताबलेन प्रत्येकमेव गवादीनां प्रकृतौ दक्षिणात्वं तेन दक्षिणोद्देशेन विधीयमानं विकृतौ धेनुत्वं विधेयसामर्थ्यानुसारात् गोद्वारेणैव निविशत इति नात्र कस्यापि बाधः। धेनुशब्दस्य गोमात्रवृत्तिगुणविशेषे गुणविशिष्टगव्येन वा शक्तत्वस्य स्थापितत्वादिति प्राप्ते—

न तावत् गोरनुवादेन धेनुत्वविधिः एकप्रसरताभङ्गापत्तेः। नापि दक्षिणानुवादेन धेनुत्वविधिः, तथात्वे एकत्वस्याप्यप्राप्ततया विधेयत्वे वाक्यभेदापत्तेः। अतोऽवश्यं दक्षिणादानोद्देशेन धेनुत्वैकत्वविशिष्टं गोद्रव्यमेव विधेयम्। तच्च यद्यपि प्रकृतौ गवादीनां प्रत्येकं दक्षिणादानसाधनता, तथाऽपि त्रिवत्सवत् धेनुसाधनतया प्राकृतसर्व-साधनतानां बाधात् सर्वद्रव्यबाधकं भवेदेव॥

वस्तुतस्तु—गवादिद्रव्याणां न प्रकृतौ प्रत्येकसाधनता, समुच्चयस्य अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं त्वाष्ट्रं पात्नीवतम्' इत्यादिवदेकवाक्योपादानादेव सिद्धेश्चशब्दवैयर्थ्या-पातात्। अतश्च गवादीनां चशब्दबलेनेतरेतरयोगप्रतीत्या व्यासज्यवृत्त्येकसाधनताकत्वा-द्धेनुसाधनतया प्राकृतदक्षिणादानसाधनताबाधात् सर्वद्रव्यनिवृत्तिः।

एतेन साधनताभेदपक्षे गोवृत्तिसाधनतैवातिदेशतः पूर्वप्रवृत्त्यङ्गीकारेण धेनुत्वा-दिविशिष्टा विधीयते इति नान्यासां बाध इत्यपास्तं, साधनताया अप्येकत्वेन गोद्रव्येण द्रव्यान्तरनिवृत्तेरावश्यकत्वात्॥ १४॥

---

प्रथमदर्शित एव वाक्यार्थः पूर्वमुक्तः, नेतरौ द्वौ तथापि उक्तप्रायमित्यर्थो द्रष्टव्यः। एवं विशिष्टदानविधिसत्त्वे कथं पूर्वपक्ष इत्यत आह—तथापीति। समुच्चयप्रतिपादकत्वेनेति। विभक्त्यर्थान्वये परस्परनिरपेक्षत्वेऽपि क्रियान्वये दण्डचक्रादिवत् परस्परसापेक्षत्वे सति समत्वं समुच्चयः। द्वयोः परस्परसाहित्येन व्यासज्यवृत्तिविभक्त्यर्थेऽन्वये सति क्रियान्वये समत्वं इतरेतरयोगः। प्रकृते च विभक्त्यर्थकरणत्वे परस्परनिरपेक्षत्वेन अन्वयमङ्गीकृत्य चकारस्य समुच्चयार्थत्वेनोपपत्तौ व्यासज्यवृत्तित्वेन करणत्वकल्पने नियामकाभाव इत्यर्थः। अग्नये कृत्तिकाभ्य इति। यथा देवताद्वयविशिष्टयागभावनाविधाने द्वयोः समुच्चयो विनैव चकारं भवति एवमिहाप्यरुणैकहायनीन्यायेन तदुपपत्तौ तद्वैयर्थ्यमित्यर्थः। आवश्यकत्वादिति। साधनताया एकत्वात् या सर्ववृत्तिसाधनता सैव गोद्रव्यवृत्तिसाधनता; तस्या धेनुविशिष्टत्वेन विशेषतो विधाने सति इतरद्रव्यवृत्तित्वबाधं विना तद्विशिष्टत्वनिवेशो न सम्भवतीति तन्निवृत्तिरावश्यकीत्यर्थः।

---

## (१५)—एकां पञ्चेति धेनुवत् ॥ ५१ ॥

**ज्योतिष्टोमे दक्षिणादानं प्रक्रम्य 'यदि सोममपहरेयुरेकां** गां **दक्षिणां** दद्यात्, **अग्निदग्धे पञ्च गाः'** इति **श्रुते नैमित्तिकेऽपि** तृतीयविधिप्रकारलिप्सया **दक्षिणादानोद्देशेन एकत्वगोत्वविशिष्टकारकविधानाद्धेनुवत् गोद्रव्येणाश्वादीनां सङ्ख्यया च द्वादशशतस्य निवृत्तिरिति प्राप्ते—**

**'गां दद्यात्' इत्येतावतैव विवक्षितार्थलाभादाद्यवाक्ये एकामित्यस्य वैयर्थ्यापत्तेः द्वितीयवाक्ये च पञ्चत्वस्या**प्राप्ततया **विधेयत्वाद्गोरपि विधाने वाक्यभेदापत्तेरगत्या चतुर्थविधिप्रकारमङ्गीकृत्य गोरुद्देशेन सङ्ख्यामात्रविधिः।** अवान्तरप्रकरणादेव **च दक्षिणादानस्याश्रयत्वोपपत्तेर्न दोहनाद्यर्थगोषु सङ्ख्यापत्तिः। अतश्च तत्र सङ्ख्यया द्वादशशतनिवृत्तावपि नाश्वादीनां निवृत्तिः ॥**

---

एकां **पञ्चेति धेनुवत्।**

**अपहरेयुरिति।** अपहारश्चौर्यम्। अग्निदग्धे इति भाष्यपाठः। दग्धे **नष्टे** इत्यर्थः। किं दानोद्देशेन विधेयसमर्पकं एकामिति पदं? उत गामिति? आद्ये अतिदेशप्राप्तानेकद्रव्यपरिच्छेदकत्वेन तद्विध्यापत्त्या गोपदस्य पाक्षिकानुवादत्वापत्तिः लक्षणा वा स्यात्। अतो गामित्येव तत्परं वक्तव्यं; तत्र दूषणमाह—गां दद्यादिति। **अप्राप्ततयेति।** गा इति बहुवचनस्य कपिञ्जलाधिकरणन्यायेन त्रित्व एव पर्यवसानात् पञ्चत्वस्याप्राप्तत्वमित्यर्थः। **अवान्तरप्रकरणादिति। एतेन** गोरुद्देशेन एकत्वपञ्चत्वयोर्विधाने प्राचीनैरुक्ते गोः क्रयानूबन्ध्ययोरपि सत्वेन दक्षिणाददातिपदयोः नित्यवदनुवादानुपपत्तेः उद्देश्यगोविशेषणत्वे च वाक्यभेदापत्तिरिति **प्रकाशकारोक्तं** दूषणमपास्तम्। दानस्याश्रयत्वेनान्वये तदप्रसक्तेः। अत एव प्राकाशाधिकरणे (१०—३—१७) तन्त्ररत्नकृता प्राकाशवाक्य इव ददातेरनुवादत्वमङ्गीकृत्य गोरुद्देशेनैवैकत्वविधिः तन्न्यायेन सिद्धान्तयिष्यते। **यत्तु** तन्त्ररत्नादौ सङ्ख्ययोर्दानेनैवान्वयः तथापि प्रातिपदिकाभिहितसङ्ख्यात्वसामान्यात् द्वादशशतसङ्ख्यास्थाने निविशते; साच **प्रकृतौ** गोपरिच्छेदेनैवोपकृतवतीति तत्स्थानपतिते एकपञ्चसङ्ख्ये गामेव परिच्छिन्द्यातामिति अश्वादीनामनिवृत्तिरिति सिद्धान्ते पक्षान्तरमुक्तम् तत् आनर्थक्यतदङ्गन्याय (३—१—१८) सहकृतविधेयसामर्थ्यानुरोधेन प्रथमतः सर्वद्रव्यपरिच्छेदद्वारा शब्दात् प्रतीतान्वयस्य प्रातिपदिकाभिहितसङ्ख्यात्वसामान्येन विलम्बोपस्थितिकेन बाधानुपपत्तेरुपेक्षितं पूज्यपादैः।

---

## (१६)—त्रिवत्सश्च ॥ ६० ॥ तथा च लिङ्गदर्शनम् ॥ ६१ ॥ एके तु श्रुतिभूतत्वात्सङ्ख्यया गवां लिङ्गविशेषेण ॥ ६२ ॥

साद्यस्के—'त्रिवत्सस्साण्डस्सोमक्रयणः' इत्यत्र कर्तव्य इति क्रियापदाध्याहारावश्यम्भावे तदुपात्तभावनायामप्राप्तस्य त्रिवत्सत्वस्य तावद्विधेयत्वमावश्यकम्। तच्च यदि तावत्क्रयोद्देशेन विधीयते तदा ऋषभादिपुंसीवाजादिषु स्त्रीष्वपि प्रसक्तौ साण्डशब्दस्यावयुत्यानुवादत्वापत्तेर्विशिष्टोद्देशे च वाक्यभेदात् साण्डानुवादेनैव त्रिवत्सत्वविधिः। तस्य च 'ऋषभेण क्रीणाति' इत्यनेन क्रयेऽपि प्राप्तत्वात् सोमक्रयण इत्यनुवादमात्रम्। न च साण्डस्याग्नीषोमीयादावपि सत्त्वेन तत्र त्रिवत्सत्वप्रसक्तेस्तस्याप्यवयुत्यानुवादत्वापत्तिः, आवश्यकेऽन्यतरस्यावयुत्यानुवादत्वे जघन्यस्यैव तदौचित्यात्। अतश्च सर्वत्रैव साण्डे त्रिवत्सत्वविधानान्न कस्यापि द्रव्यस्य निवृत्तिरिति प्राप्ते—

न क्रयोद्देशेन त्रिवत्सत्वमात्रं विधीयते येन साण्डपदस्यावयुत्यानुवादत्वापत्तिः, अपि तु त्रिवत्सरत्वपुंस्त्वैकत्वविशिष्टद्रव्यान्तरस्यैव क्रयोद्देशेन विधिः त्रिवत्सरत्वादिक्रयकरणत्वानामेव वा एकप्रथमालक्षितानां द्रव्यपरिच्छेदद्वारा विधानादवाक्यभेदः। अतश्च पुंस्त्वेन स्त्रीत्वस्यापि बाधात् साण्डपदं नित्यानुवादो न त्ववयुत्यानुवादः। अत एवैकत्वस्यापि विधानात् सर्वक्रयद्रव्येषु प्रत्येकं न त्रिवत्सत्वादेर्निवेशः। न चैकत्वस्यापि प्रतिक्रयं निवेशापत्तेर्न सर्वक्रयेष्वेकद्रव्यतासिद्धिः, तथात्वे द्रव्यबहुत्वात् बहुवचनप्रसङ्गेनैकत्वस्य क्रयसमुदाय एव प्रयाजैकादशत्वन्यायेन विधेयत्वादेकद्रव्यत्वसिद्धेः।

---

### त्रिवत्सश्च

**आवश्यकमिति।** प्रकृतावृषभस्य सोमक्रयसाधनत्वात् साण्डसोमक्रयणपदार्थयोरतिदेशतः प्राप्तत्वेन विधानावश्यकत्वाभावात् त्रिवत्सरत्वस्यैव विधेयत्वमप्राप्तत्वादावश्यकमित्यर्थः। त्रिवत्सपदे रकारलोपश्छान्दसः। प्रथमया करणत्वलक्षणया त्रितयवृत्त्येककरणत्वं क्रयोद्देशेन विधीयत इति पूर्वं सूचिते विनिगमनाविरहात् करणता भिन्ना। तस्मिन्नपि पक्षे अनेकार्थविधानप्रयुक्तो न वाक्यभेद इत्याह—**त्रिवत्सरत्वादीति। स्त्रीत्वस्यापीति।** अपिना प्राणिद्रव्याणां समुच्चयः। **अत एवेति।** पार्ष्ठिकान्वयेन एकत्वपुंस्त्वावच्छिन्न एव द्रव्ये त्रिवत्सरत्वगुणनिवेशात् सर्वद्रव्येषु तन्निवेशे एकत्वावच्छिन्ने तद्विधानबाधादेवेत्यर्थः। **एकद्रव्यतासिद्धिरिति।** तत्र क्रयसाधनद्रव्येषु प्रत्येकमेकत्वनिवेशेन एकत्वोपपत्तौ यावत्क्रयं त्रिवत्सरद्रव्यावृत्तौ सर्वक्रयेष्वेक एव त्रिवत्सः साधनमित्यर्थस्यासिद्ध्यापत्तिरित्याशङ्कार्थः। **प्रयाजैकादशत्वेति।** यथा पञ्चसु प्रयाजेषु विधीयमानमेकादशत्वं नैकैकप्रयाजे प्रत्येकं निविशते। किन्तु समुदितप्रयाजेषु तथैव सोमक्रयेषु विधीयमानमेकत्वं समुदितेषु तेषु, अन्यथा

**अत एव पुंस्त्वानुरोधेन हिरण्यादिव्यावृत्तावपि गोत्वाजत्वयोर्द्वयोर्मध्ये गोत्वस्या-**नेकक्रयसाधनत्वेन **भूयोऽनुग्रहस्य न्याय्यत्वात् तेनैव क्रयान्तरे प्रसङ्गसिद्धावजत्वस्यापि बाधात् 'गोत्वावच्छिन्न एव पुमान् त्रिवत्स एकस्सर्वक्रयेषु द्रष्टव्यम्' इति कौस्तुभे व्यक्तम्। अतो द्रव्यान्तरनिवृत्तिः।** अत एव **'स्त्री गौस्सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धिता' इत्यादौ निकायभूतेऽस्मिमे यागे द्रव्यान्तराभावात् स्पर्धाभावानुवादोऽपि सङ्गच्छते ॥ १३ ॥**

---

## (१७)–प्राकाशौ तथेति चेत् ॥ ६३ ॥ अपित्ववयवार्थत्वाद्विभक्तप्रकृति-त्वात् गुणे दन्ताविकारस्स्यात् ॥ ६४ ॥

---

वहुवचनापत्तेः। न ह्येतावता एकत्वमेकादशत्वमिवाभ्यासं विना न निवेशार्हं, येन क्रयावृत्तिः प्रसज्येतेत्यर्थः। **अनेकक्रयसाधनत्वेनेति।** "गवा क्रीणाति, ऋषभेण क्रीणाति, गोमिथुनेन क्रीणाति" इति वाक्यत्रयेण विहितानेकक्रयसाधनतया गोत्वावच्छिन्नानां बहुत्वात् तेषामनुग्रहो युक्त इत्यर्थः। **अत एव स्त्री गौरिति।** साद्यस्क्रान्तरे "स्त्री गौः सोमक्रयणी" इति वाक्य-विहिता स्त्रीगौः क्रयसाधनत्वेन विधीयमाना यदि न सर्वस्य क्रयसाधत्व[1]निवर्तिका तदा द्रव्या-न्तरस्य सत्वात् स्पर्धाव्यावृत्त्यनुवादो न सङ्गच्छते। यदि तु तस्य निवर्तिका तदा निष्कण्टकतया गोरेव तत्साधनत्वात् तदनुवादोपपत्तेरिति तस्याः सर्वनिवर्तकत्वं निर्णीतं भवति। **तथा** च तत्समानश्रुतेः त्रिवत्सस्यापि सर्वद्रव्यनिवर्तकत्वं, अथवा 'साद्यस्क्राः' 'साहस्रा' इत्येव पठितेषु निकायिषु पूर्वस्योत्तरेष्वतिदेशस्य अष्टमे प्रसाधितत्वात् यत्रातिदेशेन साण्डः त्रिवत्सः प्राप्तः तद्बाधेन गौर्विधीयते। तत्र यदि साण्डः सर्वबाधकः तदा तद्बाधिका गौः सर्वस्यापि बाधिकेति प्रतिस्पर्धिद्रव्यान्तराभावात् स्पर्धाव्यावृत्त्यनुवादो भवति। यदि साण्डो न सर्वस्य बाधकः तदा गोरपि सर्वबाधकत्वाभावे द्रव्यान्तरे च सति स्पर्धा भवेदेवेति तदनुवादोऽनुपपन्न इत्यर्थद्वयं **भाष्य** एव प्रदर्शितं द्रष्टव्यम्।

---

1. A. साधनस्य

**अश्वमेधे** 'हिरण्मयौ प्राकाशावध्वर्यवे ददाति' इति श्रुतम्। तत्र तृतीयविधिप्रकार-लिप्सया दानानुवादेनैव प्राकाशविधिः। न च हिरण्मयत्वस्यापि विधाने वाक्यभेदः, प्राकाशपदार्थस्यान्यद्रव्यकत्वाभावेन हिरण्मयत्वस्य नित्यप्राप्तत्वात्, उद्देश्यस्य च दानस्याध्वर्युणा विशेष्टुमशक्तत्वात्, 'अध्वरं युनक्ति' इति व्युत्पत्त्या अध्वर्युशब्दं ऋत्विङ्मात्रे कथञ्चिद्व्याख्याय प्राकृतदक्षिणामात्रस्य निवृत्तिरिति प्राप्ते—

अध्वर्युपदवैयर्थ्यापत्तिभिया तृतीयविधिप्रकारत्यागेनाध्वर्युसम्प्रदानत्वमुद्दिश्य प्राकाशविधानम्। सम्प्रदानत्वं च न दानातिरिक्तक्रियायामिति योग्यतयैव दानस्याश्रयत्वसिद्धिः। यत्तु 'प्राकाशाध्वर्युसम्बन्धो विधीयते' इति मूलं तस्याप्ययमेवार्थः, न त्वपदार्थस्याव्युत्पन्नस्य सम्बन्धस्य विधेयत्वमित्येवं यथाश्रुतः। अतश्च यथैव गोरुद्देशेनैकत्वविधिः इन्द्रियोद्देशेन वा दधिविधिस्तथाऽत्रापि सम्प्रदानत्वमुद्दिश्य प्राकाशविधानेऽप्युद्देश्यविधेययोरुभयोर्भावनायामेवान्वयान्नाव्युत्पन्नान्वयः॥

यदि तु विभक्त्यर्थकर्मत्वद्वारैव सर्वत्र प्रातिपदिकार्थस्यैव गवादेर्भावनायामुद्देश्यत्वम्, न तु कर्मत्वसंसर्गेण विभक्त्यर्थसम्प्रदानत्वस्येति विभाव्यते, अत एव न मैत्रावरुणादीनामपि सम्प्रदानत्वेनैवोद्देश्यत्वं अपि तु तत्त्वेन, गुणत्वेऽपि पदान्तरकल्पनया तदवष्टम्भस्यैव तदित्युक्तं तदाऽस्त्वत्र चतुर्थविधिप्रकारस्यापि त्यागेन विशिष्टदानान्तर-

---

प्राकाशौ तथेति चेत्।

**तृतीयविधिप्रकारेति।** प्राकाशयोः कर्मकारकत्वात् क्रियायामेवान्वय उचितः इत्यस्याप्युपलक्षणमेतत्। **अन्यद्रव्यकत्वाभावेनेति।** एतादृशवाक्यसमतुल्यमेव दर्शपेये वाक्यान्तरमस्ति। तत्र वेदभाष्यकारैः सुवर्णदर्पणौ प्राकाशाविति व्याख्यातत्वात् प्राकाशपदस्य सुवर्णनिर्मिते दर्पणरूपार्थे शक्तिनिर्णयात् नान्यद्रव्यकत्वसम्भवः। अत एवोक्तमत्र वार्तिके 'प्राकाशाविति हिरण्मयावेवोच्येते नान्यद्रव्यमयौ धेनुशब्दवत्' इति। **कथञ्चिदिति।** अध्वर्युशब्दस्य सार्वत्रिकतायाः तृतीये निरस्तत्वेऽपि इह श्रुतिविरोधे सति यास्कप्रदर्शितयोगेनैवास्य शब्दस्य प्रवृत्तिर्युक्ता। अत एव यास्कप्रदर्शितं यौगिकत्वमपि एतादृशे एव विषये उपयुज्यत इति कथञ्चित्पदस्यार्थः। **यत्त्विति।** तत्राध्वर्युप्राकाशयोः ददातिपरेण विधिना सम्बन्धो विधीयते, न तु ददातिमध्वर्युविशिष्टमुद्दिश्य प्राकाशौ विधीयेते येन वाक्यभेदः स्यादिति वार्तिके सम्बन्धविधानं प्रतीयते तस्यायमेवार्थ इत्यर्थः। **तदवष्टम्भस्यैव तदिति।** स सम्प्रदानत्वेनावष्टम्भोऽवच्छेदो यस्य मैत्रावरुणप्रातिपदिकार्थस्यैवेत्यर्थः। **इत्युक्तमिति।** मैत्रावरुणस्य प्रथमत एवोद्देश्यत्वेनान्वये दण्डस्यापि कर्मत्वेनान्वयात् वाक्यभेदापत्त्या सम्प्रदान-

**विधिरेव। न च तथाऽपि चतुर्थ्या कर्मत्वलक्षणयाऽध्वर्योरेवोद्देश्यत्वेन प्राकाशभावनां प्रत्यन्वयोपपत्तेर्न दानान्तरविधिकल्पना युक्तेति वाच्यं,** तथात्वे **दानस्यैव नित्यप्राप्त्यभावेनानुवादानुपपत्तेः। अतष्षष्ठविधिप्रकाराङ्गीकारेणापि** दानान्तरमेव **सम्प्रदानप्राकाशोभयविशिष्टं पदान्तरकल्पनया विधेयसामर्थ्यानुरोधेन अध्वर्य्वानतिजनकत्वेन विधीयते कार्यान्तरकल्पनायां प्रामाणाभावात्। अतश्च तज्जनकीभूतप्राकृतदानाभ्यासस्यैव निवृत्त्या तदीयभागस्यैव निवृत्तिः।**

वस्तुतस्तु—**लाघवादतिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेणोक्तदानाभ्यास एवो**क्तविशेषण**द्वयविशिष्टो विधीयते पूर्ववदध्वर्य्वानतिसिद्ध्यर्थमिति प्राकृतदाननिवृत्त्यभावेऽपि प्राकृततद्भागनिवृत्तिः। सर्वथा न प्राकृतकृत्स्नदक्षिणानिवृत्तिरिति सिद्धम्॥**

---

## (१८)—धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य॥ एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥ अपि वा तदधिकाराद्धिरण्यवद्विकारस्स्यात् ॥ ६७ ॥

'उपहव्योऽनिरुक्तः' **इत्यनेनोपहव्यसंज्ञकमेकाहं विधाय 'अश्वश्श्यावो दक्षिणा स ह्यनिरुक्तः स ब्रह्मणे देयः' इति श्रुतम्। अत्र दक्षिणावाक्यं ब्रह्मवाक्यात्तावद्भिन्नमेव,**

---

त्वेनैवान्वयः पदान्तरकल्पनयैव च तस्योद्देश्यत्वमिति चतुर्थे उक्तमित्यर्थः। **तथात्वे इति।** संप्रदानत्वस्य दानक्रियाऽव्यभिचारेणार्थाक्षिप्ततया दानानुवादसम्भवेऽपि तदभावे तस्य कर्मत्वान्नियमतो न दानाक्षेपः सम्भवति। दानस्य च प्रक्रमाभावान्नाश्रयत्वेनाप्यन्वयस्तस्य भवतीत्यर्थः। **दानान्तरमेवेति।** नचैवं धेनुर्दक्षिणेत्यत्र दानान्तरस्यैव विध्यापत्तिः। तत्र गोरुद्देश्यत्वसम्भवेन चतुर्थविधिप्रकारसम्भवे षष्ठविधिप्रकारस्वीकारस्यायुक्तत्वात्। इह तु पूर्वोक्तरीत्या अध्वर्योस्तदनुपपत्तेः दानप्रक्रमाभावाच्च विशिष्टविध्यङ्गीकार इति वैषम्यम्। एवं शास्त्रदीपिकानुसारेण दानान्तरविधिपक्षमुपपाद्य भाष्योक्तं विशिष्टदानभावनाविधित्वं प्रकारान्तरेणोपपादयति—**वस्तुतस्त्विति। उक्तेति।** आनतिजनकप्राकृतेत्यर्थः।

---

### धेनुवच्चाश्वदक्षिणा।

**उपहव्य इति।** उपहव्यसंज्ञको हि सोमयागविशेषः ग्रामकामस्य अभिशस्यमानस्य वा विहितः। तत्र अभिशस्यमानाधिकारिके अश्वः श्वेतो दक्षिणा। ग्रामकामाधिकारिके अश्वः

द्वयोः प्रथमान्ततच्छब्दयोरेकदेयपदान्वयानुपपत्तेः। अनिरुक्त इत्यर्थवादेन व्यवधानाच्च। तत्र दक्षिणावाक्ये तावत्पूर्ववदेव दानान्तरं, प्राकृतदानमेव वा पूर्वप्रवृत्त्यङ्गीकारेण गुणद्वयविशिष्टं विधीयते इतरथा वाक्यभेदापत्तेः। अत एव प्राकृतसर्वद्रव्यनिवृत्तिरपि। उत्तरवाक्ये तु तस्य ब्रह्मानत्युद्देशेन विधानमित्यविवादम्। दक्षिणावाक्ये परं प्राकृतब्रह्मसम्प्रदानकदानाभ्यासेऽश्वविधिः उत प्राकृतदान इति चिन्तायाम्—

यद्यपि पूर्ववाक्येऽविशेषेण दक्षिणामात्रश्रवणात् प्रकृतक्रतुसम्बन्धिसर्वर्त्विगानतिसाधनदान एवाश्वविधिरिति प्रतीयते तथाऽप्युत्तरवाक्ये तस्य ब्रह्मसम्बन्धावगमात् सर्वर्त्विगानतिजननानुपपत्तेः ब्रह्मानतिसाधनप्राकृतदानाभ्यास एवाश्वविधिप्रतीतेः न कृत्स्नदाक्षिण्यस्य निवृत्तिः, अपि तु ब्रह्मभागस्यैव। न चैवं दक्षिणाशब्दस्य ऋत्विक्सम्बन्ध्यानतिसमुदायवाचिनो ब्रह्मानतिरूपावयवे लक्षणापत्तिः, दक्षिणाशब्दस्यानतिमात्रवाचित्वेन समुदायवाचित्वे प्रमाणाभावात्। अतो विशेषरूपोत्तरवाक्येन सामान्यवाक्यस्यास्योपसंहारात् ब्रह्मभागमात्रस्यैव प्राकृतस्य निवृत्तिरिति प्राप्ते—

ब्रह्मभागमात्रनिवृत्तौ 'प्राकाशावध्वर्यवे ददाति' इतिवत् अश्वश्श्यावो ब्रह्मणे देयः, इत्येतावतैव सिद्धेर्वाक्यद्वयकरणेन दक्षिणापदतच्छब्दयोर्वैयर्थ्यप्रसङ्गादवश्यं प्राकृतदानस्यैव पूर्वप्रवृत्त्यङ्गीकारेणाश्वविशिष्टस्य विधिः। अत एवात्र प्राकृतदानकार्ये दानान्तरविधिपक्षो नैव सम्भवी, तत्कार्यस्य ऋत्विगन्तरानतेरश्वेनासम्भवात्। अतश्च प्रकृतक्रतुसम्बन्धिविजातीयदान एवाश्वविधानात् सर्वस्यैव प्राकृतदाक्षिण्यस्य धेनुवन्निवृत्तिः। तस्य च तद्वदेव सर्वर्त्विग्भ्यो दाने प्रसक्ते उत्तरवाक्येन ब्रह्मसम्बन्धावगमात् पुरुषान्तरेभ्योऽपनयः। एवं च तेषामुपायान्तरेणानतिस्सम्पाद्या ॥ १८ ॥

---

श्यावो दक्षिणा विहिता। तथाच अश्वः श्यावो दक्षिणेति पदं श्वेतस्याप्युपलक्षणं द्रष्टव्यम्। अश्वमेधे अश्वरूपहोमप्रकरणे "श्यावाय स्वाहा"इत्यत्र श्यावः पीतकृष्ण इति वेदभाष्ये व्याख्यानात् इहापि श्यावशब्दस्य स एवार्थो द्रष्टव्यः। तथा तत्रैव स्पष्टलिङ्गकमन्त्रैः गानं निरुक्तम्; तद्विपरीतमनिरुक्तमिति व्याख्यातमनिरुक्तपदम्। अत एव आण्डबिलायामुक्तम्—'ये ये स्पष्टलिङ्गका मन्त्राः सन्ति तत्र तत्तद्देवतावाचिस्पष्टपदं विहाय अप्रसिद्धतद्वाचिपदप्रयोगः कार्यः। यथा अग्निशब्दस्य 'जातवेदा' इति। वायुशब्दस्य मातरिश्वेति। इन्द्रशब्दस्य मघवच्छब्दः। सोमशब्दस्येन्दुशब्दः। एवं सर्वत्रानिरुक्ता' इति। प्रकाशकारैस्तु अनिरुक्तत्वं उपांशुत्वमिति व्याख्यातम्। दानान्तरमेवेति। अत्र च न 'एकां गां दद्यात्' इत्यत्रेव चतुर्थविधिप्रकाराश्रयणं, दानस्येह प्रकरणाभावेन आश्रयत्वेन प्राप्त्यनुपपत्तेः। अतः पूर्वाधिकरणन्यायेन प्रकारद्वयेन दानविधिरेवेत्यर्थः। अधिकरणसमाप्तिपर्यन्तं स्पष्टार्थम्।

---

(१९)—तथा च सोमचमसः ॥ ६८ ॥ सर्वविकारो वा क्रत्वर्थे प्रतिषेधात्पशूनाम् ॥ ६९ ॥ ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥ उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥

ऋतपेये 'औदुम्बरस्सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देयः' इति श्रुतम्। तत्रापि पूर्ववद्दक्षिणातच्छब्दयोर्वैयर्थ्यापत्तेः पूर्ववाक्येन गुणद्वयविशिष्टप्राकृतविजातीयदानविधिः, तेन च प्राकृतकृत्स्नदाक्षिण्यनिवृत्तिः। उत्तरवाक्येन च द्रव्यसम्प्रदानोभयविशिष्टस्य ब्रह्मानत्यर्थत्वस्य पदान्तरकल्पनयाऽवगमात् पुरुषान्तरादपनयः। अत्र हि ब्रह्मोद्देशेन द्रव्यविधिपक्षो नैवोद्भावितुं शक्यः, सगोत्रत्वादेरविवक्षापत्तेः। अत एव ऋतपेये सगोत्र एव ब्रह्मा।

अधिकाशङ्का तु 'यत्पशून् दद्यात् सोऽनृतं कुर्यात्' इति पशुदानपर्युदासो नासत्यां पशुप्राप्तौ घटत इति ब्रह्मभागस्यैव निवृत्तिः। अतश्चाध्वर्य्वादिभागेषु पशुप्राप्तौ तत्पर्युदासात्तेषां माषादयो देया इति। सा चास्य नित्यानुवादत्वेन सोमचमसविध्येकवाक्यतयाऽर्थवादत्वाद्गमकत्वानुपपत्तेः कृत्स्नक्रतुदाक्षिण्यस्यैव निवृत्तिरिति निराकर्तव्या ॥ १९ ॥

---

तथा सोमचमसः।

**सोमचमस इति** । अयञ्च सोमचमसः 'लौकिकं सोममभिषुत्य सोमेन पूरयित्वा माध्यन्दिनीयान् सवनमुखीयान् तेन सहोन्नीय ते सह हुत्वा दक्षिणाकाले ददाति' इति च्छन्दोगसूत्रात् लौकिकसोमपूरित एव, न तु क्रयादिसंस्कारसंस्कृतसोमपूरितः। चमसपदोपादानादेव औदुम्बरं काष्ठमेव न तु ताम्रमिति ध्येयम्। तच्छब्देन गुणविशिष्टस्य सोमचमसस्य परामर्शात् विधेयानेकत्वप्रयुक्तवाक्यभेदाप्रसक्तौ ब्रह्मोद्देशेन द्रव्यविधिपक्षोऽपि कदाचित् सम्भाव्यते स नाङ्गीकर्तव्य इत्याह—**अत्र हीति**। अत्र च ब्रह्मपदोपादानात् न आत्रेयपदवददृष्टार्थत्वम्। अत एवानत्यर्थत्वाच्चमसे हिरण्यपट्टबन्धादि कृत्वा दानमित्युक्तं **आण्डविलायाम्**।

---

## (२०)—यदि तु ब्रह्मणस्तदूनं तद्विकारस्स्यात् ॥ ७२ ॥ सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥

पूर्वाधिकरणद्वयेऽपि भिन्नवाक्यत्वमभ्युपगम्य कृत्स्नदाक्षिण्यनिवृत्तिरित्युक्तम् । यदा तु क्त्वाचिन्तया एकवाक्यत्वमभ्युपगम्यते तदाऽपि किं कृत्स्नदाक्षिण्यनिवृत्तिरुत ब्रह्मभागस्यैवेति चिन्तायां दक्षिणापदतच्छब्दयोश्श्रवणाविशेषात् भिन्नवाक्यत्व इवैकवाक्यत्वेऽपि कृत्स्नदाक्षिण्यनिवृत्तिः पुरुषान्तरादपनयश्चेति प्राप्ते—

एकवाक्यत्वे ब्रह्मानत्युद्देशेन द्रव्यसम्प्रदानोभयविशिष्टप्राकृतदानाभ्यासस्यैव विधेयत्वागतेः क्रतूद्देशेन द्रव्यविशिष्टप्राकृतविजतीयदानविध्यनुपपत्तेः दक्षिणाशब्दस्य च ब्रह्मसम्बन्धिन्यामानतावपि शक्तत्वेनानुवादोपपत्तेर्ब्रह्मभागस्यैव निवृत्तिः ॥

वस्तुतस्तु—अर्थवादव्यवधानात् तच्छब्ददक्षिणापदवैयर्थ्यप्रसङ्गात् भिन्नवाक्यत्वमेव युक्तमिति तदैव कृत्स्नक्रतुदाक्षिण्यस्य निवृत्तिः ॥ २० ॥

---

## (२१)—यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारस्स्यात् ॥ ७४ ॥ अपि वा श्रुतिभूतत्वात् सर्वासां तस्य भागो नियम्यते ॥ ७५ ॥

वाजपेये 'सप्तदश रथास्सप्तदश दास्यः सप्तदश निष्काः सप्तदश युग्यानि सप्तदश वयसो वयस्यश्चेति सप्त सप्तदशकानि ददाति' इति श्रुतम् । तत्रापि प्राकृतमेव दानं पूर्वप्रवृत्त्यङ्गीकारेण निरुक्तद्रव्यविशिष्टं विधीयते इति प्राकृतद्रव्यनिवृत्तिः । तत्र च यजुर्युक्तं रथमध्वर्यवे ददाति' इत्यादि श्रुतम् । तत्रापि 'प्राकाशावध्वर्यवे ददाति,

---

यजुर्युक्ते त्वध्वर्योः ।

वाजपेये इति । रथाश्चतुश्चक्राः । शास्त्रीयषोडशमाषरूपसुवर्णचतुष्टयमेको निष्कः । युग्यानि द्विचक्राणि वृषभयुक्तानि शकटानि । वयसः एकाब्दादि पञ्चाब्दान्ता वृषभाः । तथैव गोवयस्यः । निरुक्तद्रव्येति । इतिशब्दपरामृष्टद्रव्येत्यर्थः । यजुर्युक्तं रथमिति । दक्षिणात्वेन देयानां रथानां मध्ये 'इन्द्रस्य वज्रोसि वार्त्रघ्न' इत्यादि याजुर्वेदिकमन्त्रैः सज्जीकृतो यजमानारोहणार्थो रथः । अश्वत्रययोजनेन यष्टिवाहिपदवाच्यः

**इतिवत् यजुर्युक्तरथोऽध्वर्युभागान्तरस्य दास्यादेर्निवर्तकः, वैकृतद्रव्येण प्राकृतद्रव्यस्येव वैकृतविभागेन** प्राकृतार्ध्यादिविभागस्यापि **बाधादिति प्राप्ते**—

**नात्र प्राकाशवदपूर्वो यजुर्युक्तो रथो विधीयते, येन भागान्तरनिवृत्तिराशङ्क्येत, पूर्ववाक्येन प्राप्त एव तु लाघवाद्यजुर्युक्तो रथोऽनियमेन यस्मै कस्मैचिदृत्विजे प्राप्तोऽध्वर्यवे नियम्यते। प्राप्तिश्च दास्यादिद्रव्यान्तरसाहित्येनैवेति तादृश एव नियम्यते।** अत एवात्र **नियमद्वयं। यथैव हि अनियमेन यस्मै कस्मैचिदृत्विजे प्राप्त इति शेषिरूपाध्वर्युनियमः तथैवाध्वर्योर्यजुर्युक्तः कदाचित्प्राप्तः कदाचिन्नेति शेषरूपयजुर्युक्तनियमोऽपि। नियमद्वयस्यापि च फलत्वान्न वाक्यभेदः। शब्दबोधे तु सम्प्रदानत्वस्योद्देश्यत्वेनान्वयायोगमते चतुर्थ्या तस्य कर्मत्वं लक्षयित्वाऽध्वर्यूद्देशेन यजुर्युक्तो विधीयते। दानं तु सन्निधिप्राप्तमाश्रय इति प्राकाशवैषम्यम्।**

---

**यजुर्युक्तरथशब्दार्थः। प्राकृतार्ध्यादीति।** अर्धिनः पादिन इति समाख्याप्रापिता या अध्वर्योरधिकभागप्राप्तिः अन्यद्रव्यविषयिणी सा यजुर्युक्तरथविभागेन बाध्यते। अतोऽधिकभागेन दास्यादि अध्वर्यवे न देयं, इतरेषामध्वर्युपुरुषाणाञ्च देयमित्यर्थः। अत एवैतादृशे विषये अध्वर्युभागस्यैवाभावात् तन्निरूपितार्धित्वपादित्वासम्भवे प्रयासानुरूप्येण, अथवा प्रकृतिदृष्टत्वमात्रेणैवाध्वर्युपुरुषेभ्यो विभागः। निरूपकाध्वर्युभागाभावेन अर्धित्वाद्यसम्भवपक्षाभिप्रायेणैव प्राकृतार्ध्यादिविभागस्यापि बाधादिति पूज्यपादानामुक्तिरिति ध्येयम्।

अत्र च प्राचीनैः यजुर्युक्तं यद्ददाति तदध्वर्यवे इति वचनव्यक्तिमाश्रित्य नियमोऽयमित्युक्तम्। न चैतद्यथाश्रुतं युक्तम्। अध्वर्यूद्देशेन दानविध्यङ्गीकारे रथांशे अध्वर्योरुद्देश्यत्वेन नियमविधिगोचरत्वासम्भवात्। अतः नियमशब्दः उपसंहारपरो व्याख्येयः तथा च यजुर्युक्तं यद्ददाति तदध्वर्यव एवेत्युपसंहारेण अध्वर्यूद्देशेन यजुर्युक्तदानविधाने सति पुरुषान्तरव्यावृत्तावपि यजुर्युक्तमेवेति नियमाभावात् न दास्यादिद्रव्यमित्येवं सिद्धान्ते **प्रकाशकारैरुक्तम्।** तत् यथाश्रुतनियमफलकविधित्वाङ्गीकारेणाप्युपपत्तौ परिसङ्ख्यापादकोपसंहारपरत्वाङ्गीकारस्यायुक्तत्वात्, एकस्मिन् वाक्ये उपसंह्रियमाणोपसंहारभावकल्पनायाः अन्यत्र मीमांसकैरप्युपपादानाच्चायुक्तमिति सूचयन् प्राचीनोक्तं नियमपरत्वमुपपादयति—**अत एवात्रेति।** तथा चाध्वर्यूद्देशेन यजुर्युक्तविधिना नाध्वर्युरूपोद्देश्यस्य पक्षप्राप्त्यनियमविषयतया शाब्दबोधे विधानं क्रियते, येनोद्देश्यस्य विधेयत्वेन विरोधः शङ्क्येत; अपितु यजुर्युक्तमात्रस्यैव तत्। तद्विधानफलञ्च यथा यजुर्युक्तरथायोगव्यावृत्तिः, तथा आध्वर्यवायोगव्यावृत्तिरपि सम्भवत्येव, अविशेषात्। सा च न पुरुषान्तरापनयं विना सम्भवतीत्यर्थात् तन्निवृत्तिः

अत एव **नियमफलकत्वेनैवोपपत्तौ समुच्चित्य प्राप्तदास्यादिभागान्तरपरिसंख्या-फलकत्वमप्यवघातादिविधेर्लघुभूतनियमफलकत्वेनैवोपपत्तौ यवादिपरिसंख्याफलकत्वा-नङ्गीकारवन्नाङ्गीकर्तुमुचितम्। अतो नात्र भागान्तरनिवृत्तिः॥**

**इति श्रीखण्डदेवविरचितायां**
**भाट्टदीपिकायां**
**दशमाध्यायस्य**
**तृतीयः पादः**

---

न चैवं दास्यादिद्रव्यान्तरापनयं विना यजुर्युक्तरथायोगव्यावृत्तिरशक्या। दास्यादिसमुच्चयस्य विहितत्वेन तस्मिन् सत्यपि यजुर्युक्तस्यान्यस्मै दानेनापि तदयोगव्यावृत्तिसिद्धेः। प्राकाशे तु "सप्त सप्तदशकानि ददाति" इति वत् पूर्वं दानविधिप्रक्रमाभावेन दानस्य आश्रयत्वेन प्राप्त्यनुप-पत्त्या नित्यवदनुवादासम्भवात्, अपूर्वतयैव विधानात् तद्भागस्यैव निवृत्तिरिति वैषम्यमित्यर्थः। अत्र प्राकाशवाक्येऽपि पूर्वं दानविधेः सत्वात् प्राकाशाधिकरणं तदभावं कृत्वा चिन्तयेति **भवनाथोक्तिः सोमनाथीयशास्त्रदीपिकाटिप्पणे** प्रदर्शिता।

ननु दास्यादीनां यजुर्युक्तसमुच्चयेन प्राप्तानां निवृत्तिफलत्वमेव कुतो न स्वीक्रियते इत्यत आह—**अत एवेति। लघुभूतेति।** विधेयावघातनिष्ठत्वेन प्रत्यासन्नतन्नियमफल-कत्वे सम्भवति विप्रकृष्टानुपस्थितयवनिष्ठत्वेन तत्परिसङ्ख्याफलकत्वकल्पनं गौरवाद्यथा न युक्तं तथेहापि विधेयगतफलकल्पनमेव युक्तमित्यर्थः। न चैवमध्वर्युनियमवत् अवघातविधावपि व्रीहिनियमोऽपि फलं स्यादिति वाच्यम्। व्रीहिपक्षे तदयोगव्यावृत्तेः सिद्धत्वादेव यवपक्षे च तस्याः कर्तुमशक्यत्वाच्च तदनुपपत्तेः। प्रकृते तु अध्वर्युभिन्नानामपि प्रयोगे सत्वेन प्राप्तेः तदयोगप्रसक्तौ युक्ता तद्व्यावृत्तिः फलमिति वैषम्यमिति।

**इति श्रीखण्डदेवान्तेवासिकविमण्डन-**
**शम्भुभट्टविरचितायां भाट्ट-**
**दीपिकाप्रभावल्यां**
**दशमाध्यायस्य**
**तृतीयः पादः**

---

## अथ दशमाध्यायस्य चतुर्थः पादः.

(१)—प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥

'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इति नक्षत्रेष्टिं विधायोपहोमास्समाम्नाताः—'सोत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यस्स्वाहा, अम्बायै स्वाहा दुलायै स्वाहा नितत्न्यै स्वाहाऽभ्रयन्त्यै स्वाहा मेघयन्त्यै स्वाहा वर्षयन्त्यै स्वाहा चुपुणीकायै स्वाहा' इति। प्रकृतितश्च 'नारिष्ठान् जुहोति' इति नारिष्ठहोमाः प्राप्ताः। ते किमुपहोमैर्बाध्यन्ते उत समुच्चीयन्त इति चिन्तायां—

नारिष्ठहोमानां प्रकृतौ प्रधानोत्तरत्वात् अत्रशब्दबलेन प्रधानोत्तरभाविनामेषां समानस्थानकत्वेनैककार्यजनकत्वावगतेरुपदिष्टैरुपहोमैर्नारिष्ठहोमानामतिदिष्टानां शरवद्बाध इति प्राप्ते—

शरा हि बर्हिश्शब्दलक्षिते तत्कार्ये विहिताः युक्तं यत्तत्कार्यपृष्ठभावेन प्राप्स्यमानं बर्हिर्बाधन्ते, उपहोमास्तु नारिष्ठहोमकार्यापन्ना इत्यत्र न किञ्चित्प्रमाणमस्ति प्रत्यक्षादेस्तावददृष्टार्थेष्वप्रवृत्तेः। न च समानस्थानकत्वादेककार्यत्वावगतिः, उपहोमवाक्ये अतिदेशप्रापितनारिष्ठकार्यस्योपस्थापकपदाभावेनानुद्देश्यत्वात् तदुद्देशेनोपहोमविध्यप्रतीतेरतिदेशेन कार्यपृष्ठभावेन नारिष्ठानामपि प्राप्त्युपपत्तौ शरन्यायवैलक्षण्येन समानस्थान-

---

प्रकृतिलिङ्गासंयोगात्।

भाष्ये यद्यपि 'सोऽनुजुहोति' इति होमविधिं पठित्वा 'अग्नये स्वाहा' इत्यष्टौ होममन्त्राः पठिताः, तथापि वक्ष्यमाणाधिकयुक्तिसाधकतया तैत्तिरीयब्राह्मणपठितं 'सोत्र जुहोति' इति होमविधिं तत्रैव पठितान् नव होममन्त्रांश्चोदाहरति—**अग्नये इति। नारिष्ठान् जुहोतीति।** इति विधिना विहिता इति शेषः। **अत्रशब्दबलेनेति।** वस्तुतस्तु प्रधानोत्तरं पाठादेव 'अथजिह्वाया' इत्यत्रेव क्रमप्राप्तेः अथशब्दवत् अत्रशब्दोऽनुशब्दो वा अनुवाद एव। अतः अनुवादकात्रशब्दबलेनेत्यर्थः। **प्रत्यक्षादेरिति।** स्थानापत्तिर्हि प्रत्यक्षानुमानाभावेविधाननिषेधानुवादस्वशब्दैर्भवति। न च तेषामन्यतममप्यस्ति। अतः तत्कार्यापन्नत्वे प्रमाणाभाव इत्यर्थः। यद्यपि जुहोतिना होमसामान्यमुपस्थितं तथापि प्रधानोत्तराम्नानसहकृतातिदेशेन

कत्वमात्रस्याप्रयोजकत्वात्। न चोपहोमवाक्ये कर्मान्तरविधावेव प्रमाणाभावः नारिष्ठानुवादेनैव मन्त्रविधानोपपत्तेरिति वाच्यम्, प्राप्तकर्मानुवादेनानेकमन्त्रविधौ वाक्यभेदापादकगुणस्यैव भेदकत्वात्। एकं हीदं वाक्यं इतिकरणेन तैत्तिरीयशाखाम्नातेन मन्त्राणां जुहोतावेवान्वयप्रतीतेः।

अत एव स्वाहाकारान्तानां मन्त्राणां लिङ्गादेव नारिष्ठहोमेषु विनियोगप्रसक्तौ पुनर्विनियोगान्तरवैयर्थ्यप्रसङ्गादपि कर्मान्तरं, तच्चैकवाक्योपादानावगतस्वाहाकारान्तमन्त्रसमुच्चयबलेनानेकं आवृत्तं वेत्यन्यदेतत्। न च तथाऽप्युपदिष्टोपहोमैरेव विकृतेः निराकाङ्क्षत्वादतिदेशकल्पकत्वाभावेन नारिष्ठाप्राप्तिः। उपहोमानामक्लृप्तोपकारकतया उपकारकाकाङ्क्षिण्या विकृत्या प्रथममातिदेशिकस्यैव ग्रहणेन नारिष्ठानां प्राप्त्युपपत्तेः।

अत एवोपहोमादीनां वैकृतानामन्यतराकाङ्क्षयैव ग्रहणं अनुपस्थितफलान्तरकल्पने गौरवात्। अत एव यत्र क्लृप्तोपकारकप्राकृताङ्गपुनश्श्रवणं विकृतिप्रकरणे, यथा गृहमेधीयाज्यभागादौ तत्रैव विकृतेर्निराकाङ्क्षत्वापादनेनातिदेशलोपः, यत्र वा सन्निपत्योपकारकाङ्गसामग्रीपौष्कल्यं न त्वत्र द्वयमप्यस्ति। अतः नोपहोमैर्नारिष्ठानां बाधः।

---

नारिष्ठानामेवोपस्थितिविशेषात् तदुद्देशेनात्र मन्त्रमात्रविधिरित्याशङ्कते—न चोपहोमेति। यत्त्वत्र भाष्ये तन्त्ररत्ने च परिहृतम्—मन्त्राणां इतिकरणाद्यभावेन वाक्यीयविनियोगाभावात् पाठमात्रसत्वेन जुहोतिना अन्वयानुपपत्त्या एकवाक्यताऽसम्भवात् प्रकरणादेवाङ्गत्वं वक्तव्यम्। अतस्तत्र प्रकरणिहोमस्वरूपसिद्ध्यर्थमपूर्वहोमविधानमावश्यकमिति तदितिशब्दस्य स्पष्टमेव पाठेन करणतयाऽन्वयेन जुहोतावन्वयोपपत्त्या एकवाक्यत्वसम्भवान्नावश्यमपूर्वहोमे प्रमाणमस्तीत्ययुक्तमिति सूचयन् स्वयं समाधत्ते—प्राप्तेति। यद्यपि इतिशब्देनैकेन सर्वं मन्त्रजातं परामृश्य तत्करणत्वमेकमेव शक्यते विधातुमिति नानेकविधनं, तथापि इतिशब्दस्य स्वाहान्ते प्रत्येकमनुषङ्गेण अनेकमन्त्रवृत्तिकरणत्वभेदात् वाक्यभेदापत्तिर्द्रष्टव्या। इतरथा समस्तनवमन्त्रान्त एव सकृद्धोमापत्तेः। मम तु अनेकमन्त्रकरणत्वविशिष्टापूर्वहोमभावनाविधानात् न सा। इत्यन्यदेतदिति। यदा एकहोमव्यक्तिरेव समुच्चितानेकस्वाहान्तमन्त्रविशिष्टेति पक्षः तदा स्वाहान्तमन्त्राणां प्रत्येकं होमकरणतालिङ्गेन एकस्मिन् होमे समुच्चयासम्भवात् अभ्यास एव। यदा तु इतिशब्दस्य प्रत्येकमनुषङ्गेण 'सोत्र जुहोति अग्नये स्वाहेति' इति पृथग्वाक्यं सम्पन्नं तदा कृत्तिकाभ्यः स्वाहेतीत्युत्तरवाक्येषु प्रत्येकं पूर्वतनजुहोतेरनुषङ्गस्यावश्यकत्वात् भिन्नविधिविधेयतया कर्मभेद एव युक्तः। एवं स्थिते अभ्यासपक्षे प्रधानदेवतहोमद्रव्याभ्यासस्य सन्निपत्योपकारकत्वं इतरेषामारादुपकारकत्वं इत्येकविधिविधेयकर्मणोऽवैरूप्यापत्तेः प्रत्येकं कर्मान्तरत्वमेव युक्तमिति अन्यदेतदित्यनास्थया सूचितम्। सामग्रीपौष्कल्यमिति। यथा

**यत्त्वत्र भाष्यकारेण श्येने** 'निवीता ऋत्विजः **प्रचरन्ति' इत्याम्नातेन प्रयोगाङ्गभूत-कर्तृसंस्कारकेण निवीतेनातिदेशप्राप्तस्य सर्वकर्मार्थत्वेन विहितस्य चोपवीतस्य बाध-माशङ्क्यादृष्टार्थत्वात्समुच्चय इति सिद्धान्तितं** तदस्यादृष्टार्थत्वे **श्राद्धादावपि प्राचीनावीतेन सहोपवीतस्य समुच्चयापत्तेर्यावज्जीविकत्रिसूत्रनवतन्तुकयज्ञोपवीतधारणाश्रितप्रकारविशेष-स्योपवीतत्वनिवीतत्वादेस्तत्तत्कर्माङ्गतया विहितस्य समुच्चयासम्भवादुपेक्षितम्।**

**यदपि 'संस्थिते षडहे मध्वाशयेत्' इति विहितमध्वशनेन प्राकृतपयोव्रतस्य तस्मिन्नहनि निवृत्तिमाशङ्क्यादृष्टार्थत्वादेव समुच्चय इत्युक्तं, तत् मध्वशनस्य देहवृत्त्यन-र्हत्वेन पयोव्रतकार्यकारित्वानुपपत्तेः पूर्वपक्षोत्थानाभावात् सुत्यायां पयोव्रताभावाच्चो-पेक्षितम्।** अस्तु वा **तदपीहोदाहरणम्** ॥ १ ॥

---

दर्विहोमेष्विति शेषः। **निवीता इति।** कण्ठलम्बितब्रह्मसूत्रा इत्यर्थो वेदभाष्ये। अत्र भाष्यकारमते श्येनयागस्य सोमविकृतित्वेऽपि दर्शपूर्णमासप्रकृतिकत्वाभावेन उपवीतस्याप्राप्तेः श्येनप्रधान एव निवीतत्वनिवेशसम्भवेन आनर्थक्यतदङ्गन्यायेनापि (पू. मी. ३–१–९) तदङ्गदीक्षणीयादिषु निवीतस्याप्राप्तेश्च नानयोः बाधाभ्युच्चयविचारः सम्भवतीति वार्तिककृता दूषणमुक्तम्। **तदयुक्तम्।** निवीतस्य कर्तृद्वारैव संस्कारकत्वात् कर्तुश्च प्रयोगान्वयि-गुणत्वेन साङ्गप्रधानप्रयोगाङ्गत्वावगतेः तद्द्वारा श्येनप्रधान इव तदङ्गदीक्षणीयादिष्वपि प्राप्त्युपपत्तेः तद्विचारोपपत्तेः। अतः प्राप्त्यभावदूषणमुपेक्ष्य स्वरूपेणैव विरोधापत्तिदूषणं स्वयं दर्शयति - **तदस्येति।** एतेन यन्निवीतोपवीतयोः विरोधाशङ्कापरिहारार्थं वासोभ्यां तदु-भयोपपत्तेरित्यधिकरणमालोक्तं तदपास्तम्। श्राद्धादावपि तदापत्तेः। **भाष्यकारमते** षडह-स्थानापन्नस्य मध्वशनस्य भिन्नकार्यत्वान्न पूर्वपक्षोत्थानम्। **वार्तिककारमते** तु षडहसमाप्तौ षडहकर्तृसंस्कारकत्वात् भिन्नकार्यत्वाभावेन पूर्वपक्षोत्थानं भवतीत्यभिप्रेत्याह—**अस्तु वेति।**वस्तु-तस्तु मधुघृतान्यतरप्राशनस्य नवमे ऋत्विक्संस्कारकत्वमेव मयोपपादितमिति नैवेदमुदाह-रणमिति ध्येयम्।

---

## (२)—चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥

'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्' इति विहितेष्टौ 'शरमयं बर्हिः' इति श्रुताश्शरास्तु प्राकृतबर्हिर्बाधका एव। न च पाषाणमयी भूमिरितिवत् मयटा बहुशरसंयोगमात्रविधानात् कुशबाधानापत्तिः, अदृष्टार्थत्वप्रसङ्गेन शराणामेव बर्हिःकार्योद्देशेन विधानात्। न च तथाऽपि बर्हिःकार्यस्य स्तरणस्य शरविकारतानुपपत्तेर्विकारार्थमयडनुवादानुपपत्तिः। वस्तुतस्संस्कारविशिष्टस्य द्रव्यस्य प्रकृतौ कुशप्रकृतिकस्य विकृतौ शरप्रकृतिकत्वेन 'खादिरो यूपो भवति' इतिवत् विकारार्थमयडनुवादोपपत्तेः। शाब्दबोधे तु जघन्ये बर्हिश्शब्दे स्तरणादितत्कार्यलक्षणया तदुद्देशेन शरमात्रविधानाद्युक्त एव कुशबाधः॥

न च तथाऽपि चोदकेन कार्यस्य स्वजनकपदार्थविशिष्टस्यैव पूर्वं प्राप्ततया पश्चाद्वैयर्थ्यभियाऽन्यतराकाङ्क्षयाऽन्वीयमानानां शराणां कुशाविरोधेनैवान्वयात् कुशाभावे प्रतिनिधित्वेनैवान्वयोपपत्तेर्न कुशबाधकत्वमिति वाच्यं, आकाङ्क्षाक्रमेण कार्योपस्थित्यनन्तरं तज्जनकपदार्थापेक्षायामेव शरविधिप्रवृत्त्यङ्गीकाराच्छरैरेव तदाकाङ्क्षाशान्तौ तत्कार्ये कुशवैशिष्ट्याकल्पनेन कुशानामतिदेशेन वस्तुतः प्राप्त्यभावात्। अत एव तार्किकीं प्राप्तिमादायैवायं प्राप्तबाधः। शराणां च विकृत्याकाङ्क्षायां अनिवृत्तायामेव ग्रहणम्।

---

### चोदनालिङ्गसंयोगे।

**शरमयमिति**। सदण्डबर्हिः भाषायां सरीति प्रसिद्धं शरशब्दार्थः। **मयटेति**। प्राचुर्यार्थेनेति शेषः। **अदृष्टार्थत्वप्रसङ्गेनेति**। बर्हिरुद्देशेन शरमयत्वविधाने विशेष्यांशस्य प्राप्तत्वात् बहुशरसंयोगरूपविशेषणपरत्वमेव वक्तव्यम्। तथा च तद्विधानेऽदृष्टार्थत्वापत्तिः। बर्हिःकार्ये साधनत्वेन शरमात्रविधाने तु दृष्टार्थत्वमित्यर्थः। **वस्तुत इति**। बर्हिः पदस्य बर्हिष्ट्वजात्यवच्छिन्नपरत्वेऽपि यथा प्रकृतौ कुशमयं बर्हिरित्यत्र संस्कारविशिष्टास्तीर्यमाणद्रव्यपरत्वमाश्रित्य तद्द्रव्यं वस्तुतः कुशप्रकृतिकं, यथा वा यूपशब्दस्य संस्कारविशिष्टद्रव्यपरत्वमाश्रित्य तद्द्रव्यं वस्तुतः खदिरप्रकृतिकं, तेन च विकारार्थप्रत्ययस्यानुवादत्वमेव, एवमिह विकृत्याकाङ्क्षया संस्कारविशिष्टद्रव्यप्रकृतिभूतकुशप्रत्याम्नानेन शरविधानेऽर्थप्राप्तविकारार्थमयडनुवादोपपत्तिरित्यर्थः। ननु पदार्थानां भिन्नातिदेशपक्षे तेन प्रापितानां पदार्थानामुपकारान्तरकल्पनयाप्यनुष्ठानापत्तौ ऊह-

अस्तु वा—कार्याणामेव प्रथममतिदेशेन जनकापेक्षायां पदार्थानां पृथगतिदेशः, ततश्चातिदेशप्रापितकार्योद्देशेन शरविधेर्न कुशांशेऽतिदेशकल्पनेति। निरूपितरूपाणामेव च पदार्थानां पृथगतिदेशान्नोहबाधानुपपत्तिः। अतस्तस्य युक्तो बाध इति प्रत्युदाहरणमात्रमिदम्।

एवं वा—वाजपेये 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति श्रुतम्। तत्रातिदेशप्रवृत्तेः पूर्ववृत्तेनानेन रथघोषकरणकमुपाकरणमेव माहेन्द्रोद्देशेन विधीयते। प्राकृतोपाकरणस्य च स्तोत्रद्वारकत्वमेव क्लृप्तमिति नान्यद्वारकत्वप्रसङ्गः। अस्तु वा पदत्रयेण लक्षणया माहेन्द्रस्तोत्रापूर्वसाधनीभूतोपाकरणानुवादेन रथघोषमात्रविधिः प्रकृतौ चाज्ञादानाख्योपाकरणे दर्भौ उपावर्तध्वं' इति मन्त्रश्च साधनम्। तदत्रौपदेशिकेन रथघोषेणातिदेशिकस्य बाधेऽवश्यभाविनि किं रथो द्रव्यत्वसामान्यात् दर्भयोर्निवर्तकः, घोषश्च शब्दत्वसामान्यात् मन्त्रस्य, किं वा रथस्य घोष एव द्वयोर्निवर्तक इति चिन्तायां—

पूर्वपदे लक्षणाप्रसङ्गेन तत्पुरुषसमासानुपपत्तेर्द्वन्द्व एवायम्। न च द्वन्द्वेऽपीतरेतरयोगद्वन्द्वाश्रयणे द्विवचनापत्तेरेकवचनानुरोधेन समाहारद्वन्द्वो वाच्यः। तत्र च बहुव्रीहिवत् समाहारे पदद्वयस्य लक्षणापत्तेर्वरं तत्पुरुषाङ्गीकरणमेवेति वाच्यं, समाहारद्वन्द्वेऽपि पदद्वये लक्षणानङ्गीकारात्। न हि 'पाणिपादं वादय' इत्यादौ समाहारो नाम विशेष्यतया कश्चित्प्रतीयते, अन्यथा पाणिपादयोस्समाहारविशेषणत्वे वादनकर्मत्वानुपपत्तेः। अत एवैकविध एव द्वन्द्वः। तत्र च 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनेनैकवचनं वैकल्पिकम्। अत एवैकवचनान्तद्वन्द्वे 'समाहारद्वन्द्वः' इति संज्ञाकरण-

---

बाधानुपपत्तिरित्यत आह—निरूपितेति। अध्यायादौ निरूपितमेतत्। प्राचीनैरस्य सूत्रस्य पूर्वाधिकरणपूर्वपक्ष्युपन्यस्तशरदृष्टान्तवैषम्यप्रदर्शनपरत्वेन एकदा व्याख्यानं कृत्वा पक्षान्तरेण अधिकरणान्तरपरतामङ्गीकृत्य पूर्वसिद्धान्तपक्षावप्यस्मिन् वर्णके प्रदर्शितौ; तत्राधिकरणान्तरत्वेन व्याख्याने प्रयोजनाभावात् गौरवाच्च प्रत्युदाहरणमात्रकथनार्थत्वमेव युक्तमित्यभिप्रेत्याह—अतस्तत्रेति।

एवंवा

माहेन्द्रस्तोत्रोपाकरणोद्देशेन रथघोषविधाने विशिष्टोद्देशे वाक्यभेदापत्तेः किमत्र विधीयत इत्यपेक्षायामाह—तत्रेति। प्राकृतोपाकरणस्य स्तोत्रद्वारकत्वक्लृप्तावपि पृष्ठाख्यमाहेन्द्रस्तोत्रद्वारकत्व एव मानाभावात् अन्यस्तोत्रोपाकरणस्यापि माहेन्द्रोद्देशेन विधानापत्तिरित्यतः पक्षान्तरमाह—अस्तु वेति। उपावर्तध्वमिति। 'असृज्यसर्जिवागसर्ज्यैन्द्रे सहोपावर्तध्वम्' इति मन्त्राम्नानात् उपावर्तध्वमित्यन्तो मन्त्रश्च साधनमित्यर्थः। एकविध एवेति। इतरेतरयोग एव द्वन्द्वो न

मपि परिभाषामात्रमेव। अतश्च द्वन्द्वे कस्यापि लक्षणीयत्वाभावात् तत्पुरुषापेक्षया तस्य प्रबलत्वमेव। यदि परमेकवचनस्य द्वित्वादौ लक्षणोद्भाव्येत तथाऽपि तस्य जघन्यैकवचननिष्ठत्वात्पाशाधिकरणन्यायेनादोषतया तत्पुरुषापेक्षया प्रबलत्वमेव ॥

न चोभयविधाने वाक्यभेदः, द्वन्द्वेन परस्परसहितयोरेव करणत्वविधानात्। न च तथाऽपि इतरेतरयोगद्वन्द्वे परस्परसाहित्यांशे पदद्वयलक्षणाया आवश्यकत्वात् कथं तत्स्वीकारः। तत्र तस्य धवखदिरसंसर्गविधयाऽपि बोधोपपत्तौ लक्षणायां प्रमाणाभावात्। धवस्य हि स्वसहितखदिरवृत्तित्वसंसर्गेण कर्मत्वेऽन्वयः, खदिरस्यापि तत्सहितधववृत्तित्वसम्बन्धेनेति क्व लक्षणा। अतश्च रथो दर्भनिवर्तकः घोषश्च मन्त्रनिवर्तक इति सिद्धम्। एवं च घोषो नावश्यं रथस्यैवेति प्रयोजनम्।

न च द्वन्द्वेन तयोः परस्परसाहित्यावगतेररुणैकहायनीन्यायेन परस्परनियमात् कथं न घोषो रथस्यैवेति वाच्यं, यादृशोपपदद्वयसमभिव्याहारे हि आगोपालाङ्गनं तदर्थयोर्यादृशोऽन्वयोऽवगम्यते तादृशस्यैव तदर्थयोरन्यान्वयव्युत्पत्तौ पार्ष्ठिकबोधविषयत्वम्॥

अत एवारुणैकहायनीस्थले परिच्छेद्यपरिच्छेदकभाव एव पार्ष्ठिकबोधविषयः। 'अग्नये कृत्तिकाभ्यः' इत्यादौ समुच्चय एव। अत एव 'पाणिपादं पश्य' इत्यादौ सिद्धान्ते द्वन्द्वे इतरेतरयोगस्य परस्परसापेक्ष्येणैकान्वयरूपस्य शाब्दबोध एव भासमानत्वात् नैव कश्चित्पार्ष्ठिकान्वयः, नवा निरूप्यनिरूपकभावस्य बोधविषयता। अतो यस्य कस्यचिद्घोष एव मन्त्रनिवर्तक इति प्राप्ते—

---

समाहारद्वन्द्वोऽतिरिक्तः कश्चनेत्यर्थः। पूर्वपक्षेऽपि रथघोषाभ्यामुभयनिवृत्तेः सिद्धान्ते एकेन रथसम्बन्धिघोषेण तदुभयनिवृत्तेश्च समानत्वात् कथं प्रयोजनभेद इत्यत आह-**एवमिति**। **न चेति**। घोषस्य हि करणस्य कस्यासावित्यपेक्षाऽस्तीत्यन्यतराकाङ्क्षयापि नियमःस्यात्। किमुत रथस्यापि यदाऽस्त्याकाङ्क्षा; निर्व्यापारस्य तस्य स्तोत्रोपाकरणे करणत्वासम्भवात्। अतोऽरुणैकहायनीवत सिद्ध्यत्येव परस्परनियम इत्यर्थः।

यत्त्वत्र परस्परनिरपेक्षयोरेव दर्भमन्त्रयोः कार्ये रथघोषयोर्विधानात् नारुणैकहायनीन्यायादन्योन्यनियम इति **प्रकाशकारैः** समाहितं तन्नयायेन अन्योन्यनियमसिद्धौ सिद्धान्त इव उभयकार्ये अन्योन्यान्वितस्यैव विधिसम्भवेन उभयबाधकत्वोपपत्तेरयुक्तमित्यतः अन्यथा समाधत्ते— **यादृशोपपदे इति**। क्रियान्वयाविवक्षया द्वयोरुपपदार्थयोः यादृशान्वयबोधविषयत्वं सम्भवति तादृशयोः क्रियान्वयोत्तरं तादृशपार्ष्ठिकबोधविषयत्वस्यैवानुभवसिद्धत्वेन प्रकृते न पार्ष्ठिकबोधविषयत्वं द्वयोः पदार्थयोर्भवति। क्रियान्वये तदभावेऽपि वा परिच्छेद्यपरिच्छेदकभावादिरूपं विनैव

नायं द्वन्द्वः, स हि न तावदितरेतरयोगः तथात्वे द्विवचनापत्तेः। नापि समाहारद्वन्द्वः तस्य वाचकपदाभावेन पदद्वयस्यापि समाहारे लक्षणापत्तेः। न चेतरेतरयोगद्वन्द्व एव 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्यनेन वचनेनैकवचनस्य वैकल्पिकत्वमात्रविधानात् समाहारद्वन्द्वे प्रमाणाभाव इति वाच्यं, 'द्वन्द्वैकवद्भावो न पठितव्यो भवति समाहारैकत्वादेव तत्सिद्धः,' इति महाभाष्यस्यैव ज्ञापकविधया प्रमाणत्वात्।

इदं हि भाष्यं 'सर्वो द्वन्द्वः' इत्यस्य प्रत्याख्यानार्थं सत्समाहारस्य एकवचनान्तद्वन्द्वसमासेऽभिधानं गमयति। अतश्चानुशासनबलादेव समाहारस्य समुदायापरपर्यायस्य पदद्वये लक्षणा बहुव्रीहिवत्। न च तत्र क्रियान्वयानुपपत्तिः। पाणिपादं पश्य' इत्यादौ तदुपपत्तेः। 'पाणिपादं धावय' इत्यादौ तु समाहार एव सामानाधिकरण्येनान्वयः समाह्रियमाणयोर्वा पुनर्लक्षणेति ध्येयम्। अतश्च समाहारद्वन्द्वस्यात्यन्तजघन्यत्वात् वरमेकलक्षणाङ्गीकारेण तत्पुरुषाश्रयणात् रथस्यैव घोषः।

वस्तुतस्तु—यद्यपि इतरेतरयोगद्वन्द्व एवैकवचनस्य वैकल्पिकता, न तु क्वापि द्वन्द्वे समाहारस्य भानमित्याश्रीयते तथाऽपि प्रकृते न द्वन्द्वः, एकवचनस्य द्वित्वादौ लक्षणायाः द्वन्द्वपक्षेऽपि तुल्यत्वात्। न च जघन्यवृत्तित्वात्तस्या अदोषत्वं, घोषस्य निरूपकसापेक्षत्वेनापेक्षितविधानलाभाय मुख्यलक्षणापादकतत्पुरुषस्यैवाश्रयणीयत्वात्। यदा हि श्रौतार्थत्यागोऽप्यपेक्षितविधानलाभाय प्रयाजशेषादावङ्गीकृतस्तदा किमु वक्तव्यमुभयतो लक्षणासत्त्वेऽपेक्षितविधानानुग्रह इति॥

किञ्च इतरेतरयोगद्वन्द्वेऽपि साहित्यलक्षणायाः पदद्वयेऽप्यावश्यकत्वात् तत्पुरुष एव युक्तः। न च तस्य संसर्गविधया भानं, तथात्वेऽनुशासनवैयर्थ्यापत्तेः। इतरथा कर्मत्वादीनामपि तत्त्वेन बोधापत्तेः। अतश्च रथस्य घोषः उभयोर्दर्भमन्त्रयोर्निवर्तकः। न च शब्दत्वसामान्यात् मन्त्रस्यैव निवर्तकोऽस्त्विति वाच्यं, सादृश्यस्य हि नियामकापेक्षायामेव नियामकता, प्रकृते चोपाकरणसम्बन्ध्याज्ञाज्ञापनरूपकार्यजनकत्वेन विहितो रथघोषो यथैवार्थाभिधानद्वारा ज्ञापकस्य मन्त्रस्य निवर्तकस्तथैव करपल्लववत् ज्ञापकस्य दर्भस्यापि निवर्तकः ज्ञापनरूपस्य कार्यस्यौपदेशिकजनकलाभे जनकान्तरातिदेशस्यैवाकल्पनात्। अत एव 'धेनुर्दक्षिणा' इत्यादावपि न सादृश्यस्य नियामकता। तस्माद्रथस्य घोषेणोभयोर्बाधः॥ २॥

---

परस्परसापेक्ष्येणान्वयबोधविषयत्वस्य एकरूपत्वादित्यर्थः। रथस्य घोष इति, स्तोत्रं प्रति प्रैषरूपोपाकरणे उपलक्षणविधया अन्वितयोः दर्भमन्त्रयोः विशेषतः उपलक्षणतया विहितो रथस्य घोषो निवर्तक इत्यर्थः। करपल्लवीवदिति। ज्ञापकस्येत्यनेनान्वयि। अत एव धेनुरिति। यथैव नीवाराणां व्रीहिसादृश्येऽपि वचनेन व्रीहियवयोः कार्ये विधानात् तद्बाधकत्वं, यथावा

## (३)—सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥ ३ ॥ अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥

बृहस्पतिसवे **'बार्हस्पत्यं ग्रहं गृह्णाति'** इति, विषुवति **'अर्कं गृह्णाति'** इति, अश्वमेधे **'सौवर्णराजताभ्यां महिमानौ गृह्णाति'** इति श्रुतम्। तदत्र वैकृतग्रहणानां दृष्टार्थत्वात् प्राकृतैन्द्रवायवादिग्रहणबाधकत्वे प्राप्ते, पशुसोमाधिकरणव्युत्पादितकौस्तुभोक्तरीत्या सत्यपि

---

दक्षिणोद्देशेन विधीयमानायाः धेनोः सर्वद्रव्यबाधकत्वं, सादृश्यस्याकाङ्क्षाऽभावे अनियामकत्वात् वचनसङ्कोचकत्वानुपपत्तेः तथैवेहापीत्यर्थः ।

---

**सर्वत्र तु ग्रहाम्नानमधिकम्।** **बृहस्पतिसव इति।** बार्हस्पत्यशब्दो देवतापरः, देवताविशिष्टद्रव्यपरत्वात। अर्कमहिमशब्दौ तु नामधेयम्। अत्र भाष्यकारादिभिः सिद्धान्तितस्यार्थस्योपपादनं **प्रकाशकारैः** कृतम्—अदृष्टार्थानामप्येकार्थत्वे विकल्पो भवति, यथा काम्यकर्मणोरेकस्वर्गार्थत्वे, अतः एकार्थत्वमेव विकल्पबाधप्रयोजकम्, न दृष्टार्थत्वम्; ततश्च यथा आग्नेयादीनां अदृष्टस्वर्गरूपैककार्यत्वेऽपि परस्परनैरपेक्ष्याभावात् समुच्चयप्रमाणसत्त्वान्न-विकल्पः, यथा वा अरुणैकहायन्योः क्रयरूपदृष्टार्थत्वेन एककार्यकरत्वेऽपि उक्तहेतुनैव विकल्पः। एवं ग्रहणानामपि यागरूपनिष्पत्त्यर्थत्वेन दृष्टार्थत्वेऽपि बार्हस्पत्येन यजेतेत्येवंविधप्रत्यक्षविधिभिः निरपेक्षतया विनियोगाभावात् प्रकरणेनैव सर्वेषां युगपदेव ग्रहणात् समुच्चयप्रमाणसत्त्वान्न प्रकृतौ विकल्पः, न च विकृतौ बाधः। उपदेशातिदेशाभ्यां समर्पितानां युगपत् प्रयोगविधिना ग्रहणात्। ततश्च समुच्चयप्रमाणबलादेवैषां दृष्टार्थत्वेऽपि भिन्नभिन्नतद्यागाभ्याससाधनतया भिन्न-कार्यतया समुच्चय इति।

**तत्** प्राकृतानां ग्रहणानां यागनिर्वृत्त्यर्थत्वेन दृष्टार्थत्वाङ्गीकारपक्षे तस्मिन्नेव कार्ये अतिदेशप्रवृत्तेः पूर्वमेव प्रवृत्ते प्रकृतग्रहणविधिना पूर्वग्रहणानां विधाने सति कुशांशे अति-देशाकल्पनवत् प्राकृतग्रहणांशे तदकल्पनात् प्रयोगविधिना औपदेशिकयोगपद्येन आतिदेशिकानां ग्रहणासम्भवात् समुच्चये प्रमाणाभावेन बाधस्यैवापत्तेः तत्तद्भिन्नभिन्नयागाभ्यासरूपकार्यस्यैवाभावे प्राप्त्यनापत्तेः अयुक्तमित्युपेक्ष्य अदृष्टार्थत्वेनैव सिद्धान्तमारचयति—**पशुसोमेति। सत्यपीति।** आधवनीयादिस्थसोमरसस्य ग्रहचमसपात्रकरणकहोमसंस्कार्यतासम्पत्त्यर्थत्वात् दृष्टार्थत्वं ग्रहणानाम्। तथा ग्रहणे देवतासंयोगस्य निर्वाप इव यक्ष्यमाणदेवतास्मरणार्थत्वेन, यागान्तरसाधनीभूतद्रव्य-

**ग्रहणानां तदीयदेवतासंयोगस्य च दृष्टार्थत्वे 'ऐन्द्रवायवं गृह्णाति' इत्यादिवाक्यवैयर्थ्य-भिया ग्रहणानामदृष्टार्थतया आरादुपकारकत्वस्यापि स्थापितत्वात्तस्य च वैकृतेन ग्रहणेनोत्पत्तौ प्रमाणाभावादुपहोमादिवदेव समुच्चयः। न च 'अर्कं गृह्णाति' इत्यादौ संज्ञयाऽभ्यासाद्वा ग्रहणान्तरत्वेऽपि 'बार्हस्पत्यं गृह्णाति' इत्यादौ 'आग्नेया ग्रहा भवन्ति' इतिवत् प्राकृतग्रहणानुवादेन देवतामात्रविधिसम्भवात् न ग्रहणान्तरविधिसम्भवः। तद्धितोपात्तद्रव्यस्य द्वितीयया कर्मत्वावगमेन देवताविधौ ग्रहणस्य कर्मत्वानुपपत्तेः।** तद्धितोपात्तद्रव्योद्देशेनैव देवताविधौ ग्रहणाश्रितत्वे प्रमाणाभावः। **'एकां गाम्' इत्यादौ दक्षिणादानं प्रकृत्यैवाम्नानात् दानाश्रितत्वलाभ** इत्युक्तो विशेषः। **द्रव्योद्देशेन देवताविधा-**

---

व्यावृत्तिफलतदभ्याससाधनीभूतद्रव्योपलक्षणार्थत्वेन वा दृष्टार्थत्वं कौस्तुभे उक्तम्; तस्मिन् सत्यपीत्यर्थः।

**यत्त्वत्र सोमनाथीये** आग्नेययागाङ्गत्वेन प्रमिताया देवताया निर्वापे दृष्टविधया सम्बन्ध-सम्भवेऽपीह यागाङ्गत्वेनानवगमात् न दृष्टविधया ग्रहणेऽन्वयः सम्भवतीत्युक्तम्। **तत्** कौस्तुभ एव तदधिकरणे आशङ्काव्याजेनानूद्य दूषितम्। तत्रैव द्रष्टव्यम्। एतेन विनापि ग्रहणेन यागनिष्पत्तेः ग्रहणानां तथा देवतोद्देशस्य ग्रहणेऽनुपयोगाददृष्टार्थत्वमिति **पार्थसारथ्यु-क्तमपास्तम्।** एवं दृष्टार्थत्वे सत्यपि यद्भाष्यकारेणादृष्टार्थत्वमुक्तं तदभिप्रायं दर्शयति—**ऐन्द्रवायवमिति।** यथा च ऐन्द्रवायवादिग्रहणविधिवैयर्थ्यपरिहारार्थं ग्रहणानामदृष्टार्थतया विधानं तथा तत्रैव कौस्तुभे उपपादितं द्रष्टव्यम्। **एतेन** ग्रहणानामदृष्टार्थत्वपक्षः **शास्त्रदीपिकायामुक्तः** प्रौढिवादाभिप्रायेणेति **प्रकाशकारोक्तमपास्तं** वेदितव्यम्। **अतोऽदृष्ट-भेदादेव नैककार्यार्थत्वं, न तु दृष्टार्थत्वेन** भिन्नकार्यत्वं सिद्ध्यतीत्यर्थः।

**अत्र** प्राचीनैः बार्हस्पत्यवाक्ये प्राकृतग्रहणानुवादेन बृहस्पतिदेवताविधानमाशङ्क्य चोदकप्राप्तानां बहुत्वात् बहुवचनस्यैवापत्तौ एकवचनानुपपत्तेः विशिष्टग्रहणान्तरविधिरेव युक्त इति परिहृतम्। तत् अनेकग्रहाणामुद्देश्यत्वेऽपि 'ग्रहं संमार्ष्टि' इतिवत् एकवचनोपपत्तेः विशिष्टविधिगौरवापेक्षया एकवचनस्य जात्याख्यामादाय बहुष्वपि सम्भवादयुक्तमित्यतः तदनुप-पत्तेः मुख्ययुक्तित्वमुपेक्ष्यान्यथा समाधत्ते—**तद्धितोपात्तेति।** देवताविधौ दध्ना जुहोतीत्यत्रेव धात्वर्थस्य कर्मत्वेनान्वयो भवेत्। स चानुपपन्नः। द्रव्यपरकर्मत्ववाचकद्वितीयया तस्यैव कर्मत्वेनान्वयस्य प्रतीत्या तद्बाधापत्तेरित्यर्थः। **इत्युक्तो विशेष इति।** यद्यप्यतिदेशतः प्राप्तं ग्रहणमाश्रय इति शक्यते वक्तुं तथापि तस्येवान्यस्यापि प्राप्तेर्नित्यवदनुवादानुपपत्तिरित्यर्थः।

**वैकप्रसरताभङ्गापत्तेश्च।** अतोऽवश्यं **द्रव्योद्देशेन देवताविशिष्टं ग्रहणमेव 'ऐन्द्रवायवं गृह्णाति' इतिवद्विधीयते ॥**

**तच्च न प्राकृतमेव ग्रहणं तथात्वे प्राप्तग्रहणोत्पत्त्यनुवादेन देवताविधिः द्रव्योद्देशेन तद्विनियोगविधिश्चेति वाक्यभेदात्।** अतोऽत्रापि **गुणाद्ग्रहणान्तरमेवेति अदृष्टार्थत्वात् न तेन प्राकृतग्रहणबाधः ॥**

**वस्तुतस्तु 'बृहस्पते जुषस्व नः' इत्यादिग्रहणमन्त्राम्नानादेव मान्त्रवर्णिकदेवताकल्पनया प्राकृतमन्त्रतद्देवतयोर्बाधोपपत्तेरेतद्विधिवैयर्थ्यापत्तेरेव ग्रहणान्तरत्वम्। 'आग्नेया ग्रहाः' इत्यत्र तु** ग्रहोद्देशेनैव **देवताविधानान्न ग्रहणान्तरत्वशङ्का। अत एव ग्रहणानां बहुत्वात् तत्र बहुवचनं प्रकृते चैकवचनं स्वारसिकतया सङ्गच्छते। अत एव तत्र प्राकृतदेवताबाध एव। प्रकृते तु ग्रहणान्तरत्वात् न कस्य चिद्बाधः।** उपपादकीभूत**प्रकृतयागाभ्यासस्तु प्रकृतिवन्नैव विरुध्यते ॥ ३ ॥**

---

**अतोऽवश्यमिति।** न च द्रव्योद्देशेन देवताविशिष्टग्रहणविधावपि एकप्रसरताभङ्गतादवस्थ्यम्; द्रव्ये उद्देश्यताया विशिष्टग्रहणनिरूपितत्वेन देवतानिरूपितत्वाभावात्। एकस्मिन् पदे उद्देश्यविधेयताकृतवैरूप्याभावेन एतादृशविषये तद्दोषाभावस्य पशुसोमाधिकरणे कौस्तुभ एवोपपादितत्वात्। अत एव "सृष्टीरुपदधाति" इत्यत्र इष्टकासंस्कारार्थत्वेन मन्त्रविशिष्टोपधानविधिः सर्वैरिष्यते। न च तद्धितोपात्तदेवतात्वस्य द्रव्य एव वैशिष्ट्यप्रतीतेः न ग्रहणभावनाविशेषणत्वमिति वाच्यम्। यत्र कारकतासम्बन्धेन वृत्तिः तत्र कारकस्य देवतात्वादेः शतशो भावनान्वयस्यैव उपपादितत्वात्। **अत्रापीति।** यथा ऐन्द्रवायवादिवाक्येषु ग्रहणानां गुणाद्भेदः साधितः तथा अत्रापीत्यर्थः। **ग्रहोद्देशेनैवेति।** एवकारेण द्रव्यवाचकपदाभावात् तदुद्देश्यताव्यावृत्तिरुक्ता।

ननु ग्रहणान्तरत्वे प्रकृत्यपेक्षया अधिकाभ्यासापत्तिमिष्टापत्त्या परिहरति—**उपपादकीभूतेति।** एतदनन्तरमधिकरणद्वयं स्पष्टार्थम्। तत्र 'यदाग्नेयम्' इति वाक्योत्तरपठितानां 'एन्द्राग्नेनोक्थ्यं' 'ऐन्द्रेण षोडशिनं, सारस्वत्याऽतिरात्रं, मारुत्या बृहत्स्तोत्रम्, एतावन्तो वै यज्ञक्रतवः" इति तैत्तिरीयवाक्यानां इत्यादीत्यादिपदेन सङ्ग्रहः। आदधीतेत्यस्याग्रे 'यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते' इति भाष्यकारधृतमेव वाक्यं मध्ये जुहोतीत्येवं अर्थतः पठितम्।

---

## (४)—प्राजापत्येषु चाम्नानात् ॥ ६ ॥

वाजपेये 'सप्तदश प्राजापत्यान् पशून्' इति श्रुताः यागाः पूर्ववदेव न प्राकृतानां क्रतुपशूनां सुत्याकालीनपशुयागत्वसामान्यान्निवर्तकाः सत्यपि सादृश्ये अदृष्टार्थत्वे-नैककार्यत्वानवगतेः सादृश्यस्य कार्यकल्पनोत्तरकालीनप्रतीतिकत्वाच्च। न चात्राति-देशप्राप्तपशुयागाश्रयेण पशूद्देशेन देवतामात्रविधानाशङ्का। सङ्ख्याया अपि विधाने वाक्यभेदापत्तेः कर्मान्तरावश्यकत्वात्। अतोऽत्र समुच्चय एव। अत एव वाजपेये 'यदाग्नेयं पशुमालभते तेनाग्निष्टोममवरुन्धे' इत्यादिक्रतुपशुज्ञापकं लिङ्गमप्युपपद्यते ॥ ४ ॥

---

## (५)—आमने लिङ्गदर्शनात् ॥ ७ ॥

साङ्ग्रहण्येष्ट्यां 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इत्यत्रापि मन्त्रसङ्ख्योभयविधाने वाक्यभेदापत्तेः। कर्मान्तरविधानावश्यंभावे तेषामदृष्टार्थत्वान्न त्रित्ववत्त्वमात्रेणानूयाजकार्यापन्नत्वं, यागहोमयोरत्यन्तवैसादृश्याच्च। अतश्चात्रापि नानुयाजानां बाधः। 'यत्प्रयाजानुयाजानां पुरस्तादुपरिष्टाज्जुहुयादात्मानमेव सजाता-नामादधीत मध्ये जुहोति' इति लिङ्गान्तरप्रदर्शनार्थं त्वधिकरणान्तरम् ॥ ५ ॥

---

## (६)—उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥ आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥

गवामयनान्तर्गते महाव्रते 'दिक्षु दुन्दुभयो नदन्ति' इति प्रकृत्य 'पत्नय उपगायन्ति' इति श्रुतम्। अत्र पत्नय इति पत्न्य इत्यर्थे छान्दसम्। प्रकृतौ चोद्गात्रादिभिर्गाने क्रियमाणे 'ऋत्विज उपगायन्ति' इत्यनेन ऋत्विक्कर्तृकमुपचयात्मकं गानं विहितम्। तदिह

---

॥ उपगेषु शरवत् स्यात् ॥

पत्नय उपगायन्तीति। 'काण्डवीणादिभिरुपगायन्ति' इत्यस्य भाष्यधृतस्य वाक्यस्याप्यु-पलक्षणम्। च्छान्दसमिति। छान्दसत्वेऽपि 'पत्नय' इत्यस्य स्त्रिय इति प्रकाशकाराणां सामान्येन व्याख्यानं निर्युक्तिकत्वादुपेक्ष्यम्। पत्नीशब्दस्य मुख्यार्थपरत्वस्यैव सम्भवात् वेदभाष्ये यजमान-पत्नीपरतयैव व्याख्यातत्वाच्च। उपचयात्मकमिति। एकेन क्रियमाणस्य गानस्य पुष्ट्यर्थं

किं पत्न्यः प्राकृतोपगानानुवादेन विधीयमाना ऋत्विजां निवर्तिकाः उताप्राकृतोपगान-सम्बन्धित्वादनिवर्तिका इति चिन्तायां—

प्रकृतावुपगानस्य विहितत्वादिहातिदेशेन प्राप्तेस्तदनुवादेन विधीयमानाः पत्न्यो ऋत्विजां निवर्तिकाः। न च गानस्योद्देश्यत्वे तद्विशेषणस्योपचयस्याविवक्षाशङ्का। उपसर्गाणां परस्परान्वयव्युत्पत्त्या विशिष्टोद्देशोपपत्तेः॥

न च तथाऽपि 'दिक्षु दुन्दुभयो नदन्ति' इति प्रत्यक्षोपदिष्टगानस्यैवानन्तर-विपरिवर्तमानस्य पत्नीकर्तृकोपचयविध्युपपत्तेस्तादृशोपचये च 'काण्डवीणादिभिरुपगान्ति' इत्यनेन साधनविधानादप्राकृतकार्यत्वप्रतीतेर्न ऋत्विजां बाध इति वाच्यम्। गानशब्दस्य शारीर्यामेव गीतौ प्रसिद्धत्वेन दुन्दुभिनादपरामर्शकत्वानुपपत्तेः प्राप्तगानानुवादेनोप-सर्गार्थस्योपचयस्य पत्नीनां च परस्परवैशिष्ट्यासम्भवेनानेकविधाने वाक्यभेदाच्च। अतश्च प्राकृतोपगानक्रियायां कर्तृत्वेन विधीयमानाः पत्न्यो ऋत्विजां निवर्तिकाः। न च प्रकृतौ शारीरगीत्यात्मकगानस्योपचयश्शारीरगीत्यात्मक एवेति कथं तत्र काण्डवीणादि-विधानमिति वाच्यं, शारीरगीतेश्शारीर एवोपचय इत्यत्र प्रमाणाभावात्। अत एव प्रकृतौ साधनान्तरविधानाभावादुपचयस्य शारीरत्वेऽपीह काण्डवीणादिविधानाद-शारीरत्वेऽपि न क्षतिः।

अस्तु वा इहापि तस्य शारीरत्वं काण्डवीणादीनां तु साहित्यमात्रमधिकं विधीयते, तच्च योग्यताबलेन वादनद्वारैवेति काण्डवीणादिवादनं कुर्वन्तीभिर्मुखेन प्राकृतमुपगानं कार्यमिति प्राप्ते—

प्रकृतौ तावत् 'ऋत्विज उपगायन्ति' इत्यत्र नोद्गात्रादिकर्तृकसामगानानुवादेन ऋत्विक्कर्तृकोपचयमात्रं विधीयते। उपसर्गार्थे उपचये ऋत्विजां वैशिष्ट्याव्युत्पत्तेः। अत उपचयात्मकगानभावनैव ऋत्विक्कर्तृका विधीयते। उपचयश्च कस्येत्यपेक्षायां प्रकृतत्वात्सामगानस्येति सम्बध्यते। उपचयात्मके च गाने साधनान्तरस्याविधानात् तस्य च प्रकृतसामगानरूपतैवेति निश्चीयते। अतश्च ध्वनिविशेषानुकूलताल्वादि-व्यापारस्य तादृशसामगानस्य सामगानरूपमेवोपगानमित्यविवादम्। न च तत्र काण्ड-

---

अपरेण क्रियमाणं गानमुपचयात्मकं गानमित्यर्थः। काण्डवीणादिभिरिति। वादनदण्डेन वाद्य-माना काण्डमयी वीणा काण्डवीणा। आदिपदेन उपमुखं स्थापयित्वा मुखे मारुतेन वाद्यमानायाः पिच्छोलपदाभिधेयायाः सङ्ग्रहः। एतयोरेव अपघाटिलेति संज्ञा च्छन्दोगसूत्रे उक्ता। प्राकृतोपगानक्रियायामिति। दुन्दुभिनादस्य कथञ्चिद्गानत्वेऽप्युपगानत्वाभावात् उपगायतिना अनुवादासम्भवात् यदेव प्राकृतं उपगानत्वेन प्रसिद्धं तत्रैव पत्नीनां कर्तृत्वेन विधौ प्रत्याम्नानेन

**वीणादीनां निवेशस्सम्भवति, सामगानरूपत्वानुपपत्तेः। अतोऽत्र गुणादुपगानान्तरमेव काण्डवीणादिसाधनकं विधीयते। सम्भवति च तन्त्रीगानेऽपि गानशब्दप्रयोगात् काण्डवीणादिसाधनकमप्युपगानम्॥**

**तदपि न प्राकृतस्य सामगानस्योपचयः, अपि तु** प्रकृतोपदिष्टदुन्दुभिनादस्यैव। **यद्यपि च दुन्दुभेर्वाद्यरूपतया तन्नादस्य तालाभिव्यञ्जकस्य षड्जादिस्वरसमाहारात्मक-गानरूपत्वाभावात्। तथाऽप्यगानरूपस्यैव तस्य काण्डवीणागानात्मक उपचयः पुष्टि-साधनत्वान्न विरुध्यते। अत एवेदमप्राकृतमुपगानान्तरमारादुपकारकतया क्रत्वङ्गं** दुन्दुभिनादाङ्गमेव **वेत्यपि बोध्यम्॥**

**अतश्च तादृशोपदिष्टोपगानान्तरानुवादेन विधीयमानाः पत्न्यः न प्राकृतोपगाने ऋत्विङ्निवर्तिकाः। अत एवाप्राकृतोपगानान्तरविधिः काण्डवीणावाक्य एव।** तस्यैव **भेदकत्वात्। पत्नीवाक्ये तु तदनुवादेन पत्नीमात्रविधानमित्यवधेयम्॥ ६॥**

---

विधौ ऋत्विजां बाध इत्यर्थः।[1] **प्रकृतोपदिष्टेति।** भूमावर्धमन्तर्वेदि अर्धं बहिर्वेदि गर्तं शुष्कं **कृत्वा** कीलकैश्चर्मणी पिधाय निर्मितदुन्दुभिना तदीयेन पुच्छेनैकः, अपरस्तु भूमौ पिधानमकृत्वैव केवलं दुन्दुभिनादो महावेदेरर्वाक्कोणेषु। अथवा चतुर्दिक्षु प्रकृते महाव्रते उपदिष्टः तस्येत्यर्थः। **अत्र** दुन्दुभिर्मुरज इति व्याख्यातं **कपर्दिभाष्ये।** प्रकृते महाव्रते उपदिष्टः तस्येत्यर्थः। **दुन्दुभिनादाङ्गमेव वेति।** पूर्वप्रक्रान्ततया तस्यैव प्रागुपस्थितेः पुष्टिसाधनत्वाच्च तदङ्गमेव वेत्यर्थः। **तस्यैवेति।** ऋत्विक्कर्तृकसामगानरूपोपगाने कण्ठादीनामेव लोकतः करणत्वावगमेन काण्डवी-णादिः गुणोऽनिविशमानतया तत्रैव गानभेदक इति तत्रैवोपगानान्तरविधिः; इहतु पत्नीनां साक्षा-दुपगानकर्तृत्वासम्भवेऽपि परंपरया वादनद्वारा कर्तृत्वेन तत्र विधानमित्यर्थः। अत एव सिद्धान्ते दुन्दुभिवादनसमये पत्नीभिः काण्डवीणावादनमात्रं कार्यम्, नतु स्वतो गानमपि। ऋत्विग्भिस्तु यथाप्रकृति सामगानं कर्तव्यमेवेति सिद्धम्।

अत्र च ऋतपेये सगोत्रस्यैव ब्रह्मत्वविधिकल्पनवत् वीणावादनकुशलानामेव पत्नीत्व-विध्यवगमात् तादृशपत्नीकयजमानानामेव महाव्रतेऽधिकार इति ध्येयम्। तैत्तिरीयशाखायां महाव्रते "भद्रसाम पत्नय उपगायन्ति" साम्ना (न तदुक्त्वा) [इत्यत्र] तत्कर्तृकभद्रसामगानसमीप-देशमात्रविधानपरं, न तु सामगानपरमिति वेदभाष्ये स्पष्टम्।

---

1. A. अपघाटितेति

## (७)—संस्कारे चान्यसंयोगात् ॥ १० ॥ प्रयोजादिवदिति चेत् ॥ ११ ॥ नार्थान्यत्वात् ॥ १२ ॥

अञ्जनाभ्यञ्जनाख्ये सत्रे 'गौग्गुलवेन प्रातस्सवनेऽभ्यश्नुते' इति श्रुतम्। तत्र प्रकृतिप्राताभ्यञ्जनानुवादेन कालद्रव्यरूपानेकगुणविधाने वाक्यभेदादवश्यं विधातव्ये-नाभ्यञ्जनान्तरेण प्राकाशाध्वर्युदानवत् प्राकृतकार्यनिष्पत्तेः प्राकृताभ्यञ्जनस्य तदीयकाल-द्रव्ययोश्च बाध इति प्राप्ते—

यदि तावत्प्रकृतावभ्यञ्जनस्य दीक्षाङ्गत्वाद्दीक्षायाश्च फलाधानयोग्यतासम्पत्त्यनु-कूलादृष्टजनकत्वेनाभ्यञ्जनस्याप्यदृष्टार्थत्वं तदोपहोमन्यायेनैतदभ्यञ्जनस्य तत्कार्यापन्नत्वे नैव किञ्चित्प्रमाणम्। अथ त्वस्य दीक्षारूपत्वेऽपि शरीरश्लक्ष्णीकरणद्वारा कर्तृ-संस्कारकत्वस्याभ्युपगमादेककार्यत्वमुच्येत ततो नवनीतेन प्रकृतौ श्लक्ष्णीभावकरणेऽपि गौग्गुलवेन रूक्षीकरणात् न तस्य तत्कार्यापन्नत्वम् ॥

---

अत्र च ताण्ड्यब्राह्मणे पञ्चमाध्यायपञ्चमखण्डे भूमिदुन्दुभिनादं विधाय षष्ठे शिरःपक्ष-पुच्छभेदेन गानं प्रकृत्य तत्राध्वर्युमैत्रावरुणब्राह्मणाच्छंसिगृहपत्युद्गातृत्वपक्षं निन्दित्वा उद्गातॄणां निर्देशं विधाय उद्गातुः आसन्द्यारोहणानन्तरं स्वीयपरिजनसामगानकाले तदुपगानत्वेन 'तं पत्नयोऽपघाटिलाभिरुपगायन्ति आर्त्विज्यमेव तत् पत्नयः कुर्वन्ति सह स्वर्गं लोकमयामेति' (ता. ब्रा. ५-६-८) इति वचनेन एकया पत्न्या काण्डवीणया एकया पिच्छोल्या इत्येवं द्विपत्नीकोप-गानमिति तच्छब्देन प्रकरणाच्च उद्गातृकर्तृकगानाङ्गत्वमेव प्रतीयते न तु दुन्दुभिनादाङ्गत्वम्, तत्प्रकरणस्य मध्ये विच्छेदात्। एवं स्थिते दुन्दुभिनादं प्रकृत्याम्नानात् दुन्दुभिनादाङ्गत्वसिद्धान्त-करणं मीमांसाभाष्यकारवचनादेव विश्रम्भणीयम्। अत एव अधिकरणमालायां केषुचित्पुस्तकेषु नैवेदमधिकरणं लिखितम्। केषुचित्तु अधिकरणान्ते 'कल्पितमिदम्' इत्युक्तम्।

---

अनन्तराधिकरणं स्पष्टार्थम्।

तत्र, तदीयद्रव्यकालयोरिति। द्रव्यं नवनीतम्। कालश्च दीक्षणीयेष्ट्युत्तररूपः, तयोर्बाधादित्यर्थः

---

अस्तु वा तत्तथाऽपि कर्तृसंस्कारस्य तदुत्तरभाविकरिष्यमाणसर्वपदार्थोपकारकत्वात् प्रातस्सवनपूर्वभाविपदार्थेषु नवनीताभ्यञ्जने बाधकाभावाद्युक्त एव समुच्चयः॥

---

## (८)—आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारस्स्यात् ॥ १३ ॥ अधिकं वाऽन्यार्थत्वात् ॥ १४ ॥ समुच्चयं च दर्शयति ॥ १५ ॥

**स्वतन्त्रे महाव्रते 'तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी' इति श्रुतम्।** तत्र तार्प्यं **घृताक्तकम्बळ इति माधवः। अत्रापि परिधानोद्देशेन तार्प्यादिविधौ पत्न्यादिपरिधानेऽपि तदापत्तेः यजमानोद्देशेन तद्विधौ शयनादावपि तदापत्तेरवश्यं तार्प्यादिविशिष्टं परिधानमेव यजमानाद्युद्देशेन विधीयते, तच्च प्राकृतमेवातिदेशतः प्राप्तेः पूर्वं विधीयते, कर्मान्तरमेव वेत्यन्यदेतत्। तस्य च प्राकृतकार्यापन्नत्वेनैव विधानात्प्राकृतस्याहतस्य निवृत्तिः।**

**न च प्रकृतावहतस्य कौपीनपदवाच्यभगलिङ्गाच्छादने विनियुक्तत्वात्तत्र च तार्प्यादीनामयोग्यत्वात् योग्यतयैवोपरिधारण एव तन्निवेशप्रतीतेर्भिन्नकार्यत्वेन नाहतनिवृत्तिरिति वाच्यं, कौपीनाच्छादन एव परिदधातिप्रयोगेणोपरिधारणे तार्प्यादिविधाने लक्षणापत्तेः। तार्प्यादिना कौपीनाच्छादनस्यापि कर्तुं शक्यत्वाच्च॥**

**वस्तुतस्तु—अन्याच्छादनेऽपि 'परिस्तृणीत परिधत्त वेदिम्' इत्यादौ परिदधातिपदप्रयोगात् यद्यपि न कौपीनाच्छादन एव तद्विधानं, तथाऽपि प्रकृतावपि 'अहतं वासः परिधत्ते' इत्यनेन** कौपीनाच्छादन **इवाचारप्राप्तोपरिभागाच्छादनेऽप्यहतविधानाद्विकृतावपि तार्प्यादेरुभयत्रैव विधानादुभयत्रैवाहतनिवृत्तिरिति प्राप्ते—**

---

आच्छादने त्वैकार्थ्यात्।

तार्प्यमिति पवर्गीयः पकारः। यद्यप्याण्डबिलादिग्रन्थेषु तथा **सोमनाथीये** तृपावृक्षस्य विकारभूतं घृताक्तं वासः तार्प्यमिति **भट्टभास्करोक्तिलिखनात्** घृताक्तवस्त्रस्यैव तार्प्यपदेन व्यवहारो विद्यते, तथापि तार्प्यस्य पूर्वपक्षे कौपीनाच्छादनायोग्यत्वस्य भाष्यकारादिभिः प्रदर्शितत्वात् तदनुकूलतया माधवकृतमेवार्थं दर्शयति—**तत्र तार्प्यमिति। तच्चेति।** यदि प्राकृतं परिधानं तदा सिद्धान्ते वासांसीति बहुवचनानुपपत्तिः अतः प्राकृतवस्त्रद्वयपरिधानापेक्षया तृतीयत्वेनेदं परिधानं कर्मान्तरमेव युक्तमिति 'अन्यदेतत्' इत्यनास्थया सूचितम्। अत एव 'वासांसि वाराही चोपानहौ विमुञ्चति, कृष्णविषाणया वासांसि विस्रंसयति, ततोऽध्वर्युः परिधत्ते' इत्येतद्वचनाभावं कृत्वैवेयं चिन्तेति ध्येयम्। **कौपीनेति।** कुत्सितं पीनं कुपीनं कुपीनमेव

कौपीनाच्छादने गृहस्थस्य कच्छाद्यसम्भवेन ताप्यादीनामयोग्यत्वात् उपरिधारण एव ताप्यादिविधिप्रतीतेर्न कौपीनाच्छादने अहतनिवृत्तिः। अत एव न्यायेनाचारप्राप्तोपरिधारण एव प्राकृताहतनिवृत्तिप्रसक्तौ 'वासांसि विस्रंसयति' इति प्रतिपत्तिविशेषविधायके वाक्ये वासोबहुत्वानुवादलिङ्गेन समुच्चयप्रतीतेर्न तत्राप्यहतनिवृत्तिः। एवं च यद्यपि ताप्यं कौपीनाच्छादनेऽपि कथञ्चिद्योग्यं, तथाऽपि वासोबहुत्वानुवादबलेनैव तस्याहतेन समुच्चयः। दर्भमयस्य तु कथमप्ययोग्यत्वादुपरिधारण एव विधिप्रतीतेर्वासोबहुत्वानुरोधेन तत्रापि समुच्चयः।

अत एव यत्र न वासोबहुत्वानुवादः यथा—विश्वजिति 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति श्रुते तत्रैकस्या वत्सत्वचः कौपीनाच्छादनेऽयोग्यत्वात्तत्राहतस्यातिदेशप्राप्तस्यानिवृत्तावपि उपरिधारणे तन्निवृत्तिरिष्टैव। विशिष्य चेदं द्वादशे वक्ष्यते॥ ८॥

---

कौपीनमित्यवयवयोगः प्रकाशकारैः दर्शितः। वस्तुतस्तु "शालीनकौपीने अधृष्टाकार्ययोः" (पा. सू-५-२-२०) इत्यर्हार्थकतद्धिताधिकारपठितसूत्रेण कौपीनशब्दः खञ् प्रत्ययान्तो निपात एव, दर्शितश्च कूपपदस्य कूपपतने लक्षणां कृत्वा कूपपतनमर्हति कौपीनं पापं तत्साधनत्वात् तद्वत् गोप्यत्वाद्वा स्त्रीपुरुषलिङ्गमपि, तत्सम्बन्धात्तदाच्छादनमपीत्येवं योगो वैयाकरणैः। अतो मूले निरूढलक्षणाऽभिप्रायेण लिङ्गतदाच्छादने वाच्यत्वोक्तिर्द्रष्टव्या। आचारप्राप्तेति। वासोविन्यासस्य यज्ञोपवीतधारणवत् अजिनं वासो वेत्यनेन विधानेऽपि उपरिधारणस्याचारप्राप्तत्वमेव। तद्विषये विध्यन्तराश्रवणादित्यर्थः। कृत्वाचिन्ताविचारफलं दर्शयति—अत एव यत्रेति। एकाहकाण्डपठिते विश्वजिति विकृतिभूते[1] बहुवचनज्ञापकाभावात् उपरिधारणे विशेषविहितवत्सत्वचा अहतनिवृत्तिरिष्टैवेत्यर्थः। एतेनेदृग्विध्यभावे अष्टरात्रे विश्वजिति प्रथमेऽहनि "वत्सत्वचं परिधत्ते" इति नामातिदेशप्राप्ते उत्तरत्र सप्तस्वहस्सु ज्योतिष्टोमादहते भूयः साधनत्वेन अहतस्यैव कौपीनाच्छादनार्थत्वे उपरिवासः कार्यार्थं न वत्सत्वचः समुच्चयसिद्धिरित्यष्टरात्रान्तर्गतविकृतिभूतविश्वजित्पर्यन्तानुधावनेन प्रकाशकाराणां व्यतिरेकप्रदर्शनं व्यर्थमेवेति सूचितम्। पूर्वोक्तविधया प्रकृतिभूत एव तस्मिन् तदुपपत्तेः। इतरथा भवदुक्तरीत्या विकृतिभूते विश्वजिति भूयोनुग्रहाय अहतवाससः कौपीनाच्छादने कथञ्चिद्व्याप्तिसम्भवेऽपि प्रकृतिभूते तस्मिन् सर्वथा वत्सत्वचा विशेषविहितया उभयपरिधानेऽपि, अथवा एकवचनबलात् कौपीनाच्छादने एव वा अहतबाधापत्तेः। अतस्तत्रायोग्यत्वादेव ताप्यादिवन्निवेशानुपपत्तेः उपरिधारण एव

---

1. B. प्रकृतिभूते

(९)—सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥ अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारस्स्यात् ॥ १७ ॥

तत्रैव 'श्लोकेन पुरस्तात् सदसस्स्तुवीत' इत्यादिना प्राकृतस्तोत्रानुवादेन श्लोकाख्यसाममात्रविधेर्देशाख्यगुणान्तरस्यापि विधेयत्वानुपपत्तेर्वाक्यभेदापादकगुणादेव कर्मान्तरत्वप्रतीतेस्तस्य चोपहोमन्यायेनादृष्टार्थत्वात्समुच्चयः स्तोत्रान्तरैः। न च प्राकृतस्तोत्राण्येवातिदेशतः पूर्वप्रवृत्त्यङ्गीकारेण गुणद्वयविशिष्टानि विधीयन्तां, तेन प्राकृतसाम्नः प्राकृतदेशस्य च निवृत्तिरिति वाच्यं, स्तौतिधातोः पूर्वविहिताविहितसाधारणस्तोत्रमात्रवाचित्वेनातिदेशतः पूर्वं प्राकृतस्तोत्राणामेव विशिष्योपस्थापकाभावेन विधिवशात्कर्मान्तरत्वप्रतीतेः। गृहमेधीये 'आज्यभागौ यजति' इत्यत्र तु आज्यभागपदमेव पूर्वकर्मणो विशिष्योपस्थापकमिति विशेषः ॥ ९ ॥

---

(१०)—अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारस्स्यात् ॥ १७ ॥ सर्वेषामविशेषात् ॥ १८ ॥ एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥ १९ ॥

तत्तद्विकृतिविशेषे 'कौत्सं भवति, काण्वं भवति वासिष्ठस्य जनित्रे भवतः, क्रौश्चानि भवन्ति' इत्यप्राकृतानि सामानि विहितानि। तेषां चोपहोमन्यायेन सन्निधानात्क्रत्वङ्गत्वेऽ

---

निवेशे वक्तव्ये अहतनिवृत्तौ बहुत्वानुवादाभावः सम्भवत्येव साधकः। यथा च प्रकृतिभूते विश्वजित्येव अनेकवत्सत्वचां सीवनेन कौपीनाच्छादनसम्भवात् नाहतवाससा समुच्चय इति विशेषाशङ्का, तथा तन्निराकरणं विशिष्य द्वादशतृतीयपादाद्याधिकरणे वक्ष्यत इत्यर्थः।

---

सामस्त्वर्थान्तरश्रुतेः।

इत्यादिनेति। "अनुश्लोकेन पश्चात्सदसः केचन चात्वालमवेक्षमाणा" इत्यादीनामादिपदेन सङ्ग्रहः। प्राकृतदेशस्य चेति। सदोमध्यगताया औदुम्बर्याः पश्चिमो देशः प्राकृतदेशः तस्य बाध इत्यर्थः। स्तौतिधातोरिति। यद्यप्यनेन न्यायेन अश्वः श्यावो दक्षिणेत्यादावपि दक्षिणाशब्दस्य दानसामान्यपरत्वात् न विशेषतः प्राकृतदानस्यैवोपस्थितिः, येन

वगते दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्प्राकृतऋगक्षराभिव्यक्तिद्वारकत्वावगतेः प्राकृतसाम्नां निवृत्तिः। न च कौत्साद्याधारभूतयोनिऋगक्षराभिव्यक्त्यर्थत्वेनैव कण्वरथन्तरवत् कौत्सादेरङ्गत्वावगतेस्तदनुरोधेन च ऋचामप्यर्थप्रकाशनद्वारा क्रतूपकारकत्वोपपत्तेर्न प्राकृतसामबाधकत्वमिति वाच्यं; कण्वरथन्तरयोनिवत् कौत्सादियोनेः क्रतुप्रकरणे पाठाभावेन पृथगाम्नातस्य कौत्सादेः प्रकरणे विनियोगमात्रकरणेन यावत्तदाधारभूताया ऋचोऽपि तदन्यथाऽनुपपत्त्या क्रत्वङ्गत्वमाक्षिप्यते तावदतिदेशप्रमाणावगताङ्गभावानामेव ऋचां कौत्साद्याधारत्वमात्रकल्पनेन प्राकृतसामबाधोपपत्तेः॥

'अत एव उद्धपन्ति' इत्युद्धापश्रवणानुरोधेनापि तस्यावश्यकत्वाच्च। अत एव न कौत्सादीनि सर्वेषां प्राकृतसाम्नां निवर्तकानि। यदि ह्यत्र प्राकृतस्तोत्रानुवादेन तानि विधीयेरन्, ततश्शरन्यायेनोपदिष्टसाम्नैव निराकाङ्क्षत्वात् तद्विषयेऽतिदेशस्यैवाकल्पनेन भवेत्सर्वसामबाधः। इह तु अतिदेशकल्पनोत्तरमुपहोमन्यायेन कौत्सादिविधिवैयर्थ्यान्यथानुपपत्त्याऽन्यतराकाङ्क्षयैव कौत्सादिविधानात्तस्य च तावत्समसङ्ख्यप्राकृतसामबाधेनापि परिहारोपपत्तौ सर्वबाधे प्रमाणाभावः। अत एव यत्र प्राकृताङ्गानुवादेन वैकृतविधिः यथा 'आग्नेया ग्रहा भवन्ति' 'आग्नेयीषु स्तुवते' इत्यादौ तत्र प्रायशस्सर्वत्र वैकृतविधिरिष्टः॥ १०॥

---

तस्यैव विशिष्टवेषेण पुनर्विधानं अतिदेशतः पूर्वमाश्रीयेतेति शक्यते वक्तुं तथापि तत्र इतरदानानामनाम्नानादेव परिशेषात तस्यैवोपस्थितिः इहतु वैकृतानामपूर्वाणां स्तोत्रान्तराणामनाम्नानात् न परिशेष इति न तेषामेवोपस्थितिरित्यर्थः।

---

अर्थे इत्यधिकरणं स्पष्टार्थम्। एतदनन्तरं च 'सर्वेषामविशेषात्' इति सूत्रम्। तत् पृथगधिकरणान्तरपरतया भाष्ये व्याख्यातम्। तदर्थं लाघवादत्रैवाधिकरणे सङ्गृह्णाति—अत एव नेति। तावत्समसङ्ख्येति। एकमेकस्य, द्वे द्वयोः, बहूनि बहूनामित्येवं प्रकारेण यया सङ्ख्यया विहितानि तावत्सङ्ख्यकप्राकृतसाम्नां बाध इत्यर्थः।

---

(११)—स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारस्स्यादितरस्याश्रुतित्वाच्च ॥ २० ॥

यत्र यथाप्रकृत्येव स्तोमः, यत्र वा न्यूनः यथा—'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यादौ तत्रोपदिष्टैः कौत्सादिभिः प्राकृतानां तावत्समसङ्ख्याकानां बाध इत्युक्तम्। यत्र तु प्रकृत्यपेक्षया विवृद्धस्तोमकता, यथा 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्' इत्यादौ, तत्रोपदिष्टानां राजसामादीनां न प्राकृतसामनिवर्तकता श्रुतसङ्ख्यासम्पत्तेरुपदिष्टातिदिष्टसामविशिष्टमन्त्रैरेवोपपत्तेः। अत एवागमेन सङ्ख्यापूरणमप्युपदिष्टातिदिष्टैस्समुच्चितैरपि तदपूरण इति वक्ष्यते ॥ ११ ॥

---

(१२)—पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २१ ॥ वचनानि त्वपूर्वत्वात् ॥ २२ ॥

विवृद्धौ प्रत्यक्षश्रुतानां राजसामादीनां सङ्ख्यासम्पत्त्यर्थमागम्यमानानां च प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् सङ्ख्यासम्पत्तये च सर्वस्तोत्रेषु समुच्चित्यावापे प्राप्ते 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति वचनेनाप्राप्तिबललब्धविधिशक्तिकेनेतरस्तोत्रेषु आवापपरिसङ्ख्यानात् पवमानस्तोत्रयोरेव सः। न चानेन पवमानस्तोत्रयोरेव गायत्र्यादिऋग्भिन्नऋक्ष्वेव, सामावापपरिसङ्ख्यानेऽपि स्तोत्रान्तरे तत्परिसङ्ख्यायां मानाभाव इति वाच्यं, अत्र पवमानपदानुपादानात् प्रत्युत यज्ञपदोपादानेन यज्ञसम्बन्धिगायत्र्यादिभिन्नऋक्ष्वेव सामावापपरिसङ्ख्यावगतेः स्तोत्रान्तरेऽपि तत्परिसङ्ख्यावश्यकत्वात्। अत्र हि ऋगधिकरणकत्वश्रवणादावापस्साम-

---

स्तोमविवृद्धौ

यत्र स्तोमविवृद्धिः तत्रागमेन सङ्ख्यापूरणस्य वक्ष्यमाणत्वात् आगमेन वृद्धौ पूरितायां प्रत्यक्षश्रुतानां राजसामादीनां वृद्धाववकाशाभावात् प्राकृतसामबाधेन निवेशः न तु समुच्चय इति पूर्वपक्षं प्राप्तं निरस्यति—यत्र तु प्रकृत्यपेक्षयेति।

---

पवमाने स्यातां तस्मिन्नावोपाद्वापदर्शनात्। यज्ञपदोपादानेनेति। यज्ञसम्बन्धिगायत्र्यादिष्वेवावापः न तु यज्ञसम्बन्धिगायत्र्यादिभिन्नऋक्षु इति विधिप्रतीतेः यज्ञसम्बन्धित्वेनैव ऋगन्तरं

**मात्रविषयोऽन्यस्याप्रसक्तेः।** अत एव गायत्र्यादयोऽपि **पवमानस्तोत्रसम्बन्धिन्य एव, स्तोत्रान्तरे तासामभावात्**, न तु सामिधेन्यादि**सम्बन्धिन्य इत्यपि ध्येयम्** ॥

**इयं च प्राप्तपरिसङ्ख्याऽपि श्रौती, एवकारेणान्ययोगव्यावृत्तेरुक्तत्वात्। अत एव नास्यां त्रैदोष्यमपि। न चैवकारार्थस्यान्ययोगव्यावृत्तिरूपस्येतरपदार्थेष्वन्वयानुपपत्तिः, भूतल एव घटोऽस्तीत्यादौ एवकारार्थस्यान्ययोगव्यावृत्तिरूपस्य प्रतियोगितासम्बन्धेन घटेऽन्वयाङ्गीकारात्, भूतलस्य च प्रथमतः क्रियायामन्वितस्यापि पार्ष्ठिकोऽन्यपदार्थेऽन्वय इति भूतलभिन्नाधिकरणे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगी घटः इत्यर्थबोधोपपत्तेः। भूतलपदस्य च पार्ष्ठिकस्सम्बन्धो घटपदेनापि, अन्यथा भूतल एवाकाश इत्यस्याप्यापत्तेः। अत एव भूतलवृत्तिर्घट उक्तविधाभावप्रतियोगीति वाक्यार्थः** ॥

---

व्यावर्त्यते ; न तु पवमानसम्बन्ध्येवेत्यर्थः। **अत एवेति।** यद्यप्ययं 'अत्र ह्येवावपन्ति' इति विधिः अनारभ्याधीतन्यायेन प्रकृतावेव निविशते इति प्राप्तं, तथापि 'वारणो यज्ञावचर' इत्यत्रेव यज्ञस्येत्युपादानात् प्रकृतिविकृतिसाधारणयज्ञसम्बन्ध्यावापोद्वापविषयत्वम्। ततश्च यज्ञीयावापोद्वापौ[1] **पवमानस्तोत्रे**[2] प्राप्तौ ; तथा गायत्र्यादिषु अन्यास्वप्यृक्षु प्राप्तौ गायत्र्यादिष्वेवेति परिसङ्ख्यातौ, तच्छन्दस्कर्चां स्तोत्रान्तरेऽभावेन पवमानद्वय एव सत्वात् विधेयसामर्थ्यानुरोधेन पवमानस्तोत्रद्वयविषयतयैव व्यवतिष्ठते इत्यर्थात् स्तोत्रान्तरव्यावृत्तिरित्यर्थः। यद्यपि गायत्रीच्छन्दस्कऋचां बहिष्पवमानेऽपि सत्त्वेन तत्रापि सामावापविधिप्राप्तिः सम्भाव्यमाना सामावापे गायत्र्यभ्यासापत्तेः तस्य च 'पराक् बहिष्पवमानेन स्तुवीत' इति वचनेन निषेधात् कथञ्चित् व्यावर्तयितुं शक्यापि वामदेव्यपृष्ठे निषेधवचनाभावे गायत्रीच्छन्दस्कर्चोऽभ्यासेऽपि बाधकाभावात् तत्र तद्विधिप्रवृत्तिः दुर्निवारेति न विधेयसामर्थ्यात् स्तोत्रान्तरे तद्व्यावृत्तिः कर्तुं शक्या ; तथापि वक्ष्यमाणपवमानद्वयमात्रविषयिण्या आवापसमाख्ययैव सा उपपादनीया। अथवा प्रकाशकारोक्तरीत्या अनारभ्यविहितनानाङ्गोपेतपवमानप्रकरणात्तदपूर्वसाधनास्वेव तासु तद्विधानान्नानुपपत्तिरिति ध्येयम्। **न तु सामिधेन्यादीति।** यासामृचां स्तोत्रसम्बन्धः क्लृप्तः तासामेवाधिकरणत्वमादाय चरितार्थः सामावापविधिः। तदक्लृप्तसम्बन्धानां तासां न स्तोत्राङ्गत्वकल्पकोऽपि स्वीकार्यः गौरवापत्तेरित्यर्थः। पार्थसारथिमतमुपपादयति—**इयञ्चेति।**

---

1. A. यज्ञगतावापोद्वापौ
2. A. पवमाने स्तोत्रान्तरवत्

अतश्चात्रापि गायत्र्यादिषु तद्भिन्नर्गधिकरणकाभावप्रतियोगी सामावापः कार्य इति शाब्दबोधेऽपि प्राप्ताप्राप्तविवेकेन तद्भिन्नर्क्षु सामावापाभाव एव विधीयत इति युक्तेयं श्रौती परिसङ्ख्या त्रैदोष्यरहिता च ॥

अतश्च राजसामादीनां प्रत्यक्षश्रुतानां सङ्ख्यासम्पत्त्यर्थमागम्यमानानां च साम्नामावापः पवमानविषय एवेति सिद्धम्। अत एव स्तोत्रान्तरे सङ्ख्यासम्पत्तिरभ्यासेनैव ॥

वस्तुतस्तु—नात्र प्राप्तपरिसङ्ख्या, तथात्वे 'न तौ पशौ करोति' इतिवन्न्यायप्राप्तस्यापि शास्त्रीयत्वेन तदभावबोधने विकल्पापत्तेः। एकस्मिन्नेवकारपदे उद्देश्यविधेययोर्द्वयोरप्यङ्गीकारेणैकप्रसरताभङ्गापत्तेश्च। अपि तु न्यायप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण गायत्र्यादिषु सामावापविधिरेवायं परिसङ्ख्याफलकः। अत एव एवकारार्थोऽप्यनुवाद एव ॥

न च गायत्र्यादीनामुद्देश्यत्वेऽनेकोद्देशः। अत्रेत्यस्यैकस्योद्देश्यपरत्वेन तदभावात्। सप्तम्याश्च प्राधान्यपरत्वेऽप्याधेयत्वसम्बन्धतात्पर्यग्राहकत्वान्नान्यसम्बन्धेन सामावापविधिः ॥

यद्यपि च गायत्र्यादिषु सामावापे विहितेऽपि न स्तोत्रान्तरे तदकाङ्क्षाशान्तिरिति नात्राश्वाभिधानीन्यायेन फलतः परिसङ्ख्यात्वं, तथाऽप्यावापविधेः प्रयोजनजिज्ञासायां प्रयोजनान्तरासम्भवे गमकविधयैव स्तोत्रान्तरेष्वभ्यासविधिकल्पनेन परिसङ्ख्याफलकत्वोपपत्तेः ॥

---

**एकप्रसरताभङ्गापत्तेश्चेति।** गायत्र्यादिभिन्नर्गुद्देशेन सामावापाधिकरणत्वव्यावृत्तिविधानात् एवकारार्थे उद्देश्यताविधेयत्वे इत्यर्थः। **वस्तुतस्तु** न्यायप्राप्तसामावापोद्देशेन गायत्र्यादिभिन्नर्गुद्देशेन सामावापाधिकरणत्वव्यावृत्तेरेव विधाने बाधकाभावात् एतावताप्येवकारार्थविधानोपपत्तौ नैकप्रसरताभङ्गापत्तिः; किन्तु तद्भिन्नाधिकरणत्वस्यापि न्यायप्राप्तस्य निषेधे विकल्पापत्तिरेव दूषणं युक्तमिति ध्येयम्। **सामावापविधिरेवायमिति। यद्यपि** गायत्र्यादीनामुद्देश्यत्ववत् अर्थप्राप्तत्वात् सामावापस्याप्युद्देश्यतासम्भवात् तदुद्देशेन 'अत्र' पदोपात्तानामृचां शक्यत एव विधिः, **तथापि** उभयथा तत्सम्भवे धात्वर्थस्यैव प्रत्यासन्नत्वात् युक्तं विधेयत्वमाश्रयितुमित्यभिप्रायः। **सप्तम्याश्चेति।** सामावापं प्रति ऋचामुद्देश्यत्वे सति गुणानुरोधेन प्रधानावृत्त्यसम्भवेन गायत्र्याद्यभ्यासो न सिद्ध्येत्। अतोऽधिकरणघटितमेवोद्देश्यत्वं गुणत्वेनाविरुद्धमित्यर्थः।

अत एवाविवृद्धस्तोमके क्रतौ उपदिष्टकौत्सादिनिवेशार्थं यत्र कुत्र चित्स्तोत्रे प्राकृतसामोद्वापेऽनियमेन प्राप्ते 'अत एवोद्वपन्ति' इत्यनेन गायत्र्यादिभ्य उद्वापस्य श्रुत्या फलतो वा नियमकरणात् स नियमविधिरेवेत्युक्तं कौस्तुभे ॥

तत्त्वं तु अवापविधिबलादेवोद्वापस्यार्थसिद्धत्वात् अयमनुवाद एव तत्स्तुत्यर्थः। अत एवावापविधेरपि विवृद्धस्तोमांशे परिसङ्ख्याफलकत्वं अविवृद्धस्तोमांशे नियमफलकत्वमित्यपि बोध्यम् ॥

वस्तुतस्तु—आवापविधिरयमनारभ्याधीतोऽपि न प्रकृतौ निविशते, तत्र कस्मिन्नपि स्तोत्रे आवापाभावात्। तथाहि—बहिष्पवमाने तावत् साम्नोऽभ्यास एव। ऋचां तु नवानामेव पाठ इति न तत्र कस्याप्यागमः। एवमितरयोः पवमानयोः यावत्सङ्ख्यं ऋचां साम्नां च विधानादेव नावापः। आज्यपृष्ठाग्निष्टोमस्तोत्रेषु तु साम्नां ऋचां चाभ्यासादेव स्तोमसम्पत्तिरिति न कोऽप्यावापविधेर्विषयः ॥

अत एव प्रकृतौ आज्यादिस्तोत्रेषु एकैकसामविशिष्टैकैकतृचाम्नानात् स्तोमसम्पत्त्यर्थं सामान्तराणां ऋगन्तराणां चागमे प्राप्तेऽपि नानेन वचनेन तत्परिसङ्ख्या, पवमानयोरावापप्रसक्त्यभावेन तत्रावापविधिमुखेनेतरस्तोत्रेषु तत्परिसङ्ख्यापकस्यास्य प्राकृताज्यादिविषयत्वानुपपत्तेः। अत एव प्रकृतावाज्यादिस्तोत्रेषु न्यायप्राप्तोऽप्यागमः 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चसामा, पञ्चच्छन्दा आवाप आर्भवः पवमानस्सप्तसामा' इति पवमानद्वयविधावावापपदश्रवणात् परिसङ्ख्यायते ॥

अत्र हि प्रकृतौ पवमानद्वये आवापाभावेऽप्यावापसमाख्या प्रकृतौ विकृतौ वा यत्र यत्रावापप्रसक्तिः साऽत्रैव, न स्तोत्रान्तर इत्येवंपरा सती प्रकृतावपि स्तोत्रान्तरेऽभ्यासविध्यापादनद्वारा आगमपरिसङ्ख्यार्था विज्ञायते। अतो विकृतावपि तत एव स्तोत्रान्तरे-

---

**यत्र कुत्रचिदिति।** विवृद्धस्तोमके सर्वस्तोत्रगतस्तोमविवृद्ध्यनुरोधेन समुच्चयेन प्राप्तेः आवापविधेः परिसङ्ख्याफलकत्वम्। अविवृद्धस्तोमके तु एकत्रैव एकस्य द्वयोर्वा साम्नोः निवेशार्थं प्राकृतसाम्न उद्वापप्राप्तेः, तस्याश्चानियतस्तोत्रविषयत्वात् नियमफलकत्वं तद्विषयविधेरित्यर्थः। **कौस्तुभ इति।** मन्त्राधिकरण इति शेषः। **आवापविधिबलादेवेति।** प्रत्यक्षपठितानां आगम्यमानानां च साम्नां गायत्र्यादिषु आवापे विहिते तद्वृत्तिसाम्नां पूर्वतनानामुद्वापं विना तदनिवेशेन अर्थात् तत्प्राप्तिरित्यर्थः। **अभ्यास एवेति।** बहिष्पवमाने "एकं हि स्वरसामैव भवति" इति विधिना एकस्य साम्नो विधानादभ्यास एवेत्यर्थः। **एवमितरयोरिति।** एतच्च विस्तरेण मया पञ्चमे नवमे चोपपादितत्वान्न पुनरुच्यते।

ष्वभ्यासविधिसम्भवात् न 'त्रीणिह वा' इत्यादिवचनं श्रुत्या फलतो वा तत्रावापपरिसङ्ख्यार्थम्। अपि तु विवृद्धस्तोमके क्रतौ पवमानद्वये सङ्ख्यासम्पत्त्यर्थं ऋक्सामयोरुभयोरागमे प्राप्ते गायत्र्याद्यधिकरणकसामावापविधिस्तादृशऋगभ्याससम्पादनद्वारा ऋगन्तरागमपरिसङ्ख्यार्थः। पवमानवृत्तित्रिष्टुभाद्यधिकरणत्वपरिसङ्ख्यार्थो वा ॥

एवं चाविवृद्धस्तोमके कौत्सादीनां न्यायादेव पवमानद्वय एव प्राकृतऋगधिकरणकावापसिद्धौ 'अत्र ह्येवावपन्ति' इत्ययं पवमानवृत्तित्रिष्टुभाद्यधिकरणत्वव्यावृत्तिफलको गायत्र्याद्यधिकरणनियम इति ध्येयम्। "अत एवोद्वपन्ति" इत्ययं तदंशे त्वनुवाद एव। सर्वथा राजसामादीनां पवमानयोरेव निवेश इति सिद्धम् ॥ १२ ॥

## (१३)—विधिशब्दस्य मन्त्रत्वे भावस्स्यात् तेन चोदना ॥ २३ ॥ शेषाणां चोदनकत्वात्तस्मात्सर्वत्र श्रूयते ॥ २४ ॥

सर्वत्र 'आग्नेयोऽष्टाकपालः' इत्यादौ किं विधिगत एव देवताशब्दस्त्यागादावुच्चारणीयः अथवा नायं नियम इति चिन्तायां—

न तावच्छब्दस्यैव देवतात्वं, तद्धि अर्थमनङ्गीकृत्याङ्गीकृत्य वोच्यते ? न तावदाद्यः, अग्न्यादिशब्दानामर्थपरत्वस्य लोकवेदयोः प्रसिद्धत्वात् अर्थपरत्वाभावे अग्न्यादिशब्दानां प्रातिपदिकसंज्ञाभावेन विभक्त्याद्यनापत्तेश्च ॥

---

न्यायादेवेति। पवपानद्वये आवापसमाख्यया स्तोत्रान्तरेषु आवापस्य विकृतौ परिसङ्ख्यातत्वात् पवमानद्वय एव तत्सिद्धेः अविवृद्धस्तोमकविकृतावपि पवमानद्वय एवावापस्य प्राकृतऋगधिकरणत्वसिद्धौ तत्रैकत्र निवेशे कर्तव्ये पक्षे प्राप्तस्य त्रिष्टुबधिकरणत्वस्य व्यावृत्त्या नियमः, विवृद्धस्तोमके तु विवृद्ध्यर्थं सामावापस्य उभयत्रापि प्राप्तत्वात् परिसङ्ख्येत्येवं विधिद्वयसाङ्कर्येऽप्यदोष इत्यर्थः। अन्यत् स्पष्टार्थम्।

---

### विधिशब्दस्य मन्त्रत्वे।

एतदधिकरणार्थः प्रायो नवमे शब्ददेवतात्ववादे उपपादित एवेति कचिदेव व्याख्यायते। अत्र भाष्यादिग्रन्थेषु आग्नेयादिवाक्यमुदाहृत्य निगमेषु येन केनचिच्छब्देनाभिधानं कर्तव्यम् उत विधिशब्देन अग्निशब्देन इत्येवं सन्देहप्रदर्शनावसरे प्रयुक्तं निगमपदं न 'अग्नेरहमुज्जिति-

1. तद्व्याप्तिरि

नान्यः। अर्थवाचित्वे तस्यैव देवतात्वोपपत्तौ अग्न्यादिपदे शब्दलक्षणायां प्रमाणाभावात्। न च तत्र त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वासम्भवः, द्रव्यत्यागकालीनोच्चारणकर्मत्वरूपस्य तस्य शब्दधर्मत्वादिति वाच्यं, उद्देश्यत्वस्योच्चारणघटितत्वे प्रमाणाभावेन द्रव्यत्यागकालीनज्ञानकर्मत्वरूपस्य तस्यार्थेऽप्युपपत्तेः। न च ज्ञानस्यापि शब्दोच्चारणाधीनत्वमेवेत्येवं नियमोऽस्ति। द्रव्यादिसम्बन्धिदर्शनादिनाऽपि स्मरणोपपत्तेः। अतश्शब्दोच्चारण एव प्रमाणाभावे विधिगतशब्दनियमस्य दूरापास्तत्वमेव॥

अस्तु वोद्देश्यत्वस्योच्चारणघटितत्वं, तथाऽप्युच्चार्यमाणशब्दप्रतिपाद्यत्वमेव देवतात्वमिति न तस्यार्थेऽसम्भवः। न च तथाऽप्युच्चार्यमाणशब्दविशेषापेक्षायां श्रुतत्वाद्विधिगतशब्दस्यैव नियमो भविष्यतीति वाच्यं, श्रुतशब्दस्यार्थं विधाय चरितार्थस्य शब्दनियामकत्वानुपपत्तेः। आकाङ्क्षायाः वाचकपदमात्रग्रहणेनापि शान्तेः। इतरथा द्रव्यवाचिपदस्थलेऽपि यत्र—'व्रीहीणां मेध सुमनस्यमानः' इत्यादौ विकृतौ प्रैयङ्गवादिचरावूहप्रसक्तिः तत्र विधिगतशब्दनियमापत्तेः। यद्यपि च द्रव्यस्य स्वरूपेणैव कर्मणि समवायः, देवतायास्तु शब्दद्वारेणेत्येतावानस्ति तयोर्भेदः, तथाऽपि श्रुतशब्दस्यार्थं विधाय चरितार्थस्य शब्दविशेषापेक्षायामुपस्थितत्वात्तस्यैव नियमे तुल्यत्वमेव॥

किञ्चैवं यत्र पर्यायशब्दद्वयप्रयोगः, यथा—'अग्नये पावकाय' इत्यादौ, तत्र पदद्वयप्रयोगो भवतः कथं सिद्ध्येत्। तत्र ह्यपेक्षायामेकशब्दनियमस्यैवोपपत्तौ शब्दद्वयनियमे प्रमाणाभावः। अतो न क्वापि त्यागादौ विधिगतशब्दनियम इति प्राप्ते—

न तावदुच्चारणमन्तरेणैव ज्ञानमात्रेणार्थस्य देवतात्वं, तथात्वे 'अग्नये पावकाय' इत्यादावर्थस्यैकेनापि पदेन विधानसम्भवे पदद्वयवैयर्थ्यापत्तेः। अत एव यद्यपि पुराणादिपर्यालोचनया पावकपदमग्निविशेषवाचि, तथाऽपि तेनैवाग्नित्वसमानाधिकरण-

---

मनूज्जेषं' इत्यादिमन्त्रपरं तत्राग्निशब्दस्यैव प्रत्यक्षपाठेन सन्देहासम्भवात्; अतो निगमपदं त्यागपरमिति सूचयितुमाह—त्यागादाविति। नियमे प्रमाणाभाव इति। न च अरुणैकहायनीन्यायेन समुच्चयादुभयनियमः; अरुणैकहायन्योः वाक्यार्थान्वयव्यतिरिक्तप्रयोजनाभावात्। वाक्यार्थे प्रवेशेन पार्ष्ठिकान्वये परस्परसमुच्चयबोधसम्भवेऽपि इह शब्दद्वयस्याप्यर्थप्रत्यायकतयैवोपक्षीणस्य वाक्यार्थेऽन्वयाभावात् पार्ष्ठिकान्वयानुपपत्त्या तदसम्भवात्। नचैकार्थबोधकपदद्वयस्य एकहायनीपिङ्गाक्षीपदद्वयस्येव विशेषणपरतयापि उपयोगाभावे तदन्यतरपदवैयर्थ्यपरिहारार्थं विनिगमनाविरहात् पश्चादुभयोपादानमिति वाच्यम्; एवमप्युभयोपादाने प्रयोजनाभावस्य दुष्परिहरत्वात्। य एवैकोऽर्थपरः तद्व्यतिरिक्तस्यैव शब्दस्य वैयर्थ्यात् तस्यैव स्वरूपेण ग्रहणापत्तेः, तदप्रसक्तेश्च प्राथम्यस्यैव नियामकत्वेनार्थपरत्वे जघन्य एव स्वरूपग्रहणपरत्वौ-

**विशेषधर्मोपस्थित्युपपत्तेरग्निपदवैयर्थ्यापत्तिः।** अतश्शिष्टाचारानुरोधेन च शब्दोच्चारणमावश्यकमेव। अत एव 'प्रजापतिं मनसा ध्यायेत्' इत्यादावेव तदभावो वाचनिकः॥

**नामगोत्रे समुच्चार्य सम्यक्श्रद्धान्वितो वदेत्।**
**सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे इति॥**
**न ममेति स्वस्वताया निवृत्तिमपि कीर्तयेत्।**
**दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः॥**

**इति होमादिधूतवृद्धवसिष्ठवचनाच्चायमर्थो निर्णीयते। अतश्च लाघवाद्धविस्त्यागकालीनविहितशब्दोच्चारणकर्मत्वमेव देवतात्वं, न तु निरुक्तज्ञानकर्मत्वं, न वा त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वं गौरवात्। अत्र यादृच्छिकयत्किञ्चिच्छब्दोच्चारणमादायातिप्रसङ्गवारणार्थं विहितेति। इदमेव च तद्धितार्थः। अतः प्रधानभूततदर्थानुरोधेनाग्न्यादिप्रातिपदिके शब्दलक्षणामप्यङ्गीकृत्य तस्यैव देवतात्वं विधिना विधीयते। एवं च पदद्वयस्थले उभयोरपि समुच्चयेन देवतात्वं, समुच्चयश्चैकवाक्योपादानादिना बोध्यः। अर्थस्य तु आनुषङ्गिकतया प्रतीतेरावश्यकत्वात् तादृशशब्दप्रतिपाद्यत्वरूपं भाक्तं देवतात्वमप्यर्थसिद्धमिति न तत् शास्त्रेण विधीयते॥**

**एतेन शुद्धस्यार्थस्यैव देवतात्वं, देवतात्वं च त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वम्, तच्च 'अग्नये पावकाय' इत्यादौ एकस्मिन्नेवार्थे तत्तच्छब्दघटितं देवतात्वद्वयं, तच्चैकवाक्योपादानात्समुच्चितं, तेन न तत्रैकपदोच्चारणापत्तिरित्यपास्तं, गुरुभूतदेवतात्वे तद्धितादिशक्तिकल्पनायां गौरवात्। उक्तार्थस्यान्यलभ्यत्वाच्च॥**

**एतेनैव 'शब्दविशिष्टार्थे एव प्रातिपदिकलक्षणामङ्गीकृत्य तस्यैव निरुक्तदेवतात्वेऽन्वयः' इति न्यायसुधाकृत्स्वारस्यमप्यपास्तं, तद्धितादिपदशक्यतावच्छेदके गौरवात्। अतश्शब्द एव वाक्यार्थान्वयीति नान्यशब्दप्रयोगप्रसक्तिस्त्यागकाले।** आवाहनादिमन्त्रेषु

---

चित्याच। अतो नार्थमात्रस्य देवतात्वेन विधिगतशब्दनियम इति पूर्वपक्षमुपसंहरति—**अत इति। अतः शिष्टाचारेति।** एतेनाभ्युदयशिरस्कत्वकल्पनया पदद्वयसार्थक्यं परास्तम्। वृद्धव्यवहारेण शब्दोच्चारणविशिष्टत्याग एव यजिपदस्य शक्त्यवधारणात् तदनुरोधेन शब्दद्वयदेवतात्वप्रतिपादकतया अर्थवत्त्वे सम्भवति तादृशमन्दप्रयोजनकल्पनस्यायुक्तत्वात्। **यत्तु** आवाहनादिषु चोदनावशादेव अग्न्यादिपदनियमः न तत्पाठादिति प्राचां ग्रन्थेषूक्तं तदुत्तराधिकरणे दूषणीयमभिप्रेत्याह—**आवाहनादिष्विति।** अत्र अस्याधिकरणस्य पूर्वपक्षे न किञ्चिद्बाध्यते। सिद्धान्ते तु पर्यायशब्दा निवर्तन्त इति लक्षणसङ्गतिस्तन्त्ररत्ने उक्ता। सा अयुक्ता। अतिदिष्ट-

तु पठितत्वादेव नान्यशब्दप्रयोग इति निर्विवादमेव। तत्रत्याग्निपदे परं न शब्दलक्षणा शब्दवदर्थस्यापि तत्प्रतिपाद्यत्वसम्बन्धेन यागसम्बन्धात्तस्यैव शक्त्याऽग्न्यादिपदेन स्मरणोपपत्तेः। अस्य चाधिकरणस्य लक्षणोपयोग्यग्रिमाधिकरणोपोद्घाततया लक्षण-सङ्गतिः ॥ १३ ॥

## (१४)—तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥

विकृतौ 'सौर्यं चरुम्' इत्यादिना यागे सूर्यशब्दस्यैव पूर्वाधिकरणवद्विधानेऽपि आवाहनादिमन्त्रेष्वग्न्यादिपदैस्तदर्थस्यैव प्रकाशनादिहापि तस्यैव कर्तव्यत्वात्, तत्र च प्रकृतिप्राप्ताग्निपदे निवृत्ते तत्प्रकाशकसूर्यपदोहवत् तत्पर्यायादित्यादिपदोहेऽपि बाधका-भावः। न चानेकपदप्राप्तावुपस्थितत्वात् सूर्यपदस्यैव नियम इति शङ्क्यं, तथात्वे प्रैयङ्गवे पुरोडाशे धानासु वा 'व्रीहीणां मेध' इति मन्त्रे यवप्रियङ्ग्वादिपदस्यैव नियमेनोहापत्तेः।

न च विधिवाक्ये सूर्यदेवताया भावनायामेव सप्तमनवमाद्यन्यायेनान्वयाद्यागमात्रे तस्या विधानाभावेन प्रयोगानन्वयित्वावगतेस्साङ्गप्रधाने तत्प्राप्तावावाहनादौ प्राकृततत्पाठ-स्येतराङ्गेषु तत्परिसङ्ख्यार्थत्वेऽपि प्रकृतावावाहनादिमन्त्रेषु अग्निपदनियमवत् विकृतावपि तेषु सूर्यपदनियमोपपत्तिरिति मूलोक्तं शङ्क्यम्। द्रव्यवद्देवतायास्सत्यपि प्राथमिके भावनान्वये अरुणान्यायेनोत्तरकालिकान्वयस्य यागमात्र एवाङ्गीकाराद्‌आवाहनादौ तद-प्राप्तेः। इतरथा द्रव्यस्यापि साङ्गप्रधानसम्बन्धापत्तेः, देशकालकर्तृभिन्नानां द्रव्यदेवता-दीनामुत्पत्त्यन्वयित्वस्य वक्ष्यमाणत्वाच्च ॥

---

पदार्थविषयकयोरेव बाधसमुच्चययोः अध्यायार्थत्वेन पर्यायशब्दबाधस्य अतिदिष्टविषयत्वाभावात्। अतः प्रकृतिवद्भावप्रापितविधिगतशब्दनियमस्य विकृतौ बाधाबाधौ उत्तरत्र विचार्येते। तत्सिद्ध्यर्थं विधिगतशब्दनियमः साधितः इत्येवमुपोद्घातसङ्गतिं दर्शयति—अस्य चेति। लक्षणो-पयोगीत्यनेन पूर्वरीत्या तन्त्ररत्नोक्तसङ्गतिनिरासः सूचितः। अस्तु वा पृषदाज्याधिकरण-वक्ष्यमाणरीत्या बाधमात्रस्याध्यायार्थत्वमङ्गीकृत्य तदुक्तिसङ्गतिरपि।

---

### तथोत्तरस्यां ततौ।

वक्ष्यमाणत्वाच्चेति। एकादशे इति शेषः। यत्त्वत्र अरुणैकहायनीन्यायेन याग एव द्रव्यवतयोरन्वयनियमेऽपि देवतातो वैलक्षण्यं द्रव्ये प्रकाशकारैरुपपादितम्—देवताया आवा-हनाद्यङ्गत्वेऽपि आवाहनस्य आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणया यागसाधनत्वरूपेणोद्देश्यत्वात् यागेनैवान्वयेन न पूर्वावगतयागान्वयनियमभङ्गः। द्रव्यस्य तु क्रियान्तराङ्गत्वे तस्य क्रियान्तरस्य

किञ्च साङ्गयागभावनायां गुणत्वेन देवतान्वयेऽप्यावाहनादेर्देवतासंस्कारार्थत्वान्न आग्नेयं, सौर्यमित्यादितद्धितेनावाहनादौ तद्विनियोगश्शक्यते कर्तुम्। अतः आवाहनादिमन्त्रस्य लिङ्गादेव देवतासंस्कारार्थत्वप्रतीतेर्विकृतौ चाग्निपदनिवृत्तौ जातायां सूर्यवाचियावत्पदप्राप्तौ न किञ्चिद्बाधकमिति प्राप्ते—

नावाहनादिमन्त्रेषु प्रकृतौ लिङ्गकल्प्या श्रुतिः तत्तत्प्रकृतापूर्वसम्बन्धिनीं देवतां तत्तदग्न्यादिपदैः प्रकाशयेदित्येवंविधा, येन विकृतावग्निपदस्य लोपे सूर्यप्रकाशकयावत्पदप्राप्तिर्भवेत्। न त्वेतदस्ति, अनेकश्रुतिकल्पनापत्तेः। किन्तु प्रकृतापूर्वसम्बन्धिनीं देवतां विधिगतशब्देन प्रकाशयेदित्येवं विधा एकैव। अतश्च तदर्थं विकृतावपि विधिगतशब्दप्रयोग एवावश्यक इति न सूर्यपर्यायाणां प्रयोगः। अत एव द्रव्ये नैवं विधश्रुतिकल्पनासम्भवः। तथात्वे 'व्रीहीणां मेध' इत्यादौ प्रकृतावेव यवपदप्रयोगापत्तेः। अपि तु प्रकृतापूर्वसाधनीभूतं द्रव्यं व्रीहिपदेन प्रकाशयेदित्येवंविधा। ततश्च धानादिषु व्रीहिपदे निवृत्ते यवप्रतिपादकसकलपर्यायपदप्राप्तिरविरुद्धा।

---

अर्थकर्मत्वेन तदपूर्वसाधनत्वेनैव उद्देश्यत्वात् यागान्वयाभावेन भवति पूर्वावगततदन्वयनियमभङ्ग इति तद्दूषयितुं युक्त्यन्तरमाह—किञ्चेति। नावाहनादिमन्त्रेष्विति। अत्रेदमवधेयम्। तत्तन्मन्त्रलिङ्गस्य कल्पकस्य भेदात् नवमोपपादितया अनेन मन्त्रेण शक्तिजन्यबोधद्वारा अपूर्वसम्बन्धिदेवतां संस्कुर्यादित्येवंरूपयैव श्रुत्या भिन्नतयैव मन्त्रविनियोगसम्भवे नैव अग्न्यादिपदैः न वा विधिगतशब्देन इत्येवंरूपश्रुतिकल्पने प्रमाणाभावः। इतरथा समानन्यायात् व्रीहिणां मेधेत्यत्र यवेष्वापत्ति[1] मङ्गीकृत्य विधिगतशब्देनेत्येवंरूपस्यैव लाघवात् तत्कल्पनापत्तेः। द्रव्ययोः वैकल्पिकत्वे एतादृशानिष्टापत्तिसम्भवेऽपि सोमादिपदघटितमन्त्रात् एतत्कल्पनापत्तेरपरिहाराच्च। किञ्च अनेन मन्त्रेण शक्तिजन्यबोधद्वारेत्येतावतैव तत्कल्पनोपपत्तौ तत्र विधिगतशब्दजन्यत्वस्य आर्थिकत्वेन तस्य विकृतौ अतिदेशे नैव प्रमाणम्। अत एव प्राचां रीत्या कथञ्चित् द्रव्यवाचकविधिगतशब्दनियमासम्भवेऽपि भवन्मते उपस्थितत्वेन प्रकृतिदृष्टत्वसामान्येन वा विकृतौ निगमेषु विधिगतशब्दनियमे सिद्धान्तयितव्ये इदं मन्त्रवैषम्यं दुरुपपादमेव। एवञ्च धानासु यवप्रकृतित्वस्य सामर्थ्यलभ्यत्वात् विधिवाचकशब्दनियमाभावे यवपदपर्यायप्रयोगे न बाधकम्। प्रियङ्ग्वादिषु तु तच्छब्दनियमसत्वेनैवोहनियमः। अद्यावधि शिष्टाचारोऽप्येवमेव दृश्यते। यत्तु विधिनिगमभेदादिति वक्ष्यमाणाधिकरणे अर्थोपस्थित्या तद्वाचकपदमात्रोपस्थितेः

---

1. A. यवेष्विष्टापत्ति

2. द्रव्यमन्त्र

अस्तु वा प्रकृतावेव नान्तरीयकसिद्धस्याप्यर्थस्य यागानङ्गतया तत्प्रकाशनस्यानुपयोगात् यागाङ्गभूतस्य शब्दस्यैव विनाऽपि लक्षणामावाहनादिमन्त्रगताग्न्यादिपदेनार्थस्मरणद्वारा स्मरणम्। तथा चैवं लिङ्गकल्प्या श्रुतिः विधिगतशब्देन स्वनिष्ठशक्तिप्रयोज्यशाब्दबोधोपधायकशक्त्याश्रयत्वरूपसम्बन्धप्रयोज्यस्मृतिद्वाराऽपूर्वसाधनीभूतदेवतात्वाश्रयत्वावच्छिन्नं संस्कुर्यादिति।

सम्भवति ह्युक्तविधशब्दबोधविषयस्यार्थरूपस्यैकस्य सम्बन्धिनः शाब्दबोधात्मकेन दर्शनेन तादृशबोधोपधायकशक्त्याश्रयत्वसम्बन्धेनापरसम्बन्धिनः शब्दस्य स्मरणम्। एवंचोद्देश्यतावच्छेदके लाघवमपि। ततश्च विकृतावपि पर्यायाणामप्रसक्तिरेव। न वा 'अग्नये पावकाय' इत्यादिविकृतौ शब्दद्वयस्य आवाहनादिमन्त्रेष्वप्रयोगप्रसङ्गः। अर्थस्यैवोद्देश्यतामङ्गीकृत्य प्रकाशकत्वपक्षे हि तस्यैकेनैव स्मरणसिद्धेरितरवैयर्थ्यमित्यपि शङ्क्येत ॥ १४ ॥

---

(१५)—प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥ अविकारो वाऽर्थशब्दानपायात्स्याद्द्रव्यवत् ॥ २७ ॥ तथाऽऽरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८ ॥ द्रव्येष्वारम्भगामित्वादर्थे विकारस्सामर्थ्यात् ॥ २९ ॥

---

तथा विधिगतपदस्यैव प्रयोगे विध्यन्तरकल्पनागौरवाच्चेति द्रव्यांशे विधिगतशब्दनियमाभावे युक्तिद्वयं वक्ष्यते। तच्छीघ्रोपस्थितेः प्रकृतिदृष्टत्वस्य चान्यत्र मीमांसकैःनियामकत्वं नाङ्गीक्रियेत यदि तदा युक्तमेव। न ह्येतत्सम्भवति, शतशः स्थले तयोर्नियामकत्वस्वीकारादिति ध्येयम्।

स्वनिष्ठशक्तीति। विधिगतशब्दनिष्ठा या शक्तिः तत्प्रयोज्यो योऽर्थविषयकः शाब्दबोधः तदुपधायकशक्त्याश्रयत्वमित्यर्थः। एवञ्चेति। अर्थप्रकाशनपक्षे तु अपूर्वसाधनीभूतदेवतात्वाश्रयशब्दार्थस्य उद्देश्यतावच्छेदकत्वात् तदपेक्षया लाघवमित्यर्थः। पर्यायाणामप्रसक्तिरेवेति। तेषां अपूर्वसाधनीभूतदेवतात्वाश्रयत्वावच्छिन्नत्वाभावेन संस्कार्यरूपाप्रवेशात् तदनुरोधेन तत्प्राप्तिरित्यर्थः। अर्थस्यैवोद्देश्यतामित्यस्मात्पूर्वं 'न वा' इत्यनुषङ्गः।

---

अर्थस्य देवतात्वपक्षे शब्दस्य वा देवतात्वपक्षे यत्रार्थद्वयं शब्दद्वयेनोच्यते, यथा—'अग्नये कृत्तिकाभ्यः' इत्यादौ तत्र द्वयोरेकवाक्योपादानेन समुच्चयप्रतीतेरुभयोरपि त्यागे आवाहनादिमन्त्रेषु वोच्चारणं निर्विवादमेव। यत्र तु प्राकृत्यां तत्स्थानापन्नायां वा कश्चिद्गुणश्श्रुतः 'अग्नये दात्रे, अग्नये पवमानाय' इत्यादौ तत्र किं गुणवाचकं पदमपि त्यागकाले आवाहनादिनिगमेषु च प्रयोक्तव्यं न वेति चिन्तायां—

'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यां वशामालभेत' इत्यत्र प्रकृतिप्राप्तद्रव्ये वशात्वगुणविधानेऽपि न तस्य 'छागस्य वपाया' इति मन्त्रे वशात्वगुणप्रकाशनार्थं तत्पदप्रयोगः। एवमिहापि विहितेऽप्यर्थरूपदेवतागुणे तत्प्रकाशनस्य प्रयोजनाभावात् न तद्वाचकं पदं त्यागकाले आवाहनादिमन्त्रेषु वोच्चारणीमिति प्राप्ते—

वशात्वगुणस्य स्वरूपेण क्रियान्वयवदिह देवतागुणस्य स्वरूपेण क्रियान्वयाभावात्तद्वाचकशब्दस्याप्यप्रयोगे विधिवैयर्थ्यापत्तेरर्थदेवतापक्षेऽपि तद्वाचकपदप्रयोग आवश्यक एव। शब्दस्य देवतात्वपक्षे तु सुतराम्।

यत्र तु द्वयोः पर्यायता, पुराणादिपर्यालोचनया एकस्यैव वा विशिष्टार्थवाचकत्वं, पदान्तरं तु सामान्यवाचि, यथा—'अग्नये पावकाय' इत्यादौ' पावकशब्दस्याग्निविशेषरूपाग्निसन्ततिवाचित्वस्य पुराणादौ प्रसिद्धत्वात्, तत्र पावकपदेनैव विशिष्टार्थप्रतीतिसिद्धौ अग्निपदप्रयोगो यद्यप्यर्थस्य देवतात्वपक्षे तथा नोपपादयितुं शक्यस्तथाऽपि शब्ददेवतात्वस्यैव पूर्वं साधितत्वात् तत्रापि पदद्वयप्रयोगो नायुक्तः॥ १५॥

---

## (१६)—वृधन्वान्पवमानवद्विशेषनिर्देशात् ॥ ३० ॥ मन्त्रविशेषनिर्देशान्न देवताविकारस्स्यात् ॥ ३१ ॥

पवमानेष्टिषु आज्यभागौ प्रकृत्य 'वृधन्वानाग्नेयः कार्यः, पावकवान् सौम्यः' इति

---

वृधन्वान् पवमानवद्विशेषनिर्देशात्।

यद्यपि आधानाङ्गपवमानेष्टयङ्गभूताज्यभागयोः वार्त्रघ्नमन्त्रानुष्ठानं याज्ञिकानाम्, न तु बुधपावकवन्मन्त्रानुष्ठानम्, तत्तु पुनराधेयाङ्गभूतपवमानेष्टयङ्गभूतयोरेव तयोः। तत्रापि बुधन्वतीपुरोनुवाक्या प्रथमे, द्वितीये च अग्नये पवमानायेत्यृक्। तथाप्याधानाङ्गपवमानेष्टिष्वेव भाष्यकारेण लिखनात् तदनुरुध्याह—पवमानेष्टिष्विति। विशेषणान्तरासहत्वादिति। अग्निपदस्य

श्रुतम्। तत्र नकारश्छान्दसः। वृधवानित्यर्थः। तत्र किमियं वृधवत्ता पावकवत्ता च देवताविशेषणत्वेन विधीयते ? उत मन्त्रविशेषणत्वेन वा इति चिन्तायां—

वृधशब्दोपेतमन्त्रविशेषपरत्वे वृधशब्दस्य शब्दलक्षकत्वापत्तेर्वृधरूपार्थ एव लाघवाद्विधीयते। स च यद्यपि नाग्निविशेषणत्वेन विधातुं शक्यते तद्धितार्थे वृत्तस्याग्निपदस्य विशेषणान्तरासहत्वात्। तथाऽप्याग्नेयपदोक्तयागोद्देशेनैव वृधाख्यगुणो विधीयमानोऽपरित्यक्ताग्निसम्बन्धोद्देशेन विहितत्वान्नाग्निबाधकत्वेन विधीयते, अपि तु तद्विशेषणत्वेनैव। एवं पावकवाक्येऽपि। अतश्च त्यागे आवाहनादिनिगमेषु च वृधादिगुणस्याप्युल्लेख इति प्राप्ते—

नाग्नेयादिदेवतातद्धितेन यागग्रहणं 'सूक्तहविषोः' इति स्मृत्या सूक्तहविषोरेव नियमात्। नाप्याज्यग्रहणं पुंस्त्वानुपपत्तेः। वृधादिदेवतायास्समुच्चयेन बाधेन वा विधाने आज्यभागस्याग्नेयत्वादिनिर्देशानुपपत्तेश्च। अतस्सूक्ततद्धितमङ्गीकृत्य मन्त्रमेवाग्नेयशब्देनानूद्य तदुद्देशेन वृधवत्ता विधीयते। न तु यागमुद्दिश्य। तद्धितस्य यागे 'वैश्वदेवेन यजेत' इतिवल्लक्षणापत्तेः। न च वृधादिशब्दपरस्य तवापि शब्दपरत्वे लक्षणापत्तिः, वृधादिरूपार्थस्यैव प्रतिपाद्यतासम्बन्धिन मन्त्रसम्बन्धित्वात् वृधादिरूपार्थवत्त्वस्यैव मन्त्रोद्देशेन विधानोपपत्तेः। प्रत्युत देवताविशेषणत्वपक्षे पूर्वोक्तरीत्या शब्दलक्षणापत्तिः॥

---

सविशेषणत्वात् 'विशेषणानां वृत्तिर्नेष्यते वृत्तस्य विशेषणं न' इति भाष्यकारवचनात् तद्धितोत्पत्तिरेव न स्यात्। निष्पन्ने च तद्धिते तदन्वयो न पुनर्भवतीति भावः। **वृधाख्यो गुण इति।** ततश्च बुधरूपार्थस्य आग्नेयपदेन निर्दिष्टे यागे विधाने सति क्लृप्ताग्न्यादिदेवताऽविरोधेन तद्गुणतयैव निवेशोपपत्तेः तद्विधानप्रयोजनजिज्ञासायां त्यागादिषु तद्वत्ताज्ञानाय तद्वाचिशब्दप्रयोगोऽर्थादेव सिद्ध्यतीति भावः। **बुधादिदेवताया इति।** बुधादिगुणस्य चतुर्थ्यन्तपदेनैव निर्देशनीयत्वरूपं देवतात्वं वक्तव्यम्। तदा अग्निबाधे समुच्चये वा केवलाग्नेयत्वनिर्देशानुपपत्तिरित्यर्थः। **वैश्वदेवेन यजेतेतिवदिति।** यथा सूक्तहविषोर्विहितस्य देवतातद्धितस्य वैश्वदेवपदे बाधे सति यागरूपार्थे लक्षणा। एवमिहाप्याप्याग्नेयपदे स्यादित्यर्थः। **बुधादिरूपार्थस्यैवेति।** बुधादिरूपार्थवत्त्वस्य मन्त्रे तद्वाचकपदं विनाऽनुपपत्तेः अर्थात् बुधधातुनिष्पन्नपदवन्मन्त्रविधानलाभ इत्यर्थः। **प्रत्युतेति।** बुधरूपार्थस्य यागे निवेशः तद्वाचकशब्दप्रयोगं विना यद्यप्यनुपपन्नः तत्प्रयोगमाक्षिपति, तथापि तदर्थान्यशब्दस्यापि प्रयोगवारणायावश्यिक्येव तव बुधशब्दलक्षणा। मम तु बुधरूपार्थवत्त्वस्य बुधपदेन पर्यायादिना वा अन्यमन्त्रे असम्भवात् य एव तदर्थप्रतिपादकपदघटितो मन्त्रः सन्निधिपठितः स एव भविष्यतीति न तदापत्तिरिति भावः। एतदेव आशङ्कोत्तरव्याजेन

न चैवं प्राकृतस्यैव मन्त्रस्य लक्षणादिना वृधादिरूपार्थप्रकाशकत्वापत्तेर्न वृधादिपदोपेतमन्त्रविशेषविधिरूपसिद्धान्तसिद्ध्यापत्तिः। भाष्यकारलिखनस्वारस्यात् पवमानेष्ट्यङ्गभूताज्यभागक्रमेऽनेकेषामग्निसोमदेवत्यमन्त्राणामाम्नानावगतेस्तैः प्राकृतमन्त्राणां बाधात्। अत एव वैकल्पिकानेकमन्त्रप्राप्तौ तत्तदाज्यभागाङ्गभूतमन्त्रोद्देशेन वृधादिप्रकाशकत्वविधानात् 'अग्निंस्तोमेन वर्धय' इत्यादिमन्त्रयोरेव नियमसिद्धिः। एवं च मन्त्रान्तराणामुत्कर्ष इत्यादि बोध्यम्। यदि त्वत्रानाश्वासस्तदा वृधपावकवन्मन्त्रयोरेव आज्यभागक्रमे समाम्नानेन प्राकृतमन्त्रबाधो द्रष्टव्यः॥

अत एव लिङ्गादेव तत्तन्मन्त्रयोस्तत्तदाज्यभागाङ्गत्वसिद्धेरिदं वचनद्वयमनुवाद एव पवमानेष्टिस्तुत्यर्थः। अभ्युदयशिरस्कत्वसिद्ध्यर्थं वा विधिः। न तु वृधादेर्देवतात्वविधायकं समुच्चयेन बाधेन वा, तत्र देवताविधावाग्नेयत्वादिनिर्देशानुपपत्तेः। यत्र तु तत्पदोपेतमन्त्रा दाशतयीष्वेव प्रसिद्धाः केवलं विकृतिप्रकरणे एवंविधवचनाम्नानं तत्र गमकान्तरबलेनैव प्राकृतबाधेन मन्त्रान्तरविधिः। गमकाभावे तु प्राकृतमन्त्र एव लक्षणादिना तदर्थप्रकाशनं, प्राकृतमन्त्रस्यैव प्रकाशकत्वसम्बन्धेन तदर्थवत्त्वविध्युपपत्तौ तद्वाचकपदोपेतमन्त्रान्तरविधौ गौरवादिति ध्येयम्॥ १६॥

---

सूचयति—न चैवमिति। भाष्यकारलिखनस्वारस्यादिति। "अथवा मन्त्र एवाभिसम्बध्यते बुधन्वानाग्नेय इति। अथ यदुक्तं रूपादेव मन्त्रः प्राप्नोति न विधातव्य इति; उच्यते। यः कश्चिदग्न्यभिधानो मन्त्रः प्राप्नोति तत्र विशेषार्थमिदमुच्यते बुधन्वान् कर्तव्यः अग्निं स्तोमेन बोधय" इति भाष्यकारलिखनादित्यर्थः। इत्यादिमन्त्रयोरिति। 'अग्ने पावक रोचिषा' इति मन्त्रस्य आदिपदेन सङ्ग्रहः। पवमनेष्टिस्तुत्यर्थमिति। यद्यप्यनाश्वासपक्षे मन्त्रद्वयाम्नानकल्पनमपि व्यर्थं, तथाचातिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण प्राकृतमन्त्रबाधेनैतन्मन्त्रद्वयविधानं सुकरमेव। तथापि यः कश्चिदग्न्यभिधानो मन्त्रः प्राप्नोतीति भाष्यस्वारस्यात् एतन्मन्त्रद्वयाम्नानकल्पनमावश्यकमेव। इतरथा प्राकृततत्तन्मन्त्रयोरेव प्राप्तौ यः कश्चिदित्यभिधानस्यासङ्गत्यापत्तेः। अतोऽनुवादत्वमेवयुक्तमित्याशयः। स्पष्टार्थमन्यत्।

---

## (१७)—विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदस्स्यात् ॥ यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥

यत्र प्रकृतावेव द्रव्यवाचकपदं व्रीहिपश्वादिरूपं श्रुतम्, तत्र तस्य कर्मणि द्रव्यविधायकत्वेन चरितार्थत्वात् न देवतापदवच्छब्दविधायकता। अत एव त्यागकाले चतुर्थ्यन्तदेवतापदशाब्दबोधपर्यवसानार्थं प्रत्यक्षनिर्दिष्टा सा व्यक्तिरिदंपदेनैव परामर्ष्टव्या न तु विधिगतपुरोडाशादिपदेनेत्यपि व्यक्तम्। पुरोडाशत्वावच्छिन्नस्य त्यागासम्भवात्। निगमेषु तु यत्र यः पठितः स एव तत्रेत्यपि निर्विवादमेव। यथा 'व्रीहीणां मेध', 'छागस्य वपाया मेदसः' इत्यादौ। विकृतावपि व्रीहिच्छागादिसत्त्वे स एवेत्यपि तथा। यत्र तु 'गौरनूबन्ध्या' इत्यादौ प्राकृतद्रव्यबाधेन द्रव्यान्तरविधिः तत्र छागपदलोपेन पदान्तरप्रक्षेपे प्राप्ते न तावद्गोपदमेवेति नियन्तुं शक्यं, गोपदस्य विधिस्थस्य द्रव्यविधानेन चरितार्थत्वात्। न चोपस्थितत्वाद्विधिगतस्यैव पदस्य नियमः, अर्थोपस्थित्या तद्वाचकपदमात्रोपस्थितेः, विधिगतपदस्यैव प्रयोगे विध्यन्तरकल्पनागौरवाच्च। अतश्च गोशब्दोऽन्यो वा यः कश्चित्तद्वाची प्रयोक्तव्य इति प्राप्तम्।

न च प्रकृतौ विधिगतपशुपदापेक्षया अन्यस्यैव छागशब्दस्य निगमेषु दर्शनात् विधिनिगमभेदप्रतीतेरिहापि तद्वशेन गोपदभिन्नमेव पदं प्रयोक्तव्यमिति वाच्यं, विधिनिगमभेदस्य प्रकृतावार्थिकत्वेनेहानतिदेशात्। न हि प्रकृतौ विधिगतपदभिन्नं पदं प्रयोक्तव्यमिति विवक्षा। अजादिपदप्रयोगे वैगुण्यानापत्तेः। अपि तु छागपदस्यैवेति तद्विधौ विधिनिगमभेद आर्थिकः प्रकृताविति विकृतौ तल्लोपे तस्यापि लोपः। एवं च यत्र पदविशेषप्रापकाभावस्तत्रानियम एव। यत्र तु तत्, यथा अनुबन्ध्यायामेव 'उस्रायै वपायै मेदसः' इति मन्त्रपाठस्तत्र नैव पदान्तरप्रक्षेप इति सिद्धम्।

एवं प्रकृतौ स्विष्टकृति अग्निस्स्विष्टकृद्देवता। निगमेषु च केवलस्याग्नेरेव विधानं न स्विष्टकृद्गुणस्य। पशौ च वनस्पतियागस्समाम्नातः स च स्विष्टकृद्यागविकार इति सङ्कर्षे वक्ष्यते। तत्रापि विधिनिगमभेदस्य प्रकृतावार्थिकत्वान्नेहातिदेशः। वस्तुतस्तु तत्र गुणमात्रस्य निगमेष्वप्रकाशनं विशेष्यभूतोऽग्निस्तु विधिगतशब्दप्रतिपाद्य एवेति विकृतावपि वनस्पतिर्विधिगतशब्देनैव प्रकाशनीयः ॥ १७ ॥

---

## (१८)—स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३४ ॥ संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥

तथोत्तराधिकरणं च।

अवभृथे 'अग्नीवरुणौ स्विष्टकृतौ यजति' इति श्रुतम्। तत्र किं त्यागे शुद्धयोरेवाग्नीवरुणयोर्देवतात्वं किं वा स्विष्टकृद्गुणकयोरिति चिन्तायां—

न तावदत्र यजिपदोपात्तस्विष्टकृद्यागानुवादेन देवताविधिस्सम्भवी, विधेयानेकत्वनिमित्तकवाक्यभेदापत्तेः। यजिपदेनावभृथाङ्गभूतयागमात्रोद्देशेन विधानापत्तेश्च। अवभृथस्यापूर्वत्वेन तत्र स्विष्टकृद्यागस्याप्राप्तेश्च। अतस्स्विष्टकृत्पदेन स्विष्टकृत्कार्यकारिणावग्नीवरुणावित्येवं स्विष्टकृद्देवताकार्यकारित्वं लक्षयित्वा तत्कार्योद्देशेनाग्नीवरुणयोर्विधिः अग्नीवरुणविशिष्टस्विष्टकृत्कार्यविधिर्वा। स्विष्टकृद्देवताकार्यं च स्विष्टकृद्याग एवेति तत्र वैशेषिकदेवताविधानात् तदीयप्राकृतदेवताबाधः। अतश्च यद्यपि प्रकृतौ स्विष्टकृच्छब्द अग्नौ यौगिकः, तथाऽपि शब्दस्यैव प्रकृतौ विध्यन्वयाच्छब्दद्वयकार्ये यागे देवतान्तरविधानेन प्राकृतदेवताद्वयस्यापि निवृत्तिः।

वस्तुतस्तु सुष्ठु इष्टं साङ्गं कृतवानिति भूतार्थक्विप्प्रत्ययान्तस्विष्टकृच्छब्दार्थप्रतीतेस्तस्य च भूतत्वाभावेन बाधात् स्विष्टकृच्छब्दस्याग्निपदसामानाधिकरण्येनाग्नौ रूढत्वप्रतीतेः पर्यायद्वयस्यापि समुच्चितस्यैकयागार्थत्वात् स्विष्टकृच्छब्दकार्ये विहितदेवतान्त-

---

### स्विष्टकृद्देवतान्यत्वे

प्राचीनाभिमतमुद्देश्यविधेयभावमनूद्य दूषयति-न तावदिति। अवभृथस्यापूर्वत्वेनेति। 'अप्सुमन्तावाज्यभागौ यजति' इत्याज्यभागपुनःश्रवणात् अवभृथस्यापूर्वत्वं दशमसप्तमपादे वक्ष्यत इति न स्विष्टकृतः प्राप्तिरित्यर्थः। यत्तु प्रकाशकारैः अपूर्वतापादकप्राकृताङ्गपुनःश्रवणसन्निधौ स्विष्टकृतं यजतीति वाक्यश्रवणात् तस्य प्राप्तिरित्युक्तम् तत भाष्यकारादिभिः तद्वाक्यालिखनात् अयुक्तमित्याशयः। अत एव अग्नीवरुणवाक्यस्यैव विशिष्टविधिरूपेण तद्विधायकत्वं सिद्धान्ते दर्शयिष्यते। शब्दद्वयकार्येति। प्रकृतौ हि स्विष्टकृदग्नेः कार्यं स्ववाचकशब्दोच्चारणद्वारा यागः। तत्र कार्ये विहिताभ्यामग्निवरुणाभ्यां तच्छब्दनिवृत्त्या स्ववाचकशब्दोच्चारणमन्तरा नैव तत् कर्तुं शक्यमिति प्राकृतशब्दद्वयनिवृत्तिरित्यर्थः। भूतार्थकेति। कर्मण्युपपदे भूतेऽर्थे कृञः कर्तरि क्विप्प्रत्ययान्तेत्यर्थः। भूतत्वाभावेनेति। स्विष्टकृद्यागोत्तरमपि प्रयोगस्यावशिष्टत्वात् न साङ्गप्रयोगस्य भूतत्वमित्यर्थः। एकयागार्थत्वादिति। एकस्यैवाग्नेः प्रकृतौ पर्यायद्वयेन विधानात तेन यत्समुच्चयेन कर्तव्यं तदेकस्यापि स्विष्टकृच्छब्दस्य कार्यं भवतीति शक्यत एवैकेन स्विष्टकृत्पदेन लक्षितुमुभयकार्यम्। अतो युक्त एव तत्र विहितदेवतया प्राकृतशब्दद्वयस्य बाध इत्यर्थः। विहितदेवतान्तरेणेति। एतेन यदग्नये च प्रजापतये चेत्यत्र प्रकरणप्राप्तजुहोत्यनुवादात् सायं प्रातर्मात्रोद्देशेन मन्त्रवर्णप्राप्ताग्निसूर्यसाहित्येन प्रजापतिविधिवत् प्रकरण-

रेणापि **शब्दद्वयबाधो नानुपपन्नः।** अनयैव च रीत्या **यत्र यत्र प्रकृतौ गुणविशिष्टदेवताविधिः, विकृतौ च वनस्पतियागादौ विशेष्यान्तरस्यैव देवतात्वविधिस्तत्र वैकृतदेवतया प्राकृतदेवताद्वयस्यापि बाधः। अर्थस्य देवतात्वपक्षे हि स दुरुपपादस्स्यात् विशेष्यान्तरस्य प्राकृतविशेष्यस्थान एव विहितत्वान्न शब्दस्य देवतात्वपक्षे। अतोऽत्रास्विष्टकृच्छब्दस्यैव त्यागवेलायामभिधानम्।**

**निगमेष्वप्याध्वर्यवेषु 'अनुब्रूहि' 'यज' इत्यादिषु अस्विष्टकृच्छब्दस्याभिधानम्। हौत्रेष्वपि** याज्याया आदौ, याज्यानुवाक्ययोस्तु **प्रकृतितोऽपि शुद्धाभिधानस्यैवातिदेशादुपदिष्टऋक्ष्वपि शुद्धयोरेवाग्नीवरुणयोरभिधानादस्विष्टकृच्छब्दस्याभिधानं सिद्धान्तेऽप्य-**

---

प्राप्तयज्यनुवादात् स्विष्टकृत्कार्योद्देशेन स्विष्टकृद्विधिप्राप्ताग्निसाहित्येन वरुणविधानात् नाग्निपदनिवृत्तिः, किन्तु स्विष्टकृत्पदमात्रनिवृत्तिरिति **प्रकाशकाराणां** वाक्यार्थवर्णनमपास्तम्। तथात्वे प्रकृतिप्राप्ताग्नेर्भिन्नचतुर्थ्यन्तत्वेन अग्नये प्रजापतये इति पृथक्चतुर्थीप्रयोगस्येवेहापि तथैव त्यागवेलायां प्रयोगापत्तेः। स्विष्टकृत्कार्यपृष्ठभावेन यावदतिदेशतोऽग्निः प्राप्यते ततः पूर्वमेवानेन अग्निसहितवरुणविधाने सति प्राकृताग्नेः प्राप्त्यभावादेव तत्साहित्येन वरुणविधानानुपपत्तेश्च। इतरथा स्विष्टकृत्पदस्यापि बाधानापत्तेः। अतो व्यासज्यवृत्तिदेवतात्वाश्रयभूतशब्दद्वयस्य सहितस्यैव देवतान्तरस्य विधानमिति भावः। अत्र च सिद्धान्ते स्विष्टकृद्गुणकाग्नीवरुणयोः यागोद्देशेन विधानमङ्गीकृत्य अग्नेर्विशेष्यस्यैव स्थाने विशेष्यभूतयोरग्नीवरुणयोर्निवेशे सति प्रकृतिप्राप्तस्विष्टकृद्गुणस्य प्राप्तत्वात् स्विष्टकृत्पदमनुवाद इति स्विष्टकृच्छब्दयुक्तयोरग्नीवरुणशब्दयोः यथा त्यागादिषु प्रयोगः, एवं वनस्पतियागे वनस्पतिविधिना विशेष्यांशाग्नेरेव बाधात् स्विष्टकृच्छब्दयुक्तस्य वनस्पतिशब्दस्य प्रयोगस्त्यागादिषु; अन्यथा वनस्पतिदेवताया उभयस्थाने विध्यङ्गीकारे अग्नीवरुणयोरपि तदुभयस्थानापत्त्यापत्तेः। एवं स्थिते यत् "तैत्तिरीयाणां वाजसनेयिनां च केवलवनस्पत्युल्लेखो निर्मूल" इति **प्रकाशकारैरुक्तं** तत् उक्तयुक्त्या समानन्यायादुभयत्रापि प्राकृतशब्दबाधे वैषम्याभावादयुक्तमिति सूचयन् वनस्पतावप्येतद्दृष्टान्तेन प्राकृतशब्दद्वयबाधं इष्टापत्त्या दर्शयति—**अनयैव च रीत्येति**। यथा चैवं सति वनस्पतिविलक्षणत्वेनेह सिद्धान्ते स्विष्टकृच्छब्दस्यापि प्रयोगः स स्विष्टकृच्छब्दस्य विधानबलादेवेति सिद्धान्ते स्फुटीकरिष्यते। **याज्याया आदाविति**। याज्यापाठात्पूर्वं "येयजामहे अग्निं स्विष्टकृतम्" इति यत्पठ्यते तत्स्थाने "येयजामहे अग्नीवरुणौ" इत्येव पाठ इत्यर्थः। **याज्यानुवाक्ययोस्त्विति**। प्रकृतौ

**विशिष्टमेव। आवाहनसूक्तवाकयोस्तु खण्डेष्टित्वादेवाभावः।** उत्तमप्रयाजे तु **प्रकृतावेव स्विष्टकृद्यागदेवताया अप्रकाशनादिहाप्यप्रकाशनं निर्विवादमेवेति प्राप्ते—**

**स्विष्टकृत्पदे** स्विष्टकृत्कार्यकारित्वलक्षणायां **प्रमाणाभावात् देवताद्वयविशिष्टयागविधिरेवायम्।** स्विष्टकृत्पदं च **रूढत्वेऽपि प्रकृताविव देवताविशेषणम्।** वस्तुतस्तु **भूतकालत्वासम्भवेऽपि वर्तमानक्रिये देवदत्ते यागकृदिति प्रयोगदर्शनाद्यौगिकमेव।**

**यागश्चायमतिदेशाभावेऽप्याज्यभागन्यायेन प्राकृत एव,** स्विष्टकृद्यागान्तरं वा **स्विष्टकृद्देवताकत्वात् तत्कार्यापन्नं** अप्राकृतकार्यमेव **वा प्राकृत**स्विष्टकृद्विकाररूपं **वनस्पतिवत्।** सर्वथा **सगुणयोरग्नीवरुणयोस्तत्र देवतात्वात् त्यागकाले त्वदुक्तनिगमेषु च स्विष्टकृच्छब्दकयोरग्नीवरुणयोरभिधानम्॥ १८॥**

---

'पिप्रीहि देवान्' इति पुरोनुवाक्या 'अग्ने यदद्य' इति याज्या। तयोःस्थाने अत्र 'त्वं नो अग्ने वरुणस्य विद्वान्' इति पुरोनुवाक्या। 'स त्वं नो अग्ने' इति याज्या क्रमेण विहिता, तथाभूतासूपदिष्टऋक्ष्वित्यर्थः। 'अपबर्हिषः प्रयाजान् यजति' इति विध्यन्तरात् प्रयाजप्राप्तिमभिप्रेत्याह—**उत्तमप्रयाजे त्विति।** "स्वाहाग्निम्" इत्युत्तमप्रयाजयाज्यायामित्यर्थः। **स्विष्टकृत्पदं चेति।** यथैव रूढमेव स्विष्टकृत्पदं अग्निपदसामानाधिकरण्यादग्निपरम्, एवमग्नीवरुणपदसामानाधिकरण्याविशेषात् तत्परमपि भवितुमर्हमित्यर्थः। अवयवशक्त्यैवोपपत्तावतिरिक्तसमुदायशक्तिकल्पनं अन्याय्यमित्यभिप्रेत्य पक्षान्तरमाह—**वस्तुतस्त्विति।** स्विष्टकरणयोग्यतया, अथवा सृष्टेरनादित्वात् प्रयोगान्तरापेक्षयापि भूतकालसम्भवो[1]ऽपिना सूचितः। एवं सत्यपि वर्तमानेऽपि क्विपो विधानात् नात्र बाधकमित्यर्थः। गृहमेधीयाज्यभागविधिवाक्ये प्रत्यभिज्ञापकाज्यभागपदसत्वेऽपि इह तदभावे तस्यैव प्रत्यभिज्ञाने प्रमाणाभावमभिप्रेत्य पक्षान्तरमाह--**यागान्तरं वेति।** स्विष्टकृद्देवताकत्वेऽपि तद्गुणकयोरन्ययोरेव देवतात्वात् प्राकृततदीयकार्योपस्थापकाभावेन पक्षान्तरमाह—**अप्राकृतेति। स्विष्टकृद्विकाररूपमिति।** प्राकृतस्विष्टकृद्देशानुष्ठीयमानत्वरूपसादृश्यस्य वनस्पतियाग इव इह सत्वेऽपि स्विष्टकृद्गुणकदेवताकत्वं वनस्पतियागापेक्षया अधिकं सादृश्यमप्यस्तीति तद्विकाररूपमित्यर्थः। एवं स्विष्टकृद्गुणकत्वविधानबलेनैव साधितं सगुणयोर्देवतात्वं सिद्धान्तरूपेणोपसंहरति—**सर्वथेति।**

---

1. A. adds पक्षो

## (१९)—सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३६ ॥ सर्वस्य वैककर्म्यात् ॥ ३७ ॥

**दैक्षे पशुपुरोडाशावान्तरप्रकरणे 'अग्निं यजति' इति श्रुतम्। तत्र भेदकप्रमाणाभावे यागानुवादेन देवतामात्रविधावावश्यके न तावत्प्राकृततदङ्गयागमात्रोद्देशेन विधानम्। आग्नेयाज्यभागे तस्याः प्राप्तत्वात्, सौम्ये तस्या विधौ अपूर्वविधित्वापत्तेः, तद्वरं गुणमात्रपरिसङ्ख्याफलकप्राप्स्यमानाग्निविधिरेव स्विष्टकृद्यागे लाघवादवसीयते।**

**सोऽपि च देवताया द्रव्यवदुत्पत्त्यन्वयित्वात् यद्यपि याग एव न तु निगमेष्वपि, तेषु तस्य संस्कार्यतया गुणत्वेन विध्ययोगात्। तथाऽपि याग एव विहितायास्तस्याः प्राकृतकार्यापन्नतया विकृतावपि स्मर्तव्यत्वात् निर्गुणस्यैवाग्नेरभिधानम्। यद्यपि च प्रकृतावावाहनादिनिगमेषु निर्गुणस्यैवाग्नेरभिधानं, तथाऽप्याध्वर्यवेषु हौत्रेष्वपि च याज्याया आदौ सगुणस्यैवाभिधानात्। इह तु तत्रापि निर्गुणस्यैवाभिधानम्। सिद्ध एव चायमर्थश्शिष्यहितार्थमुक्त इति वेदितव्यम् ॥ १९ ॥**

---

## (२०)—स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ॥

**दर्शपूर्णमासयोरनूयाजेषु तृतीयोऽनूयाजोऽग्निस्स्विष्टकृद्देवत्यः; स किं शेषप्रतिपत्त्यर्थस्यावापिकस्विष्टकृद्यागस्य देवतासंस्कारार्थः उतानूयाजान्तरवदारादुपकारक इति**

---

### सगुणस्य गुणलोपे।

**भेदकप्रमाणाभावेनेति।** पूर्ववत् गुणद्वयविधानकृतवाक्यभेदाप्रसक्तेः विधेश्चान्यपरत्वात् भेदकप्रमाणाभाव इत्यर्थः। **तद्वरमिति।** अत एवाग्नीवरुणवाक्ये सर्वथा न परिसङ्ख्याफलकत्वसम्भवः। तत्र नैव यागानुवादेन देवताविधिपक्षोऽङ्गीकृतः। प्राचां मते साङ्गप्रयोगे देवतावाचकविधिगतशब्दस्य विधानात् निगमेष्वपि तथैव प्रयोगः सिध्येदपि। स्वमते तु केवलयाग एव तद्विधानात् कथं निगमेषु तस्यैवाभिधानमिति सिद्धान्तसिद्धिरिति गूढाशङ्कां परिहरति—**सोऽपि चेति।**

---

### स्विष्टकृदावापिकोऽनूयाजे स्यात्।

**आवापिकेति।** आज्यभागस्विष्टकृतावन्तरा आगन्तूनां प्रधानानां आवापस्थानं तत्र

**चिन्तायां**–उभयोः प्रकरणेन **दर्शाङ्गत्वावगमात् न परस्पराङ्गत्वे प्रमाणमस्तीति आराादुपकारक एवेति प्राप्ते—**

**दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात् तदीयदेवतासंस्कारार्थत्वमेव। न च विनिगमनाविरहः, प्रक्षेपस्य वाक्यादेव शेषप्रतिपत्त्यर्थत्वेन कृतार्थत्वात् त्यागांशस्यापि प्रधानप्रयुक्तद्रव्योपजीवित्वेन प्रधानाङ्गत्वस्य प्रकरणं विनैवावगमसम्भवाच्च।**

**यत्तु शास्त्रदीपिकायां तस्येष्टदेवताप्रकाशनेन कृतार्थत्वमुक्तं तत् मन्त्रस्येष्टदेवताप्रकाशकत्वेऽपि यागे** अपूर्वाया **एवाग्निस्स्विष्टकृद्देवताया विधानादुद्देशांशस्येष्टदेवतास्मरणार्थत्वाभावादुपेक्षितम्।**

**न चैवमप्युत्तमानुयाजे** मान्त्रवर्णिकस्य **देवस्यापि देवतात्वप्रतीतेस्तस्य चावापिकस्विष्टकृति देवतात्वाभावात् कथं तदीयदेवतासंस्कारार्थत्वमिति वाच्यं, भाष्यकारलिखिताग्निं स्विष्टकृतं यजतीति वचनेन 'विष्णुं यजति' इतिवद्देवताविधानेन मान्त्रवर्णिकस्य देवस्य देवतात्वाकल्पनात्।**

याज्ञिकाचारस्तु **एतद्वचनादर्शनमूलकः।** उक्तं **ह्येतत् देवताप्रमाणेषु न द्वितीयाया मन्त्रवर्णापेक्षया दौर्बल्यं कौस्तुभे। तस्मादुत्तमानुयाजस्यावापिकस्विष्टकृद्देवतासंस्कारार्थत्वात्** यत्रैककपालमात्रहविष्केष्टौ **आवापिकस्विष्टकृल्लोपस्तत्रोत्तमानूयाजस्यापि**

---

भवः आवापिक इत्यर्थः। **उभयोः प्रकरणेनेति।** एतेन पशुपुरोडाशापेक्षया वैलक्षण्यसूचनद्वारा विशेषाशङ्का दर्शिता। वाचनिकाङ्गसन्दंशरूपावान्तरप्रकरणादग्नीषोमीयपश्वङ्गत्वे दृष्टद्वारैव तद्युक्तं कल्पयितुम्। इह तूभयोरप्यन्याङ्गत्वात् परस्पराङ्गत्वस्यैवाभावे दूरापेतं दृष्टार्थत्वेनैकतराङ्गत्वमित्यर्थः। **अपूर्वाया एवेति।** अग्नये स्विष्टकृते समवद्यतीति वाक्येनेति शेषः। यथा च मन्त्रसम्बन्धिदेवतोद्देश एव यागशरीरान्तर्गत इति प्राचामभिमतं तथा तद्दूषितं[1] चतुर्थे तत्रैव द्रष्टव्यम्। अत एवोद्देशांशेन प्रधानदेवतासंस्कारार्थत्वं आवापिकस्विष्टकृत उक्तं भाष्यकारेण तदप्यपास्तम्; तथात्वे विकृतिषु यथादेवतमूहापत्तेः। **मान्त्रवर्णिकेति।** 'देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः' इत्यादिमान्त्रवर्णिकस्येत्यर्थः। **याज्ञिकाचारस्त्विति।** याज्ञिका यत् देवो अग्निः स्विष्टकृत् देवता अनूयाजे इति वदन्ति तत् एतद्वचनादर्शनमूलमित्यर्थः। **उक्तमिति।** पौर्णमासीवदुपांशुयाजः स्यादित्यधिकरण इति शेषः। **यत्रैककपालमात्रेति।** मात्रचा वैश्वदेविककपालेऽन्ययागानुरोधेन स्विष्टकृतोऽनुष्ठानालोपाभावः सूचितः।

---

1. A. तद्दर्शितं

लोपः। यत्र वा पित्र्यादौ अग्निः कव्यवाहनः स्विष्टकृद्देवता आवापिकस्विष्टकृति तत्रोत्त-मानूयाजेऽपि 'देवो अग्निः कव्यवाहनः स्विष्टकृत्सुद्रविणा मन्द्रः कविः' इत्यादि मन्त्रे ऊहः त्यागे च तद्देवतोल्लेखः। याज्ञिकास्तु एवं न कुर्वन्ति तत्र मूलं चिन्त्यम्॥ २० ॥

---

## (२१)—अन्वाहेति च शस्त्रवत्कर्म स्याच्चोदनान्तरात् ॥ ३९ ॥ संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ४० ॥ स्याद्गुणार्थत्वात् ॥

याज्यानुवाक्ययोर्लिङ्गात् देवताप्रकाशनार्थत्वसम्भवेऽपि 'तिष्ठन् याज्यामान्वाहा-सीनः पुरोनुवाक्याम्' इत्यादिवचनानर्थक्यप्रसङ्गात् स्तोत्रशस्त्राणामिवानुवचनस्या-दृष्टार्थत्वम्। न ह्यनुवचनानुवादेनात्र गुणविधिस्सम्भवति, अतिप्रसङ्गसाङ्कर्यापत्तेः। याज्यानुवाक्ययोर्विशेषणत्वे विशिष्टोद्देशापत्तेश्च। याज्याद्युद्देशेनैव तद्विधौ याज्यादि-कर्मकाध्वर्यवप्रैषेऽपि तदापत्तेः। 'अन्वाह' इत्यनुवादानुपपत्तेश्च। दृष्टार्थत्वे द्वयो-र्विकल्पापत्तेः 'आसीनः पुरोनुवाक्याम्' इत्यत्र याज्यापुरोवृत्तित्वस्यापि विधौ वाक्यभेदापत्तेश्च। अतो गुणविशिष्टानुवचनस्यादृष्टार्थत्वात् न देवतान्यत्वे विकृतौ प्राकृतयाज्यानुवाक्ययोर्बाधः। अपि तु वैकृतयाज्यानुवाक्यापाठसत्त्वे तेन समुच्चय एवेति प्राप्ते—

यद्यपि लिङ्गकल्प्यविधिप्रवृत्तेः पूर्वमेतद्विधिप्रवृत्तिमङ्गीकृत्य विशिष्टानुवचनविधि-स्स्यात्। तथाऽपि दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वाद्देवतास्मरणार्थत्वमेवानुवचनस्य भवेत् न त्वदृष्टार्थत्वम्।

वस्तुतस्तु याज्योद्देशेनात्र गुणमात्रविधानमेव। न च याज्याकर्मकप्रैषे तदापत्तिः, 'होतारं प्रेष्यति' इति होतुरेव प्रैषे कर्मत्वेन याज्यायास्तत्कर्मत्वाभावात्। अतोऽनुवचनस्य नित्यप्राततया याज्योद्देशेनैव गुणमात्रविधिः। 'पुरोनुवाक्यामनूच्य याज्यया यजति' इति वाक्यान्तरेणैव समुच्चयप्रतीतेर्नासीनवाक्ये पुरः पदार्थविध्याशङ्का। अतो दृष्टार्थ-त्वाद्युक्त एव विकृतौ बाधः॥

---

उत्तराधिकरणं स्पष्टार्थम्।

तत्र-अतिप्रसङ्गसाङ्कर्यापत्तेरिति। अनुवचनमात्रस्योद्देश्यत्वे यथा सामिधेन्यनुवचने तदापत्तिः दोषः तथा याज्यापुरोनुवाक्ययोरनुवचने धर्मसाङ्कर्यापत्तिरपि दोष इत्यर्थः।

## (२२)—मनोतायां तु वचनादविकारस्स्यात् ॥ ४२ ॥

अग्नीषोमदेवत्ये पशौ मनोतामन्त्रस्समाम्नातः केवलाग्निप्रकाशकः। स किं विकृतौ ऊहितव्यो न वेति चिन्तायां—

प्रकृतावग्नीषोमयोर्देवतात्वेऽपि देवतात्वप्रथमाधिष्ठानप्रकाशकत्वेन मनोतास्थाग्निपदस्य समवेतार्थत्वाद्विकृतावपि तत्प्रकाशनार्थमूहः। स च यत्रानेकदेवत्यः पशुस्तत्र स्पष्ट एव। यत्राप्येकदेवत्यः यथा वायव्यादौ, तत्रापि स एव तत्र प्रथमाधिष्ठानमिति भवत्येवोहः॥

मास्तु वा तत्र। अत एव प्रकृतौ मनोतामन्त्रो नाग्नीषोमयोर्लाक्षणिकः प्रमाणाभावात्। यदि तु मनोताशब्दस्य 'मनोतायै हविषोऽवदीयमानस्य' इति मन्त्रे चतुर्थ्यन्ततया अवदीयमानहविस्सम्बन्धिदेवतावाचित्वावगमात् प्रकृतमन्त्रे चाग्निशब्दस्य 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतापदसामानाधिकरण्येन देवतापरत्वावगतेरग्न्यधिष्ठानकत्वसम्बन्धेन प्रकृतदेवताभूताग्नीषोमलक्षकत्वमाश्रीयते, तदा अग्निवरुणदेवत्ये पशौ ऊहाप्रसक्तावपि वायव्यादिपशौ निरुक्तसम्बन्धासम्भवेनाग्निपदनिवृत्तौ देवताप्रकाशनरूपकार्यानुरोधेन 'धान्यमसि' इत्यत्रेव वायव्यादिपदोहे बाधकाभावः।

न चैवमपि 'पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत्' इति ऋगूहपर्युदासादूहानुपपत्तिः, उपक्रमस्थार्थवादे ऋगक्षरोहनिन्दया पर्युदासस्य पदोहविषयत्वेऽपि

---

**मनोतायान्तु वचनादविकारः स्यात्।**

**मनोतामन्त्र इति।** 'त्वँह्यग्ने प्रथमो मनोता' इत्येवंरूपः। ननु प्रकृतेरग्नीषोमदेवत्यत्वात् केवलाग्निपदघटितो मन्त्रोऽसमवेतार्थ इत्यनूह एव सिद्ध्यतीति कथमूहपक्षोत्थानमित्यत आह—**प्रकृताविति।** अधिष्ठानद्वित्वे हि भवति सापेक्षः प्रथमाधिष्ठानमिति व्यवहारः, नचासौ वायव्ये सम्भवतीत्यतः पक्षान्तरमाह—**मास्तु वेति।** तावताप्यनेकदेवत्ये उहपूर्वपक्षः सम्भवत्येवेत्यर्थः। **ऊहाप्रसक्तावपीति।** यया वृत्त्या प्रकृतौ अग्निप्रकाशकत्वं तयैवाग्नीवरुणदेवताप्रकाशकत्वसम्भवान्नोहप्रसक्तिरित्यर्थः। **इत्यत्रेवेति।** मांसपदोह इति शेषः। **यत्त्वत्र प्रकाशकारैः** 'पूयतिवा' इत्यूहनिषेधवचने प्रत्यक्षे सति यदत्र पूर्वपक्षकरणं तत् वचनाभावं कृत्वा चिन्तयेत्युक्तम्। तदयुक्तमिति सूचयितुमाह—**न चैवमिति।** एवञ्च प्रत्यक्षवचनेन पदोहनिषेधकरणेऽपि ऋगन्तरोहे बाधकाभावात् तमादायैवाधिकरणपूर्वपक्षोपपत्तेर्नैव कृत्वाचिन्तात्वकल्पनं युक्तमिति भावः। **ननु न ऋगन्तरोहेषु** उहानूहविचारस्य अध्यायसङ्गतत्वमित्यत आह—

प्रकृते प्राकृतऋग्बाधे वृत्तिलोपेन सिद्धे प्रयोजनानुरोधेन ऋगन्तरागमरूपभाक्तोहे बाधकाभावात्। अत एव बाधमात्रस्यैवेह विचार्यत्वादध्यायसङ्गतिः।

न चैवमपि यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्येति बाधपर्युदासोपपत्तेर्नेष्टसिद्धिरिति वाच्यं, अस्य दैक्षप्रकरणस्थत्वेन विकृतिविषयत्वे उत्कर्षापत्तेः। मनोतामन्त्रस्याग्नेये पशौ उत्कर्षप्रसक्तौ तन्निवृत्त्यर्थत्वेन प्रकृतावेवोपपत्तेश्चेति प्राप्ते—

दैक्षसन्निधौ पठितस्य मनोतामन्त्रस्याग्नेयपश्वन्तरे सामान्यसम्बन्धबोधकप्रमाणाभावेनोत्कर्षानुपपत्तेरस्य वचनस्य प्रकृतावुत्कर्षनिवृत्त्यर्थत्वायोगात् तत उत्कृष्टस्य वायव्यादिपशावूहनिवृत्त्यर्थत्वावगतेर्न तत्र मनोतामन्त्रस्य बाधः। इदं च ज्योतिष्टोमे सवनीयाभावं कृत्वाचिन्तया। यदा त्वाग्नेयस्सवनीयः पशुर्ज्योतिष्टोमेऽस्ति तदा मनोतामन्त्रस्य महाप्रकरणाज्ज्योतिष्टोमसम्बन्धेऽवगते अवदीयमानहृदयादिसम्बन्धावगमाच्च तत्रानर्थक्यप्रसक्तौ आनर्थक्यतदङ्गन्यायसहकृतप्रकरणेन सवनीये सामान्यसम्बन्धबोधकप्रमाणेन तत्रैव निवेशोपपत्तेरस्य वचनस्य प्रकृतावेवोत्कर्षनिवृत्त्यर्थत्वेन सार्थक्यं, तदाऽस्य विकृतावूहनिवृत्त्यर्थत्वे प्रमाणाभावात् वायव्यादिपशौ ऋगन्तरोह इष्ट एव।

याज्ञिकास्तु नैवोहमाचरन्ति। तेषामयमभिप्रायः—प्रकृतौ नाग्न्यधिष्ठानकत्वसम्बन्धेनाग्नीषोमलक्षणा, व्याप्यवृत्तिसम्बन्धेन लक्षणोपपत्तौ अव्याप्यवृत्तिशक्यसम्बन्धेन तदयोगात्। अपि त्वग्न्यधिकरणकहविरुद्देश्यत्वसम्बन्धेन। अतश्च वायव्यादिपशौ तेनैव सम्बन्धेन लक्षणोपपत्तेर्न बाधोहाविति। वस्तुतस्तु देवतात्वे अग्न्यधिष्ठानकत्वस्याव्याप्यवृत्तित्वे प्रमाणाभावादिष्येते एवोहबाधौ ॥ २२ ॥

---

अत एवेति। यथैव प्राचां मते पदोहपूर्वपक्षेऽपि सिद्धान्ते वचनेन न्यायप्राप्तोहबाधात् तमादायैवाध्यायसङ्गतिः तथैव ऋगन्तरोहस्यैव वचनेन बाधात् तत्सङ्गतत्वम्। न ह्यतिदिष्टपदार्थविषय एव बाधोऽध्यायार्थः, येनोहबाधस्य तदर्थत्वं न स्यात्। किन्तु बाधमात्रमेवेत्यर्थः। नेष्टसिद्धिरिति। यथा पूयतीति वचनेन पदोहो निषिद्धः तथा यद्यपीति वचनेन बाधपर्युदासद्वारा ऋगन्तरोहोऽपि परिसङ्ख्यात एवेति नेष्टपूर्वपक्षसिद्धिरित्यर्थः। अव्याप्यवृत्तिशक्येति। अग्न्यधिष्ठानकत्वं हि न सोमेऽस्ति; किन्तु तद्घटितसमुदाये; अतोऽव्याप्यवृत्तिशक्यसम्बन्ध इत्यर्थः। वस्तुतस्त्विति। यद्यपि सोमे नाग्न्यधिष्ठानकत्वं तथापि तद्वृत्तिदेवतात्वे तदधिष्ठानकत्वं भवत्येव व्याप्यवृत्तीत्यग्न्यधिष्ठानकदेवतात्वाश्रयत्वसम्बन्धेन लक्षणायाः प्राकृत्याः वायव्येऽसम्भवादुक्तावेवोहबाधावित्यर्थः। एतेन 'न च प्रकृतावग्नीषोमयोरेव लक्षणाक्लृप्तेः वायव्यादौ कथं लक्षणया प्रयोग इति मन्त्रलोपमाशङ्क्य देवताप्रकाशनकार्यमुखेन मन्त्रप्राप्तेः, तेनात्र बाधक-

(२३)—पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वात्स्यादृचां प्रविभक्तत्वात् ॥ ४३ ॥
स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥　यूपवदिति चेत् ॥ ४५ ॥
न कर्मसंयोगात् ॥ ४६ ॥　कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४७ ॥
समानदेवते वा तृचस्याविभागात् ॥ ४८ ॥

वैश्यस्तोमे 'कण्वरथन्तरं पृष्ठं भवति' इति श्रुतम्। तच्च यद्यपि ज्योतिष्टोमे बहूनि पृष्ठस्तोत्राणि, तथाऽपि होतुः पृष्ठ एव विधीयत इति वक्ष्यते। अतश्च तत्पृष्ठ-साधनीभूतबृहद्रथन्तरयोन्योरेवानियमेन गेयं उत रथन्तरयोनावेव उत स्वयोनौ ततश्च प्राकृतयोनिबाध इति चिन्तायां—

साममात्रोपदेशेन तदाश्रयभूताया अपि तदनङ्गभूतायाः ऋचो वैश्यस्तोमाङ्गत्वे प्रमाणाभावादतिदेशप्राप्तऋग्बाधानुपपत्तेः कौत्सादेरिवास्यापि बृहद्योनौ रथन्तरयोनौ वा गानम्। अथवा कण्वानां रथन्तरमिव रथन्तरमित्येवं अरथन्तरेऽस्मिन्सामनि रथन्तर-शब्दो रथन्तरकार्यापन्नत्वप्राप्त्यर्थ इति तत्कार्यऋगक्षराभिव्यक्त्यर्थत्वावगतेस्तद्योनावेव गेयमिति प्राप्ते—

न तावत् कण्वानां रथन्तरमित्येवं यौगिकः कण्वरथन्तरशब्दः कण्वसम्बन्धे प्रमाणाभावेनाश्वकर्णादिवत् रूढेरावश्यकत्वात्। नापि कौत्सादिवत् प्राकृतर्क्षु गानं, कौत्सादिकं हि अनारभ्य स्वयोनौ पठितं वचनेन तत्तत्क्रतावङ्गत्वेन विहितमपि तदाश्रय-

---

बलात् ऐन्द्रीन्यायेन लक्षणेति प्रकाशकारैः यत्समाहितं तदपास्तम्। स्वमते तु धान्यमसी-त्यत्र अन्यत्र च प्राकृतवृत्त्यभावे प्राकृतपदनिवृत्त्या ऊहस्य तत्र साधितत्वेनेहापि तदसम्भवे ऊहस्यैव न्यायतः प्राप्तेः।

---

पृष्ठार्थेऽन्यद्रथन्तरात्।

एतदाद्यधिकरणद्वयं स्पष्टार्थम्। तत्रोत्तराधिकरणे—**न त्वग्निदेवत्येति**। यद्यप्यन्य-देवतानिष्ठगुणकीर्तनपरैः मन्त्रैः अग्निनिष्ठगुणकीर्तनं न सम्भवतीति तदनुरोधेन ऋगन्तरागमो न्याय्यः तथापि सुब्रह्मण्यानिगदेनेव तत्तद्गुणानामग्नौ आहार्यारोपेण तद्गुणकीर्तनोपपत्तेः न तदपेक्षेति भावः।

---

भूताया ऋचः क्रतुप्रकरणे पाठाभावेन क्रत्वङ्गत्वानवगतेरतिदेशप्राप्तऋग्बाधायोगे तास्वेव गानम्। तदाश्रयभूतायाः ऋचस्तु वाचस्स्तोमादौ निवेशादर्थवत्ता। कौत्सादेः प्राकृतगायत्र्यादिष्वेवावापविधानादप्येवम्। प्रकृते तु वैश्यस्तोमक्रमे कण्वरथन्तरयोने-स्तदुत्तरयोश्चोत्तराग्रन्थे पाठात् तासामपि वैश्यस्तोमाङ्गत्वावगतेरौपदेशिकर्ग्भिराति-देशिकर्चां बाधात् स्वयोनावेव गेयं, तदुत्तरयोश्च पाठस्याविशेषात् ॥

उत्तराग्रन्थे हि तत्तद्योनौ पठितस्यापि साम्नस्तत्तत्क्रतुक्रमेण योनिरुत्तरे च पठ्येते, तासां च पाठादेव तत्तत्क्रत्वङ्गत्वम्। अतस्तदनुरोधेन तास्वेव गानम्। एवं विश्व-जिदादावपि षाडहिकसाम्नां वाचनिके सर्वपृष्ठशब्देन विधौ पाठबलादेव ऋगन्तराधिक-रणत्वं तदभावे तु प्राकृतऋगधिकरणकत्वमेव ॥ २३ ॥

---

(२४)—ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारस्स्यात् ॥ ४९ ॥

अग्निष्टुति 'आग्नेया ग्रहा भवन्ति' इत्यनेन प्राकृतग्रहानुवादेन देवतान्तरविधौ स्तोत्रशस्त्रयोरर्थकर्मत्वस्य द्वितीये साधितत्वात् प्राकृत्यो नानादेवत्या एव ऋचस्स्तोत्र-शस्त्रयोः पठनीयाः। नत्वग्निदेवत्यऋगन्तरागमः। तदेतद्द्वितीयसिद्धस्य प्रयोजनकथन-मात्रम्। इदं च 'आग्नेयीषु स्तुवते' इत्येतद्वचनाभावं कृत्वाचिन्तया, स्थलान्तरविषयं वा ॥ २४ ॥

---

(२५)—उभयपानात्पृषदाज्ये दध्नस्स्यादुपलक्षणं निगमेषु पातव्यस्योप-लक्षणात् ॥ ५० ॥ न वा परार्थत्वात् यज्ञपतिवत् ॥ ५१ ॥ स्याद्वाऽऽवाहनस्य तादर्थ्यात् ॥ ५२ ॥ न वा संस्कारशब्द-त्वात् ॥ ५३ ॥ स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥ दध्नस्तु गुण-भूतत्वादाज्यपा निगमास्स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥ अपि वाऽऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्द-स्स्यात् ॥ ५७ ॥ अपि वाऽऽख्या विकारत्वात्तेन स्यादुपलक्षणम् ॥ ५८ ॥ न वा स्याद्गुणशास्त्रत्वात् ॥ ५९ ॥

पश्चादौ 'पृषदाज्येनानूयाजान् यजति' इति श्रुतं पृषदाज्यं प्राकृतस्य द्रव्यस्य तद्गतनैरपेक्ष्यस्य वा निवर्तकं न वेति चिन्तायां—

पृषदाज्यशब्दस्याज्यदधिभ्यामारब्धे द्रव्यान्तर एव शक्तेरनूयाजोद्देशेन विधीयमानं द्रव्यान्तरं प्राकृताज्यस्य निवर्तकं ततश्चावाहनादिमन्त्रेषु 'देवानाज्यपानावह' इत्यादिषु 'देवानाज्यपृषदाज्यपानावह' इत्यूहोऽपि ।

अथ वा पृषदाज्यशब्दस्य क्लृप्तावयवयोगेनोपपत्तौ द्रव्यान्तरस्य तत्र चातिरिक्तपदशक्तेश्च कल्पनायां प्रमाणाभावात् पृषत्पदस्य पृषद्रज्जुरित्यादिप्रयोगानुसारेण चित्रत्व एव शक्तिः, आज्यपदस्य त्वाज्य एव । तथाऽपि तु 'द्विरुपस्तृणाति, द्विरभिधारयति, बर्हिषी अन्तर्धाय दधि गृह्णाति' इति पृषदाज्यग्रहणे आज्यस्य दधिसंस्कारकोपस्तरणाभिघारणार्थत्वेन श्रवणात् विधावपि पृषदाज्यपदं लक्षणया दध्येव विधत्त इति प्रदानार्थस्य प्राकृताज्यस्य निवर्तकम् । ततश्च 'देवान् आज्यदधिपान्' इत्यूहः । पक्षद्वयेऽप्याज्यशब्दः प्रयाजाद्यर्थाज्यपर इति ।

अथवा 'पृषदाज्यं गृह्णाति द्वयं वा इदं सर्पिश्च दधि च' इति वाक्यशेषानुसारात् विधिस्थपृषत्पदस्यैव दधिलक्षणावगतेरेकवचनस्यापि समाहाराभिप्रायत्वेनोपपत्तेरुप-

---

### उभयपानात्पृषदाज्ये

**पश्चादाविति** । आदिपदेन चातुर्मास्यानां सङ्ग्रहः । अत्र सूत्रपाठानुरोधेन प्राचीनैः एवं पूर्वपक्षत्रयं दर्शितम्—उभयोरपि दध्याज्ययोर्हविष्ट्वात् उभयोरपि निगमेषूल्लेखः । अथवा आज्यसंस्कृतदध्न एव हविष्ट्वात् तन्मात्रस्यैव, अथवा पृषदाज्यस्य द्रव्यान्तरस्यैव हविष्ट्वात् पृषदाज्यपदस्यैवेति । तत्रोत्तरोत्तरपक्षस्य पूर्वपूर्वपक्षापेक्षया निर्युक्तिकत्वात् पूर्वमेव प्रदर्शनमुचितमिति सूचयन् आद्यन्तयोर्विलोमेन पूर्वपक्षत्रयं युक्त्या उपपादयति—**पृषदाज्यशब्दस्येति** । पृषदाज्येन द्रव्यान्तरेण प्राकृताज्यनिवृत्तौ सत्यां त्यागे इदंशब्देनैव निर्देशस्य प्रकृतिवदेवोपपत्तेः न प्रयोजनविशेषो लभ्यते इत्यतः प्रयोजनान्तरं दर्शयति—**ततश्चावाहनेति** । **तथापि त्विति** । प्राकृतानूयाजेषूपस्तरणाभिघारणयोरभावेन इहातिदेशतोऽप्राप्तेः पुरोडाशयागीयद्रव्यसंस्कारकतयोत्पन्नयोस्तयोरिह वचनातिदेशेन विनियोगः क्रियते । अतो गृह्यमाणदधिसंस्कारकोपस्तरणाभिघारणसाधनतया आज्यभागस्य साधनत्वमिति दध्येव हविरित्यर्थः । यत्तु अस्मिन् पक्षे आज्यशब्दं बाधित्वा दधिपानित्येव वक्तव्यमिति तन्त्ररत्ने उक्तं तदयुक्तमिति सूचयितुमाह—**पक्षद्वयेऽपीति** ।

स्तरणाभिघारणवादस्य चोपस्तरणाभिघारणसम्बन्धिप्रथमोत्तमस्थानविधिपरत्वेन संस्कारविधिपरत्वाभावादाज्यं दधि चोभयमनूयाजाङ्गम्। ततश्च प्राकृतस्याप्याज्यगतनैरपेक्ष्यस्यैव बाधो न त्वाज्यस्य। ऊहश्चानन्तरोक्तपक्षवदेव।

न चास्मिन् पक्षे यज्ञपतिशब्दवदेकेनैव द्रव्येणोपलक्षणसम्भवे दधिपदप्रयोगे प्रमाणाभावः। अस्य मन्त्रस्य देवताप्रकाशनार्थत्ववद्द्रव्यप्रकाशनार्थत्वस्याप्यविशेषेण तद्वदिह पारार्थ्याभावात्। आज्यधर्माश्च पक्षद्वयेऽपि दध्नाऽविशिष्टाः, प्रथमपक्षे पृषदाज्ये उत्पवनादय इति विशेष इति प्राप्ते—

पृषच्छब्दस्य चित्रत्ववाचिनो दधिलक्षणापत्तेः समाहारलक्षणाविधेयानेकत्वकृतगौरवापादकपक्षाङ्गीकरणं न युक्तम्। अत आज्योद्देशेन पृषत्तामात्रं विधीयते। एकप्रसरताभङ्गभिया वा पृषत्ताविशिष्टाज्यस्यैवातिदेशप्रवृत्तितः पूर्वप्रवृत्तौ पृषत्तामात्रफलको विधिः। पृषत्ता चोक्तवाक्यशेषानुरोधेन दध्नेति न क्वापि लक्षणा। उपस्तरणाभि-

---

आज्यशब्द इति, ऊहे इति शेषः। उपस्तरणाभिघारणसम्बन्धीति। नात्रोपस्तरणाभिघारणयोर्वाचनिकं विनियोगान्तरम्। किन्तु इदं सर्पिश्च दधि चेति पूर्वार्थवादे उद्दिष्टयोः आज्यदध्नोर्ग्रहणप्रकारमात्रं विधीयते। तत्राज्ये प्रकृतिप्राप्तचतुर्गृहीतबाधेनाज्यग्रहणमात्रं विवक्षितमनेन प्रकारेण कर्तव्यम्, यत्पूर्वमुपस्तरणसम्बन्धिन्यौपभृते पात्रे प्रथमं स्थानं तत्र द्विः, यच्चाभिघारणस्थानमन्तिमं तत्र द्विराज्यं गृह्णातीत्यर्थः। अतो नाज्यस्य संस्कारसाधनत्वमिति भावः। ऊहश्चेति। प्रयाजाद्यर्थाज्यग्रहणार्थमाज्यपदप्रयोगे आवश्यके तेनैव अनूयाजाज्यस्यापि सङ्ग्रहोपपत्त्या अवशिष्टदधिसङ्ग्रहाय दधिपानित्यधिकपदप्रयोगमात्रं कर्तव्यमिति न पूर्वपक्षापेक्षया ऊहे भेद इत्यर्थः। यज्ञपतिशब्दवदिति। यथा 'य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इति यज्ञपतिशब्दो मनुष्याणां होतॄणां प्रशंसार्थं उच्चार्यमाणः परार्थो भवतीति सत्रे न सर्वयज्ञपत्यनुरोधेनोहः, एकेनापि यज्ञपतिसम्बन्धेन परार्थसम्भवात्, एवमिहापीत्यर्थः। दध्न्यविशिष्टा इति। दध्न एव द्रव्यत्वमिति प्रथमे पक्षे यथा आज्यबाधकत्वेन अधिश्रयणव्यतिरिक्ताज्यधर्माः स्थानापत्त्या दध्नि सकृदेव भवन्ति तथा वचनमात्रादाज्यबाधकत्वाभावेऽपि तत्कार्यकारित्वाविशेषात् द्वितीयेप्यस्मिन् पक्षे ते तत्र पुनर्भवन्तीति विशेषः। पृषदाज्यं द्रव्यान्तरमेवेति पक्षे तु तत्रैव सकृदुत्पवनादयो धर्मा इति विशेष इत्यर्थः। विधेयानेकत्वेति। समाहारलक्षणानङ्गीकारे च पृषत्पदस्य चित्रतावाचिनः चित्रतासाधनत्वसम्बन्धेन दध्नि लक्षणायां तस्य आज्यपदार्थेनान्वयासम्भवात् तदानीं पृषदिति पृथगेव पदं तृतीयार्थे प्रथमान्तं छान्दसमित्यङ्गीकार्यम्। ततश्चातिदेशप्राप्तानूयाजोद्देशेन द्रव्यद्वयविधानात् विधेयानेकत्वम्। यद्यप्याज्यं प्राप्तं तथापि समुच्चयसिद्ध्यर्थं पुनः विधेयमेव।

**धारणवादस्तु उपर्यधोभावमात्रेण** नानुपपन्नः । न ह्युपस्तरणादिशब्दः **संस्कारकक्रियाया एव वाचक इत्यत्र प्रमाणमस्ति,** अवघातादिवत्, **संस्कारकत्वस्य प्रमाणाधीनत्वात् । प्रकृते च तदभावात् । अतो लौकिकस्यैव दध्नस्संस्कारकमात्रत्वादाज्यमेव हविरिति न कस्यापि बाधः ऊहो वा ।**

**इति श्रीखण्डदेवविरचितायां**
**भाट्टदीपिकायां दशमा-**
**ध्यायस्य चतुर्थः पादः**
**इति दशमाध्याये**
**पूर्वभागः**

---

इतरथा दध्ना बाधापत्तेरिति भावः । **नानुपपन्न इति ।** यथा संस्कारकोपस्तरणाभिघारणयोः आज्यस्योपर्यधोभावो भवति एवमिहाप्याज्यस्य स्रुचि द्रव्यत्वेन पूर्वं द्विः, अन्ते द्विः इत्येवं ग्रहणे मध्ये दध्नः सत्वात् उपर्यधोभावः सम्भवत्येवेति नानुपपन्न इत्यर्थः । भाष्ये उपस्तरणाभिघारण-वादो भाक्त इत्युक्तं; तन्निरसितुमाह—**नहीति । अवघातादिवदिति ।** यथावघातपदार्थो लोकतो यादृशो निर्णीतः तादृशस्यैवावघातविधिना विधानम् ; न त्वेषा संस्कारिकैव क्रियाऽवघातः; तस्य द्वितीयान्तपदसमभिव्याहारगम्यत्वात् । एवमुपस्तरणादिकमप्याज्यगतोपर्यधोभावानुकूलक्रिया-विशेषमात्रमेव यादृशं निर्णीतं तादृशमिहाव्याहतमेव । प्रमाणान्तराभावे तत्प्रमितसंस्कार-रूपत्वस्य अन्यत्र दृष्टस्य त्यागे तु न क्षतिरित्यर्थः ।

**इति श्रीखण्डदेवान्तेवासिकविमण्डन-**
**शम्भुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां**
**दशमाध्यायस्य**
**चतुर्थः पादः .**

---

# दशमाध्यायस्य पञ्चमः पादः

(१)—आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपस्स्यात् ॥ १ ॥ लिङ्ग-दर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ लिङ्गमविशिष्टं सङ्ख्याया हि तद्वचनम् ॥ ५ ॥ आदितो वा प्रवृत्तिस्स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिस्स्यात् ॥ ६ ॥

यत्र प्रकृतौ अष्टत्वादिसङ्ख्यायुक्तानि कपालादीनि श्रुतानि तत्र विकृतौ तत्सम-सङ्ख्याकस्थले तावन्नैव कश्चिद्विवादः। अधिकसङ्ख्याकस्थले चोक्तं प्रसङ्गात्पञ्चमे। वक्ष्यते च क्वचिच्च सामिधेन्यादावागमादिरूपो विशेषोऽपि। न्यूनसङ्ख्याके त्रिकपाल-सामिधेनीत्रयद्विरात्रादौ तत्र श्रुतसङ्ख्यासम्पत्त्यर्थमावश्यके पदार्थलोपे विनिगमना-

---

**अथ पञ्चमः पादः**

**आनुपूर्व्यवतामेकदेशग्रहणे**। ह्रासवृद्ध्योः बाधसमुच्चयविशेषचिन्तार्थमारम्भणीये पादान्तरे, अस्मिन्नधिकरणे विशेषशोधनिकामारभते—**यत्र प्रकृताविति**। आदिपदेन पञ्चदशत्व-सङ्ख्यायुक्तसामिधेन्यादीनां सङ्ग्रहः। **प्रसङ्गादिति**। पञ्चानां प्रयाजानामेकादशत्वसङ्ख्यासम्पत्त्यर्थं अभ्यासोपपादनप्रसङ्गात् "यत्र तु न किञ्चिद्गमकं तत्र विषमसम्पाद्यसङ्ख्याकस्थले अवश्यकल्प्याया अधिकाया आवृत्तेः अन्तिमविषयत्वात् सर्वस्याप्यन्तिमविषयत्वमेवेत्यपि वक्ष्यत" इति ग्रन्थेन प्रसङ्गात् पञ्चमे उक्तम्। अग्रे च वक्ष्यत इत्यर्थः। अत एव नवकपालेऽन्त्यस्यावृत्तिः। यत्र तु आग्नेयविकारभूतदशकपाले चतुर्थाष्टमयोरावृत्तिबोधकं आपस्तम्बवचनमेव गमकमस्ति तत्र तथैवावृत्तिरिति भावः। **विशेषोऽपीति**। इतोऽष्टमाधिकरणे वक्ष्यत इत्यर्थः। **न्यूनसङ्ख्याके इति**। 'द्यावापृथिवीयमेककपालम्' 'आश्विनं द्विकपालम्' 'वैष्णवस्त्रिकपाल' इत्यादौ, तथोपसदादिषु 'त्रिःसामिधेनीरन्वाह इत्यादौ, तथा 'द्विरात्रेण यजेत' इत्यादिना एकादशरात्रान्तानां विधानं तत्रेत्यर्थः **त्रिकपालसामिधेनीत्रयेति**। अत्र सामिधेनीनां स्वरूपेणैव प्रकृतौ भेदः; कपालानां यद्यपि स्वरूपभेदेन न प्रथमादिव्यवहारः सम्भवति, तथापि आद्यस्योपधाने 'ध्रुवमसि' इति मन्त्रपाठात्, द्वितीयोपधाने 'धर्त्रमसि' इति मन्त्रपाठात् तत्कृतभेदेनैव तथा व्यवहारो द्रष्टव्यः। 'मुख्यं वा

**विरहाद्यस्य कस्यचिल्लोपः।** न च **मुख्यस्यानुग्रहे सत्यन्त्यलोपस्यैव न्याय्यत्वं, प्रकृतौ सर्वेषामनुष्ठेयानां पाठक्रमेण मुख्यत्वावगमेऽपि विकृतावन्येषामननुष्ठेयत्वेन तन्निरूपित-मुख्यत्वासम्भवात्।** अत **एवैकवाक्यत्वाद्यभावान्नानुपसञ्जातविरोधित्वादिकमपि॥**

**न च प्राकृतप्रथमकपालतन्मन्त्रादेस्तत्पूर्वपदार्थरूपस्योपस्थापकस्य सत्त्वात्तदनु-रोधेन तस्यैवानुष्ठेयत्वावगतौ अन्त्यलोपस्यैव न्याय्यत्वं, अन्त्यकपालोपधानोत्तरानुष्ठेय-पदार्थस्यान्त्यकपालोपधानोपस्थापितस्यैवानुष्ठेयत्वेन तदनुरोधादन्त्यकपालोपधानस्याप्यनु-ष्ठेयत्वावगतेः,** गुणभूतसङ्ख्यानुरोधेन **प्रधानभूतपदार्थानां नित्यं बाधानुपपत्तेश्चेति प्राप्ते—**

कपालोपधानोत्त**रकर्तव्यपदार्थस्यैवानुपस्थितत्वेन तदनुरोधात्तत्पूर्वपदार्थकर्तव्यता-नियमानुपपत्तेः प्रथमकपालोपधान**पूर्वभाविपदार्थस्य **तूपस्थापकस्य सत्त्वेन नियमेनोपस्थित-त्वात्तदनुरोधेनाद्यस्यैव यावत्सङ्ख्यमनुष्ठेयता। अतोऽन्त्यस्यैव सङ्ख्यानुरोधेन लोपः। एवं च 'लुप्येत वा एतत्षष्ठमहो यत्पञ्चाहानुपयन्ति, लुप्येत वा एतत्षष्ठं कपालं यत्पञ्च-कपालं निर्वपति' इति लिङ्गमप्युपपद्यते॥**

---

पूर्वचोदनाल्लोकवत्' इति द्वादशिकन्यायेन सिद्धान्ती आशङ्कते—**न चेति**। **अत एवेति** यत्र ह्येकवाक्यतया अन्योन्यसापेक्षत्वं तत्र एकार्थप्रतिपादकत्वे आवश्यके अनुपसञ्जातविरो-ध्युपक्रमानुकूलार्थस्यैव युक्तं ग्रहणम्। इह तु तदभावान्नानुपसञ्जातविरोधित्वमात्रं नियामकम्। अत एव न पौर्वापर्यन्यायो, न वा सामान्यविशेषन्यायः युगपदेव सर्वप्रवृत्तेरित्यर्थः। **गुणभूतसङ्ख्येति**। कपालादिगतत्रित्वं यदि प्राकृतपाठक्रमेणैवानुगृह्येत तदा उत्तरमन्त्र-विशिष्टोपधानरूपपदार्थानां गुणानुरोधेन नित्यमेव बाधापत्तिः। अनियमपक्षे तु पाक्षिकी सेत्यर्थः। **कपालोपधानेति**। अन्त्येति पूर्वं शेषः। **पूर्वभाविपदार्थस्येति**। उपवेषनामकेन काष्ठेन अङ्गाराणां यत्स्थापनं क्रियते स पूर्वपदार्थः। तदनन्तरं प्रकृतौ 'ध्रुवमसि' इत्यादिमन्त्रैः क्रमेण कपालोपधानानुष्ठानं कृतम्। तेनैव क्रमेणोपस्थितत्वादिह कार्यम्। अन्यस्य तु लोप इत्यर्थः।

अत्र च **यद्यपि** भाष्यकारेण द्विरात्राद्येकादशरात्रान्तैकदेशवचनानि लिखित्वा समस्यवचनं 'द्वादशाहेन प्रजाकामं याजयेत' इति लिखितम्। नहि द्विरात्रादिषु "ज्योतिष्टोमोऽग्निष्टोमः पूर्व-महर्भवति, सर्वस्तोमोऽतिरात्र उत्तमं' इत्यादितैत्तिरीयशाखागतवचनैः कल्पसूत्रवचनैश्चाम्नातायां स्वतन्त्रायामहः क्लृप्तौ सत्यां द्वादशाहादिभूतानामह्नां ग्रहणप्रसक्तिः सामिधेन्यादिष्वस्ति, येनान्त्यलोपः सिद्धान्तयितव्यः स्यात्। **तथाप्यतिदेशेन** धर्मग्रहणाभिप्रायं तदुदाहरणं ज्ञेयम्। एवं न्यायतः प्राप्तौ विशेषश्चतुर्थाधिकरणे वक्ष्यते।

---

**(२)—एकत्रिके तृचादिषु माध्यंदिने छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥ ८ ॥ यथा-निवेशं च प्रकृतिवत्सङ्ख्यामात्रविकारत्वात् ॥ ९ ॥**

अस्त्येकत्रिको नाम क्रतुः 'तस्यैकस्यां स्तोत्रीयायां बहिष्पवमानेन स्तुवीत तिसृषु होतुराज्यं एकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिनः एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमानः' इत्येवमन्तादेका तिस्रश्च स्तोत्रीया व्यतिषङ्गेन श्रूयन्ते। अतश्च तत्रान्त्य-स्तोत्रीयाणामन्यस्तोत्रेषु बाधः पूर्वाधिकरणवन्निस्सन्दिग्ध एव। माध्यन्दिनपवमाने तु प्रकृतौ त्रयस्तृचास्समाम्नाताः गायत्रः प्रथमो बार्हतो द्वितीयस्त्रैष्टुभस्तृतीयः। तदिहैकत्रिके तिसृषु गीयमाने किं त्रयाणां तृचानामाद्या ऋच उपादातव्याः उत आद्यस्तृचस्सकलो ग्राह्य इति सन्देहे—

नात्र पूर्वाधिकरणन्यायेन आद्यस्य सकलस्य तृचस्य ग्रहणं, तथात्वे 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः' इति श्रुतिविहितत्रिच्छन्दस्त्वबाधापत्तेः। तदनुरोधेन पाठकल्प्यस्य क्रमस्यैव बाधौचित्याच्च। न च प्रकृतौ क्लृप्तकल्प्यत्वरूपबलाबलसत्त्वेऽपि विरोधाभावेन बाधाभावाद्विकृतौ चातिदेशेन युगपत्प्रापितयोर्विरोधेऽपि क्लृप्तकल्प्य-त्वरूपबलाबलाभावात् कथं त्रिच्छन्दस्त्वेन क्रमबाध इति वाच्यं, तथात्वेऽपि शिष्टाकोपा-धिकरणन्यायेन पदार्थभूतेन त्रिच्छन्दस्त्वेन तद्धर्मस्य क्रमस्य बाधोपपत्तेः। न च क्रमप्रकरणपाठादेव ऋक्प्राप्त्या त्रिच्छन्दस्त्वस्यार्थसिद्धत्वादविधेयेन तेन कथं क्रमबाध इति वाच्यं, नवानामृचां पाठेऽपि पञ्चदशस्तोमकत्वानुरोधेनान्यासामागम्यमानानामृचा-मन्यच्छन्दस्कत्वप्रसक्तौ त्रिच्छन्दस्त्वविध्युपपत्तेः॥

---

**एकत्रिके तृचादिषु**

**अस्त्येक त्रिकइति।** 'अथैष एकत्रिक' इति वाक्येन विहितः। तत्रैकत्रिरूपाः स्तोत्रीय-गीताः पर्याया यत्रेत्यवयवयोगेन एकत्रिकपदं नामधेयम्। **मैत्रावरुणस्येत्यादि**षष्ठ्यन्तानां अग्रे पूर्वतनाज्यमिति पदस्यानुषङ्गः। **व्यतिषङ्गेण** पूर्वस्तोत्रस्यैका ऋक् उत्तरस्य ऋक्त्रयं इत्यादिपर्यायेणेत्यर्थः। **स्तोत्रीयाणामिति।** प्रकृतौ पञ्चदशत्वसङ्ख्याद्यनुरोधेनाभ्यस्यमानाना-मन्त्यानां बाध इत्यर्थः। आज्यादिस्तोत्रेषु एकैकतृचस्यैवाम्नानात् न विचारविषयत्वमित्यभिप्रेत्याह— **माध्यन्दिनेति। त्रयस्तृचा इति।** 'उच्चाते जातमन्धसोम्' इत्ययं गायत्रस्तृचः। 'पुनानस्सोम

अत एवागम्यमाना ऋचोऽपि गायत्रीबृहतीत्रिष्टुबन्यतमच्छन्दस्का एवेति त्रिच्छन्दस्त्वस्यापि विधेयत्वेन पदार्थत्वात् तद्धर्मक्रमबाधो युक्त एवेति प्राप्ते—

त्रिच्छन्दस्त्वस्य मन्त्रगतच्छन्दस्त्रित्वात्मकस्याङ्गाङ्गत्वेन मन्त्राङ्गभूतक्रमबाधकत्वानुपपत्ति ॥

वस्तुतस्तु—त्रिच्छन्दस्त्वमपि प्रकृतौ नैव विधेयं त्रिच्छन्दस्कतृचत्रयाम्नानादेव प्राप्तत्वात्। न च स्तोमसम्पत्त्यर्थमागम्यमानर्चामन्यच्छन्दस्कत्वप्रसक्त्या विधेयत्वावश्यकता। 'पराक् बहिष्पवमानेन स्तुवते' इत्यनभ्यासवचनेन पराक्छब्देन सर्वत्र स्तोत्रमाले न्यायप्राप्तस्य ऋगागमस्य स्तोत्रान्तर इव माध्यन्दिनपवमानेऽपि परिसङ्ख्यातत्वात् ॥

अत एव बहिष्पवमानातिरिक्तस्तोत्रे अभ्यासेनैव ऋक्सङ्ख्यापूरणं वक्ष्यते। अभ्यासोऽपि च माध्यन्दिनपवमाने आद्ययोस्तृचयोरेव। 'गायत्रामहीयवे गायत्रे तृचे भवतः' इत्यादिना तयोरेव समुच्चितसामद्वयविधानात्। अतश्च त्रिच्छन्दस्त्वस्य पाठादेव प्राप्तेरविधेयत्वेन पदार्थत्वाभावान्न क्रमबाधः। अत आद्य एव तृचे गानम् ॥

---

## (३)—त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥ एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥ ११ ॥

प्रकृतौ कानिचिद्धूर्गानसम्पाद्यानि स्तोत्राणि कानिचित्सदसम्पाद्यानि। तद्विद्वैकत्रिके त्रिकस्तोमकधूर्गानसम्पाद्यस्तोत्रेषु किं विभिन्नासु तिसृषु ऋक्षु गानं उतैकस्या एवर्चोऽभ्यासेन त्रिकस्तोमकता सम्पाद्येति चिन्तायां—

---

धारया' इति बार्हतो द्वितीय.। 'प्रतुद्रव' इत्यय त्रैष्टुभ इत्यर्थ । तद्धर्मक्रमबाध इति। प्रकृतौ विहितेन त्रिच्छन्दस्त्वेन सह क्रमस्य विरोधाभावेऽपि इहोपदिष्टऋक्त्रयग्रहणे विरोधप्रसक्तौ युक्त पदार्थानुग्रहेण पदार्थधर्मक्रमबाध इत्यर्थ । अत्र प्रकाशकारैः पूर्वपक्षरीत्या त्रिच्छन्दस्कत्वविधिसिद्धान्तेप्यङ्गीकृत तन्निरस्यति—वस्तुतस्त्विति। वक्ष्यत इति। इत पञ्चमाधिकरणे इति शेष ।

---

### त्रिकस्तृचे धुर्येस्यात्।

धूर्गानसम्पाद्यानीति। 'अग्न आयाहि वीतय' इति प्रथमाज्यऋचि एकस्यामेव धूर्गानम्। 'आ नो मित्रावरुणा' इति द्वितीयाज्यऋचि तथैव तत्। 'आयाहि सुषमाहिते' इति तृतीयाज्यऋचि तथैव

तृचगानप्रापिचोदकानुग्रहाय विभिन्नास्वेव तिसृषु गानम्। न चैकत्रिकप्रकरणे 'आवृत्तं धूर्षु स्तुवते' इतिवचनेनैकस्या एवर्चोऽभ्यासविधानात्तद्बाध इति वाच्यं, अस्य सामावृत्त्यभिप्रायकतयाऽनुवादत्वात्। तथा हि—न तावदनेन स्तोत्रमात्रोद्देशेनावृत्ति-विधिः अधूर्गानसम्पाद्येऽपि तदापत्तेः। धूर्षु इत्यस्य विशेषणत्वे विशिष्टोद्देशापत्तेः। स्तोत्रोद्देशेनाभ्यासविधौ तस्यैवावृत्तिप्रसङ्गेनैकस्या एवर्च आवृत्तौ प्रमाणाभावाच्च। अतो धूर्गान एवावृत्तिसम्बन्धः 'स्तुवीत' इत्यस्यानुवादत्वमङ्गीकृत्य विधेयः। तस्य च तृचगानप्रापिचोदकादेव सिद्धेरस्य वाक्यस्यानुवादत्वाद्विभिन्नास्वेव तिसृषु गेय-मिति प्राप्ते—

समस्तवाक्यवैयर्थ्यापत्तेरनेन धूर्षु निमित्तभूतासु स्तोत्रोद्देशेनैवावृत्तिर्विधीयते। सप्तम्या निमित्तत्वोक्तेः। क्रतुगतभेदनस्यैव निमित्तत्ववत् उद्देश्यभूतस्तोत्राङ्गस्यैव

---

तत्। 'इन्द्राग्नी आगन्त सुतम्' इति चतुर्थाज्यऋचि तथैव तत्। एवमेकैकऋचः संस्कारकधूर्गान-सम्पाद्यानि आज्यस्तोत्राणीत्यर्थः। तृचगानप्रापीति। प्रकृतौ धूः सामगानं यद्यप्येकैकस्या-मेव ऋचि स्थितम्, तथापि इह त्रिस्तोमकत्वानुरोधात् तिसृषु क्रियमाणं प्राकृततृचगानाधिकरण-त्वानुग्रहाय भिन्नास्वेव कार्यमित्यर्थः।

तृचेति। तृचे क्रियमाणं साम न व्यासज्य गेयम्। अपितु प्रत्यृचं गेयमिति नवमे निर्णीतम्। एकस्य साम्नः प्रत्यृचं गाने आवश्यके प्रतिप्रधानावृत्तिन्यायेनैव प्रकृतौ सिद्धा आवृत्तिः इहाप्यतिदेशादेव तृचगानानुरोधात् सिद्धेत्यावृत्तपदमनुवाद इत्यर्थः। अत्र प्रकाशकारैः धूर्ष्वावृत्तिरित्युक्ते 'स्तुवत' इत्यस्यानन्वयापत्तेः, अनयोश्च प्रधानान्वयसम्भवे गुणभूतान्योन्या-न्वयायोगात् स्तोत्रभावनान्वयस्तावदवगतः; तत्र वाक्यभेदप्रसङ्गात् स्तोत्रस्योद्देश्यत्वं विहाय भावनामात्रे आवृत्तिविधौ भावनाया अवच्छेदकापेक्षत्वात् साम्नां च कारकत्वेन क्रियापेक्षत्वात् 'मृष्यामहे' इति न्यायेन धूः सामावच्छिन्नभावनाया[1] मावृत्तिविधिः। धूर्भावनायां च स्तोत्रं नित्यं प्राप्तमिति नित्यानुवादः स्तौतिः। एवञ्च धूर्गाने तृचमात्रबाधाल्लाघवमिति वाक्यार्थवर्णनं कृतम्। तत्र भावनाया उद्देश्यत्वेन तस्या अवच्छेदकापेक्षायां इतरकारकापेक्षायां शीघ्रोपस्थितधात्वर्थान्वयेनैव निवृत्त्युपपत्तेः धात्वर्थस्यापि तत्रान्वयव्युत्पत्तेः 'मृष्यामहे' इत्यगतिक-न्यायाश्रयणस्यापि प्रयोजनाभावात् लाघवाप्रसक्तेः[2] स्तोत्राणामेवावृत्त्यापत्तेरयुक्तमित्यभिप्रेत्य तन्त्र-रत्नदर्शितरीत्या स्तोत्रस्यैवोद्देश्यत्वाङ्गीकारेण वाक्यार्थं दर्शयन् सिद्धान्तमाह—समस्तवाक्येति।

---

1. A. स्तोत्रभावनायाः

2. A. वाक्यभेदाप्रसक्तेः

**धूर्गानस्य निमित्तत्वात् न स्तोत्रान्तरे** आवृत्तिप्रसङ्गः। **गुणसङ्कीर्तनात्मकस्तोत्रस्यैव तत्त्वेन धातुवाच्यत्वात्तदु**द्देशेनैवावृत्तिविधिः। **अत एव लक्षणाप्रसङ्गेन** आज्यत्वपृष्ठत्वादिनो-द्देश्यत्वाभावाच्च **सकलस्यावृत्तिप्रसङ्गः**। **गुणसङ्कीर्तनात्मकस्तोत्रावृत्तेश्च** ऋगावृत्तिमन्तरेणा-**नुपपत्तेरेकस्या एवर्चोऽभ्यासेन त्रिकस्तोमकता सम्पाद्या; तेन त्रिकस्तोमके धूर्षु तृच-गानस्य पृथक्त्वनिवेशित्वमेव बाध्यम्**। एकस्तोमके तु **तृचगानमेवेति ध्येयम्**॥ ३॥

---

## (४)—चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमस्स्यात् ॥ १२ ॥ प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥

**द्विरात्रादिष्वहर्गणेषु सुत्यागणत्वसामान्यात् द्वादशाहस्य प्रवृत्तिरित्युक्तम्। अतश्च प्रायणीयोदयनीययोरपि द्वादशाहे फलवत्त्वेन धर्मग्राहकत्वात्तयोरपि गणान्तर्गतत्वा-**

---

**तदुद्देशेनैवेति**। यया धूर्गानसंस्कृतया ऋचा यदेव गुणसङ्कीर्तनरूपं स्तोत्रमुत्पाद्यते तावत्स्तोत्र-मेवोद्दिश्यावृत्तिर्विधीयत इति न सर्वस्तोत्रावृत्तिप्रसक्तिरित्यर्थः। **पृष्ठत्वादिनेति**। यद्यपि न पृष्ठस्तोत्रेषु धूर्गानं प्रकृतौ, तथापि 'पुनरावृत्तं पृष्ठैरुपतिष्ठते' इति वचनस्य आज्यस्तोत्रसम्बन्धिधूर्गाना-वृत्तिविधायकवचनपर्याये भाष्यकारेण लिखनादुपदिष्टधूर्गानविषयत्वं तद्वचने प्रतीयते। ततश्च तत्रापि पृष्ठस्तोत्रे यस्यामृचि तदुपदिष्टं तज्जन्यगुणाभिधानस्तोत्रव्यक्तावेवावृत्तिविधानम्, न तु पृष्ठत्वादिरूपेण पृष्ठस्तोत्रे, येन सर्वस्यैवावृत्तिः स्यादित्यर्थः। **ऋगावृत्तिमन्तरेणेति**। ऋग्भेदे चाभिधानप्रकारभेदोऽवश्यम्भावीति न तादृश्येव स्तुतिः पुनः पुनः कृता स्यात्; अतो ऋगावृत्तिरित्यर्थः। **एकस्तोमके त्विति**। यथा मैत्रावरुणाज्ये एकस्तोमकत्वस्यैव विधानात् गायत्रसाम्नीव धूर्गानेपि तृचबाध एवेत्यर्थः।

---

**चोदनासु त्वपूर्वत्वात्।**

**इत्युक्तमिति**। अष्टम इति शेषः। **द्विरात्रादिप्रकृतित्वमिति**। पौर्णमास्यां यजेतेतिवत् दशरात्रेण यजेतेत्येवमवान्तरप्रयोगविध्यभावेन दशरात्रे भेदेन गणत्वे प्रमाणाभावात् न तत्सादृश्येन तद्विध्यन्तो द्विरात्रादौ। अपितु द्वादशाहस्यैवेत्यर्थे सिद्धे अनियमे प्राप्ते

**विशेषात्** द्विरात्रादिप्रकृतित्वं, अतश्च 'प्रथमस्य **प्रथमं' इत्येवंक्रमेण स्थानसामान्यादपि प्रकृतिविकारभावनियमात् द्विरात्रादौ** तृतीयादिप्रभृति **द्वादशाहिकाहर्धर्माणां बाध इति प्राप्ते**—

**प्रायणीयोदयनीयौ वर्जयित्वा मध्यमस्य दशरात्रस्य पृथक्सङ्ज्ञातो दशरात्रसमाख्या च श्रूयते पृष्ठ्यषडहादारभ्यैव 'ऐन्द्रवायवाग्रं प्रथममहश्चतुर्थं छन्दोमं अविवाक्यं** दशममहः' इत्यादिव्यवहारात्। **तस्य च प्रयोजनान्तरासम्भवात् द्विरात्राद्यहर्गणान्तराणां स्वमात्र-प्रकृतित्वनियामकता।** अत एव यत्र **प्रयोजनान्तरसम्भवः, यथा—दशरात्रमध्येऽपि षडहस्य पृथक्सङ्ज्ञातक्लृप्तौ। तस्या हि गवामयनादौ दूरस्थषडहस्य** फलादिसम्बन्धसिद्धि-**रेव प्रयोजनमिति न तया द्विरात्रादीनां स्वमात्रप्रकृतित्वनियमः। प्रकृते तु प्रयोजनान्तरा-भावात् वैयर्थ्यपरिहारार्थं सत्यपि धर्माणां प्रकृतावहर्मात्राङ्गत्वे विकृतौ** गणत्वसामान्येन **धर्मप्रदेशकता दशरात्रस्यैवेति विज्ञायते ॥**

अत एव प्राथम्य**योगाभावे प्रायणीयोदयनीययोर्नामातिदेशेन धर्मप्रदेशकत्वेऽपि न क्षतिः।** न चैवं **दशरात्ररूपविकृतावेव दशरात्रस्य नामातिदेशविधया चोदनालिङ्गाति-**

---

नियामकमाह—**अतश्च प्रथमस्येति। दशममहरित्यादीति।** स्पष्टमेव तैत्तिरीयशाखायां अविवाक्यस्य दशमत्वेन व्यवहारात् तस्य पूर्वतनाहर्गतप्राथम्यादि विनाऽनुपपत्तेः दशरात्रान्तर्गता-हस्सु प्रथमादिव्यवहार इत्यर्थः। ननु षडहेऽपि प्रथमद्वितीयादिक्रमेण अन्हां सङ्ज्ञातक्लृप्तेः तस्य दशरात्रादपि शीघ्रोपस्थितेः तत्प्रकृतित्वमेव स्यात्। यद्यपीह द्विरात्रमारभ्य षड्रात्रान्तं न क्षतिः, तथापि सप्तरात्रादौ सप्तमाद्यन्हां दशरात्रान्तर्गतसप्तमाद्यहःप्रकृतित्वं दुरुपपादमित्यत आह—**अत एव यत्रेति। फलादिसम्बन्धसिद्धिरिति।** द्वादशाहे षडहत्वेन रूपेण सङ्ज्ञातकरणं यत्र षडहपदमाम्नातमस्ति तत्र तदुपस्थापनद्वारा फलादिसम्बन्धसिद्ध्यर्थं उपयोगि भवतीति न द्विरात्रादिप्रकृतित्वनियमकरणेनैव सार्थकमित्यर्थः। फलादीत्यादिपदेन मध्वशनादिसङ्ग्रहः। **गणत्वसामान्येनेति।** रात्रान्तशब्दवत्त्वावान्तरसादृश्यसहकृतगणत्वसामान्येनेत्यर्थः। एवं सर्वत्र दशरात्रातिदेशो क्रमेण न्यायतः प्राप्ते तदपवादं दर्शयति—**अत एव प्राथम्येति।** यथा गावामयनिके द्वितीये चतुर्विंशेऽहनि प्रायणीयपदप्रयोगः, तत्र न्यायतः षडहद्वितीयाहर्धर्मप्राप्तौ प्रायणीयनामातिदेशेन प्रबलेन बाधात् द्वादशाहिकप्रथमप्रायणीयाहर्धर्मा एव भवन्ति। यत्र तु गावामयनिके प्रथमेऽहनि प्रायणीयपदप्रयोगः तत्र प्राथम्ययोगेनैव मुख्यार्थोपपत्तौ न गौण्याश्रयणेन तस्य नामातिदेशकत्वमिति दशरात्रप्रथमाहर्विकृतित्वमेवेत्यर्थः। एवं प्राचीनोक्तां सिद्धान्तसाधिकां युक्तिं उपपादितामाशङ्काव्याजेन दूषयन् लिङ्गदर्शनमात्रादेव सिद्धान्तं साधयितुमाशङ्कते—**न चैव**

**देशविधयैव वा सार्थकत्वोपपत्तेस्सर्वत्रातिदेशे प्रमाणाभावः। द्विरात्रे 'यत्प्रथमं तद्द्वितीयं यद्द्वितीयं तत्तृतीयं जगतीमन्तर्गच्छति' इति लिङ्गोपबृंहितात् रात्रान्त-शब्दवत्त्वावान्तरसादृश्यविशेषादेव सार्वत्रिकत्वावगतेः। द्विरात्रे यत्प्रथममहः तद्द्वाद-शाहिकस्य** द्वितीयस्याह्नो विकार **इति तदर्थात्। जगतीमन्तर्गच्छति त्यजतीत्यर्थः। प्रायणीयातिदेशे हि द्विरात्रे षडहद्वितीयस्य** त्रैष्टुभस्यैव **हानं स्यात् न तु जागतस्य षडह-तृतीयस्य। अत** इदमप्यपरं **लिङ्गम्। तथा द्विरात्रान्तरे 'गायत्रं प्रथमं त्रैष्टुभं द्वितीयं' इत्यपि लिङ्गं, प्रायणीयातिदेशे हि तस्य नानाच्छन्दस्कत्वान्नानाच्छन्दस्कं प्रथमं, षडह-प्रथमस्य च गायत्रत्वाद्गायत्रं द्वितीयमिति वाच्यं स्यात्। अतो लिङ्गवशात्सार्वत्रिकत्व-सिद्धिः। तेन द्विरात्रादौ चतुर्थप्रभृतिद्वादशाहिकधर्माणां बाधः॥**

---

## (५)—अपूर्वासु तु सङ्ख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात्॥ १४॥

**प्राकृतानामेकदेशग्रहणे आद्योपादानमन्त्यलोपश्चेति स्थितम्। यत्र तु औपदेशिका बहवो मन्त्राः क्रतुप्रकरणे समाम्नाताः एकदेशेन च विनियुक्ताः** यथाग्न्यादावाधूननार्था **वपनार्थाश्च मन्त्राः 'सप्तभिराधूनोति, चतुर्दशभिर्वपति' इति न्यूनसङ्ख्यायुक्तास्तत्र नियमेनाद्योपादाने अवशिष्टानां वैयर्थ्यापत्तेरनियम एव॥**

**न च वाचस्तोमादौ तेषां सार्थक्यं,** एतत्क्रतुप्रकरणपाठस्य **तथाऽपि वैयर्थ्यात्। न च पूषानुमन्त्रणवत् तद्बाधेऽप्यदोषः, तत्र लिङ्गेन तद्बाधेऽपि प्रकृते** क्रमानुरोधेन **बाधानुपपत्तेः॥ ५॥**

---

**मिति। द्वितीयस्यान्ह्नो विकार इति।** ये द्वादशाहस्य द्वितीयतृतीये अहनी ते दशरात्रान्तर्गतषडहप्रथमद्वितीये भवतः। तयोर्विकारभूते द्विरात्रसम्बन्धिनी द्वे अहनी इत्यर्थः। **त्रैष्टुभस्यैवेति।** षडहे च गायत्रं त्रैष्टुभं जागतं गायत्रं त्रैष्टुभं जागतमित्येवं षडपि दिनानि। ततश्च प्रायणीयगायत्रयोरेवातिदेशे सति त्रैष्टुभस्यैव हानं स्यादित्यर्थः। **इदमप्यपरमिति। यत्** प्रथमं तद्द्वितीयमित्यपेक्षया जगतीमन्तर्गच्छतीत्यपरमित्यर्थः। स्पष्टार्थमन्यत्।

---

### अपूर्वासु तु सङ्ख्यासु

**यथाग्न्यादाविति।** 'वेशिनीं त्वा पत्वन्नाधूनोमि' इत्येवमादिभिर्धूननं विहितम्, तथा अग्न्याधारस्थण्डिलाधस्तात् पूर्वं सप्तानामारण्यानां सप्तानां ग्राम्यणामोषधीनां 'या जाता ओषधयः' इत्यादिमन्त्रैः आवापो विहितः तदर्था मन्त्रा इत्यर्थः। **क्रमानुरोधेनेति।** पठितमन्त्र-क्रमानुरोधेन नित्यबाधो न युक्तः। किन्तु पाक्षिक एवेत्यर्थः।

---

(६)—स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमविकारात्सङ्ख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥ आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥ सङ्ख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥ परार्थशब्दत्वात् ॥ १८ ॥ उक्ताविकाराच्च ॥ १९ ॥ अश्रुतित्वान्नेति चेत् ॥ २० ॥ स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥ आवापवचनं चाभ्यासे नोपपद्यते ॥ २२ ॥ साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥ धुर्येष्वपीति चेत् ॥ २४ ॥ नावृत्तिधर्मत्वाद् ॥ २५ ॥

**विवृद्धस्तोमकेषु क्रतुषु 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इत्यादिषु सामावापः पवमानविषय एव। स्तोत्रान्तरेषु तु परिसङ्ख्यायत इत्युक्तम्।** तदिह **सर्वस्तोत्रेषु सामागमस्य प्राप्तिरेव नास्ति कथं तत्परिसङ्ख्यायते इत्याक्षिप्य समाधीयते। सङ्ख्यासम्पत्तिर्हि प्रयाजैकादशत्वन्यायेनाभ्यासेनाप्युपपत्तेर्न सामान्तरागममाक्षिपति ॥**

**किञ्च—सङ्ख्याऽत्र स्तोमरूपा, स्तोमश्च स्तोत्रीयासङ्ख्याकृतस्तुतिसङ्ख्येत्युक्तम्। स्तोत्रीया स्तोत्रसाधनीभूता मुख्या ऋगेव। साम तु तत्संस्कारकतया साधनम्। अतो ऋग्भेदस्यैवावश्यकत्वात् तासामेवागमस्यान्न साम्नां, तेषां तु प्राकृतानामेव प्रकृतौ स्तोत्रापूर्वसम्बन्धिऋक्संस्कारकत्वात् प्रतिप्रधानं गुणावृत्तिन्यायेनागम्यमानास्वप्यावृत्तौ न कोऽपि दोषः ॥**

**वस्तुतस्तु—प्रयाजैकादशत्वन्यायेन ऋचामप्यभ्यास एव।** आवापविधिस्तु **यावद्वचनमपूर्वविधिरेवेति प्राप्ते—**

---

**स्तोमविवृद्धौ प्राकृतानामभ्यासेन।**

**तदिहेति।** एकविंशतिसङ्ख्याकाः प्रगीता मन्त्राः यस्मिन्नेतादृशेनातिरात्रेण यजेतेत्यर्थः। ततश्चेयं सङ्ख्या प्रगीते मन्त्रे विधीयमाना गाने मन्त्रे च निविशत इति निर्विवादे सति उभयत्राप्यभ्यासेन, अथवा एकतरत्रागमेन इतरत्र अभ्यासेनेति विचार इत्यर्थः। **इत्युक्तमिति।** चित्राधिकरणे कौस्तुभे इति शेषः। ननु द्वयोरप्यृक्सामयोः सर्वत्राभ्यासे सामागमस्य अन्यतः प्राप्त्यभावात् कथं 'त्रीणि हवा' इति वाक्येन ऋक्त्रयाधिकरणावापविधिरित्यत आह—**आवाप-**

प्रयाजोद्देशेन हि विधीयमाना सङ्ख्या प्रयाजशब्दस्य कर्मविशेषवाचित्वादभ्यास-मन्तरेण सम्पादयितुमशक्तेर्भवति तदापादिका। इह तु स्तोत्रीयात्वस्यागम्यमानास्वपि सम्भवात् पृथक्त्वनिवेशित्वानुरोधेन सङ्ख्यायाः प्राकृतस्तोत्रीयातिरिक्तस्तोत्रीयाक्षेप-कत्वमेव ॥

अत एव तासां दाशतयीभ्य आनीयमानानामेतत्कर्माङ्गत्वे सङ्ख्यान्यथानुपपत्तिरेव प्रमाणम्। स्तोत्रीया च न केवला ऋक्, प्रगीतमन्त्रस्यैव स्तुतिसाधनत्वात्। अत-स्सर्वेस्तोत्रेषु 'साम्नामृचां चागमः' इति न्यायादवगतेः 'अत्र ह्येवावपन्ति' इत्यनेन 'त्रिच्छन्दा आवापः' इत्यावापपदेन वा पूर्वोक्तविधया सामावापस्य पवमानमात्रविषयत्व-सम्पादनात् स्तोत्रान्तरेषु तत्परिसङ्ख्या युक्तैव। अतस्स्तोत्रान्तरे साम्नामभ्यास एव।

---

## (७)—बहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥ २६ ॥

न्यायप्राप्तस्यापि सामागमस्य गायत्र्याद्यधिकरणकत्वविधानादेव गायत्र्यादिरहितेषु स्तोत्रान्तरेषु परिसङ्ख्या। 'त्रिच्छन्दा आवापः' इत्यादौ आवापपदं त्ववयुत्यानुवाद एव। अतश्च बहिष्पवमानेऽपि गायत्रतृचस्य सत्त्वात् तत्रापि स्तोमविवृद्धौ सामावापः॥

न च गायत्रीमात्रसत्त्वेऽपि गायत्रीबृहत्यनुष्टुभां त्रयाणामभावात् कथं तत्रावाप-विधिरिति वाच्यं, उद्देश्यसाहित्यस्याविवक्षितत्वेन माध्यन्दिनपवमान इव गायत्रीमात्रसत्त्वेऽ-पि आवापोपपत्तेः॥

---

विधिस्त्विति। न न्यायप्राप्तसामागमे ऋक्त्रयाधिकरणत्वविधिः, किन्तु यदृक्त्रयं तत्र प्रयाजै-कादशत्वन्यायेन प्राप्तेऽभ्यासे तं बाधितुमपूर्वः सामागमो विधीयत इति तादृशऋक्त्रयाभाववति स्तोत्रान्तरे द्वयोरप्यभ्यास एवेत्यर्थः। प्रयाजोद्देशेनेति। प्रयाजानां निर्ज्ञातसङ्ख्यानामुद्देश्यत्वे सति विधीयमानैकादशत्वसङ्ख्याया अभ्याससम्पाद्यत्वमेव; न तु पृथक्त्वनिवेशित्वम्, पञ्चाधिकरूपा-णामसिद्धत्वात्। इह तु एकविंशतिसङ्ख्याविशिष्टस्तोत्रीयर्चामेव विधाने कर्तव्ये आगम्यमानाना-मपि तदुपपत्तेः, स्तोत्रीयाणां निर्ज्ञातसङ्ख्यत्वेनोद्देश्यत्वानपेक्षणात् न पृथक्त्वनिवेशित्वभङ्गः स्वीकार्य इत्यर्थः। इतरत् स्पष्टार्थम्।

---

बहिष्पवमाने तु ऋगागमः सामैकत्वात्। माध्यन्दिनपवमान इवेति। माध्यन्दिन-पवमाने त्रिषु तृचेषु आद्यं गायत्रीबृहतीच्छन्दस्कतृचद्वयम्। अन्त्यस्तु त्रैष्टुभ इति न गायत्र्यादि-

न च 'यदुत्तरयोः पवमानयोस्तृचाय तृचाय हिंकरोति, अथ कस्माद्बहिष्पवमाने सकृदेव हिंकरोति, एकं हि तत्र सामेति ब्रूयात् स्वरसामैव गायति' इति वचनेन सामैकत्वविधानात् न तत्रागम इति वाच्यं, एतस्य हिंकारैकत्वे हेतुमात्रपरतया प्रकृतौ पाठप्राप्तसामैकत्वानुवादकत्वेन तद्विधायकत्वाभावात्। अतः प्रकृतौ तृचत्रये एकस्यैव साम्नोऽभ्यासेऽपि विवृद्धस्तोमकायां विकृतौ साम्नः आगमे न किञ्चिद्बाधकमिति प्राप्ते—

न तावदागम्यमानगायत्र्याद्यधिकरणत्वेनैव 'त्रीणि ह वै' इत्यनेन सामावापविधिः। गायत्र्यादीनां सिद्धवद्यज्ञसम्बन्धानुवादानुपपत्तेः। अतोऽवश्यविधेये प्राकृतगायत्र्यधिकरणके सामागमे गायत्र्या अभ्यासस्यावश्यकत्वात् 'पराक् बहिष्पवमानेन स्तुवते' इत्यनभ्यासवाचिपराक्छब्देन तत्पर्युदासानुपपत्तेः। 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः, सप्तच्छन्दा आवाप आर्भवः' इति पवमानद्वय एवावापग्रहणस्य स्तोत्रान्तर इव बहिष्पवमानेऽप्यावापपरिसङ्ख्यार्थत्वाच्च। 'अत्र ह्येवावपन्ति' इत्यस्य पवमानवृत्तित्रिष्टुब्ध्यावृत्तिफलकत्वस्योक्तत्वात् अतस्तत्रैकस्यैव साम्नोऽभ्यासः। न चैवमनभ्यासविध्यनुपपत्तिः तस्यर्ग्विषयत्वेनाप्युपपत्तेः।

न चैवमपि ऋचामनभ्यासस्य न्यायादेव सिद्धेस्तत्र तद्विध्यानर्थक्यं, तस्य स्तोत्रान्तरेषु न्यायप्राप्तऋगागमपरिसङ्ख्यार्थत्वस्य तत्र तत्रोक्तत्वात्। किंच 'स्वरसामैव' इत्यत्र साम्नः

---

ऋक्त्रयसाहित्यं तथापि साहित्याविवक्षया गायत्र्याद्यन्यतरवत्त्वेनैव सामावापस्तथेहापीत्यर्थः। ननु सामागमानुरोधेन गायत्र्यभ्यासा[वश्यंभावे] पराग्वाक्येन विहितानभ्यासानुपपत्त्या ऋक्सामयोरुभयोरप्यागम एव बहिष्पवमाने दुर्निवार इत्यत आह—त्रिच्छन्दा इति। स्तोत्रान्तर इवेति। आज्यपृष्ठादिस्तोत्रान्तरे इत्यर्थः। यदि हि त्रीणि हवेति गायत्र्याद्यधिकरणकावापविधिः स्यात् तदा गायत्रतृचस्य बहिष्पवमानेपि सत्वात् सम्भवेदपि तत्र सामावापः; न त्वेनदस्ति। आज्यपृष्ठादिस्तोत्रादिषुप्रकृतौ उभयागमपरिसङ्ख्यार्थं आवापसमाख्याया एव शरणीकरणीयत्वेन तत एव विवृद्धस्तोमकविकृतिकृतावपि सामागमस्योत्तरपवमानद्वयातिरिक्तस्तोत्रान्तरेषु परिसङ्ख्यालाभेन बहिष्पवमाने सामाभ्याससिद्धेः त्रीणि हवेति वचनस्य ऋगागमपरिसङ्ख्याफलकत्वमिव त्रिष्टुबाद्यधिकरणत्वपरिसङ्ख्याफलकत्वमपीति न तद्वचनबलात् बहिष्पवमाने सामागम इत्यभिप्रेत्याह—अत्रह्येवावपन्तीति। उत्तरपवमानयोः सामागमे ऋचां चाभ्यासे विहिते स्तोत्रान्तरे सामाभ्याससिद्धावपि बहिष्पवमाने न्यायेनैव ऋगागमप्राप्तिः। ऋगागमस्य उत्तरपवमानद्वये 'त्रीणि ह वा' इति वाक्येन परिसङ्ख्यातत्वेऽपि अन्यत्र तत्परिसङ्ख्याया अप्रसक्तेरित्यभिप्रेत्याशङ्कते—न चैवमपीति। तत्र तत्रोक्तत्वादिति। तथा च यथा उत्तरपवमानयोः विवृद्धस्तोमके क्रतौ

पाठादेव प्राप्तत्वेन एवकारार्थस्यैव सामान्तराभावरूपस्य प्रकृतौ विकृतौ वा विधेयत्वाद्बहिष्पवमाने सामाभ्यास आवश्यक एव। अत एव आवापसमाख्यया पराग्वाक्येन च पवमानत्रयातिरिक्ते ऋक्सामोभयपरिसंख्या। पवमानत्रये तु उभयागम इत्यप्यपास्तम्। 'त्रीणि ह वा' इत्यादिना क्रियमाणस्य प्राकृतगायत्र्याद्यधिकरणकसामावापविधेः निर्विषयत्वापत्तेः। तस्मादावापसमाख्या सामावापविषयिण्येवोक्तवचनेनोपसंह्रियते। एवंच बहिष्पमानेऽपि सामावापस्य परिसंख्यातत्वादनभ्यासस्य ऋङ्मात्रविषयत्वावगतेरुक्तव्यवस्थासिद्धिः। अतो बहिष्पवमने साम्नोभ्यास ऋचामागम इति सिद्धम्॥

---

(८)—अभ्यासेन तु सङ्ख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥ अविशेषान्नेति चेत् ॥ २८ ॥ स्यात्तद्धर्मत्वात् प्रकृतिवदभ्येस्यताऽऽसङ्ख्यापूरणात् ॥ २९ ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ अधिकानां च दर्शनात् ३१ ॥ कर्मस्वपीति चेत् ॥ ३२ ॥ न चोदितत्वात् ॥ ३३ ॥

'एकविंशतिमनुब्रयात्प्रतिष्ठाकामस्य' इत्यादिना यत्र सामिधेनीविवृद्धिश्श्रुता तत्र न्यायप्राप्तोऽप्यागमो न प्रवर्तते। प्रकृतौ 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनेन एकादशसङ्ख्यानां पठितानां ऋचां प्रथमोत्तमयोः यावत्पञ्चदशसंख्यापरिपूर्त्यभ्यासविधानेनागमबाधावगतेः॥

न चानेन प्रथमोत्तमयोस्त्रिरभ्यासमात्रविधानेन ततोऽधिकानामागमे बाधकाभावः। त्रिरभ्यासविधावदृष्टार्थत्वापत्तेरनेन वचनेन प्रयाजशेषाभिघारणन्यायेन लक्षणया 'पञ्चदश

---

आवापसमाख्यया त्रीणि हवेति वचनाच्च साम्नामागमः ऋचामभ्यासः। स्तोत्रान्तरेषु तु साम्नामभ्यासः सिद्ध्यति तथैव स्तोत्रान्तरे सामाभ्याससिद्धावपि न्यायतो ऋगागमस्य प्राप्तौ पराग्वाक्येन अन्यत्र परिसङ्ख्या करणात् बहिष्पवमाने साम्नामभ्यासः ऋचामागमः, स्तोत्रान्तरेषु तु उभयोरप्यभ्यास एवेत्यर्थोऽपीति तदर्थं तद्विधेरर्थवत्त्वमेवेति न तद्विध्यनुपपत्तिरित्यर्थः। स्पष्टार्थमन्यत्।

---

अभ्यासेन तु सङ्ख्यापूरणम्

लक्षणयेति। वाक्यद्वयेऽपि 'ताः पञ्चदश सम्पद्यन्ते' इत्यर्थवादावगतदृष्टार्थत्वानुरोधेन त्रिःशब्दाभ्यां सङ्ख्यापूरणं लक्षयित्वा प्रथमोत्तमाभ्यासो विधीयते। यथा सङ्ख्यापूरणं भवति

**सामिधेनीरनुब्रूयात्' इतिविहितपञ्चदशसम्पत्त्यर्थत्वेनाभ्यासमात्रविधानात्।** एकादशानां हि **ऋचां प्रथमोत्तमयोर्यावत्सङ्ख्यासम्पत्त्यभ्यासे 'समं स्यादश्रुतत्वात्' इति न्यायेन प्रत्येकं त्रिरभ्यास एव सम्पद्यते ॥**

अत एव **द्विचतुरभ्यासेनापि सङ्ख्यासम्पत्तिसिद्धेस्त्रित्वानुवादानुपपत्तिरिति पार्थसारथ्युक्तमपास्तम् ॥**

अतश्च लक्षणया **यावत्सङ्ख्यासम्पत्ति प्रथमोत्तमे अभ्यसेत् इतिवाक्यार्थावगमादेकविंशत्यादिसम्पत्त्यर्थमपि तयोरेवाभ्यासः।** न च प्रथमोत्तमयोरुद्देश्यत्वे **तदनेकत्वनिमित्तो वाक्यभेदः, 'अर्धमन्तर्वेदि' इतिवत् तदुभयत्वस्य लक्षणयोद्देश्यतावच्छेदकत्वादिति प्राप्ते—**

निषादस्थपत्यधिकरण**न्यायेनादृष्टार्थत्वापत्तावपि लक्षणाया अन्याय्यत्वात् प्रयाजशेषाभिघारणन्यायस्याप्यत एवास्माभिरन्यथोपपादितत्वात् क्रियापदानुषङ्गेणात्र वाक्यद्वयेन प्रथमाद्युद्देशेन त्रिरभ्यास** एव **विधीयते ॥**

---

तथा प्रथमोत्तमावभ्यसेदिति । एवञ्च एकवाक्यतया दृष्टार्थत्वोपपत्तौ नादृष्टार्थत्वाय वाक्यभेदाङ्गीकारेण प्रत्येकं त्रिरभ्यासविधानमित्यर्थः । त्रित्वाप्राप्त्या तदनुवादानुपपत्तिं परिहरति—**एकादशानां हीति** । न्यायेनैव त्रिरभ्यासप्राप्तौ अन्यथा तदप्राप्तेः तन्त्ररत्नोक्तमनूद्य दूषयति-**अत एवेति** । **अतश्च लक्षणयेति**। यथैव अर्धमन्तर्वेदीति वाक्यद्वयगतान्तर्वेदिबहिर्वेदिपदाभ्यां देशविशेषलक्षणया देशस्य अर्धपदयोर्यूपलक्षणया तदुद्देशेन विधानमेकवाक्यतयैव तथैवेहापि यदर्थं त्रित्वं तदेव सङ्ख्यासम्पत्तिरूपं द्विरुक्तत्रिपदाभ्यां लक्षयित्वा उपपद्यते विधानमित्यर्थः । **यत्त्वत्र** सिद्धान्ते **प्रकाशकारैरुक्तं** अर्धशब्दाभ्यामेकोद्देश्यलक्षणा यूपस्यैकत्वात्[1] सम्भवति; इहतु प्रथमोत्तमाशब्दलक्ष्यस्य एकस्योद्देश्यस्यासम्भवात् अनेकोद्देश्यप्रयुक्तवाक्यभेदावश्यम्भाव इति, तत् अर्थतोऽनूद्य दूषयति—**न च प्रथमोत्तमयोरिति** । एवमुभयत्वस्य लक्ष्यतावच्छेदकत्वाङ्गीकारेण एकोद्देश्यस्य लक्ष्यस्य सम्भवान्न वाक्यभेद इत्युक्ते लक्षणाद्वयापादनेनैव पूर्वपक्षं दूषयन् सिद्धान्तमाह —**निषादेति** । यदि पञ्चदशसामिधेनीरिति वाक्ये सङ्ख्या विहिता भवेत् तदा एकादशानं पाठादपेक्षितसङ्ख्यापूरकतया अयं विधिर्न भवेत्; न त्वेतदस्ति । वाक्यद्वये त्रिरभ्यासस्य विध्यावश्यकत्वे तत एव पञ्चदशत्वलाभेन सामिधेनीवाक्ये तदनुवादमात्रतोपपत्तौ

---

1. B. पदस्यैकत्वात्

अत एवैकादशानामृचां प्रथमोत्तमयोस्त्रिस्त्रिरभ्यासे पञ्चदशत्वसम्पत्तेः। वस्तुतः 'पञ्चदश सामिधेनीरनुब्रूयात्' इत्यत्र नैव सङ्ख्या विधीयते इत्युक्तं कौस्तुभे। अतः पञ्चदशसङ्ख्याया अप्राप्तत्वात् तत्सम्पत्त्यर्थत्वेन लक्षणया अभ्यासविध्यनुपपत्तेस्त्रिरभ्यास एवानेन विधीयते। 'ताः पञ्चदश सम्पद्यन्ते' इति तु 'त्रिः प्रथमामन्वाह' इत्यस्यार्थवादमात्रमिति ध्येयम्। अतश्चैकविंशत्यादावपि प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानां प्राकृताधिकानां विकृतावागम इति सिद्धम्॥

---

(९)—षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥ प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥ अयज्ञवचनाच्च ॥ ३६ ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ प्रकृतिदर्शनाच्च ॥ ३८ ॥ आम्नातं परिसङ्ख्यार्थम् ॥ ३९ ॥ उत्क्रमभावदर्शनम् ॥ ४० ॥ गुणादयज्ञत्वम् ॥ ४१ ॥

ज्योतिष्टोमप्रकरणे सामाम्नातष्षोडशी ज्योतिष्टोमाङ्गमुत नेति चिन्तायां—'षोडशिना वीर्यकामस्स्तुवीत' इत्यनेन तस्य पुरुषार्थत्वावगमेन गोदोहनादिवत् प्रकरणबाधान्न ज्योतिष्टोमाङ्गत्वम्। न च 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति वचनेन संयोगपृथक्त्वन्यायेन प्रकृत्यर्थतेति वाच्यं, उत्तरेऽहन् द्विरात्रस्य गृह्यते मध्यमेऽहंस्त्रिरात्रस्य चतुर्थे चतुर्थेऽहन्यहीनस्य' इत्यादिविकृतिप्रायपाठेन वैकृताग्निष्टोमाभिप्रायत्वात्॥

---

विशिष्टविध्यङ्गीकारस्यायुक्तत्वादित्यभिप्रेत्याह—अत एवैकादशानामिति। इति सिद्धमिति। अनेनैव न्यायेन माध्यन्दिनपवमानार्भवपवमानयोः पञ्चसप्तसामकयोः पञ्चदशसप्तदशस्तोमकत्वार्थं प्राकृतैः सामभिः यावानभ्यासः प्रकृतौ क्लृप्तः, तदधिकानामेव साम्नां विवृद्धस्तोमके आगम इति ज्ञेयम्।

---

षोडशिनो वैकृतत्वम्।

समाम्नात इति। 'य एवं विद्वान् षोडशिनं गृह्णाति' इति वाक्येन विहित इत्यर्थः। वैकृताग्निष्टोमेति। एवञ्चाग्निष्टोमपदसार्थक्यं भवति। इतरथा प्रकरणादेव तदङ्गत्वोपपत्तेः

**वस्तुतस्तु— अग्निष्टोमादिपदानां संस्थावाचित्वस्थापनात् अग्निष्टोमसंस्थाकायां प्रकृतौ विकृतौ वा षोडशिसंस्थाया निवेशायोगेन** विधातुमशक्तेर्द्विरात्रादिविधेरयमर्थवाद **एव।** यत्र संस्थान्तरयुक्तेऽपि क्रतावयं पूर्वसंस्थाबाधेन ग्रहीतुमुचितस्तत्र किमु वक्तव्यं **विरुद्धसंस्थान्तररहितद्विरात्रादाविति स्तुतेः।** अतः **प्रकृत्यङ्गताग्राहकप्रमाणाभावान्न प्रकृत्यङ्गत्वमिति प्राप्ते—**

---

**तद्वैयर्थ्यापत्तेरित्यर्थः। विधातुमशक्तेरिति।** यद्यपि अग्निष्टोमवाक्येन अग्निष्टोमसंस्थाके षोडशिग्रहणमात्रविधिः प्रतीयते न तु षोडशिसंस्थाविधिः, येन विधानाशक्तिः स्यात्, तथापि विहितेऽपि ग्रहणे तदुत्तरकालानुष्ठेयतत्स्तोत्रक्रतोपरमस्य आवश्यकत्वात् तत्र तद्विधानानुपपत्ति-रित्यर्थः। **यत्तु** सिद्धान्ते तन्त्ररत्ने "न चोत्तरेहन्द्विरात्रस्येत्यादिवाक्यशेषोऽयं सम्भवति। न हि द्विरात्रेषु उत्तरमग्निष्टोममस्ति; नापि त्रिरात्रेषु मध्यमम्। नापि चतूरात्रेषु चतुर्थं तत्संस्थम्" इत्युक्तम्। तद्दूषयितुं स्तुतिप्रकारमुपपादयति—**यत्र संस्थान्तरेति।** द्विरात्रद्वितीयाहः चतूरात्रचतुर्थाहश्चाहीनान्त्यत्वात् तत्र सामान्यशास्त्रविहितातिरात्रसंस्थाकत्वेन नाग्निष्टोमस्य काम्यो-क्थ्यातिरात्रयोः प्रसक्तिः। तथा त्रिरात्रमध्यमाहः इतराहीनचतुर्थाहश्च द्वादशाहिकषडह-द्वितीयचतुर्थविकृतित्वेन उक्थ्यसंस्थाकत्वात् अहीनान्त्यवदेव न तयोस्तत्रापि प्रसक्तिः। अतो यत्राग्निष्टोमोक्थ्यातिरात्रसंस्था उपदिष्टाः सन्ति, तत्तद्बाधेन षोडशी ग्रहीतुमुचितः तदा द्विरात्राद्यहस्सु पूर्वोक्तेषु अग्निष्टोमाद्युपदेशाभावेन बाधाप्रसक्तौ सुतरां स ग्रहीतुं युक्तः तथाच द्विरात्रादिद्वितीयाहस्स्वेव विकृतिभूतेषु ग्रहणं कार्यं न तु प्रकृताविव्यर्थः।

अत्र सिद्धान्ते तन्त्ररत्ने षोडश्युत्पत्तिवाक्ये षोडशिग्रहणभावनाविधिमिवाङ्गीकृत्य तस्यां भावनायां; प्रकरणोपस्थितक्रतूपकारस्यैव भाव्यत्वेनान्वये सति तेनैव परिपूर्णं वाक्यं नैव विकृत्यर्थतया विलम्बं सहते। यदि हि स्ववाक्ये क्रियापूर्ति[1]र्न स्यात्, अथवा स्ववाक्य एव विकृत्यर्थताबोधकपदान्तरसमभिव्याहारः स्यात्, यथा 'द्वादशाहीनस्य' इत्यादौ तदा स्यादप्युत्कर्षः, न त्वेतदस्ति। यानि तु विकृतिसम्बन्धबोधकानि वचनानि तानि प्रयोजना-न्तरार्थं विकृतिसम्बन्धबोधकानीत्येवं षोडशिग्रहणेन क्रतूपकारं भावयेदिति वाक्यार्थप्रदर्शनेन क्रत्वङ्गत्वमुपपादितम्। **तदयुक्तम्।** स्वयमेवाधिकरणारम्भे षोडशिना वीर्यकामः स्तुवीतेति-वाक्येन फलार्थत्वस्योक्तत्वेन दुर्बलप्रकरणकल्प्यक्रतूपकारस्य भाव्यत्वानुपपत्तेः। स्ववाक्यो-

---

1. A. किमत्रापूर्ति

षोडश्यादिशब्दास्तावदनेकेषु प्रयुज्यमाना अपि संस्थायामेव शक्ताः। तद्व-ज्ज्योतिष्टोमे निरूढलक्षणया तद्वति क्रत्वन्तरे साम्प्रतिकलक्षणया ग्रहणे स्तोत्रे च तथैवे-त्यादि संस्थाधिकरणे कौस्तुभे च द्वितीये क्षुण्णम् ॥

तदिह 'य एवं विद्वान् षोडशिनं गृह्णाति' इत्यत्र भाष्यकारादिलिखनात् संस्थैव ग्रहणविशिष्टा विधीयते। षोडशिशब्देन नागृहीतविशेषणान्यायेन संस्थावचनेनापि तद्विशिष्टक्रतोरुपस्थापनेन ग्रहणेन संस्थावन्तं क्रतुं कुर्यादिति वाक्यार्थप्रतीतेः। जायते हि यागाभ्याससाधनीभूतद्रव्यसंस्कारद्वारा ग्रहणेनापि संस्था। अतश्च तत्र ग्रहण-विशिष्टसंस्थोत्पत्तिर्न विरुध्यते। षोडशिशब्दस्य ग्रहणमात्रपरत्वमङ्गीकृत्य तन्मात्रविधिस्तु लक्षणापत्तेरेवायुक्तः ॥

अत एवोत्पन्नायास्संस्थाया एव वीर्यार्थत्वेन विधिर्न तु स्तोत्रस्य। तस्य 'एकविंशं (स्तोत्रं) भवति प्रतिष्ठित्यै' इति वचनप्राप्तस्य साधुत्वार्थमनुवादात्।

---

पात्तषोडशिपदस्यैव भाव्यपरत्वे सति 'असंयुक्तं प्रकरणात् (जै सू ३-३-११) इति न्यायेन प्रकरणविनियोगानुपपत्तेश्चेत्यभिप्रेत्य अन्यथा वाक्यार्थं वर्णयन् सिद्धान्तमाह— **षोडश्यादिशब्दा इति**। एतच्च संस्थायामेव शक्तत्वाभिधानं प्राचां सरणिमनुसृत्यैव ज्ञेयम्। **मम तु** प्रतिभाति—स यज्ञानां षोडशधेन्द्रियं वीर्यमात्मानमभिसमखिदत् तत् षोडश्यभवत् न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडशं स्तोत्रं षोडशं शस्त्रम् तेन षोडशी' 'तत् षोडशिनः षोडशित्वम्' इत्यादितैत्तिरीयार्थवादात् स्तोत्रशस्त्रयोरेव तत्पदस्य शक्तिः अन्यत्र संस्थादिषु तु निरूढलक्षणैव। एवञ्च वीर्यकामवाक्ये संस्थाग्रहणे प्रमाणान्तरमेव मृग्यमिति। यद्यपि तन्त्ररत्नादिग्रन्थेषु आपाततो ग्रहणमात्रविधिभ्रमोऽपि सम्भवति, तथापि अनेनोत्पन्नस्य षोडशिनेति वाक्येन फलार्थस्यापि तत्रोक्तेः संस्थाविधानतात्पर्यमेवोत्पत्तिवाक्येऽवसीयते; इतरथा षोडशि-पदवाच्यग्रहणस्यैवोत्पन्नस्य फलार्थत्वेन विनियोगापत्तौ षोडशिसंस्थायाः काम्यत्वानुपपत्तेः अतः संस्थायाः काम्यत्वव्यवहारस्य बहुश उपपादितस्योपपत्तये उत्पत्तिवाक्येपि तस्या एवोत्पत्ति-र्युक्तेत्यभिप्रायेण भाष्यकारादिलिखनादित्युक्तम्। **जायते हीति**। षोडशियागाभ्यासार्थं ग्रहणे कृते तदुत्तरं षोडशिस्तोत्रकरणात् तत्संस्थाकः क्रतुः निष्पद्यत इत्यर्थः। यथैव यूपं च्छिन-त्तीति यूपोत्पत्तिवाक्ये छेदनेन यूपमुत्पादयेदिति वाक्यार्थमङ्गीकृत्य छेदनादिविशिष्टयूपोत्पत्तिः तथैवेहापीत्याह—**अतश्चेति**। अतस्तन्त्ररत्नादिग्रन्थेषु ग्रहणोत्पत्तिविधिभ्रमो न कार्य इत्याह— **षोडशिशब्दस्येति**। **लक्षणापत्तेरिति**। सांप्रतिकीति शेषः। **साधुत्वार्थमिति**। यथैव सौर्यादिवाक्येषु अङ्गेन निर्वापेण अङ्गिनो यागस्य लक्षणायां अतिदेशप्राप्तत्वान्निर्वपत्तिः

अत एव **स्तोत्रं ग्रहणं च संस्थासम्पादकतया वाक्याच्च तदङ्गमेव, न तु ज्योतिष्टोमाङ्गमित्यप्यविवादमेव ॥**

**अतश्च संस्थायाः फलार्थत्वात्** यद्यपि प्रकरणं **'चतस्रस्सोमसंस्थाः' इत्यादिवचनं च नाङ्गताबोधनक्षमं, आश्रयत्वसम्बन्धेनापि तदुपपत्तेः। तथाऽपि 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये, अतिरात्रे ब्राह्मणस्य गृह्णीयात्' इत्यादिवचनैस्संयोगपृथक्त्वन्यायेन ज्योतिष्टोमाङ्गत्वस्याप्युपपत्तिः। न ह्येतान्यर्थवादरूपाणि, लिङ्श्रवणात् विनिगमनाविरहाच्च।** राजन्यादिपदस्य **स्तुतावनुपयुक्तत्वाच्च।** एतद्वाक्यार्थस्त्वग्रे **निरूपयिष्यते। निरूपितः कौस्तुभेऽपि।** नैमित्तिकप्रतिप्रसव**विधित्वाच्चैतेषां विकृतिप्रायपाठोऽप्यकिञ्चित्करः ॥**

---

अनुवादः, एवमिहापि स्तोत्रेण यागलक्षणायां तदङ्गत्वेन प्राप्तत्वात् स्तुवीतेत्यनुवाद इत्यर्थः। न ह्येतावता स्तोत्रग्रहणयोर्ज्योतिष्टोमाङ्गत्वमिति भ्रमितव्यमित्याह—**अत एवेति। यद्यपि प्रकरणमिति।** प्रकरणस्य वीर्यार्थत्वबोधकवाक्येन बाध एव। यच्च 'चतस्र' इति वचनं प्रतिप्रसवरूपं तस्य सोमाश्रयकत्वेन सोमसम्बन्धोपपत्तेः नाङ्गताबोधकत्वमिति भावः। **राजन्यादिपदस्येति।** यदि "उत्तरेहन्" इत्यादिवाक्येषु उत्तमवर्णब्राह्मणग्रहणं भवेत्, तदा पूर्वत्र राजन्यपदं "निकृष्टराजन्ययोग्योप्ययम्, किमुत उत्कृष्टब्राह्मणयोग्य" इत्येवं स्तुतिविधयोपयुज्येत न त्वेतदस्ति। अतोऽग्निष्टोमादिक्रतुयोग्यतया अग्निष्टोमादिपदानामिव कर्त्रन्तरयोग्यतया राजन्यपदस्य न स्तुतावुपयुक्तत्वम्, अतिरात्रवाक्ये ब्राह्मणपदानर्थक्यं चेत्यर्थः। **अत्र प्रकाशकारैः** 'अप्यग्निष्टोम' इति वाक्ये अग्निष्टोमराजन्ययोरुद्देश्यत्वे उद्देश्यानेकत्वप्रयुक्तवाक्यभेदापत्तेः राजन्यपदार्थस्य अग्निष्टोमपदार्थविशेषणत्वे विशिष्टोद्देशापत्तेः कथञ्चित् षष्ठयन्तस्य इतरपदार्थान्वयव्युत्पत्तावपि प्रकरणप्राप्तानुवादोपपत्तौ विशिष्टोद्देशाङ्गीकारस्यायुक्तत्वात् अपेक्षितोद्देश्यपरत्वे सम्भवति अनपेक्षितनिमित्तत्वपरत्वायोगात् राजन्यपदं 'वासिष्ठानां नाराशंसः,' 'सप्तदश वैश्यस्य' इत्यादौ वासिष्ठवैश्यपदे इवोद्देश्यपरम्। उक्थ्यातिरात्रवाक्ययोस्तु प्रकरणप्राप्तानुवादसम्भवात् अगत्या विशिष्टोद्देशः पूर्वपक्ष इव सिद्धान्तेप्यपरिहार्य इत्युक्तम्। तदयुक्तमिति सूचयितुमाह—**एतद् वाक्यार्थस्त्विति।** तदयुक्तत्वं चाग्रे स्फुटीभविष्यति। **कौस्तुभेपीति।** रथन्तरपाद इति शेषः। **नैमित्तिकप्रतिप्रसवेति।** अनियतद्विरात्रादिविकृत्यङ्गभूतः षोडशी यथाऽनियतः तद्वदयमप्यग्निष्टोमाङ्गं षोडशीनैमित्तिकत्वादित्येवं तत्प्राये पाठो न त्वेतावता विकृत्यग्निष्टोमादिपरत्वं युक्तमाश्रयितुं तथात्वे सांप्रतिकीलक्षणापत्तेरिति भावः। **यत्तु प्रकाशकारैः** उक्थ्यादिवाक्यानां प्रकरणप्राप्तप्रकृत्यर्थत्वबाधेन उक्थ्यादिविकृतिविनि-

अस्तु वा **विद्वद्वाक्येन** संस्थाङ्गतया **ग्रहणमात्रविधिः। तथाऽप्युक्तवाक्येनैव संस्थाया वीर्याङ्गत्वे सिद्धे निरुक्तवाक्येनैव तस्याः प्रकृत्यङ्गता, संस्थास्वरूपं तु** ग्रहणादिविधितो **याज्ञिकप्रसिद्धिसिद्धमिति न कश्चिद्विरोधः।** अतस्सिद्धं **नैमित्तिकमिदं प्रकृत्यङ्गम्। तेन च नित्यसंस्थायाः प्रकृतौ राजन्यस्य बाध इति बाधोपयोगिताऽपि। न चैवं** कासुचिद्विकृतिषु **तत्पुनश्श्रवणमनर्थकमिति वाच्यं, अनैमित्तिकत्वाद्यर्थत्वस्य प्रयोजनत्वेन वक्ष्यमाणत्वात्॥**

---

योजकत्वे अप्राप्तविधित्वे गौरवम्। प्रकृत्यर्थत्वे तु अतिदेशप्राप्त एवाङ्गत्वे नित्यतामात्र-बोधनात् लाघवमित्युक्तम्। तत् अतिदेशप्रवृत्तेः पूर्वमेवोपदेशरूपतया प्रवृत्तौ अङ्गत्व-स्याप्यनेनैव बोधनादयुक्तमिति सूचयिष्यते 'अभावादतिरात्रेषु' (१०–५–१३) इत्यधिकरणे पूज्यपादैः। ग्रहणविशिष्टसंस्थाविधौ गौरवापत्तिमालोच्य पक्षान्तरमाह—**अस्तु वेति। संस्थाङ्ग-तयेति।** एतच्च षोडशिपदस्य संस्थापरत्वमङ्गीकृत्योक्तम्। वस्तुतः षोडशिनमिति पदं योग्यत्वात् पात्रपरमेव। अथवा नामधेयमेव। अत एव कौस्तुभे षोडशिसंज्ञकं ग्रहण-माम्नातमित्युक्तम्। ततः मान्त्रवर्णिकदेवताबलात् यागाभ्यासे अर्थसिद्धे, स्तोत्रस्य तदङ्गत्वात् तत्कृतषोडशिसंस्थाया अपि सिद्धिरिति ध्येयम्। **ग्रहणादिविधित इति।** यथैव चात्वाला-देरुत्पत्तिविध्यभावेऽपि याज्ञिकप्रसिद्ध्यवगतपदार्थवृत्त्यधिकरणत्वेनैव[1] 'चात्वाले कृष्णविषाणां प्रास्यति' इति विधेः प्रवृत्तिः, तथैव याज्ञिकप्रसिद्ध्यवगतषोडशिपदार्थोद्देश्यतयैव ग्रहणविधेः प्रवृत्तिसम्भवान्न तदंशेप्युत्पत्तिविध्यपेक्षेति भावः। **अतः सिद्धमिति।** 'अप्यग्निष्टोमे' इत्येत-द्वाक्यगतराजन्यपदस्य 'अप्युक्थ्ये' इत्यत्रानुषङ्गात् अग्निष्टोमोक्थ्ययोः राजन्यकर्तृकत्वे निमित्ते, अतिरात्रे च ब्राह्मणकर्तृकत्वे निमित्ते विधानात् उक्थ्यातिरात्रयोरिव अग्निष्टोमप्रकृतेरपि इदं नैमित्तिकमङ्गमित्यर्थः। अत्र च तन्त्ररत्ने प्राप्तबाधप्रसङ्गेन प्रकरणसम्बन्धः षोडशिनो बाध्यते ऽप्राप्तत्वेनेति प्राप्तबाधवत् अप्राप्तबाधोऽपि चिन्त्यत इत्यध्यायसङ्गतिरित्युक्तम्। तत्र स्वयं प्राप्तबाधविधयापि सङ्गतिं दर्शयति—**तेन चेति। कासुचिदिति।** द्विरात्रादिविकृतिष्वित्यर्थः।

---

1. A. चात्वालदेरुत्पत्तिविध्यवगतपदार्थवृत्त्यधिकरणत्वेनैव

## (१०)—तस्याग्रयणाद्ग्रहणम् ॥ ४२ ॥ उक्थ्याच्च वचनात् ॥ ४३ ॥

**षोडशिन्येव किमाग्रयणादेव ग्रहणं उतोक्थ्यादपीति चिन्तायां—**'आग्रयणाद्गृह्णाति' **इति वचनात्** आग्रयणापादानकत्ववत् 'उक्थ्याद्गृह्णाति' इतिवचनादुक्थ्यस्याप्यपादानत्वश्रुतेस्तस्मादपि विकल्पेन **समुच्चयेन वा ग्रहणम्।** न च 'उक्थ्याद्गृह्णाति' इत्यत्रोक्थ्यात्परस्ताद्गृह्णातीत्यर्थाङ्गीकारेणोक्थ्यपरभावमात्रविधानान्नापादानविधानमिति वाच्यं, दिग्योगनिमित्तकत्वे पञ्चम्या उपपदविभक्तित्वेन कारकविभक्तेः बलीयस्तया अपदानार्थकत्वस्यैवावगतेः। परस्तादित्येवंविधदिक्छब्दयोगाभावे पञ्चम्या दिग्योगनिमित्तकत्वानुपपत्तेश्च। 'अन्यारादितरर्ते दिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' इति सूत्रेण शब्दयोग एव पञ्चमीविधानादिति प्राप्ते—

**नेयमपादानपञ्चमी, तथात्वे अष्टदोषदुष्टविकल्पापत्तेः। समुच्चये नैरपेक्ष्यबाधापत्तेश्च।** अपि तु तं पराञ्चमुक्थ्येभ्यो गृह्णाति' इति शाखान्तरवचनैकवाक्यतया दिग्योगनिमित्तैव, विकल्पाद्यपेक्षया उपपदविभक्तित्वस्यापि स्वीकारे बाधकाभावात्। **न च शब्दयोग एव सा, 'मासात्प्रवक्ष्यामि' इत्यादौ शब्दयोगाभावेऽप्यर्थयोगमात्रेण तद्दर्शनात्। अत एव** 'ङ्याप्प्रातिपदिकात्; **'वृत्तादनन्तरस्य' इत्यादिसूत्रभाष्यकृद्व्यवहारोऽपि सङ्गच्छते ॥**

**अतश्च यथैव सहशब्दाभावेऽपि 'वृद्धो यूना' इत्यादिप्रयोगदर्शनादर्थमात्रविवक्षयाऽपि तृतीया तथैव दिगर्थविवक्षयैव पञ्चम्या अपि नानुपपत्तिः ॥**

---

### तस्याग्रयणाद्ग्रहणम्।

**विकल्पेनेति।** विधिभेदाद्विकल्पः। अंशतो ग्रहणसम्भवे विकल्पस्यान्याय्यत्वात् **समुच्चय इत्यर्थः। ङ्याप्प्रातिपदिकादिति।** यद्यपि 'प्रत्ययः' 'परश्च' इति सूत्राभ्यामिह परत्वं सिद्ध्यति तथापि ङ्याप्प्रतिपदिकात्पूर्वं परतो वा प्राप्तस्य नियममात्रेण त्वेतत्सूत्रप्रवृत्तेः, **वैयाकरणैरङ्गीकारात्** पञ्चम्या दिक्शब्दार्थयोगपरत्वमव्याहतमेव। "लोकेऽयमथशब्दः वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः" इति शास्त्राद्यसूत्रगतभाष्यकृत्प्रयोगः। तत्र अनन्तरशब्दो दिक्शब्दार्थक इत्यर्थः। इतरत् स्पष्टार्थमधिकरणम्।

न च 'तं पराञ्चम्' इत्यत्रैव प्राप्तषोडश्यनुवादेन पराक्छब्दार्थस्योक्थ्यशब्दार्थस्य विधौ वाक्यभेदापत्तेरुक्थ्येभ्य इत्यपि पञ्चम्यपादानत्वार्थिकैव। पराञ्चमिति तु 'पराचीस्सामिधेनीरनुब्रूयात्' इतिवत् अनभ्यासवाचित्वान्नित्यानुवाद इति वाच्यं, उपपदविभक्तिस्थले प्राचां परस्परान्वयस्य व्युत्पन्नत्वात् पराक्छब्दस्य तात्पर्यग्राहकस्य सत्त्वे पञ्चम्या एव तदर्थकत्वेन वाक्यभेदाप्रसक्तेश्च। उक्थ्यपात्रस्यैकत्वेनापादानत्वे बहुवचनानुपपत्तेश्च॥

अतः उक्थ्यप्रचाराणां बहुत्वात्तदुत्तरकाल एव पञ्चम्यर्थोऽनेन विधीयत इति तदेकवाक्यतयाऽस्यापि तद्विधायकत्वान्नोक्थ्यापादानकत्वं षोडशिग्रहणस्येति सिद्धम्। बाधोपयोगिता च पक्षे आग्रयणस्य पूर्वपक्षे बाधात् द्रष्टव्या॥

---

## (११)—तृतीयसवने वचनात्स्यात्॥ ४४॥ अनभ्यासे पराक्छब्दस्य तादर्थ्यात्॥ ४५॥ उक्थ्यविच्छेदवचनत्वात्॥ ४६॥ आग्रयणाद्वा पराक्छब्दस्य देशवाचित्वात्पुनराधेयवत्॥ ४७॥ विच्छेदस्तोमसामान्यात्॥ ४८॥

इदमधिकरणं सूत्रकारेण पूर्वाधिकरणपूर्वपक्षमध्ये कृतमपि व्याख्यासौकर्यार्थं पृथङ्निरूप्यते। षोडशियागाभ्यासः किं नियमेन सवनत्रये स्यात् उत पक्षे तृतीयसवन एवेति चिन्तायां—

'सवने सवने गृह्णाति' इति शाखान्तरवचनेनानन्यशेषभूतेन सवनत्रयेऽपि तावद्ग्राह्यः इत्यविवादमेव। अतश्च तदेकवाक्यतया 'प्रातस्सवने ग्राह्यः तेजो वै प्रातस्सवनं तेजस एव वज्रं निर्मिमीते, माध्यन्दिने सवने ग्राह्यः ओजो वै माध्यन्दिनं सवनं ओजस एव वज्रं निर्मिमीते, तृतीयसवने ग्राह्यः पशवो वै तृतीयसवनं पशुभ्य एव वज्रं निर्मिमीते, यत्प्रातस्सवने गृह्णीयात् उत्तरे सवने व्यतिरिच्येत, यन्माध्यन्दिने तन्मध्यतो वज्रं निहन्यात्, तृतीयसवने ग्राह्यः तत्सर्वेषु सवनेषु सङ्गृह्णाति

---

तृतीयसवने वचनात् स्यात्।

**इदमधिकरणमिति।** पूर्वाधिकरणपूर्वपक्षसूत्रे हि "तस्याग्रयणाद्ग्रहणम्" उक्थ्याच्च वचनात्" इत्युभे। ताभ्यां हि षोडशिन अग्रयणपात्रादिवोक्थ्यपात्रादपि वचनाद्ग्रहणमिति पूर्वपक्षं कृत्वा तस्मिन्नपरिसमाप्ते एव मध्ये "तृतीयसवने वचनात् स्यात्" इति सूत्रम्।

**न पूर्वे सवने आर्तिं नीतः' इति शाखान्तरवचनेऽपि सवनत्रय एव विधीयते। ग्राह्य इति कृत्यप्रत्ययस्य सर्वत्र श्रवणेन 'साम्ना स्तुवीत' इतिवत्** नावमिकन्यायाभावात्, त्र्यम्बकवाक्य इव **मीमांसापदाश्रवणेन तस्यार्थवादत्वकल्पनानुपपत्तेश्च। जर्तिलयवागून्याये-नैकवाक्यतालाभार्थं पूर्वस्य विधेरर्थवादत्वं प्रकल्प्य तार्तीयसवनिकस्यैव विधित्वकल्पना तु विधिभेदेऽपि** शाखान्तरैकवाक्यता**लाभस्याविशिष्टत्वाद्विकल्पापादकत्वाच्च न शङ्क्येति प्राप्ते—**

---

**अनन्तरञ्च** समाप्तस्य पूर्वपक्षस्य युक्त्यन्तरप्रदर्शनार्थं "अनभ्यासे पराक्शब्दस्य तादर्थ्यात्" उक्थ्यविच्छेदवचनाच्चे"ति सूत्रद्वयम्। एवञ्च मध्ये यत् षोडशिनः तृतीयसवने **अन्ययोश्च** सवनयोः ग्राह्याग्राह्यविचारः कृतः, तद्धेतुं कैश्चिदुक्तं तन्त्ररत्नादौ प्रदूष्य स्वतन्त्रस्य महर्षेरिच्छैव तत्र हेतुरित्येवं हेतूपन्यासपुरस्परं तन्त्ररत्नकारादिभिः असमाप्तैरेव [असमाप्त एव] पूर्वपक्षे सूत्रानुरोधेन मध्ये व्याख्यातमपि मया पूर्वाधिकरणं सम्पूर्णं समाप्यव्याख्या सौकर्यार्थं भेदेन व्याख्यायत इत्यर्थः। **नावमिकन्यायाभावादिति।** क्वचिद्विकृति-प्रकरणे "यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा नान्ववायन् तस्माद्य एवं विद्वान् साम्ना स्तुवीत" इति प्रत्यक्षविधिश्रवणात् साममात्र एव विधिः। यदृचेत्यत्र तु तदभावात् नहि निन्दान्यायेन साम्न एव स्तुतिरिति नवमद्वितीयपादे अर्थैकत्वादित्यधिकरणे निरूपितम्। न ह्ययं न्यायोऽत्र प्रसरति 'ग्राह्य' इत्येवं सवनद्वयेपि[1] कृत्प्रत्ययश्रवणेन तृतीयसवन इव विधित्वनिश्चयादित्यर्थः। **त्र्यम्बकवाक्य इवेति।** चातुर्मास्येषु त्र्यम्बकहोम-मधिकृत्य "अभिधार्या अनभिधार्या इति मीमांसन्ते यदभिधारयेत् रुद्रायास्ये पशूनिदध्यात्, यन्नाभिधारयेत् न रुद्रायास्ये पशूनभिदध्यात्। अथो खल्वाहुः अभिधार्या एव न ह्यनभिघृतं हविर्भवति' इति श्रुते वाक्ये अनभिधार्या इति न पृथगभिधारणप्रतिषेधविधिः तस्य मीमांसा-विशेषणत्वेन विधितात्पर्याभावादितीहैवाष्टमपादे वक्ष्यते। तद्वदिहापि स्यादित्यत आह— **जर्तिलेति। शाखान्तरैकवाक्येतेति।** एकवाक्यतालाभाय हि तत्र तच्छेषत्वमङ्गीकृतम्। तत्तु विधिभेदे तृतीयसवनविध्येकवाक्यताया अलाभेपि 'सवने गृह्णाति' इति वाक्यान्तरैकवाक्य-ताया लाभे किमित्यङ्गीकार्यम्। वाक्यैकवाक्यतापेक्षया पदैकवाक्यताया लघुभूतत्वेपि इह विकल्पापत्तेः तामपि परित्यज्य वाक्यैकवाक्यताश्रयणमेव[2] न्याय्यमित्यर्थः। स्पष्टार्थमन्यत्।

---

1. A. कृत्प्रत्यय
2. A. ताप्रापणमेव

पूर्वसवननिन्दापूर्वकतृतीयस्तुतेस्तन्मात्रविधिपरत्वावसायात् पूर्वविधिद्वयस्यापि जर्तिलयवागून्यायेन पदैकवाक्यतालाभार्थं तच्छेषत्वस्यैव कल्पनात्, शाखान्तरैकवाक्यत्वाभावेऽपि क्षतिविरहात्, विकल्पस्य फलमुखत्वेनादोषत्वात्। अस्यां शाखायां तार्तीयसवनिक एव विधिः सवनत्रयग्रहणाच्च फलाधिक्यम्। न च पूर्वयोस्सवनयोरुक्थ्यपरभावस्याभावः, सवनत्रयेऽपि उक्थ्यानां सत्त्वात्॥

---

## (१२)—उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम्॥ सस्तुतशस्त्रो वा तदङ्गत्वात॥ ५०॥ लिङ्गदर्शनाच्च॥ ५१॥ वचनात्संस्थान्यत्वम्॥ ५२॥

'षोडशिनो वैकृतत्वम्' इत्यत्र षोडशिसंस्थायाः प्रकृत्यङ्गत्वं 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये' इति वाक्याभ्यामित्युक्तम्। तदिहाक्षिप्यते—न ह्यत्र राजन्ये निमित्ते षोडशिसंस्थाया अग्निष्टोमाङ्गत्वेन विधिः अग्निष्टोमादिपदवाच्या संस्थैव उद्देश्या भवेत् तद्विशिष्टो ज्योतिष्टोमो वा, नोभयथाऽपि सम्भवी, एकसंस्थायामपरसंस्थाऽसम्भवात्। संस्था हि तत्तत्स्तोत्रोत्तरं तस्मिन् क्रतुप्रयोगे स्तोत्रान्तराभावः। न चाग्निष्टोमस्तोत्रादेरन्तिमत्वे षोडशिस्तोत्रस्यान्तिमता सम्भवति॥

अत एव पूर्वपूर्वसंस्थोपमर्देन संस्थान्तरविधिरिति सिद्धान्तोऽप्यसङ्गतः। उपमर्दस्याशब्दार्थत्वेनोद्देश्यविधेयभावेन वाक्यार्थस्य निरूपयितुमशक्यत्वात्। पूर्वसंस्थोपमर्देऽपि षोडशिन्युक्थ्यपरभावविधानादग्निष्टोमाभ्यासोत्तरत्वसिद्धान्तसिद्ध्यनापत्तेश्च।

---

उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्।

**वाक्याभ्यामिति**। वाक्यद्वयं अतिरात्रे ब्राह्मणस्येत्यस्याप्युपलक्षणम्। तस्यापि प्रकृत्यङ्गताबोधकत्वस्योक्तत्वात्। अत्र तन्त्ररत्ने अग्निष्टोमपदस्य निमित्तपरत्वमङ्गीकृत्य सस्तुतशस्त्रषोडश्यनुष्ठाने षोडशिसंस्थाया एवापत्तौ अग्निष्टोमसंस्थागतनिमित्तत्वव्याघातापत्तेः अस्तुतशस्त्र एव षोडशीति पूर्वपक्षं प्रापय्य अग्निष्टोमपदस्य तत्संस्थक्रतुपरत्वाश्रयणेनोद्देश्यपरत्वमङ्गीकृत्य तत्संस्थोपमर्देन षोडशिसंस्थाविधानं सिद्धान्तितम्। तद्दूषयितुं पूर्वपक्षप्रकारमारचयति—**नह्यत्रेति**। **स्तोत्रान्तराभाव इति**। एतेन षोडशिस्तोत्रोत्तरं कतिपयपदार्थानुष्ठानेपि न संस्थात्वहानिः। स्तोत्रान्तराभावप्रयुक्तत्वेनैव संस्थात्वाङ्गीकारादिति सूचितम्। **उक्थ्यपरभावेति**। "तं पराञ्च-

नाप्यग्निष्टोमादिपदैः शुद्धं ज्योतिष्टोमं लक्षयित्वा तदुद्देशेन षोडशिसंस्थाविधिः, वाक्यद्वयवैयर्थ्यापत्तेः ॥

अतो जघन्येऽनुषक्ते षोडशिपद एव ग्रहणमात्रं षोडशिसंस्थाङ्गभूतं लक्षयित्वा तदेवाग्निष्टोमादिसंस्थोद्देशेन तद्विशिष्टक्रतूद्देशेन वा विधीयते। तत्र च देवतासंयोगाद्याग्भ्यासोऽप्यार्थिकः। न चैतावता तदङ्गभूतस्तोत्रस्यापि करणं, तस्य प्रधानभूताग्निष्टोमादिसंस्थोपमर्दापत्त्या बाधादिति प्राप्ते—

न तावत्संस्थाविशिष्टज्योतिष्टोमोद्देशेन ग्रहणविधिः, अग्निष्टोमादिपदेऽपि लक्षणापत्तेः। नापि संस्थामात्रोद्देशेन, संस्थाङ्गत्वस्य प्रकरणादप्राप्ततया प्रतिप्रसवार्थकापिशब्दानुपपत्तेः। नापि संस्थायां निमित्तभूतायां ज्योतिष्टोमाङ्गत्वेन विधिः, राजन्यस्यापि निमित्तत्वेनो-

---

मुक्थ्येभ्यो गृह्णाति" इति वचनेनेत्यर्थः। देवतासंयोगादिति। "उपयाम गृहीतोसीन्द्राय वा षोडशिने" इति मन्त्रवर्णप्राप्तेति शेषः। बाधादिति। न चाग्निष्टोमाभ्यासात् पूर्वमनुष्ठानेनाबाधः शङ्क्यः। तस्य षोडश्यभ्यासस्यागन्तुकत्वेन क्लृप्तक्रमाविरोधेन अन्त एव निवेशापत्त्या बाधस्यैव युक्तत्वात्। अत्र प्रकाशकारैः अग्निष्टोमवाक्ये प्रकरणप्राप्तानुवादमग्निष्टोमपदमङ्गीकृत्य राजन्योद्देशेन षोडशिग्रहविधिः। उत्तरवाक्ययोस्तु प्रकरणप्राप्तानुवादत्वासम्भवात् तत्तत्कर्तृकतत्तत्संस्थाकज्योतिष्टोमोद्देशेन तद्विधिरिति सिद्धान्तितम्। तत्राद्यवाक्ये वक्ष्यमाणरीत्या अग्निष्टोमपदस्य सार्थक्ये सम्भवति अनुवादत्वकल्पनस्यायुक्तत्वात् आद्यवाक्यगतराजन्यपदस्योत्तरत्रानुषङ्गेण एकस्यैव तस्यैकत्र उद्देश्यपरत्वं उत्तरत्रोद्देश्यविशेषणपरत्वमिति कल्पने वैरूप्यापत्तेः एकरूपतया राजन्यपदार्थान्वयेन वक्ष्यमाणेन तदयुक्तमिति सूचयिष्यति। इहतु पूर्वपक्षे अग्निष्टोमादिपदानामेवोद्देश्यत्वाङ्गीकारः; सोऽयुक्त इत्याह—न तावदिति। अग्निष्टोमादिपदेपीति। अपिना षोडशिपदे तदङ्गभूतत्वेन ग्रहणलक्षणा पूर्वोक्तादोषत्वेन सङ्गृहीता। संस्थाङ्गत्वस्येति। यदि प्रकरणात् संस्थाङ्गत्वं प्राप्तं काम्यश्रुत्या बाधितमनेन वाक्येन प्रतिप्रसूयेत तदा अपिशब्द उपपद्यते। न त्वेतदस्ति। संस्थाया अङ्गत्वेन स्वतः प्रकरणाभावेन तदङ्गत्वाप्राप्तेरित्यर्थः। राजन्यस्यापीति। यदि राजन्यस्य कर्तृत्वेनान्वयस्य व्युत्पन्नत्वात् राजन्यकर्तृकं ग्रहणमेवाग्निष्टोमादिसंस्थायां निमित्ते विधीयेत, तदा ब्राह्मणादिकर्तृकाग्निष्टोम एव राजन्यकर्तृकतद्ग्रहणस्य अङ्गत्वापत्तिः अतो राजन्यपदस्योद्देश्यपरत्वं निमित्तविशेषणत्वं वाऽङ्गीकर्तव्यम्। तत्रापि आद्ये प्रकरणप्राप्तज्योतिष्टोमाङ्गत्वानुपपत्तिः; द्वितीये षष्ठ्यन्तस्यासन्मते इतरपदार्थेऽन्वयासम्भवात् वाक्यभेदापत्तिः। अतः पृथङ्निमित्तत्वेनैवान्वयो वाच्यः। तद्विजातीयेन निमित्तद्वयेन

**द्देश्यानेकत्वापत्तेः।** अतः प्रथमोपस्थितेऽप्यग्निष्टोमादिपद **एव स्तोत्रलक्षणा तदभ्यास-लक्षणा वा। सप्तमी च सतिसप्तमी। तथाचाग्निष्टोमाभ्यासे कृते सतीत्यर्थाङ्गीकारात् तदभ्यासोत्तरकालताविशिष्टषोडशिसंस्थैव राजन्ये निमित्ते ज्योतिष्टोमाङ्गत्वेन विधीयते अर्थाच्च तस्य नित्याग्निष्टोमसंस्था काम्या चोक्थ्यसंस्था निवर्तते। काम्या तु षोडशि-संस्था** सर्वेषामेवेति **विशेषः।** अत एव **'तं पराञ्चमुक्थ्येभ्यः' इत्युक्थ्यपरभावोऽपि षोडशिनः काम्यप्रयोगे अतिरात्रसंस्थायां चेत्यपि बोध्यम्॥**

इयं ह्यत्र **स्थितिः प्रामाणिकी। अग्निष्टोमसंस्थायां नाग्निष्टोमस्तोत्रोत्तरं उक्थ्यादि किञ्चित्। उक्थ्यसंस्थायां तु तदुत्तरं उक्थ्यस्तोत्राणि न तु तस्याप्युत्तरं षोडश्यादि। षोडशिसंस्थायां तु तदुत्तरं षोडशिस्तोत्रं न तु तस्याप्युत्तरमतिरात्रादि। अतिरात्र-संस्थायां तु तेनैव समाप्तिरिति। तदिह काम्यायां षोडशिसंस्थायामतिरात्रान्तर्गत-षोडश्यभ्यासे च यथास्थित एवोक्थ्यपरभावः। अग्निष्टोमसंस्थोपमर्दे तु अग्निष्टोमाभ्या-सोत्तरत्वस्य वाचनिकत्वादुक्थ्यस्तोत्राणां लोप एव। एतस्यैव चात्यग्निष्टोम इति संज्ञा। 'अत्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति शाखान्तरवचनात्। उक्थ्यसंस्थो-पमर्दे तु तत्र उक्थ्योत्तरभावस्य** प्रतिप्रसवात् **न तत्रोक्थ्यानां लोपः। उक्थ्यसंस्थायाश्च**

---

विजातीयभाव्यरूपाक्षेपात् उद्देश्यानेकत्वप्रयुक्तवाक्यभेदापत्तिरित्यर्थः। **अतः प्रथमोपस्थितेपीति।** यद्यप्यग्निष्टोमादिपदेन तत्तत्संस्थाकज्योतिष्टोमाभिधाने लक्षणा, तथा षोडशिपदेपि सेति लक्षणाद्वयवत् स्तोत्रपरत्वे एका लक्षणा। गृह्णातेश्च समाप्तौ साऽपरेति लक्षणाद्वयं तुल्यम्। प्रत्युत क्रतौ निरूढलक्षणा मम। तव तु साम्प्रतिकीति विशेषः, **तथापि** राजन्यपदस्यैकरूप्येण निमित्तत्वेनान्वयेपि आद्यवाक्येन तस्मिन् विधीयमानस्य षोडशिग्रहणस्य प्रकरणादेवाग्निष्टोमसंस्थाकज्योतिष्टोमाङ्गत्वप्राप्तेः अग्निष्टोमपदवैयर्थ्यापत्तिरेव तद्वाक्यार्थाङ्गीकारे दूषणम्। अतः तत्सार्थक्याय स्तोत्रलक्षणा। अथवा स्तोत्रमात्रानन्तर्ये तदभ्यासाननुष्ठाने च तत्स्तोत्रस्य वैयर्थ्यापत्तेः तत्साध्ययागाभ्यासलक्षणैव युक्ता। एवमुक्थ्यवाक्येपि प्रकरणप्राप्त-ज्योतिष्टोमाङ्गत्वेन उक्थ्योत्तरकालविशिष्टषोडशिसंस्थाविधिः। ततश्च राजन्येन नित्याग्निष्टोमा-भ्यासेनैव न समाप्तिः कार्या। किन्तु उपरि षोडशिसंस्था; एवमुक्थ्यानुष्ठानेनैव न समाप्तिः किन्तु षोडशिसंस्थैवेत्यर्थः सिद्ध्यतीत्यर्थः। **सर्वेषामेवेति।** भवतीति शेषः। **अत एवेति।** तदभ्यासोत्तरत्वविधाने सति अग्निष्टोमाभ्यासे उक्थ्यानां स्वरूपेणैवाभावात् उक्थ्यपरभावलोपे सति तद्वचनमन्यपरम्। उक्थ्याभ्यासे तु न कोऽपि विवाद इत्यर्थः। तदेवोपपादयति— **इयमिति। प्रतिप्रसवादिति।** अग्निष्टोमाभ्यासोत्तरमुक्थ्याभ्यासे राजन्यकर्तृकषोडशिसंस्थायां

**काम्याया एव प्राप्तेस्तदुपमर्दे राजन्यस्य तन्निवृत्तिः।** अन्यथा **'अप्युक्थ्ये' इत्येतद्वाक्य-वैयर्थ्यापत्तेः।** मास्तु वा **काम्योक्थ्यसंस्थाया निवृतिः।** निरूपितं **चैतद्विस्तरेण रथन्तरचरणे कौस्तुभे। अतस्सस्तुतशस्त्र एव षोडशी संस्थारूपः उक्थ्याग्निष्टोम-संस्थोपमर्देन राजन्यस्य स्यादिति सिद्धम्॥**

**यानि तु 'अतिरात्रे ब्राह्मणस्य गृह्णीयात्' इत्यादीनि वचनानि तेषु न पूर्वसंस्थो-पमर्देन संस्थान्तरविधिः, प्रतिप्रसवार्थकापिशब्दाभावेनाग्निष्टोमादिवाक्यवैलक्षण्यप्रतीतेः अनुषङ्गाङ्गीकारे उक्थ्यवाक्ये तत्पाठवैयर्थ्यापत्तेः,** प्रथमोपस्थितातिरात्रपदस्य **स्तोत्र-लक्षकत्वे प्रमाणाभावाच्च। अतश्च जघन्यमनुषक्तं षोडशिपदमेव तद्यागाभ्यासलक्षकं,**

---

'तं पराञ्चम्' इति सामान्यवाक्येन उक्थ्यपरभावस्य प्राप्तस्य 'अप्यग्निष्टोमे' इति वाक्येन अग्नि-ष्टोमोत्तरत्वेन बाधितस्य 'अप्युक्थ्ये' इति वाक्येन प्रतिप्रसवकरणादित्यर्थः। **अन्यथेति।** काम्योक्थ्यसंस्थया ज्योतिष्टोमेऽवरोधे[1] सति षोडशिसंस्थाया बाधिताया अपिना कृतस्य प्रतिप्रसवस्य उक्थ्यसंस्थाया बाधं विनाऽनुपपत्तेः बाधान्निवृत्तिरित्यर्थः। **वस्तुतः** नापिना षोडशिसंस्थायाः प्रतिप्रसवः क्रियते। अपि तु अग्निष्टोम एवाग्निष्टोमाभ्यासोत्तरं विहितस्य षोडशिनो यो बाधितः उक्थ्यपरभावः तस्यैव प्रतिप्रसवमात्रम्। ततश्च राजन्यस्याग्निष्टोमे अग्निष्टोमाभ्यासोत्तरं षोडशी, अथवा उक्थ्याभ्यासोत्तरं वा कार्य इत्येवंरूपार्थबोधकतया 'अप्युक्थ्ये' इति वाक्यो-पपत्तौ काम्योक्थ्यसंस्थाबाधकत्वं नाश्रयणीयमित्यभिप्रेत्याह—**मास्तुवेति।** यदि तु अग्नि-ष्टोमस्य स्वतन्त्रोक्थ्यप्रयोजकत्वापत्तेर्लाघवानुरोधेन कामप्रयुक्तोक्थ्योत्तरकालाविशिष्टत्वेनैव प्रति-प्रसवविधिर्युक्त इत्युच्येत, तदा काम्यषोडशिसंस्थायामेव सामान्यतः प्राप्तस्य उक्थ्यपरभावस्य राजन्यपुरस्कारेण विशेषविहितेन अग्निष्टोमोत्तरत्वेन बाधितस्य अनेन प्रतिप्रसवो युक्त इति न काम्योक्थ्यसंस्थाया निवृत्तिरित्याशयः। **निरूपितश्चेति** ग्रन्थः प्रघट्टकाभिप्रायः, नत्वनन्त-रोक्तकाम्योक्थ्यसंस्थानिवृत्तिनिषेधाभिप्रायः तत्प्रतिपादनस्य तत्राकरणादिति ज्ञेयम्। एवञ्च षोडशिसंस्थाया विधाने सति तस्याः तत्स्तोत्रकृतोपरमरूपायाः तत्स्तोत्रानुष्ठानं विनाऽनु-पपत्तेः तद्ग्रहणाभ्यासः षोडशिसंस्थारूपः सस्तुतशास्त्र एव कार्य इत्युसंहरति—**अतः सस्तुतेति। प्रथमोपस्थितेति।** यद्यतिरात्रादिवाक्येष्वपिशब्दःस्यात् तदा अतिरात्रसंस्थया बाधितायाः षोडशिसंस्थायाः तेन प्रतिप्रसवः स्यात्। नत्वेतदस्ति। अतोऽपिशब्दस्य तात्पर्यग्राहकस्या-भावे प्रथमोपस्थितातिरात्रपदे स्तोत्रादिलक्षणायां प्रमाणाभाव इत्यर्थः। यद्यप्यग्निष्टोमदिवाक्ययो

---

1. A ऽश्वमेधे सति

**तस्य चातिरात्रसंस्थोद्देशेन तत्संस्थाकज्योतिष्टोमोद्देशेन वा विधानं, संस्थायाः** प्राकृताङ्गैरेव **निराकाङ्क्षत्वात्।** तस्य च **पाठादतिरात्रस्तोत्रपूर्वस्थानकत्वसिद्धिः॥**

**अत एव ब्राह्मणस्य नित्यवत्तत्र तस्य प्राप्तौ 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेन पाक्षिकत्वसिद्ध्यर्थं प्रतिषेधः। अतश्च ब्राह्मणस्य विकल्पोऽन्येषां प्रापकप्रमाणाभावादेव स नैवेति ध्येयम्॥**

**यत्तु 'अतिरात्रे षोडशिनं गृह्णाति' इति क्वचिल्लिख्यते वचनं, तत् 'अतिरात्रे ब्राह्मणस्य' इत्येतदेव ब्राह्मणपदपरित्यागेनेति वेदितव्यम्। भिन्नत्वेऽपि वा ब्राह्मण-वाक्येनोपसंहार इति ध्येयम्॥**

अस्तु वा **तेनैव सर्वेषां प्रसक्तस्य षोडशियागाभ्यासस्य 'नातिरात्रे षोडशिनम्' इत्यनेन विकल्पः। ब्राह्मणवाक्ये तु तन्नियमार्थं पुनश्श्रवणं 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादाविवेत्यन्यत्र विस्तरः।**

---

रपिशब्दस्य वीप्सादिफलार्थत्वेन सह समुच्चयप्रतिपादकत्वेनाप्युपपत्तेः नाग्निष्टोमोक्थ्यादिप्रयुक्त-बाधप्रतिप्रसवार्थत्वपरत्वेन तत्संस्थाबाधकत्वं सम्भवति, येनातिरात्रवाक्यवदेव अग्निष्टोमादि-संस्थाकज्योतिष्टोमाङ्गत्वेनैव षोडशिग्रहाभ्यासविधिर्न स्यात्। तथापि अपिशब्दाभावेऽपि खादि-रत्वादिवत् वाक्येन क्रत्वङ्गत्वबोधनोपपत्तेः वैयर्थ्यं दुष्परिहरमेव। अतः षोडशिसंस्थाप्रति-प्रसवपरत्वमेव तत्र वक्तुं युक्तमित्यतिदेशवाक्ये[1] तदभावेन अतिरात्रसंस्थाया बाधेन षोडशि-संस्थाप्रतिप्रसव इति ध्येयम्। **प्राकृताङ्गैरेवेति।** आश्रयतोऽतिदेशेन संस्थायाः प्राकृताङ्गैरेव निराकाङ्क्षत्वेन अङ्गानपेक्षणात् षोडशिग्रहाभ्यासरूपाङ्गं अपेक्षितत्वात् अतिरात्रसंस्थाकज्योति-ष्टोमोद्देशेनैव विधीयत इति द्वितीय एव पक्षो युक्त इत्यर्थः। **तस्य चेति।** यागाभ्यास-लक्षकषोडशिग्रहणस्येत्यर्थः। उपसंहारपरत्वे अन्यनिवृत्तेः फलत्वापत्तेः नियमविधौ लाघव-मभिप्रेत्य पक्षान्तरमाह—**अस्तु वेति।**

---

1. B. अतिरात्रवाक्ये

(१३)—अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ अन्वयो वाऽनारम्य विधानात् ॥ ५४ ॥

अङ्गिरसां द्विरात्रे 'वैखानसं पूर्वेऽहन् साम भवति षोडश्युत्तरे' इति श्रुतम्। तत्र वृत्तिकारेण षोडश्युत्तर इत्ययमपूर्वविधिरिति पूर्वपक्षं कृत्वा 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनारभ्यविधिना उत्तरस्मिन्नहनि अतिरात्रसंस्थाकत्वात् सर्वद्विरात्रेषु विकल्पेनातिदेशतः प्राप्तस्य षोडशिनो नियमविधायिनः उपसंहारार्थः॥

न चानारभ्याधीतविधेरतिदेशतो ब्राह्मणकर्तृकत्वनिमित्ते प्राप्तस्य षोडशिनोऽनैमित्तिकत्वार्थत्वेनाप्युपपत्तेर्नावश्यं नियमार्थत्वमिति वाच्यं,तथात्वेऽस्याप्यनैमित्तिकत्वार्थत्वाङ्गीकारेणोपसंहारोपपत्तेः, नियमफलकत्वे सम्भवत्यपूर्वफलकत्वस्यान्याय्यत्वाच्च॥

वस्तुतस्तु—उपदेशेन षोडशिविधौ निमित्तसंबन्धस्येवाभावपक्षस्याप्यनतिदेशात् फलद्वयस्यापि सिद्धिरिति फलसाङ्कर्यमेवात्र युक्तम्। 'चतुर्थे चतुर्थेऽहन्यहीनस्य' इत्यत्र

---

अभावादतिरात्रेषु गृह्यते।

चत्वारो हि द्विरात्राः—व्युष्टिः, आङ्गिरसः, कापिवनः चैत्ररथ इति। तत्र द्वितीयद्विरात्रप्रकरणगतं वाक्यमुदाहरति—अङ्गिरसामिति। अपूर्वविधिरिति। अतिदेशतो यावत्प्राप्तिः तावद्यद्यपि उत्तरेऽहन्निति वाक्येन अनारभ्याधीतेनैव सम्भवति प्राप्तिः तथापि अस्य सामान्यशास्त्रत्वेन तदपेक्षया अङ्गिरसां द्विरात्रद्वितीयाहर्विशेषपुरस्कारेण प्रवृत्तस्य षोडश्युत्तर इति वाक्यस्यैव प्राप्तया प्राकरणिकेन तेनैवापूर्वतया विधानमित्यर्थः। तथात्वे इति। अनारभ्यविधेरनैमित्तिकत्वार्थेनाविधायकत्वे 'षोडश्युत्तरे' इत्यस्यापि अनैमित्तिकतयैवोपसंहारार्थत्वमित्यर्थः। उपदेशेन षोडशिविधाविति। 'षोडश्युत्तरे' इत्ययं अपूर्वविधिरिति पूर्वपक्षे, उपसंहार इति सिद्धान्ते च, अतिदेशप्रवृत्तेः पूर्वमेव अनारभ्याधीतप्रवृत्तिः प्रत्यक्षत्वादङ्गीक्रियत एव, अविशेषप्राकरणिकत्वेन अनेनैव तद्विधानमित्येव तु पूर्वपक्षे भेदः तदा अतिदेशप्रवृत्तेरेवाभावे सति न निमित्तसम्बन्धेन षोडशिग्रहणस्य यथा प्राप्तिः तथा ग्रहणाभावस्यापि नैव सेत्यनारभ्याधीतेन निमित्तसम्बन्धराहित्यफलकतया यथा तस्य विधानं कर्तव्यम्, तथा सर्वदा कर्तव्यमित्यपि नियमः शक्यत एव बोधयितुमिति यादृशफलद्वयसाङ्कर्याङ्गीकारेण अनारभ्याधीतस्य विधित्वं स्वीकर्तव्यं तादृशस्यैव 'षोडश्युत्तरे' इति विशेषोपसंहारो युक्त इत्यर्थः। चतुर्थे चतुर्थे इति। अस्मिंश्च वाक्ये अन्येनोपसंहाराभावेऽपि 'उत्तरेऽहन्द्विरात्रस्य गृह्यते' इति

**चतुर्थातिरिक्ताहरन्तरेषु अतिरात्रसंस्थाकत्वे तत्र षोडशिपरिसङ्ख्यार्थत्वात्फलत्रय-साङ्कर्यमपि ॥**

**अत्र च प्राचां मते षष्ठीस्थले परस्परान्वयस्य व्युत्पन्नत्वात् द्विरात्रसम्बन्ध्युत्तराह-स्यैवोद्देश्यत्वेऽपि न विशिष्टोद्देशः। यदा तु षष्ठीस्थलेऽपि व्युत्पत्त्यन्तरकल्पनागौ-रवपरिहारार्थं तस्या अपि क्रियान्वय एवाङ्गीक्रियते तदा द्विरात्राद्युद्देशेनैव षोडशि-ग्रहणनियमविधिः। तस्य चोत्तरेऽहन्येव अतिरात्रसंस्थाकत्वेन पक्षप्राप्तेरुत्तरेऽहनीत्य-नुवादः ॥**

---

वाक्य इव पूर्वप्रवृत्त्या उपदेशरूपतया विधायकत्वाङ्गीकारस्य तुल्यत्वेन तद्वत् यथा फलद्वय-साङ्कर्यं तथा शेष्यन्तरपरिसङ्ख्याया अपि करणात् फलत्रयसाङ्कर्यमपीत्यर्थः। यद्यपि अहीन-भूतद्वादशाहादावाद्यन्तयोरेवाह्नोरतिरात्रत्वं नेतरेषां तथापि चतूरात्रेषु चतुर्षु अग्निष्टोम उक्थ्योति-रात्रोत्तरे इत्येवमहःक्लृप्तौ तृतीयस्याह्नोऽतिरात्रत्वात् अहरन्तरेष्वतिरात्रत्वमुक्तं न विरुद्धयत इति ज्ञेयम्। अत्र च द्विरात्रत्रिरात्रवाक्ययोः द्विरात्रसम्बन्ध्यह्नां मध्ये द्वितीयमध्यमाहर्व्यति-रेकेणातिरात्रसंस्थाकत्वाभावात् तद्व्यतिरिक्ताहस्साधारण्येन षोडशिनोऽप्राप्तेः मध्यमद्वितीयाहर्व्यति-रिक्ताहः परिसङ्ख्याफलकत्वायोगात् तद्वाक्यद्वयं विहाय 'चतुर्थे चतुर्थे' इति वाक्यमेव फल-त्रयसाङ्कर्ये उदाहृतम्।

वस्तुतस्तु त्रिरात्रमध्यमाह्नः उक्थ्यत्वात् तत्राप्राप्तस्यैव विधानान्न परिसङ्ख्याफलकत्वप्रसक्तिः। यदा तु **षोडशिनो वैकृत्वं तत्र कृत्स्नविधानात्**। (पूमी. १०-५-९) इत्यधिकरणगते-नोत्तरवाक्यत्रयवैयर्थ्यपरिहारार्थेन **आम्नानं परिसङ्ख्यार्थमिति** गुणसूत्रेण प्रतिपादितं परि-सङ्ख्याफलकत्वमुच्येत तदा "वाचस्त्वग्रे द्विरात्रप्रभृतिषु परिसङ्ख्यतामन्यतोऽग्निम्" इति **विधि-रसायनश्लो**कोपपादितरीत्या अतिरात्रोक्थ्याग्निष्टोमसंस्थेषु अहर्गणानामहरन्तरेष्वपि ब्राह्मणराजन्ययोः षोडशिनः प्राप्तौ युक्तमेव तत्परिसङ्ख्यार्थत्वं त्रयाणामपि वाक्यानामिति ध्येयम्। भाष्यकारेण तु 'य एवं विद्वान् षोडशिनं गृह्णाति' इत्यविशेषेण श्रुतस्य षोडशिनोऽग्निष्टोमादिवाक्यत्रये पुनराम्नानं परिसङ्ख्यार्थमित्येव सूत्रं व्याख्याय 'उत्तरेहन्' इत्यादिवाक्यत्रयं अनतिरात्रेऽनग्निष्टोमेपि तत्तदह-र्विधानार्थमित्येवमपूर्वविधित्वमुक्तम्। तावतापि न काचन क्षतिः। द्विरात्रोत्तरेहनि चतूरात्र चतुर्थेऽहनि च राजन्यस्य त्रिरात्रमध्यमेऽहनि चतूरात्रातिरिक्ताहीनचतुर्थेऽहनि च ब्राह्मणस्याति-देशतः प्राप्त्यभावादिति दिक्।

अथवाऽस्तु द्विरात्राद्युद्देशेन उत्तराद्यहरधिकरणकषोडशिग्रहणविधिः। अत एव 'मध्यमेऽहंस्त्रिरात्रस्य' इत्यादौ त्रिरात्रमध्यमस्य क्वचिदतिरात्रसंस्थाकत्वाभावेऽपि तदधिकरणकस्यापूर्वस्यैव षोडशिनो विधानान्न क्षतिः। अतश्च 'षोडश्युत्तरे' इत्यनेन 'उत्तरेऽहन् द्विरात्रस्य' इत्यस्योपसंहारात् द्विरात्रान्तरे षोडशिग्रहणविकल्पस्याबाध इति सिद्धान्तितम् ॥

भाष्यकारेण त्वन्यथा व्याख्यातम्। तस्यायमाशयः—न तावत्पूर्वपक्षो युज्यते, मन्थरेणाप्यतिदेशेन विकल्पस्य मन्थरेणापि च सामान्यवाक्येन षोडशिग्रहणनियमस्य प्राप्स्यमानतया विधिवैयर्थ्यात्। नापि सिद्धान्तः, सामान्यवाक्यस्य वैयर्थ्यप्रसङ्गेनोप-संहारानुपपत्तेः 'पुरोडाशं चतुर्धा करोति' इत्यादौ हि शाखान्तरत्वान्न वैयर्थ्यं 'सप्तदश सामिधेनीः' इत्यादावपि एकेन द्वारसम्बन्धोऽपरेण क्रतुसम्बन्ध इति न वैयर्थ्यम्। एवमन्यत्रापि तत्र तत्र सार्थक्यं द्रष्टव्यम्। प्रकृते तु कथमपि सार्थक्या-सम्भवान्नोपसंहारः॥

---

वस्तुतस्तु अतिदेशप्रवृत्तेः पूर्वमेतद्वाक्यप्रवृत्त्यङ्गीकारेण अपूर्वनियमफलयोः सम्भवेपीह अतिदेशाप्रवृत्त्या तद्विषयाकाङ्क्षोपरमेपि विकृतेः तद्विषयाकाङ्क्षानुपरमात् शेषिपरिसङ्ख्यानुपपत्तेः, अतिदेशप्रवृत्त्युत्तरं चैतत्प्रवृत्तौ प्राप्तपरिसङ्ख्यापत्तेः नियमाद्यर्थत्वेनापि वाक्यसार्थक्ये तदङ्गी-कारस्यायुक्तत्वमेव। अनेनैव न्यायेन गृहमेधीयाज्यभागविधौ पञ्चमपक्षे फलतः परिसङ्ख्या नोपपद्यत इति वक्ष्यते। अत एव 'तमुक्थ्येन' इत्यादिवाक्येषु अनेनैव न्यायेन परिसङ्ख्या नाङ्गीकरिष्यत इति ध्येयम्।

द्विरात्रद्वितीयाह्नोऽतिरात्रसंस्थाकत्वात् तत्रैव पक्षप्राप्तिमादाय द्विरात्रवाक्ये 'उत्तरेहन्' इत्यस्यानुवादत्वासम्भवेन द्विरात्रोद्देशेन ग्रहणविधिसम्भवेपि मध्यमेऽहन्निति वाक्ये त्रिरात्रमध्यमाह्नः षडहद्वितीयाहर्विकृतित्वेन उक्थ्यत्वात् तत्र अतिरात्रसंस्थाकत्वप्रयुक्तत्वेन पक्षेपि षोडशिग्रहणा-प्राप्तेः मध्यमेहन्नित्यस्यानुवादत्वानुपपत्तेः अगत्या मध्यमाहरधिकरणकषोडशिग्रहणस्यैव विधि-र्वक्तव्यः। तत्साहचर्यात् द्विरात्रादिष्वपि उत्तराधिकरणत्वविशिष्टवाक्ये विधिरेवास्त्विति पक्षान्तर-माह—अथवेति। अत्र च पूर्वोपपादितं नियमविधिमपेक्ष्य नेदं पक्षान्तरं तं विना वैयर्थ्या-परिहारात्; अपि तूत्तरेहन् इत्यस्यानुवादत्वमपेक्ष्य विधित्वरूपं पक्षान्तरमिति ज्ञेयम्।

तदेवं वृत्तिकारमते सिद्धान्तमुपपाद्य तदुपसंहारव्याजेनास्य लक्षणसङ्गतिं दर्शयति—अतश्चेति। प्रकृते त्विति। यद्यपि प्रकाशकारोक्तरीत्या अनारभ्याधीतवाक्येनोत्तराहर्द्वार-सम्बन्धोऽपरेण तु अङ्गिरसां द्विरात्रापूर्वसम्बन्ध इत्येवं शक्यते परिहर्तुं सामान्यवाक्यवैयर्थ्यं

किञ्च—वैखानसविधिशेषस्यास्य तत्स्तावकत्वेनोपपत्तौ न विध्यन्तरकल्पनयोपसंहारकत्वं युक्तम्। अत उपसंहार इति पूर्वपक्षं कृत्वा स्तावकत्वमिति सिद्धान्तः कार्य इत्येवाधिकरणरचना कार्येति॥

---

## (१४)—चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् अपि वा सङ्ख्यावत्त्वात् नानाऽहीनेषु गृह्यते पक्षवदेकस्मिन् सङ्ख्यार्थभावात्॥ ५६॥ भोजने तत्सङ्ख्यं स्यात्॥ ५७॥

अष्टरात्रादिरूपे अहीने चतुर्थेऽहनि षोडशिनं गृहीत्वा पुनरपि चतुर्थाच्चतुर्थे अष्टमे ग्राह्यः। अन्यथा वीप्सानुपपत्तेः अहीनान्तराभिप्रायत्वे न्याय[1] प्राप्तत्वेन वीप्सावैयर्थ्यापत्तेरिति प्राप्ते—

अहीनस्य चतुर्थेऽहनि ग्राह्यत्वेन श्रुतष्षोडशी न तस्याष्टमे ग्रहीतव्यः। न हि तदहीनस्य चतुर्थं अपितु चतुर्थस्य, अतश्च चतुर्थपदानुरोधादहीनान्तराभिप्रायेण वीप्सा न्यायप्राप्तानुवादः। विधाने वाक्यभेदापत्तेः। अहीनस्य इत्येकवचनं तु सामान्याभिप्रायेण बहुत्वलक्षणार्थम्॥

---

तथापि सामान्यवाक्ये द्विरात्रानुवादात्[2] अङ्गिरसीयापूर्वद्वारसम्बन्धोपपत्तेः तद्वैयर्थ्यं दुष्परिहरमेवेति कथमपीत्यनेन सूचितम्।

---

चतुर्थे चतुर्थे।

स्पष्टार्थमेतत्। अत्र चाहीनभूते द्वादशाहे पृष्ठ्यषडहमारभ्य चतुर्थमहर्ग्राह्यम्। अन्यत्र तु आदित एव। एवञ्च तस्योक्थ्यत्वात्[3] दशरात्रत्वे नापूर्वविध्यादिसाङ्कर्यमत्रेति ज्ञेयम्।

---

1. प्रत्युद्देश्यं विधेयपर्यवसानं न्यायः
2. A. द्विरात्रपदसत्त्वात् आङ्गिरसपदं विनापि द्वार
3. A. adds अप्राप्तत्वं

## (१५)–जगत्साम्नि सामाभावाद्दक्सामं तदाख्यं स्यात् ॥ ५८ ॥

ज्योतिष्टोमे **रथन्तरसामकत्वनिमित्तं ऐन्द्रवायवाग्रत्वं बृहत्सामकत्वनिमित्तं च शुक्राग्रत्वं च विधाय 'यदि जगत्सामा आग्रयणाग्रान्' इति श्रुतम्। तत्र न तावज्जगत्संज्ञिकं साम प्रकृतौ विकृतौ वा कस्यामपि सामशाखायां प्रसिद्धं येन तन्निमित्तकमिदमाग्रयणाग्रत्वं तत्र** निविशेत, **अतो जगत्सामशब्दार्थः क इति जिज्ञासायां** जगच्छब्दस्य **कृत्स्नवाचित्वात् प्रकृतः सामद्वयकात्स्न्यापरपर्यायो यत्र समुच्चयस्तत्र निविशते ॥**

स च **यद्यपि न प्रकृतौ, बृहद्रथन्तरसाध्यस्तोत्रयोरदृष्टार्थयोरपि वचनेन विकल्पावगतेः साम्नोरपि विकल्पात्। तथाऽपि यत्र संसवादौ उभयोर्वाचनिकस्समुच्चयस्तत्रोत्कर्ष इत्याद्यपक्षः ॥**

**न जगच्छब्दः कृत्स्नवाची, तथात्वे** कृत्स्नस्य जगत **इत्यादिसहप्रयोगानुपपत्तेः ।**

---

जगत्साम्नि ।

अत्र भाष्यकारेण यदि जगत्सामेत्युदाहृत्य प्रकरणानुग्रहात् प्रकृतावाग्रयणाग्रताया निवेश इति पूर्वपक्षं कृत्वा प्रकृतौ जगत्संज्ञकसामाभावात् यत्र विषुवति तत्प्रसिद्धमस्ति तत्रैव निमित्तसम्बन्धादुत्कर्ष इत्येवं सिद्धान्तप्रदर्शनेन एकं वर्णकं कृत्वा जगत्सामशब्देन रथन्तरबृहदन्यतरसामा ज्योतिष्टोम एवोच्यते, अथवा उभयसामा स एवोच्यते, अथवा केवलरथन्तरसामैव स उच्यते इति पूर्वपक्षत्रयं कृत्वा तेन सर्वथा सोमयागस्याभिधानाशक्तेः विषुवानेवोच्यत इति सिद्धान्तकरणेन द्वितीयं वर्णकं कृतम्। तत्रार्थभेदाभावेन वर्णकान्तरकरणे प्रयोजनाभावात् द्वितीये वर्णके प्रथमपूर्वपक्षस्य निर्युक्तिकत्वाच्च तदुभयमुपेक्ष्य एकवर्णकेनैन पूर्वपक्षद्वयरचनयाऽधिकरणमारभते—**ज्योतिष्टोम इति। निविशेतेति।** एतेनाद्यवर्णकं निरस्तमिति सूचितम्। तन्त्ररत्नोक्तप्रथमपूर्वपक्षयुक्तिस्तु अग्रे स्वयमेव 'नचैवम्' इत्याशङ्काव्याजेनानूद्य निरसिष्यते; अतो द्वितीयं पूर्वपक्षमेवाद्यत्वेन दर्शयति—**जगच्छब्दस्येति।** यत्तु अस्मिन् समुच्चये वचनेन विकल्पविधानादयुक्तत्वाशङ्कां निराकर्तुं तन्त्ररत्ने यथैव बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनद्वयेन बृहद्रथन्तरसाम्नोर्विकल्पस्य विधानं तथैव 'बृहत्पृष्ठं भवति' 'रथन्तरं पृष्ठं भवति' इति वाक्येन अदृष्टार्थतया समुच्चयस्यापि तदस्त्येवेति विकल्पसमुच्चययोर्विकल्पात् पाक्षिकः समुच्चयः सम्भवतीत्युक्तम्, तत् समुच्चयबाधेन वचनविहितविकल्पस्यैव नित्यवत्प्राप्तेः पक्षेपि तदप्राप्तेरयुक्तम्। यच्चाधिकरणमालायामेतदुपपत्त्यर्थं वाशब्दस्य चकारार्थत्वकल्पनम्, तदपि वाशब्दस्य मुख्यार्थबाधापत्तेः तद्वाक्यस्यापि वैयर्थ्याच्चायुक्तमित्यभिप्रेत्य प्रकृतावनिवेशेपि प्रकारान्तरेण पूर्वपक्षमाह—**स चेति। कृत्स्नस्येति।** 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा'

अपितु वस्तुमात्रवाची। अतश्च जगच्छब्दयुक्तं साम जगत्साम। योगश्च तद्घटित-ऋगाश्रयकत्वसम्बन्धेन। अतश्च रथन्तरयोनौ 'ईशानमस्य जगतस्स्वर्दृशम्' इति जगत्पदपाठात् रथन्तरमेव जगत्सामपदेनोच्यत इति तत्रैवैन्द्रवायवाग्रत्वेन सह विकल्पेन निवेशः इति द्वितीयः।

सिद्धान्तस्तु—परम्पराघटितसम्बन्धाङ्गीकारेऽपि साक्षाद्रथन्तरसामत्वपुरस्कारेण विहितैन्द्रवायवाग्रत्वस्य विलम्बोपस्थितिकाग्रयणाग्रत्वेन सह विकल्पायोगात् जगती-छन्दस्कायामृच्युत्पन्नं सामैव जगत्साम, तस्य च विषुवति सत्त्वात् तत्र आग्रयणाग्रत्व-स्योत्कर्षः। तत्र हि पृष्ठे महादिवाकीर्त्यं साम 'विभ्राड्बृहत्पिबतु' इति जगत्यामुत्पन्नम्॥

न चैवमपि प्रकृतावेव पवमाने 'कावमन्त्यं जगतीषु' इति जगतीस्थकावसत्त्वान्नि-वेशोपपत्तौ उत्कर्षकल्पने प्रमाणाभाव इति वाच्यं, तस्य नित्यत्वेन यदिशब्दोपात्तनिमित्त-त्वानुपपत्तेः। स्वमते तु यदि यत्रेत्यर्थः। ऐन्द्रवायवाग्रत्वादिना विकल्पस्याप्ययुक्तत्वाच्च॥

न चैवं जगतीसामेत्यापत्तेरीकारलोपोऽननुशिष्टः कल्प्य इति वाच्यं 'बहुळं छन्दसि' इत्यनेन छन्दसि सर्वेषां विधीनां वैकल्पिकत्वस्योक्तत्वेन ईकारस्यापि वैकल्पिकत्वात्। अत एव भक्षमन्त्रे तृतीयसवनस्य इत्येतद्विशेषणत्वेन जगतीछन्दस इति वक्तव्ये जग-च्छन्दस इति कस्यां चिच्छाखायां श्रवणं, अतो विषुवति आग्रयणाग्रत्वं स्यात् न प्रकृतौ

---

इति गीताश्लोके जगच्छब्दस्य कृत्स्नवाचित्वेन पर्यायत्वापत्त्या सहप्रयोगानुपपत्तिरित्यर्थः। अतश्चेति। कृत्स्नवाचित्वाभावादेवेत्यर्थः। अतो विषुवतीति। यद्यपि महादिवाकीर्त्य-सामके विषुवति 'शुक्रा ग्रहा गृह्यन्ते' इति तैत्तिरीयशाखावचनात् "शुक्राग्रो विषुवान्" इत्यापस्त-म्बसूत्राच्च शुक्राग्रत्वमेव प्राप्नोति नाग्रयणाग्रत्वम्; तथापि महादिवाकीर्त्यं साम यथा जगत्यामस्ति तथाऽन्यस्यामपि पृष्ठय[वत्यामस्ति]। तथा च गवामयनगतविकल्पाभिधानप्रकरणे चतुर्था-ध्यायगतायां षष्ठ्यां कण्डिकायां बोधायनसूत्रं विषुवति कल्पप्रदर्शनपरम्—"यरामहां अति सूर्येमिद्देवताये श्रायन्त इवते सूर्यम्" इति महादिवाकीर्त्यस्तोत्रीया विकल्प्यन्त इति। एवञ्च यदा अन्यस्यामृचि तदा शुक्राग्रत्वम्। यदा जगत्यां तदा आग्रयणाग्रतेति न विरोधः। अत एवैतत्सूत्रव्याख्याने उक्तं कपर्दिस्वामिभिः 'शुक्राग्रस्तु विषुवान् यदा जगत्सामा तदा आग्रयणाग्र इति'। यत्तु भाष्ये शुक्राग्रत्वविरोधमाशङ्क्य 'स कामाय भविष्यति' इति परिहृतं, तत् तस्य कामसम्बन्धस्य श्रुतौ कल्पसूत्रेष्वनुपलम्भात् तदपेक्षया नित्यवत्प्रत्यक्षश्रुतशुक्राग्रत्वाविरोधे आग्रयणाग्रताया एवान्यविकृतिनिवेशस्य युक्तत्वादुपेक्ष्यम्। यापि धूर्तस्वामिभिः यदा जगत्सामा विषुवान् विकल्पेन तदा आग्रयणाग्रः यदा तु दिवाकीर्त्यसामा तदा शुक्राग्र इति व्यवस्था कृता सा कृत्स्नेऽपि सामवेदे जगन्नामकसामाभावस्य शबरस्वामिभिः प्रदर्शनेन तद्विरोधादयुक्तैवेति

तेन न ऐन्द्रवायवाग्रत्वादेः पक्षे बाधः ॥

---

(१६)–उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् ॥ ५९ ॥ मुख्येन वा नियम्येत ॥ ६० ॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥

संसवादिवैकृतक्रतौ प्रकृतिप्राप्तयोर्बृहद्रथन्तरसाम्नोस्समुच्चयश्श्रूयते 'ससव उभे बृहद्रथन्तरे कुर्यात्' इति। तत्र यन्मते तावत् द्वयोर्विकल्पेनैकपृष्ठस्तोत्रसाधनत्वं तन्मते द्वयोरेकस्मिन्नेव स्तोत्रे समुच्चयात्, सप्तदशस्तोमके एकस्मिन्नेव स्तोत्रे विभागेन साम्नोस्तदाश्रयर्चोश्च पाठोऽभ्यासेनेत्यविवादमेव। स च विभागः केषुचित्पर्यायेषु रथन्तरं केषुचित् बृहदिति कल्पसूत्रकारवचनादवगन्तव्यः॥

यन्मते तु सामद्वयसाध्यपृष्ठस्तोत्रभेदः तन्मतेऽपि न स्तोत्रयोस्समुच्चयः येन सप्तदशस्तोमकस्तोत्रद्वयानुष्ठानं शङ्क्येत। अपि तु विकल्पेन प्राप्तयोरेव स्तोत्रयोरेकस्मिन् कस्मिंश्चित् स्तोत्रे सामद्वयस्य तदाश्रयर्चोश्च समुच्चयविशिष्टयोर्विधिः। अतस्तन्मतेऽपि नानुष्ठाने भेद इति ध्येयम्॥

अत एव ये सामधर्माः सम्मीलनादयस्ते तत्तत्काले कार्या इति तेषामपि समुच्चय एव। ये तु केचिद्विरुद्धाः तेषां विकल्प इत्यप्यविवादमेव। ये तु बृहत्सामकत्वे रथन्तर-सामकत्वे वा निमित्ते अन्याङ्गत्वेन विहिताः यथा—ऐन्द्रवायवाग्रत्वशुक्राग्रत्वादयः, यथा

---

ध्येयम्। तेनैन्द्रवायवाग्रतादेरेवेति। रथन्तरबृहत्साम्नोः निमित्तयोरेव पाक्षिकत्वात् तत्प्र-युक्ताग्रतयोरेव पक्षे बाधः। न त्वाग्रयणाताया: पक्षे प्राप्तत्वेन तयापि पक्षे तयोर्बाध इत्यर्थः।

---

उभयसाम्नि नैमित्तिकम्।

संसवादीति। आदिपदेन अपचितिश्येनयागान्तरसङ्ग्रहः। अत्र 'बृहद्रथन्तर-पृष्ठयोः संमुच्चयः संसवगोसवादिषु' इति शास्त्रदीपिकायामुक्तम्। द्वयोः पृष्ठयोः समुच्चयं निराकरोति—यन्मते त्विति। यत्तु नवमे द्वयोः पृष्ठयोः समुच्चयविधिमङ्गीकृत्य प्रत्येकं सप्तदशस्तोमकपृष्ठयोरनुष्ठानं पृष्ठद्वयवादिमते पूज्यपादैरभिहितम् तत्पक्षान्तरतया कथञ्चिन्नेयमिति न विरोधः। तत्तत्काले इति। तत्तत्सामद्वयपाठकाले इत्यर्थः। तेषां विकल्प इति।

**वा 'अग्रवतीं बृहत्पृष्ठस्य प्रतिपदं कुर्यात् उपवतीं रथन्तरपृष्ठस्य' इति। अत्र हि बृहत्साध्यं पृष्ठं यस्येति बहुव्रीहिणा ज्योतिष्टोमगतबृहत्पृष्ठत्वे निमित्ते बहिष्पवमानावान्तरप्रकरणात् तद्गतप्रतिपदुद्देशेनाग्रवती विधीयते। षष्ठ्या चोद्देश्यत्वासम्भवात् निमित्तत्वप्रतीतिः। ते इह संसवादौ कार्या न वेति सन्देहे निमित्तद्वयसत्त्वान्नैमित्तिकद्वयमपि प्राप्तम्। समुच्चयासम्भवाद्विकल्प इति प्राप्ते—**

**यदिशब्दाद्युपात्तस्य निमित्तत्वस्य कादाचित्कत्वव्याप्तत्वात् कादाचित्कत्वस्य च बृहद्रथन्तरयोरन्योन्यविरोधप्रयुक्तत्वात् बृहद्विरोधिनो रथन्तरस्य रथन्तरविरोधिनो वा बृहतो निमित्तता प्रकृताववगम्यते॥**

---

वस्तुतस्तु विरुद्धानां उच्चैष्ट्वतदभावरूपाणामपि धर्माणां तत्तत्सामपाठकालेऽनुष्ठानोपपत्तेः समुच्चयसम्भवान्नैव विकल्पप्रसक्तिरिति ध्येयम्।

अत्र भाष्यानुसारेण अग्रताद्वयविधायकवाक्यद्वयमनुदाहृत्य प्रतिपद्वाक्यद्वयमेव **यच्छास्त्रदीपिकायामुदाहृतं** तस्यायमाशयः **प्रकाशकारै**रुपपादितः—अग्रते प्रति बृहद्रथन्तरसामत्वयोः यदिशब्देन निमित्तत्वोक्तेः निमित्तविघाते नैमित्तिकाग्रताविध्यप्रवृत्तेः स्फुटत्वात न तत्र पूर्वपक्ष उदेति। उपवत्यग्रियवत्यौ प्रति तु बृहथन्तरयोर्निमित्तत्वावेदकयदिशब्दाभावान्न निमित्तत्वविघातोऽस्तीति पूर्वपक्षोदयसम्भवः। तथा नित्यायाः कस्याश्चिदग्रताया अविधानादुभयसाम्नि निमित्तविघातेपि प्रकृतौ क्लृप्तयोर्नैमित्तिकयोरप्यग्रतयोः अन्यतरस्य विकल्पेनानुष्ठानमैच्छिकमगत्याऽऽपद्यते कण्वरथन्तरं पृष्ठं भवतीत्यादाविवेति न विकल्पपूर्वपक्षनिरासप्रयोजनमस्ति। प्रतिपदि तु 'अन्यैव क्रतुनिमित्ता भवितुमर्हति' इति भाष्योक्तं सिद्धान्तप्रयोजनं लभ्यत इति प्रतिपद्वाक्यमेवोदाहृतमिति।

तदेतदयुक्तम्। प्रतिपद्वाक्ये यदिशब्दाभावेन निमित्तत्वासम्भवेपि बृहत्पृष्ठादिपदार्थस्य उद्देश्यप्रतिपद्विशेषणत्वेन, अथवा प्रकरणप्राप्तत्वेन प्रतिपत्पदस्यानुवादत्वमङ्गीकृत्य साक्षादुद्देश्यतयैवान्वयपक्षस्य भवद्भिरेवोपपादितत्वात् तदानीमप्युद्देश्यतावच्छेदकरूपाक्रान्तत्वाभावेनैव इहापि प्रतिपद्विध्यप्रवृत्तेः पूर्वपक्षोदयासम्भवस्य अग्रतावाक्ययोरिव तुल्यत्वात्। यत्तु 'अन्यैव क्रतुनिमित्ता भवति' इति प्रयोजनविशेषोपपादनम्; तदपि प्रचरदवस्थशाखासु उपवत्या एव नित्यत्वेन पाठात् तस्या एव प्राप्तेः अन्यस्या अप्राप्तेरयुक्तम्। अत उद्देश्यत्वपक्षे पृष्ठस्तोत्रसम्बन्धिप्रतिपत्त्वेनैव तत्प्राप्त्यापत्तेः बहिष्पवमानावान्तरप्रकरणबाधप्रसङ्गेन तदबाधाय बृहत्पृष्ठरथन्तरपृष्ठपदयोः निमित्तपरत्वमेव युक्तमिति अग्रतावाक्यवैषम्याभावात् तयोरप्युदाहरणत्वं दर्शितम्।

अत एवान्योन्यविरोधस्य निमित्तस्वभावबललभ्यत्वात् न तद्विवक्षाकृतो वाक्यभेदोऽपि। विरोधिता च क्वचिद्वैकल्पिकत्वात् क्वचिद्बाधकत्वाच्च। अत एवोभयत्रैव निमित्तता, यथा प्रकृतौ वैकल्पिकत्वात्। विकृतावपि यत्रैकतरनियमस्तत्र बाधकत्वाद्विरोधिता। यत्र तु द्विविधविरोधिताऽभावस्तत्र सत्यपि रथन्तरत्वादौ न तस्य निमित्तता॥

अत एव विश्वजिदादौ 'पवमाने रथन्तरं आर्भवे बृहत्' इत्यादिना स्तोत्रान्तरे तत्सत्त्वेऽपि नैन्द्रवायवाग्रत्वादिनियमः। अतश्च तद्वदेव संसवादौ विरोधाभावेन निमित्ताभावान्न नैमित्तिका धर्माः। निरूपितं चैतत्कौस्तुभे रथन्तराधिकरणे। अतश्च तत्रानियता ग्रहाग्रता, अनियता च या काचित्प्रतिपदिति द्रष्टव्यम्॥

---

## (१७)—ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षस्स्यात्॥ ६२॥ अपि वा धर्मविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते॥ ६३॥ धारासंयोगाच्च॥ ६४॥

उपांश्वन्तर्यामौ ज्योतिष्टोमे अधाराग्रहौ विधाय धाराग्रहाणामैन्द्रावायवमैत्रवरुणादीनामुपक्रमे श्रुतम् 'वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्रयन्ति' इति। तदनेन किमैन्द्रवायवस्य पाठान्मैत्रावरुणग्रहात्पूर्वमेवानुष्ठाने प्राप्ते उपांश्वन्तर्यामात्पूर्वमपकर्षो विधीयते उत नेति चिन्तायां—

'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति' इत्यादिना प्रत्यक्षतत्तद्विधिभिरेव प्राप्तानां ग्रहणानां संक्षेपेण पुनर्विधानस्य विहितविधानायोगेनानुपपत्तेः प्रकृतसर्वग्रहणोद्देशेनैन्द्र-

---

तदुपपत्तये प्रतिपद्वाक्येपि निमित्तसम्बन्धं वाक्यार्थप्रदर्शनव्याजेन दर्शयति—**अत्र हीति**। प्रतिपत् स्तोत्राद्या ऋक्। उपवतीं उपपदवतीं 'उपगायता नर' इत्यृचं, अग्रवतीं अग्रपदवतीं 'पवस्व वाचो अग्रिय' इत्यृचं इति वाक्यद्वयगतपदानामर्थः। **उभयत्रैवेति**। यदि रथन्तरसामा' 'यदि वा बृहत्सामा' इति वाक्यद्वय एव। न तु यदि जगत्सामेति वाक्येपि। तत्र निमित्तत्वासम्भवादित्यर्थः। **या काचित्प्रतिपदिति**। एतच्च न्यायागतार्थप्रदर्शनमात्रम्। वस्तुतस्तु उपवत्या एव बह्वीषु शाखासु नित्यत्वेन पाठात् तस्या एव नियमेन प्राप्तिः। 'यदि तु शाखान्तरे अग्रवत्या अपि नित्यः पाठः, ततः यथाश्रुतमपि साधु। भाष्यकारलिखनात्तु उपवत्यग्रवतीभ्यामन्यैव काचन ऋक् नित्यत्वेनाम्नातेति ध्येयम्।

---

वायवाग्रतैवानेन विधेया। अत एव न ग्रहपदेन मैत्रावरुणाद्या एव ग्रहाः उच्यन्ते सङ्कोचे प्रमाणाभावात्। तदग्रतायाः पाठादेव प्राप्तत्वाच्च ॥

अतश्चोपांश्वन्तर्यामापेक्षयाऽप्यग्रता ऐन्द्रवायवस्य विधीयते। तस्याश्च बृहत्सामत्वे नैमित्तिकशुक्राग्रत्वविरोधादनिवेशेऽपि रथन्तरसामकत्व एव निवेशो यद्यपि न्यायादेव प्राप्तः, तथाऽपि 'यदि रथन्तरसामा' इत्यनेन नैमित्तिकत्वेन विधीयते। तत्प्रयोजनं च सिद्धान्त इव कण्वरथन्तरादौ तदप्राप्तिः। अत ऐन्द्रवायवस्य सर्वादितः करणमिति प्राप्ते—

धात्वर्थमात्रविधिलिप्सया ग्रहणान्येवात्र विधीयन्ते नाग्रता, ग्रहणोद्देशेन तृतीयविधिप्रकारापत्तेः। न च विहितविधानायोगः, यत्प्रकारकयद्विशेष्यकविधौ कृते तत्प्रकारकतद्विशेष्यकविध्ययोगेऽपि तस्यैव विशेष्यस्य धर्मान्तरप्रकारकविधौ बाधकाभावात्। 'ऐन्द्रवायवं गृह्णाति' इत्यादिना हि विजातीयग्रहणत्वादिना तत्तद्ग्रहणानां विधिः, अनेन तु वक्ष्यमाणतावद्ग्रहणनिष्ठव्यापकीभूतवैजात्यप्रकारकस्तत्तद्ग्रहणानां विधिः। वैजात्यं च एतद्विधेरेवाद्यविधिप्रकारलिप्सासहकृतस्य विधेयतावच्छेदकतया सिद्धम्। तदपि च नोपांश्वन्तर्यामादिसाधारण्येन प्रकृतग्रहणमात्रे, तथात्वे उपांश्वन्तर्यामोत्तरं एतत्पाठस्य वैयर्थ्यापत्तेः, 'ऐन्द्रवायवाग्राः' इत्यस्य अनुवादानुपपत्तेश्च, सामान्यधर्मप्रकारकविधिप्रयोजनानां वक्ष्यमाणानां उपांश्वन्तर्यामसाधारण्येऽनुपपत्तेश्च ॥

अतश्च विशिष्य तत्तद्विधिविहितानामपि ऐन्द्रवायवादिग्रहणानां संक्षेपेणायं विधिः। तेषु च—ऐन्द्रवायवस्य प्राथम्यं पाठप्राप्तमिति 'ऐन्द्रवायवाग्राः' इत्यनुवादात् नैन्द्रवायवस्य सर्वादितः प्रतिकर्षः। संक्षेपविधिप्रयोजनं च तेषामेव ग्रहणानां विशिष्याकाङ्क्षोत्थापनद्वारा तदवान्तरप्रकरणसिद्धिः। ततश्च तदुपरितनवाक्येषु 'अण्व्या धारया गृह्णाति' इत्यादिषु गृह्णातिना तेषामेवानुवादात्तेष्वेव धारादिधर्मविधिः। न तूपांश्वन्तर्या-

---

ऐन्द्रवायवस्याग्रवचनात्।

**सिद्धान्त इवेति।** कण्वरथन्तरसामसाध्यपृष्ठस्तोत्रके क्रतौ बृहद्रथन्तरसाम्नोर्बाधात् तत्प्रयुक्ताग्रतयोः अन्यतरस्या अपि नियमेन प्राप्त्यभावे ऐच्छिकविकल्पेन यथा तयोरनुष्ठानं सिद्धान्ते तद्वन्ममापि नैमित्तिकत्वेन विधानस्य तदेव प्रयोजनं ज्ञेयमित्यर्थः। **ऐन्द्रवायवाग्रा इत्यस्येति।** उपांश्वन्तर्यामादिसाधारणविधावुपांशुग्रहाग्रताया एव पाठतः प्राप्तेः ऐन्द्रवायवाग्रतायाः प्राप्त्यभावेनानुवादानुपपत्तेः तस्या अपि विधौ विशिष्टविधिगौरवापत्तेः तदपेक्षया तृतीयविधिप्रकारस्यैव लघुभूतस्याङ्गीकारापत्तिरित्यर्थः। **विधिप्रयोजनानामिति।** अवान्तरप्रकरणसिद्ध्यादिप्रयोजनानां कतिपयग्रहणविधिपक्षे सम्भवत्युपपत्तिः सर्वग्रहणविधिपक्षे तु सर्वेषामेव महाप्रकरणादाश्रयत्वादिना सम्बन्धोपपत्तेः नैव तत्प्रयोजनानां सिद्धेरपेक्षेति भावः।

**मयोरपि। अतश्च तयोरधाराग्रहत्वसिद्धिः। प्रयोजनान्तरं काम्यग्रहणविधौ एतेषामेव 'कामसंयोगे' इति वक्ष्यते। ग्रहणाश्रितगुणफलेषु चैतेषामेवाश्रयत्वसिद्धिरिति च ॥**

**यत्तु तन्त्ररत्नादौ तत्तद्वाक्येन विहितानां ग्रहणानां वक्ष्यमाणकामवाक्येन काम्यत्वावगतेः क्रत्वर्थत्वसिद्धिरेवैतद्वाक्यप्रयोजनमित्युक्तं तत् प्रमाणान्तरेणा**र्थादिना सम्भवत्प्राप्तिकानां **तत्तद्ग्रहणानां तत्तद्देवतासंयोगानां च तत्तद्विधिभिः पुनर्विधानस्य आरादुपकारकविधया क्रत्वर्थत्वफलकत्वेन पशुसोमाधिकरणे कौस्तुभे व्यवस्थापिततयोपेक्षितम्।** सर्वथा ऐन्द्र**वायवस्य सर्वादितः करणाभावात् न पाठबाधः ॥**

---

**अधाराग्रहत्वसिद्धिरिति।** शकटे क्षालनार्थे वस्त्रे स्थापितस्य सोमस्य यैव धारा आधोभागे पात्रान्तरे पतति तस्या धारायाः सकाशात् ऐन्द्रवायवादिग्रहाणां ग्रहणम्। उपांश्वन्तर्यामयोस्तु न धारातः; किन्तु पात्रान्तरेणैवेत्येवमधाराग्रहत्वसिद्धिरित्यर्थः। एवं स्थितेऽन्तर्यामस्य यद्धारातो ग्रहणं याज्ञिकानां तद्वचनान्तरमूलकमेवेति ध्येयम्। यत्तु अग्रिमाधिकरणे तन्त्ररत्ने, तदनुसारेण विधिरसायने च सामान्यविधिप्रयोजनमुक्तं तदनूद्य दूषयति—**यत्त्विति। वक्ष्यमाणकामवाक्येनेति।** 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति **वाक्येन** प्रकरणं बाधित्वा फलार्थत्वस्यैवापत्त्या क्रत्वर्थत्वाप्राप्तेः तत्प्राप्त्यर्थं सामान्यविधिः। ततश्च खादिरत्वादिवत् तद्ग्रहणानामुभयार्थत्वं सिद्ध्यतीत्यर्थः। **अर्थादिना सम्भवत्प्राप्तिकानामिति।** ग्रहैर्जुहोतीत्यनेन विहितो होमो ग्रहेषु सोमग्रहणं विना न सम्भवतीत्यर्थप्राप्तमेव ग्रहणम्। तच्च 'अण्व्या धारया' इति वाक्यात् धारयेत्यर्थप्राप्त एव तद्रसः। तद्रसग्रहणे च क्रमपठितैर्मन्त्रैः देवतानामपि तासां तासामङ्गत्वं नासुलभमित्यैन्द्रवायवं गृह्णातीत्यादीनां वैयर्थ्यापत्त्या दृष्टार्थत्वेन प्राप्तानामपि ग्रहणानां क्रत्वङ्गतया पुनर्विधानात् तैरेव क्रत्वङ्गतासिद्धेः नैतद्वाक्यप्रयोजनं तदित्यर्थः। यत्तु धारावाक्यसन्निधानात् ऐन्द्रवायववाक्येपि गृह्णातिना धाराग्रहणमैन्द्रवायवादीनामेव विधेयत्वमिति यथाश्रुतभाष्यानुसारेण प्राचां **विधिरसायन**कारप्रभृतीनां नवीनानाञ्च लिखनं तत् अण्व्या धारयेति वाक्य एवोपांश्वादिव्यावृत्त्या ऐन्द्रवायवादिमालग्रहणे प्रमाणाभावात् प्रत्युत शास्त्रदीपिकायां ऐन्द्रवायववाक्यानन्तरमेव धारावाक्यपाठात् धारावाक्यस्यैव तदधीननिर्णयार्थकत्वप्रतीतेरयुक्तमिति पूज्यपादैः अवान्तरप्रकरणसिद्धिरूपप्रयोजनकथनावसर एव सूचितम्। अध्यायसङ्गतिं विचारस्य सूचयन् सिद्धान्तमुपसंहरति—**सर्वथेति।** यथापाठमैन्द्रवायवस्यानुष्ठानं न तु तत आकृष्याधाराग्रहाभ्यां प्रागित्यर्थः।

---

**(१८)—कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ ६५ ॥ तद्देशानां वाऽग्रसंयोगात् तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥**

तदवान्तरप्रकरण एव 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति श्रुतं फलं किं अग्रतारूपगुणजन्यं उत ग्रहणजन्यमेव वेति बाधोपयोगितया चिन्तायाम्—

इन्द्रियकामाधिकरणन्यायेन गुणजन्यमेव। न च यत्र गुणस्य गोदोहनादेरत्यन्ताप्राप्तया विधेयता तत्र विधेयस्यैव फलसम्बन्धात् इन्द्रियकामाधिकरणन्यायः, यत्र तु गुणधात्वर्थयोः द्वयोरप्यन्यतः प्राप्तिस्तत्र भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसम्बन्ध इति वाच्यम्। तथात्वे दध्नोऽपि 'दध्ना जुहोति' इत्यनेन प्राप्तेः फलसम्बन्धानापत्तेः। न च तस्य नैकल्पिकतया पाक्षिकानुवादापत्तिभिया विधेयत्वावगमात् फलसम्बन्धः, प्रकृतेऽप्यैन्द्रवायवाग्रत्वस्य बृहत्सामत्वनिमित्तकशुक्राग्रत्वानुरोधेन काम्यमन्थ्यग्रत्वानुरोधेन च पाक्षिकत्वावश्यंभावात्। अतश्च गुणवाचकपदवैयर्थ्यपरिहारार्थमेव दध्यादेः फलसम्बन्धो वाच्यः, स च प्रकृतेऽपि तुल्य इति ऐन्द्रवायवाग्रत्वमेव फलोद्देशेन विधीयते ॥

तत्र चैन्द्रवायवाग्रत्वस्य विधेयत्वान्मैत्रावरुणापेक्षया च तस्य पाठादेव प्राप्तेरविधेयत्वापत्तेरुपांश्वन्तर्यामाद्यपेक्षयैव विधेयत्वावगतेरवान्तरप्रकरणं बाधित्वा महाप्रकरणात्सर्वग्रहाणामेवाश्रयत्वं ऐन्द्रवायवस्य च सर्वादितः प्रतिकर्ष इति प्राञ्चः॥

वस्तुतस्तु—पाठादिना क्रत्वर्थतया प्राप्तस्यैवैन्द्रवायवाग्रत्वस्य खादिरत्ववत् फलार्थत्वोपपत्तेरवान्तरप्रकरणाद्धाराग्रहाणामेवाश्रयत्वमिति प्राप्ते—

गुणवाचकपदस्य 'ऐन्द्रवायवाग्रान् ग्रहान्' इत्यस्य विधेयतावच्छेदकीभूतव्यापकजात्युपलक्षणत्वेनापि चरितार्थत्वात् नात्र भावार्थाधिकरणापवादः। ऐन्द्रवायवादिग्रहत्वमेव तज्जात्युपलक्षणं नान्यत्। इदमेव 'वाग्वा एषा यदैन्द्रवायवः' इत्यत्रापि गुणवाचकपदग्रहणस्य प्रयोजनम्॥

---

**कामसंयोगे तु।** यथैव सिद्धान्ते क्रत्वर्थतया प्राप्तानां ग्रहणानां कामार्थत्वेन विनियोगः तथैव पूर्वपक्षेपि क्रत्वर्थतया प्राप्ताया एव ऐन्द्रवायवाग्रतायाः सम्भवत्येव कामे विनियोग इत्यभिप्रेत्याह—**वस्तुतस्त्विति।** ऐन्द्रवायवाग्रान् ग्रहानिति पदस्य व्यापकवैजात्यावच्छिन्न-

**अत एव गुणवाचकपदस्य यत्र नैवंविधप्रयोजनलाभः तत्र दध्यादौ गुणफलसम्बन्ध एव। अतश्चात्र धाराग्रहाणामेव फलसम्बन्धः 'ऐन्द्रवायवाग्रान्' इति तु** पाक्षिकानुवाद-मात्रम्। अत एव **द्वितीयपूर्वपक्षे नैमित्तिकस्य शुक्राग्रत्वस्य बाधो मन्थ्यग्रत्वस्य च काम्यस्याभिचारार्थमप्रयोगः। द्वयोर्विरुद्धयोर्गुणयोर्युगपत् स्वस्वकामार्थप्रयोगासम्भवात्। सिद्धान्ते तु प्रजार्थग्रहणानां प्रयोगेऽपि नैमित्तिकं शुक्राग्रत्वं काम्यं च मन्थ्यग्रत्वादि न विरुध्यत इति प्रयोजनम्॥**

---

## (१९)—परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥ ६७ ॥ प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥ प्रतिकर्षं च दर्शयति ॥

---

ग्रहोपलक्षकत्वेपि नैन्द्रवायवाग्रताविशिष्टत्वेनोपलक्षणता। अपि तु अग्रशब्दस्य आदिशब्दार्थ-त्वकल्पनया ऐन्द्रवायवादिग्रहत्वेन यथासिद्धेनैव। तथा चैन्द्रवायवादिग्रहान् गृह्णीयात् इत्यर्थमभिप्रेत्याह—**ऐन्द्रवायवादिग्रहणत्वमेवेति। पाक्षिकानुवादेति।** नैमित्तिकशुक्राग्र-त्वादिना विकल्पात् पाक्षिकानुवादतेत्यर्थः। तथाच ये एव 'वाग्व एषा' इति वाक्येन विहिताः शुक्राग्रताविशिष्टाः, अथवा ऐन्द्रवायवाग्रताविशिष्टा वा त एव धाराग्रहपदवाच्याः अवान्तर-प्रकरणात् प्रजार्थं विधीयन्त इत्यर्थः। प्राचीनरीत्या पूर्वपक्षे सर्वादितः प्रतिकर्षस्य प्रयोजनस्य सिद्धान्ते तदभावरूपस्य च तस्य स्पष्टत्वेपि द्वितीयपूर्वपक्षे ग्रहणानां सिद्धान्त इव यथास्थान-मेवानुष्ठानात् काम्याग्रतयैव नित्याग्रतायाः कार्यजननादनुष्ठाने विशेषाभावशङ्कां परिहर्तुमाह—**अत एवेति।** पूर्वपक्षे एकविषयत्वेन विरोधे सति काम्यस्य प्राबल्यात् फलकामनायां सत्यां शुक्राग्रत्वस्य बृहत्सामकत्वे सत्यपि बाध एव। सिद्धान्ते तु भिन्नविषयत्वात् विरोधस्यैवाभावे न तद्बाध इत्यर्थः। नहीयं ऐन्द्रवायवाग्रता नैमित्तिकी सत्येव फलार्था पूर्वपक्षे, येन रथन्तरसामत्वे सत्येव फलार्थमनुष्ठेयायां तस्यां बृहत्सामत्वरूपनिमित्ताभावेन शुक्राग्रतायाः अप्रसक्तेरेव कथं बाध इत्युच्येत; न त्वेतदस्ति। पाठप्राप्तायास्तस्याः निमित्तसम्बन्धस्येव तन्निरपेक्षतयैव कामसम्बन्धस्य विधानेन रथन्तरसामकत्वाभावेपि ऐन्द्रवायवाग्रतायाः प्रसक्त्या बाधोपपत्तेः।

---

इतोनन्तरमधिकरणद्वयं स्पष्टार्थम्।

---

तत्रैव 'शुक्राग्रान् प्रतिष्ठाकामस्य मन्थ्यग्रान् अभिचरन्' इति श्रुतं फलं तु न ग्रहणजन्यं प्रकृतधाराग्रहेषु मन्थ्यग्रत्वादेः कथमप्यप्राप्तत्वेन गोदोहनादिवद्विधेयतया तस्यैव फलसम्बन्धात्। पूर्ववद्गुणवाचकपदस्य प्रयोजनाभावेन दध्यादिवत्फलसम्बन्धोपपत्तेश्च ॥

न च शुक्राद्युत्तरभाविनामेव ग्रहणानां भावार्थाधिकरणन्यायेन फलसम्बन्धोपपत्तेः तावत्सु च शुक्राग्रत्वमन्थ्यग्रत्वादेः प्राप्तत्वाद्विधेयतावच्छेदकशुक्रादिग्रहत्वमन्थ्यादिग्रहत्वप्रतिपादकतया च गुणवाचकपदस्य सार्थक्योपपत्तेर्नात्र प्रकृतधाराग्रहमात्राश्रितशुक्राग्रत्वादेर्गुणस्य फलसम्बन्ध इति वाच्यम्। तथात्वे 'शुक्राग्रान्' इति अग्रपदस्य वैयर्थ्यापत्तेः विधेयतावच्छेदकस्य शुक्रादिग्रहत्वस्य 'शुक्राग्रान् गृह्णीयात्' इत्येवंपदेनाभिधातुं युक्तत्वात् शुक्रग्रहापेक्षयाऽपि पूर्वं धाराग्रहसत्त्वेनाग्रपदस्यानुवादानुपपत्तेश्च 'ऐन्द्रवायवाग्रान्' इत्यादि वाक्यस्थग्रहपदस्य सर्वधाराग्रहवाचिन इहानुषक्तस्य कतिपयधाराग्रहपरत्वे वैरूप्यापत्तेश्च।

अतश्च ग्रहपदसङ्कोचे प्रमाणाभावात् प्रकृतधाराग्रहाश्रिता शुक्राग्रता मन्थ्यग्रता च तत्तत्फलोद्देशेन विधीयते। शुक्रादेश्च पाठप्राप्तं स्वस्थानं बाधित्वा पूर्वं प्रतिकर्षः ॥

---

## (२०)—पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ ७० ॥ तुल्यधर्मत्वाच्च ॥ ७१ ॥ तथा च लिङ्गदर्शनम् ॥ ७२ ॥

प्रतिकर्षोऽपि ग्रहपदसङ्कोचे प्रमाणाभावात् महाप्रकरणेन सर्वग्रहाणामेवाश्रयत्वोपपत्तेः 'वाग्वा एषा' इत्यस्य च प्रयोजनान्तरसद्भावेन महाप्रकरणबाधकत्वानुपपत्तेस्सर्वादित उपांश्वन्तर्यामात्पूर्वमपीति प्राप्ते—

तन्त्ररत्नाद्युक्तप्रयोजनस्य दूषितत्वेन प्रयोजनान्तरस्यापि अवान्तरप्रकरणसम्पादनद्वारैव प्रयोजनत्वात् तत्सम्पादने च तेन धाराग्रहाणामेवाश्रयत्वोपपत्तेस्तेष्वेव पूर्वं शुक्रादेः प्रतिकर्षः ॥

---

## (२१)—सादनं चापि शेषत्वात् ॥ ७३ ॥ लिङ्गदर्शनाच्च ॥ ७४ ॥

धाराग्रहाणां पूर्वं पूर्वं गृहीत्वा खरे सादयित्वा उत्तरोत्तरस्य ग्रहणं सर्वेषु च

---

सादनं चाविशेषत्वात्।

खरे इति। शकटसमीपे उपरवपांसुभिः निर्मिता ग्रहाणां स्थापनार्था वेदिः

ह्रीतेष्वासादितेषु च पश्चात्कालान्तरेषु क्रमेण प्रदानमित्येषा नित्यक्लृप्तिः ॥

कामाय तु शुक्रादिग्रहणेष्वपकृष्यमाणेषु न ग्रहणमात्रस्य प्रतिकर्षः अपि तु ादनस्यापि। पूर्वग्रहानासादने उत्तरस्य ग्रहीतुमशक्यतया एतत्सोमसंस्कारकस्यापि ादनस्योत्तरग्रहणोपकारकतया सादनाभावे आश्रयभूताग्रिमग्रहणानुष्ठानानुपपत्तेः। ादननियमस्य चैतद्ग्रहणे उत्तरग्रहणसाहित्यसम्पत्त्यर्थत्वस्यापि क्लृप्ततया ग्रहणशेषत्वात् र्वान्ते तत्करणे तद्बाधापत्तेरर्थक्रमेण पाठक्रमबाधात् तस्यापि प्रतिकर्ष ॥

वस्तुतस्तु—'गृहीत्वाऽऽसादयति' इति ग्रहणोत्तरत्वश्रुतेः पाठक्रमाभावाच्च न तिकर्षे किञ्चिद्बाधकम् ॥

---

२२)—प्रदानं चापि सादनवत् ॥ ७५ ॥ न वा प्रधानत्वाच्छेषत्वात्सा-
दनं तथा ॥ ७६ ॥

प्रदाने तु नैव प्रतिकर्षः प्रमाणाभावात्। न ह्यवावदानादिप्रदानान्तस्यैकपदार्थत्ववत् हणादिप्रदानान्तस्यैकपदार्थत्वे प्रमाणमस्ति अनेकपदार्थव्यवधानाच्च। अतस्तस्य स्वस्थान व करणम् ॥

---

२३)—त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥ अपि
वाऽहर्गणेष्वग्निवत्समानविधानं स्यात् ॥ ७८ ॥

---

रशब्दस्यार्थः। तद्बाधापत्तेरिति। उत्तरग्रहणशेषभूतस्य सादननियमस्य सर्वग्रहणान्तेऽ- ष्ठाने बाधापत्तेः यः ऐन्द्रवायवग्रहासादनानन्तरं शुक्रासादनं कर्तव्यमित्येवं पाठतः क्रमःप्रकृतितः प्तः तस्य प्रयोजनकल्प्यक्रमेण बाध इत्यर्थः।

---

प्रदानं चापि।

अनेकपदार्थेति। तत्तद्ग्रहोपस्थानसवनीयप्रचारादिपदार्थैः व्यवधानान्नैकपदार्थ- मित्यर्थः।

---

द्वादशाहे द्वादशस्वप्यहस्सु ग्रहाग्रता विहिता—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाह, अथेतरेषा नवानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रं, अथाग्रयणाग्रं, अथैन्द्रवायवाग्रं, अथ शुक्राग्रं, अथाग्रयणाग्रं, अथैन्द्रवायवाग्रं, अथ शुक्राग्रं, अथाग्रयणाग्रम्' इति। सेयं नवाहस्सम्बन्ध्यग्रता त्र्यनीका। नवसु आद्यानि षट् रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामकानि। अतश्च तत्राहरन्तरेषु बृहद्रथन्तरसामकत्वाभावात् अग्रताविधिरपूर्वविधिरेव। आद्ययोस्तु रथन्तरबृहत्सामकत्वात् तन्नैमित्तिकयोरैन्द्रवायवाग्रत्वशुक्राग्रत्वयोरतिदेशेनैव प्राप्तिसम्भवे पुनस्तत्र तच्छ्रवणं किमर्थमिति बाधोपयोगितया चिन्त्यते॥

तत्राज्यभागन्यायेनाङ्गान्तरपरिसङ्ख्यार्थमित्याद्यः पक्षः। द्वितीयस्तु—सा हि गृहमेधीयपञ्चमपक्षन्यायेन प्राप्तपरिसङ्ख्या वा स्यात्, तदीयाष्टमपक्षन्यायेनापूर्वत्वख्यापनद्वारा अप्राप्तपरिसङ्ख्या वा? नाद्यः त्रैदोष्यापत्तेः। नान्त्यः, सत्यन्यस्मिन् लघुभूते प्रयोजने परिसङ्ख्याफलकत्वस्यान्याय्यत्वात्। तथात्वे ग्रहणानामपि प्राप्त्यभावेनैन्द्रवायवाग्रत्वादेरपि विधातुमशक्यत्वाच्च॥

अत एकवाक्यतालाभाय 'एकं वृणीते' 'द्वादशाहीनस्य' 'उपांशूपसत्सु' इत्यादिवदाग्रयणाग्रताविधेरेवायमर्थवाद औचित्येन तत्स्तुत्यर्थो न तु विध्यन्तरं द्वयं वाक्यभेदापत्तेरिति॥

सिद्धान्तस्तु—अधिकारार्थकाथशब्दबलेनोत्तरस्मिन् पूर्वस्यानन्वयप्रतीतेः। अन्यथा 'इदं त्वाग्रयणाग्रं इत्युक्त्यापत्तौ अथशब्दानाञ्जस्याद्वाक्यत्रयमेवेदमनीकान्तरवाक्य इव।

---

त्र्यनीकायां न्यायोक्तेषु।

**दशमं चाह्नरिति।** पृष्ठ्यषडहमारभ्य दशममविवाक्यमित्यर्थ.। **अथेतरेषां नवानामिति।** पृष्ठ्यषडहमारभ्य तृतीयछन्दोमाहरन्तानां नवानामित्यर्थः। **एकं वृणीते इति।** यथा 'त्रीन् वृणीते' इति विहितस्य त्रित्वस्य, एकं वृणीते इति स्तुत्यर्थोऽनुवादः, यथा वा तिस्र एव सान्हस्येति वाक्येन विहितस्य त्रित्वस्य स्तुत्यर्थो 'द्वादशाहीनस्य' इति; यथा वा यत्किञ्चित्प्राचीनमग्नीषोमीयादिति वाक्येनैवोपांशुत्वस्य प्राप्तेः उपांशूपसत्सु इति वचनं 'यावत्या वाचा कामयीत' इत्यादि स्वरविधीनां स्तुत्यर्थोऽनुवाद· तद्वदित्यर्थः। यत्र प्रयोजनान्तरमन्यत्र लभ्यते, तत्रागत्याऽर्थवादत्वं कल्प्यते, यथा पूर्वोदाहृतवचनेषु। प्रकृते तु ज्ञापकान्तरस्य प्रयोजनान्तरस्य च सत्वात् विधित्वमेव युक्तमित्यभिप्रेत्य सिद्धान्तमाह—**सिद्धान्तस्त्विति।** गर्गत्रिरा-

तत्प्रयोजनं चातिदेशप्रवृत्तेः पूर्वमेतद्वाक्येनैन्द्रवायवाग्रत्वशुक्राग्रत्वयोर्विधावतिदेशस्ये-तद्विषयत्वाकल्पनान्नैमित्तिकत्वसिद्धिरेव ॥

तत्फलं च तत्तद्विकृतिषु असत्यपि निमित्ते तत्तदग्रतासिद्धिः। यथा गर्गत्रिरात्रे 'द्वितीयमहर्वामदेव्यपृष्ठम्' इति। तत्रासत्यपि बृहत्सामत्वे शुक्राग्रत्वनियमसिद्धिः। अन्यथा अनियमेन यस्य कस्य चिद्ग्रहस्य प्राथम्यं प्रकृतिदृष्टपाठानुरोधाद्वा ऐन्द्रवायवस्य स्यादिति। पूर्वपक्षे अङ्गान्तराणां परिसङ्ख्यानत्वाच्च बाधोपयोगिता ॥

---

(२४)—द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७९ ॥ व्यूढो वा लिङ्गदर्शनात्समूढविकारः ॥ ८० ॥ कामसंयोगात् ॥ ८१ ॥ तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥

पूर्वोक्ताग्रतासमूहविशेषः समूढपदार्थः। त विधाय 'अथ व्यूढः ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नां ऐन्द्रवायवाग्रं प्रथममह, अथ शुक्राग्रे, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रं, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रं, अथ द्वे ऐन्द्रवायवाग्रे इत्यनेन व्यूढात्मकोऽग्रतासमूहविशेषो विहितः ॥

अत्र चाग्रतासमूहविशेषवाचकयोरपि समूढव्यूढपदयोर्द्वादशाहेऽपि प्रयोगस्त-द्वत्वादुक्थ्याग्निष्टोमवल्लाक्षणिकः। तत्र समूढस्य तावत् फलाश्रवणात् प्रकरणात्क्रत्वङ्गत्वं निर्विवादमेव। व्यूढस्य तु 'यः कामयेत बहु स्यां प्रजायेयेति, स व्यूढेन यजेत' इति वचनेन द्वादशाहाश्रितव्यूढप्रकारस्य फलोद्देशेन विधानात्काम्यत्वम् ॥

अत्र चाश्रयस्यानेककर्तृकत्वेऽप्येककामनयाऽपि गुणानुष्ठान भवतीति सूचयितुमेक-वचनम्। अहीनाभिप्रायं वा तत्। व्यूढस्य च क्रत्वर्थत्वमप्यस्ति न वेति चिन्तायां—

---

त्रेति। तत्र हि 'अग्निष्टोम उक्थ्योऽतिरात्र' इति त्रयाणामन्हां क्लृप्तिं विधाय 'रथन्तरं वामदेव्यं बृहदिति पृष्ठानि' इत्येवं वामदेव्यस्य द्वितीयेऽहनि विधानादित्यर्थः।

---

द्वादशाहस्य व्यूढसमूढत्वम्।

आश्रयस्येति। द्वादशाहस्येत्यर्थः। अनेककर्तृकत्वेपीति। सत्रात्मकत्वाभि-प्रायेणैतत्; अहीनस्यैककर्तृकत्वेनापि विधानादित्यर्थः।

---

इन्द्रियकामवाक्येन दध्नः पुरुषार्थत्वेऽपि 'दध्ना जुहोति' इत्यनेन तस्य क्रत्वर्थत्ववत् व्यूढस्य कामवाक्येन पुरुषार्थत्वेऽपि क्रत्वर्थत्वस्यापि निरुक्तवाक्येनोपपत्तेः संयोगपृथक्त्वन्यायेनोभयार्थत्वमिति प्राप्ते—

दध्नः स्वरूपेण दधिपदवाच्यत्वेन च लोकावगततया इन्द्रियकामवाक्यमात्रेण तस्य पुरुषार्थत्वावगतेरनन्यार्थकेन 'दध्ना जुहोति' इत्यनेन युक्तं क्रत्वर्थत्वम्। प्रकृते तु व्यूढस्वरूपस्य तत्पदवाच्यत्वस्य चान्यतोऽनवगतेर्निरुक्तवाक्यस्य तद्बोधकत्वेनोक्थ्यादिस्वरूपबोधकवाक्यवदन्यार्थत्वात् न क्रत्वर्थत्वम् ॥

अत्र चाग्रताविशेषस्य ग्रहणाङ्गतया क्रत्वर्थत्वेऽपि तदानुपूर्वीघटितसमूहविशेषस्य व्यूढपदवाच्यस्य पुरुषार्थत्वान्न क्रत्वर्थत्वम्। अतश्च तस्य विकृतावप्रयोगः। प्रकृतावपि कामनाभावे न समूढबाधकत्वमिति बाधोपयोगिताऽपि ॥

---

(२५)—एकादशिनीवत्त्र्यनीकापरिवृत्तिस्स्यात् ॥ ८३ ॥ स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ८४ ॥ पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवस्स्यात् ॥ ८५ ॥ वचनात्परिवृत्तिरेकादशिनेषु ॥ ८६ ॥ लिङ्गदर्शनाच्च ॥ ८७ ॥

गवामयने एकषष्ट्यधिकशतत्रयं सुत्याः। तत्राशीतिशतं पूर्वं पक्षः तथोत्तरं, मध्ये विषुवान्। तासा क्लृप्तिस्ताण्डकशाखिनां समाम्नाता—'प्रायणीयं प्रथममहः, चतुर्विंशं द्वितीयं, ततश्चत्वारोऽभिप्लवाष्षडहास्तानि चतुर्विंशत्यहानि, एकः पृष्ठ्यष्षडहः, एवं मासः,

---

एकादशिनीवत्त्र्यनीकापरिवृत्तिः स्यात्। शाट्यायनके भाल्लवे चान्यथाऽहः क्लृप्तावपि शास्त्रदीपिकानुसारेण ताण्डकस्थामेव तां दर्शयति—तासामिति। प्रायणीयं प्रथममिति। प्रथमानुष्ठेयतया प्रायणीयपदं यौगिकं नामधेयम्; न त्वतिदेशकं गौण्येत्युक्तं सप्तमे। चतुर्विंशम्—चतुर्विंशस्तोमकमिति गुणविधिरयं न नामधेयम्। अभिप्लवा इति। 'ज्योतिर्गौरायुः गौरायुर्ज्योतिः इति षण्णां समूहे अभिप्लव इति नामधेयम्; तत्सञ्ज्ञाश्चत्वारो विधीयन्ते। एकः पृष्ठ्य इति। द्वादशाहे उत्पन्नस्य षडहस्य पृष्ठ्य इति नाम; तन्नामकोऽयं कर्मान्तररूपः षडह इत्यर्थः। अथवा प्रकरणान्तराधिकरणकौस्तुभोक्तरीत्या सार्वकाम्यवाक्ययोरिव नाम्ना पूर्वकर्मपरामर्शेऽपि पक्षे गवामयनप्रकरणाम्नानमात्रेण तेषामेव फलसम्बन्धमात्रमेवैवमादिषु ज्ञेयम्;

तादृश एव द्वितीयस्तृतीयश्चतुर्थः पञ्चमः ततस्त्रयोऽभिप्लवाष्षडहाः तान्यष्टादशाहानि, एकः पृष्ठ्यषडहः अभिजिन्नामैकाहः, त्रयस्स्वरसामानः इत्यष्टाविंशत्यहानि, आद्याभ्या-महोभ्यां सह षण्मासाः, तदिदं पूर्वं पक्षः। मध्ये विषुवान्। अथोत्तरं पक्षः त्रयस्स्व-रसामानः, विश्वजिन्नामैकाहः, एकः पृष्ठ्यषडहस्त्रयस्त्रिंशारम्भणः, त्रयोऽभिप्लवा-ष्षडहाः, तान्यष्टाविंशत्यहानि, पुनः पृष्ठ्यषडहस्त्रयस्त्रिंशारम्भणः, चत्वारोऽभिप्लवाष्ष-डहाः, एवं मासः, तादृश एव द्वितीयस्तृतीयश्चतुर्थः। ततस्त्रयोऽभिप्लवाः षडहाः, आयु-र्गौरिति द्वे अहनी, द्वादशाहस्य दशाहानि, महाव्रतं चातिरात्रश्चेति द्वात्रिंशदहानि, आद्यैरष्टाविंशत्यहोभिस्सह षण्मासाः' ॥

तदेवंविधसुत्यात्मके गवामयने पूर्वपक्षावान्तरप्रकरणे त्र्यनीका श्रुता—'ऐन्द्रवाय-वाग्रं प्रथममहः अथ शुक्राग्रं अथाग्रयणाग्रं अथैन्द्रवायवाग्रं अथ शुक्राग्रं अथाग्रयणाग्रं अथैन्द्रवायवाग्रं अथ शुक्राग्रं अथाग्रयणाग्रं' इति। नवभिश्चाग्रताभिरनेकान्यहानि न पूर्यन्त इति अवश्यकर्तव्यतायामावृत्तौ किं नवसु दिनेषु नवाग्रताः कृत्वा पुनरन्येषु नवसु कर्तव्याः इत्येवं दण्डकलितवदावृत्तिः ? उत पूर्वस्य पक्षसो नवधा विभागं कृत्वा विंशतिसुत्यात्मके एकैकस्मिन् भागे एकैकाऽग्रता ? इति स्वस्थानविवृद्धिरिति चिन्तायां—

---

न तु कर्मान्तरत्वमिति ध्येयम्। अभिजिदिति। एकाहकाण्डपठिताभिजिन्नामकैकाहः कर्मान्तररूपः। त्रय इति। स्वराख्यसामविधेः तत्प्रख्यन्यायेन स्वरसामान इति नामधेयम्। "द्वौ स्वरसामानौ" इत्येतद्वाक्यविहितस्वरसामधर्मातिदेशकम्। विश्वजिन्नामेति। एकाह-काण्डपठितविश्वजिन्नामक इत्यर्थः। त्रयस्त्रिंशेति। पूर्वस्मिन् पक्षसि एकस्मिन् षडहेऽन्तिम-महः त्रयस्त्रिंशत्स्तोमकमासीत्। इहतु प्रातिलोम्यविधेः तस्याद्यमेवाहः तत्स्तोमकं भवतीति त्रयस्त्रिं-शारम्भणनामकस्त्रिवृदहरन्तषडह इत्यर्थः। तान्यष्टाविंशत्यहानीति। सप्तममासीयानीत्यर्थः। एवं मास इति। अष्टम इत्यर्थः। तादृश एव द्वितीय इति। नवमो दशम एकादश इत्यर्थः। तत इति। द्वादशो मास इत्यर्थः। स्पष्टार्थमन्यत्। आयुर्गौरिति। आयुर्गो-संज्ञकैकाहनामके अभिप्लवसम्बन्धिनी द्वे अहनी इत्यर्थः। महाव्रतं महाव्रतनामकम्। अतिरात्रः अतिरात्रसंस्थाकः उदयनीयः। आद्यैरिति। अत्र च प्रथममाससम्बन्धि-नामष्टाविंशतीनां पूरणं महाव्रतातिरात्राभ्यां ज्ञेयम्; 'व्रतातिरात्राभ्यां प्रथम उत्तरस्मिन्' इति च्छन्दोगसूत्रकारवचनादित्यर्थः। औपदेशिकीं अनीकामाश्रित्य यथावार्तिकमेवाधिकरणविषयं दर्शयति—तदेवंविधेति। त्र्यनीकेति। अग्रवचनोऽनीकशब्दः। त्रयाणामनीकानां

अहश्शब्दश्रवणात् तस्यैव च फलसाधनत्वात्तदुद्देशेनैव अग्रता विधीयते। न तु अहस्समुदायोद्देशेन। न चैवं सर्वासामग्रतानां सर्वेष्वहस्सु प्राप्तयापत्तिः, स्थानक्रमेण प्रथमसुत्यायां प्रथमाग्रताया एव प्राप्तेः॥

अत एव प्रथमादिपदानामनुवादत्वान्न विशिष्टानुवादोऽपि। अत एवाहरपूर्वप्रयुक्ता एवैता अग्रताः। अतश्च नवभिरग्रताभिः नवस्वहस्सु अनुष्ठितेषु पुनरिदमेव वचनमुपतिष्ठत इत्यतो दण्डकलितवदावृत्तिरिति प्राप्ते—

स्थानक्रमेणोद्देश्यवाचकस्याहःपदस्य प्रकरणस्य च सङ्कोचे प्रमाणाभावात्। अन्यथा व्रीहीणामाग्नेयाङ्गत्वं यवानां चाग्नीषोमीयाङ्गत्वमिति व्यवस्थापत्तेस्सर्वेष्वहस्सु एकैकाग्रताऽऽपद्येत। न चेष्टापत्तिः, प्रथमशब्दाथशब्दयोर्विधिनवकस्य च वैयर्थ्यापत्तेः। अतो लाघवात् प्रथमपदमथशब्दोन्नीतद्वितीयादिपदं चोद्देश्यसमर्पकम्॥

अतश्च पूर्वस्य पक्षसो नवधा विभागं कृत्वा एकैकस्मिन् विंशतिदिनात्मके भागे एकैकाऽग्रता विधीयते। अहश्शब्दश्चाहस्सङ्घाते लाक्षणिकोऽनुवादः। एवं द्वादशाहस्थत्र्यनीकावाक्ये प्रथमादिभागोद्देशेनैवाग्रताविधिः। भागः परमहरात्मक इत्यहश्शब्दोऽनुवादः। प्रकृते च भागधर्मत्वात् परमापूर्वप्रयुक्तत्वं, अतस्स्वस्थानविवृद्धिः॥

एवं चोत्तरे पक्षसि पञ्चमे षाडहिके त्रयस्त्रिंशेऽहनि आग्रयणाग्रतादर्शनं 'जगती वै छन्दांसि प्रत्यवरोहन्ति आग्रयणं ग्रहाः बृहत्पृष्ठानि त्रयस्त्रिंशं स्तोमाः' इत्युपपन्नं भवति॥

तथा हि—स्वस्थानविवृद्धौ पूर्वस्मिन्नेव पक्षसि सम्पूर्णा त्र्यनीका समाप्यते। यच्च पूर्वस्मिन् पक्षसि आनुलोम्येनानुष्ठितं तदङ्गं तदुत्तरे पक्षसि प्रातिलोम्येन कर्तव्यतया 'आवृत्तं पक्ष उपयन्ति' इति वचनेन विहितम्। अत्र हि न पुनः करणमात्ररूपावृत्तिर्विधीयते

---

समाहारस्त्र्यनीका। त्रिफलाशब्दवत् अजादेराकृतिगणत्वात् द्विगोरपि टाप् प्रत्ययः। जगती वै छन्दांसीति। जगतीं प्रति जगतीप्रभृति छन्दांस्यवरोहन्ति प्रातिलोम्यं भजन्ते। एवमग्रेपि प्रत्यवरोहन्तीत्यनुषङ्गेण ज्ञेयम्। यत्तु कैश्चित् एतदेव वचनत्वेनाङ्गीकृत्य प्रातिलोम्यविधायकमित्युक्तम्, तत् एतस्य भाष्यकृता लिङ्गदर्शनरूपतयोपन्यस्तत्वात् विधित्वासम्भवादयुक्तमिति तन्त्ररत्ने द्रष्टव्यम्। अतो भाष्यकाराभिप्रेतं प्रातिलोम्यविधिमुदाहरति—आवृत्तं पक्ष उपयन्तीति। यत्पूर्वपक्षसि गणरूपतामापन्नमङ्गं छन्दः स्तोमत्र्यनीकादिरूपं यथा छन्दोगणो जगत्यन्तः, अनीकागणश्चाग्रयणान्तः, पृष्ठगणश्च बृहदन्तः स्तोमगणश्च त्रयस्त्रिंशान्तः इत्येवमयमनुलोमं तदुत्तरे पक्षसि 'अन्यत्र द्वादशाहीयाद्दशरात्रात्' इति आपस्तम्बसूत्रे दशरात्रं विहाय प्रतिलोमतया विहितमित्यर्थः। कथमनेनाभ्यासमात्रविधिपरतया भासमानेन प्रातिलोम्यपर्यन्तार्थविधानमित्यत आह—अत्र हीति। तत्तद्यागोत्पत्तिवाक्यैरेव प्रतियागमङ्गभूतस्तो-

अपि तु 'षड्भिरितो मासैरध्वानं यान्ति षड्भिः पुनरायान्ति' इति वचनान्तरानुसारात् प्रातिलोम्यरूपा। अत एव पूर्वस्मिन् पक्षसि षडहे 'गायत्रं त्रैष्टुभं जागतं गायत्रं त्रैष्टुभं जागतम्' इत्येवं क्रमेण षडपि दिनानि तेषां प्रातिलोम्ये षडहाद्यं दिनं जागतं सम्पद्यते। तथा पूर्वस्मिन् पक्षसि षडहे प्रथमदिने रथन्तरं उत्तरदिने बृहदित्येव क्रमेण षष्ठे बृहत् तस्य प्रातिलोम्ये आद्ये बृहत्सम्पद्यते। तथा तस्मिन्नेव षडहे क्रमेण त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशस्तोमके षष्ठमहः त्रयस्त्रिंशस्तोमकं तस्य प्रातिलोम्ये आद्यं तथा सम्पद्यते॥

अतश्च तद्वदेव त्र्यनीकाया अपि प्रातिलोम्येनानुष्ठाने उत्तरस्य पक्षसः पूर्वस्मिन् विंशतिदिनात्मके भागे आग्रयणाग्रता जायत इति लिङ्गमुपपद्यते। दण्डकलितवदावृत्तौ तु पूर्वस्मिन् पक्षसि आद्यदिनद्वये पुनर्विशिष्यैन्द्रवायावाग्रत्वस्य विधानात् त्र्यनीका तृतीयदिन-

---

माभ्यासस्य प्राप्तत्वान्न पुनर्विधानं सम्भवतीत्यर्थः। अध्वानं यान्तीति। स्वर्गलोकाध्वानमित्यर्थः। अत एव विषुवत्प्रकरणे महाब्राह्मणे विषुवत्सम्बन्ध्यग्निष्टोमस्तोत्रसम्बन्धिनो भासाख्यसाम्नः 'मूर्धानं दिवः' इत्यृगंशे स्वर्गगमनं स्तुत्वा 'अरतिं पृथिव्या' इत्यृगंशे पुनरागमस्तुतिरुक्ता। एवञ्च पुनरागमज्ञापकबलात् मासानामहर्गणप्रातिलोम्यं सिद्धं भवति। तच्चाहःक्लृप्तौ स्पष्टमेव दर्शितमिति भावः। अनेनैव प्रातिलोम्यप्राप्तेः 'जगती वै च्छन्दांसि' इत्यस्य उत्तरपक्षोगतपृष्ठ्यषडहाभिप्रायत्वेन प्राप्तानुवादकत्वाल्लिङ्गदर्शनत्वमुपपादयति—अत एव पूर्वस्मिन्नित्येवं क्रमेणेति। द्वादशाहिकषडहे रथन्तरादीनां रैवतान्तानां साम्नां पृष्ठेषु विधानेपि गवामयने पृष्ठ्यः षडहो रथन्तरसामा कार्यः इति वक्ष्यमाणवचनेन वैरूपादिबाधेन रथन्तरबृहत्साम्नोरेव क्रमेण विधानादित्येवं क्रमोक्थ्यगवामयनपुरस्कारेण तैत्तिरीयशाखायां रथन्तरबृहतोर्विशिष्य विधानादय क्रम इत्यर्थः। एवं स्थिते च्छन्दोगकल्पे 'अत्र होतुः पृष्ठे वैरूपादीनां निवेशप्रदर्शनं शाखान्तरीयत्वेन नेयमिति ध्येयम्। इति तल्लिङ्गमिति। पूर्वपक्षसो नवमे विंशतिदिनात्मके भागे आग्रयणाग्रताऽन्त्ये जाता। तस्याः प्रातिलोम्येन उत्तरपक्षस आद्ये विंशतिदिनात्मकेऽनुष्ठाने तन्मध्यपतितत्वेन पञ्चमाहोरूपे षडहाद्ये त्रयस्त्रिंशत्स्तोमकताऽऽग्रयणाग्रता [च] सम्पद्यत इत्यर्थः। पूर्वपक्षेपि[1] विंशतिकृत्वो नवकावृत्तिः कुतो न स्यादित्यत आह—आद्यदिनद्वये इति। षडपि दिनानीत्यत्र च गवामयनान्तर्गतस्य पृष्ठ्यषडहस्य कर्मान्तरस्य द्वादशाहीयपृष्ठ्यषडहविकृतित्वेन नामातिदेशेन

---

1. पक्षोपि

नमारभ्य प्रवर्तते। ततश्च तस्याः एकोनविंशतिवारमावृत्तायाः पुनरपि सप्तद्विनात्मक-

---

तद्धर्मप्राप्तेः द्वादशाहे च रथन्तरबृहतोः 'अभित्वा शूर' 'त्वामिद्धि हवामहे' इत्यनयोरेव योन्योर्गानस्य सामगकल्पसूत्रेष्वाम्नानदर्शनात् तदतिदेशप्राप्ततया इहापि तयोरेव होतुः पृष्ठे पूर्वपक्षसि प्राप्तेः गायत्रत्रैष्टुभजागतत्वमुच्यमानं कथमिव युक्तमिति चिन्त्यम्। एतावानेव हि कल्पसूत्रकाराणामिह विशेषः यत् तेषामिह रैवतादिसाम्नामनुष्ठानम्; मीमांसकानान्तु तन्निवृत्त्या तत्स्थाने रथन्तरबृहतोरेव; न त्वेतावता तयोः प्राकृतयोनि(त्वा)बाधोऽपि।

यदि तु द्वादशाहीयपृष्ठ्यषडहे 'अग्निर्वै देवता प्रथममहर्भवति' इत्याद्यैतरेयब्राह्मणे आद्येषु त्रिष्वहस्सु गायत्रीत्रिष्टुब्जगतीछन्दसां विधानं छन्दोगकल्पसूत्रविरुद्धमस्त्येवेत्यालोच्यते तदा आद्येषु त्रिष्वहस्सु गायत्रत्वाद्युपपत्तावपि तत्रैव ब्राह्मणे 'तानि ह तर्हि त्रीणि च्छान्दांसि' इत्यादिना अनुष्टुब्जगतीच्छन्दसामेवोत्तरेषु त्रिष्वहस्सु विधानदर्शनात् तेषु गायत्रत्वादिकथनमयुक्तम्। न चानुष्टुबादिच्छन्दसां वैराजादिसामाधारतया तत्राम्नानेपि बृहद्रथन्तरसामाधारतानाम्नानान्नानुपपत्तिः। अत एव भाष्यकारैः विद्यारण्यगुरुभिरवतारितमिदं ब्राह्मणम्—अथ पृष्ठस्तोत्रसामाधारतया षड्विधानि च्छन्दांसि दर्शयतीति—इति वाच्यम्। बृहद्रथन्तरयोर्वैरूपादिबाधकत्वेपि एतद्ब्राह्मणविहितगायत्र्यादिच्छन्दसां स्वेतरबृहदाधारतयापि निवेशोपपत्तेः तद्बाधे प्रमाणाभावात्। इतरथा वैरूपसामके तृतीयेऽहनि जगतीच्छन्दसः प्राप्तावपि रथन्तरसामकत्वेन क्रियमाणे तस्मिन् जगतीप्राप्त्यभावेन जागतत्वानुपपत्तेः। अतोऽत्र ब्राह्मणविहितगायत्र्यादिच्छन्दसामेव प्राप्तेः उपरितनेषु त्रिष्वहस्सु गायत्रत्वादिकल्पनं अनुष्टुब्जगतीच्छन्दसामुपलक्षणतया व्याख्येयम्। अथवा तत्रैव ब्राह्मणे अनुष्टुब्जगतीच्छन्दसां क्रमेण गायत्रीत्रिष्टुब्जगतीगर्भत्वेनोत्पत्त्यभिधानात् कार्यभूतेषु तेषु कारणधर्मोपचारेण गायत्रत्वादिकं व्याख्येयम्। एवञ्चास्मिन् पक्षे 'जगतीं वै छन्दांसि प्रत्यवरोहन्ति' इत्येतदुदाहरणत्वं नासङ्गतं भवति। यदि त्वत्रानाश्वासस्तर्हि जगत्यन्तश्छन्दोगणः आग्रयणान्तोऽग्रतागण इत्यादितन्त्ररत्नलिखनात् कस्याञ्चिच्छाखायां सर्वत्र जगत्यन्तत्वं पूर्वस्मिन् पक्षसि आम्नातमित्यनुमानात् तदभिप्रायेण पूज्यपादानां लिखनमित्यवधेयम्। यत्तु अत एव पूर्वस्मिन् पक्षसि षडहे इति मूले सामान्यतोऽभिधानात् अभिप्लवषडहाभिप्रायमेवैतदुदाहरणं युक्तम्। तैत्तिरीयशाखायां गवामयनपूर्वपक्षसि अभिप्लव षडह एव, छन्दांसि वै देवयानः पन्थाः गायत्री त्रिष्टुप् जगतीति ज्योतिर्वै गायत्री गौस्त्रिष्टुक् आयुर्जगती, तदेते स्तोमा भवन्ति देवयानेनैव तत्पथा यन्ति" इत्यादिना गायत्र्यादिजगत्यन्तानामाम्नानात् तत्रैव चायुग्मेषु रथन्तरं युग्मेषु बृहदित्यादिक्रमेण रथन्तरबृहत्साम्नोः तथापि गायत्र्यादिजगत्यन्तानामाम्नानात्। तत्रैव

**शिष्यन्त** इति न पूर्वस्मिन् पक्षसि **त्र्यनीकासमाप्तिः। तेन** सामर्थ्यात्मकेन **लिङ्गेन पूर्वपक्षो-धान्तरप्रकरणं बाधित्वा महाप्रकरणादियं गवामयनाङ्गं सम्पद्यते। तदा च प्रातिलो-म्यविधिरस्यां न प्रवर्तते। पूर्वपक्षाङ्गस्यैवोत्तरे पक्षसि प्रातिलोम्यविधानात्।** ततश्च

---

च आयूरथन्तरं युग्मेषु बृहदित्यादिक्रमेण रथन्तरबृहत्साम्नोः तथा त्रिवृदादिस्तोमानामप्याम्नानाच्च। पृष्ठ्यषडहे तु रथन्तरबृहत्साम्नोः तदीयत्रिवृदादिक्रमेण स्तोमानामप्याम्नानात् तेषामेव प्रत्यव-रोहणम्। जगत्यन्तछन्दसामाम्नानाभावात् न तत्प्रत्यवरोहोदाहरणत्वम्। यत्त्वैषामाम्नानं तत्रैव तत्प्रत्यवरोहणप्रदर्शनपरत्वादिति न काप्यनुपपत्तिरित्येकदेशिव्याख्यानं तत् अभिप्लवीयस्य षष्ठस्य ज्योतिस्सञ्ज्ञकस्य गायत्रत्वात् चतुर्थस्य जागतत्वात् उत्तरेषां त्रयाणामह्नां क्रमेण गायत्र-त्वाद्यभावात् गायत्रं त्रैष्टुभ जागतमित्येव षडपि दिनानीत्यस्यानुपपत्तेरुपेक्ष्यम्। अभिप्लवषडहे अह्नामुत्तरेषां त्रयाणां वैपरीत्येपि गायत्र्यादिच्छन्दसां वैपरीत्ये प्रमाणाभावात्। अत एवो-त्तरेषु त्रिष्वहस्सु गायत्रत्वादिकं पृष्ठ्यषडहेऽभिप्लवषडहे वाप्युच्यमानं प्रमादपतितमुपेक्ष्य, अथवा पूर्वोक्तरीत्यैव वा समाधेयमित्यलं विस्तरेण।

स्वस्थानविवृद्धौ हि विंशतिदिनात्मकाद्यभागान्तर्गततया आद्यदिनद्वयसम्बन्ध्यौपदेशिक्यैन्द्र-वायवाग्रतया अविरोध एव। न च विशेषविहिताभ्यामैन्द्रवायवाग्रताभ्यां सामान्यप्रवृत्तत्र्यनीका-बाध एवेति तयोस्तस्या निवेश इति वाच्यम्। विशेषविधेः तत्तदहरपूर्वप्रयुक्ततया विधानेनापि सार्थक्यस्य वक्ष्यमाणतया भागधर्मतया प्राप्तत्र्यनीकाबाधकत्वाऽऽयोगात्। अतः प्रायणीयप्रभृ-त्येव सिद्धाते त्र्यनीकाप्रवृत्तिः। पूर्वपक्षे तु प्रायणीये प्रथमेहनि अविरोधसम्भवेपि चतुर्विंशे द्वितीयेऽहनि शुक्राग्रत्वस्यैव प्राप्तेः तद्बाधनार्थमावश्यके विधौ अहरपूर्वप्रयुक्ततयाऽनेन वाक्येन ऐन्द्रवायवाग्रतैव प्राप्तेति न त्र्यनीकाप्रवृत्तिः सम्भवति। न च शुक्राग्रताया अपि प्रत्यक्षपठित-त्वान्न बाधसम्भवः। तस्या द्वितीयायामप्यावृत्तौ सावकाशत्वेन सामान्यरूपाया विशेषविहितैन्द्र-वायवाग्रतया बाधोपपत्तेः। अतस्तयोरनिविशमाना औपदेशिक्यपि त्र्यनीका सामान्यविषयत्वात् तृतीयदिनमारभ्यैव निविशमाना शतदिनोत्तरं अष्टसप्तदिनेषु पूर्यते। तत्रैकोनविंशतिकृत्वः दण्डकलितवदावृत्तौ एकसप्ततिदिनमभिव्याप्यैव पूर्णा भवति इति विंशतिदिनात्मकेन भागेन पूर्त्यभावात् सप्तदिनान्यवशिष्यन्त इत्यर्थः। **इति न पूर्वस्मिन् पक्षसीति।** अतोऽपेक्षित-दिनद्वयाभावेनेति पूर्वत्र शेषः। **सामर्थ्यात्मकेनेति।** अनीकाया दण्डकलितवदावृत्त्या समभागेन नवदिनपर्याप्तत्वरूपसामर्थ्यात्मकेनेत्यर्थः। **अतश्च विषुवन्तमिति।** प्रातिलोम्यविध्य-प्रवृत्तौ प्रातिलोम्येन तदनुष्ठानेपि विषुवदादीनामेव ग्रहणप्रसक्तौ मध्यतनविषुवन्तमुत्तरपक्षोगत

विषुवन्तं स्वरसामाद्यं च गृहीत्वा त्र्यनीकासमाप्तिः। ततः पुनस्तथैव त्र्यनीकानुष्ठाने द्वितीयमैन्द्रवायवाग्रं तृतीयं शुक्राग्रं विश्वजित् आग्रयणाग्रं षडहाद्यमैन्द्रवायवाग्रं प्राप्नोतीति लिङ्गानुपपत्तिः॥

न चैव सिद्धान्ते त्र्यनीकाविधिनैव पूर्वपक्षःप्रथमभागान्तर्गतयोराद्ययोः प्रायणीयचतुर्विंशायोरह्नो रैन्द्रवायवाग्रत्वप्राप्तिसिद्धेः पुनस्तयोरैन्द्रवायवाग्रत्वविधिः व्यर्थ इति वाच्यं, त्र्यनीकाविधिना भागधर्मत्वेन परमापूर्वप्रयुक्तत्वेन प्राप्स्यमानाया अपि ऐन्द्रवायवाग्रतायास्तत्तदहरपूर्वप्रयुक्तत्वसिद्ध्यर्थं विधानात्। तत्फलं वाचनिकातिदेशादिना तन्मात्रविकारे एकाहादौ असत्यपि रथन्तरसामत्वे ऐन्द्रवायवाग्रत्वनियमसिद्धिः। अतः स्वस्थानविवृद्ध्या विंशत्यहरात्मके भागे ऐन्द्रवायवाग्रत्वस्य औपदेशिकस्य निवेशात् तत्तदहस्स्वातिदेशिकतत्तदग्रताबाध इति बाधोपयोगिताऽपि॥

यत्तु भाष्यकारेणौपदेशिकीं त्र्यनीकामनुक्त्वैवातिदेशिकीं द्वादशाहिकीं नवाहस्सम्बन्धिनीं त्र्यनीकां गावामयनिकपूर्वपक्षसि प्राप्तामुदाहृत्य दण्डकलितवदावृत्त्या पूर्वपक्षं कृत्वा पूर्ववदेव स्वस्थानविवृद्धिसिद्धान्तो लिङ्गदर्शनं च व्याख्यातम्। तन्न—द्वादशाहान्तर्गतदशाहप्रवृत्तेरेव सर्वविकृतिषु साधितत्वेन नवाहस्सम्बन्धित्र्यनीकामात्रप्राप्तेरनुक्तिसहत्वात्। अतः दशानामग्रतानां पूर्वस्मिन् पक्षसि दशधा विभागे दशमो भागोऽष्टादशदिनात्मकः ऐन्द्रवायवाग्रस्स्यात्, प्रकृतौ दशमस्यैन्द्रवायवाग्रत्वात्। ततश्चोत्तरस्मिन् पक्षसि प्रातिलोम्ये प्रथमो भाग ऐन्द्रवायवाग्रः प्राप्नोतीति सिद्धान्तेऽप्याग्रयणाग्रताऽनुपपत्तिः॥

वस्तुतस्तु—आतिदेशिकत्र्यनीकायाः पूर्वपक्षस्यैव प्राप्तौ प्रमाणाभावः। कृत्स्ने हि गवामयने सा प्राप्येत। अतस्तस्य कृत्स्नस्य नवधा दशधा वा विभागे क्रियमाणे चत्वारिंशद्दिनात्मकः षट्त्रिंशद्दिनात्मको वा एकैको भागः प्राप्नोति। ततश्च

---

स्वरसाम्नां त्रयाणामाद्यं च गृहीत्वा तस्याः समाप्तिरित्यर्थः। **पुनस्तथैवेति**। दण्डकलितवदावृत्त्येत्यर्थः। **द्वितीयमिति**। स्वरसाम्नां द्वितीयमित्यर्थः। **तत्तदहस्स्विति**। विंशतिभागान्तर्गतेषु प्रायणीयचतुर्विंशाद्यहस्सु द्वादशाहान्तर्गतदशरात्रातिदेशतः प्राप्ता या ऐन्द्रवायवाद्या अग्रताः तासां औपदेशिकया तत्तद्भागधर्मरूपया बाधे सति पूर्वपक्षसि प्रथमेषु विंशतिदिनेषु ऐन्द्रवायवाग्रतैव तदुत्तरेषु विंशतिदिनेषु शुक्राग्रतेत्यादिरूपेणानुष्ठनात् तत्तद्भागान्तर्वर्तिषु अहस्सु तत्तदग्रताबाधः। तत्प्रातिलोम्येन च उत्तरपक्षस्यनुष्ठानमित्यर्थः। **पूर्वपक्षस्यैवेति**। औपदेशिकत्र्यनीकापक्षे तस्या महाप्रकरणात् गवामयनाङ्गत्वप्राप्तावपि अवान्तरप्रकरणेन बाधात् पूर्वपक्षस एवाङ्गमिति वैषम्यादिति भावः। **चत्वारिंशद्दिनात्मक इति**। नवधा विभागे चत्वारिंशद्दिनात्मक एको भागः,

त्र्यनीका न पूर्वस्मिन् पक्षसि समाप्यत इति न तद्विषये प्रातिलोम्यविधिरपि प्रवर्तते। ततश्च नवधा विभागे त्रयस्त्रिंशस्य पञ्चमभागान्तर्गतत्वात् शुक्राग्रत्वप्राप्तेराग्रयणाग्रतादर्शनानुपपत्तिः। दशधा विभागे तु तस्य षष्ठभागान्तर्गतत्वात् आग्रयणाग्रत्वप्राप्त्या लिङ्गदर्शनोपपत्तावपि भाष्यग्रन्थानुपपत्तिः दुरुद्धरा॥

किञ्च—गवामयने न चोदकेन त्र्यनीका प्राप्यते, तत्र ह्यभिप्लवषडहादौ बहुधा नामातिदेशेनैव धर्मप्राप्तिः। तथाहि—अभिप्लवे तावत् 'ज्योतिर्गौरायुर्ज्योतिर्गौरायुः' इत्येवं षडहाः तेषु ज्योतिराद्येकाहधर्मप्राप्तिर्नामातिदेशेन। तेषु च नैमित्तिकमैन्द्रवायवाग्रत्वं शुक्राग्रत्वं च ज्योतिष्टोमात्। अतश्चाभिप्लवे षडहे प्रथमतृतीयपञ्चमानां रथन्तरसामत्वादैन्द्रवायवाग्रता, द्वितीयचतुर्थषष्ठानां बृहत्सामकत्वात् शुक्राग्रतेति न तेषु त्र्यनीकाप्राप्तिः। एवं विश्वजिदादिष्वपि नामातिदेशस्यावश्यकत्वादैन्द्रवायवाग्रत्वं न त्र्यनीकाप्राप्तिः। एतद्धर्ममेव बहुशो गवामयनमिति न तस्मिन् त्र्यनीकाप्राप्तिः॥

न च नामातिदेशेन प्रकृतौ ये विशिष्योपदेशिका धर्माः तेषामेव प्राप्तिर्न तु ये प्रकृतावप्यातिदेशिकाः तेषामव्यक्तत्वसादृश्येन ज्योतिष्टोमादेव तेष्विवाभिप्लवेष्वपि प्राप्त्युपपत्तेः। अतश्च तदतिदेशापेक्षया गणत्वसादृश्यकल्पितातिदेशस्य विशेषनिष्ठत्वेन बलवत्त्वात्तेन त्र्यनीकातिदेशो युक्त एवेति वाच्य, आवश्यकेन नाम्नैव यावदपेक्षिताना-

---

दशधाविभागे च षट्त्रिंशद्दिनात्मक इत्यर्थः। न पूर्वस्मिन् पक्षसीति। चत्वारिंशद्दिनात्मकस्य एकैकभागत्वे चरमे भागे निपतिता शुक्राग्रतैव उत्तरपक्षोगतविंशत्यहोभिः समाप्ता भवति। षट्त्रिंशद्दिनात्मकस्य एकैकभागत्वे तु षष्ठे भाग एव उत्तरपक्षसः प्रारम्भात् तदीयाहर्व्याप्ता आग्रयणाग्रता भवति। ततश्च उभयथापि पूर्वपक्षसोऽसमाप्तेः पूर्वपक्ष्यापादितपूर्वरीत्या प्रातिलोम्यविधिनैव प्रवर्तत इत्यर्थः। भाष्यग्रन्थानुपपत्तिरिति। भाष्यग्रन्थे हि पूर्वपक्षसि त्र्यनीकासमाप्तिं कृत्वा प्रातिलोम्यविधिबलात् स्वस्थानविवृद्धौ आग्रयणाग्रतायाः पञ्चमेऽहनि सिद्धान्ते प्राप्तिरुक्ता। पूर्वपक्षस एव नवधा विभागश्चोक्तः तस्यानुपपत्तिरित्यर्थः। ज्योतिर्गौरायुरित्येवमिति। अभिप्लवे गौरायुर्ज्योतिरिति क्रमेण द्वितीयस्य त्रिकस्याम्नान प्रकाशकारैरुक्तं, तथापि 'अथ पुनः पर्यावर्तेषु' इति पञ्चमान्त्याधिकरणप्रदर्शितलिङ्गदर्शने ज्योतिरादीनां पर्यावर्तेष्विति भाष्यकृता व्याख्यानकरणात् ज्योतिरादित्वमेव द्वितीयत्रिकस्येत्यभिप्रेत्यायं द्वितीयत्रिकक्रमो लिखित इति ज्ञेयम्। वस्तुतस्तु तैत्तिरीयश्रुतौ अभिप्लवषडहे उभयतो ज्योतिष्ट्वाभिधानात् तन्त्ररत्नेपि तथैव लिखनाच्च नैतादृशपाठक्रमोदाहरणमिति ध्येयम्। एवं विश्वजिदिति। तत्र तन्त्ररत्नलिखनादाग्रयणाग्रताप्राप्तिरित्यर्थः। एतद्धर्ममेव चेति।

मौपदेशिका नामातिदेशिकानां च धर्माणां प्राप्त्युपपत्तौ तस्यां विकृतौ ज्यौतिष्टोमिक-धर्मातिदेशस्यैवाकल्पनात् ॥

न च तथाऽपि सुत्यान्तरार्थमवश्यकल्प्येन गणत्वसादृश्यातिदेशेनैव अग्रताप्राप्ति-सम्भवे नामातिदेशस्य तत्प्रापकत्वे मानाभाव इति वाच्यं; श्रुतनाम्नस्तद्विषयत्वे सम्भवति अश्रुतस्यानुमानिकातिदेशस्य तद्विषयत्वकल्पनायोगात् ॥

वस्तुतस्तु—न गवामयनादौ सकलसुत्यासाधारण्येन 'गवामयनं द्वादशाहवत्कुर्यात्' इत्येवमेकोऽतिदेशः। तत्तत्सुत्यानां प्रत्येकंसाधनीभूतानां समुच्चयेन प्रत्येकमेवेतिकर्त-व्यताकांक्षत्वेन प्रत्येकमेवातिदेशकल्पनात्। अत एव 'गावामयनिकप्रथमदिनं द्वादशाहि-कदशाहप्रथमदिनवत्कुर्यात्' इत्याद्याकारक एवातिदेश। सर्वसाधारण्येनैकातिदेश-कल्पनायां च द्वितीयादिष्वपि प्रथमाद्यहर्धर्मप्राप्त्यापत्तिः। तेन नामातिदेशाविषय-सुत्यायां 'इयं सुत्या द्वादशाहिकतत्सुत्यावत्कार्या' इत्यतिदेशेन प्राकृततत्सुत्यावृत्त्यग्रता-प्राप्तावपि नामातिदेशविषयाभिप्लवादौ द्वादशाहिकतत्स्थानापन्नसुत्यातिदेशाकल्पनेन प्राकृततत्सुत्यावृत्त्यग्रताप्राप्त्यनुपपत्तेः। न हि त्र्यनीका नामानेकसुत्यासाधारणमेकमङ्गं येनावयवशः एकस्मिन्नेव न प्राप्येत, अपि तु तत्तद्विधिविहितास्ताः ग्रहा अग्रतास्तत्सुत्या-नामङ्गं, अतश्च गवामयने यैव सुत्या द्वादशाहिकयत्सुत्याविकारः तद्गताग्रता तत्र प्राप्यते नान्यगताऽन्यत्रेति नाभिप्लवादौ द्वादशाहतोऽग्रताप्राप्तिः ॥

न चैवमप्यग्रतानां प्रकृतौ भागधर्मत्वान्नामातिदेशाविषयसुत्यायां प्राकृततत्स्थाना-पन्नसुत्याधर्मप्राप्तावपि अग्रतानां कथं प्राप्तिरिति वाच्यं, भागधर्मत्वेऽपि तत्सुत्याङ्गत्वान-पायात्। धर्मविधिषु हि केषुचित् तदहरपूर्वसाधनत्वमुद्देश्यतावच्छेदकं केषुचित्तु परमापूर्वसाधनीभूतभागविशेषत्वमित्येतावान् भेदः। न त्वेतावता तत्सुत्याया उद्देश्यत्वे कश्चिद्विरोधः। अतश्च तन्मात्रविकारे उभयविधतद्धर्मप्राप्तिरविरुद्धैव। अत एव सौर्यादौ प्रोक्षणप्रयाजादीनामतिदेशः। उक्तसुत्याविकारे एकाहादौ तु परमापूर्वप्रयुक्त-प्रथमादिविभागाभावात् तत्प्रयुक्तधर्मलोपेऽपि अन्यत्रोभयप्राप्तिरविरुद्धैव ॥

तथाच गावामयनिके पृष्ठ्यषडहे नामातिदेशेन द्वादशाहिकषडहधर्माणां प्राप्तेः, तत्र च अन्तिम-त्रयस्त्रिंशेऽहनि आग्रयणाग्रता प्राप्नोत्येवेति पूर्वपक्ष एव लिङ्गोपपत्तिः न सिद्धान्ते इत्यर्थः। तद्विषयत्वकल्पनाऽयोगादिति। अविरोधे गणत्वसादृश्यमूलातिदेशसम्भवेपि विरोधविषयाग्रता-दीनामेव श्रुतत्वात् प्राबल्येन प्रापकत्वमिति न तस्य तद्विषयत्वकल्पनमित्यर्थः। गवामयनत्व-पुरस्कारेण त्र्यनीकातिदेशेपि नामातिदेशैः तत्तदहस्सु बाधान्नवधा दशधा वा निवेशसम्भव इत्युक्तम्। अधुना तत्पुरस्कारेण चोदनालिङ्गातिदेश एव न सम्भवतीत्याह—वस्तुतस्त्विति।

एवं च गावामयनिकतृतीयाद्यहस्सु द्वादशाहिकदशाहान्तर्गततृतीयाहधर्माणामेवोभयविधानां प्राप्तेस्तत्र च भागधर्मभूताऽप्याग्रयणाग्रतैवेति तस्या एवेह प्राप्तेर्न विंशत्यात्मकभागरूपतया ऐन्द्रवायवाग्रताप्राप्तिरूपो भाष्यकारीयस्सिद्धान्तस्सङ्गच्छत इत्यपि ध्येयम। अतो यथावार्तिकमौपदेशिकां त्र्यनीकामादायैवाधिकरणं योज्यमिति सिद्धम्॥

एतावत्तु वार्तिककारमतेऽपि चिन्तनीयं—यत्र प्रकृतौ न्यूनभागवृत्तिधर्मः विकृतौ च स भागोऽधिकदिनघटितः। अधिकानि च दिनानि न प्राकृततद्भागप्रकृतिकानि यथाऽत्रैवौपदेशिकत्र्यनीकाभावे कृत्वाचिन्तया तत्र तद्भागधर्मप्राप्तिः कथमिति॥

---

आभिप्लविकेष्वहस्सु नामातिदेशसत्वान्न दशाहातिदेश इत्युक्तम्। अधुना नामातिदेशविषयत्वानङ्गीकारेपि दशरात्रसम्बन्धिप्रथमाहोरूपभागविकारत्वेन नैन्द्रवायवाग्रत्वप्राप्तिरित्याह— **एवञ्चेति।** **तृतीयाद्यहस्स्विति।** आभिप्लविकप्रथमाहःप्रभृतिषु दशरात्रान्तर्गतषडहसम्बन्धितृतीयात्तत्तदहरपूर्वप्रयुक्तपरमापूर्वप्रयुक्तोभयविधधर्माणां प्राप्तिरित्यर्थः। **औपदेशिकीं त्र्यनीकामिति।** अनीकाया उपदेशे हि तेन तत्तश्चोदनालिङ्गातिदेशस्य नामातिदेशस्य च बाधात् प्रथमादिभागेषु युक्त एवैन्द्रवायवाद्यग्रतानां निवेश इत्यर्थः। **अधिकानि च दिनानीति।** यथा पूर्वपक्षसि अभिप्लवसम्बन्धीन्यहानि नामातिदेशाभावे द्वादशाहान्तर्गतदशरात्रतृतीयाद्यहः प्रभृतिकानि भवन्ति न तु दशरात्रप्रथमाहोरूपभागविकाराणि। तत्रैन्द्रवायवाग्रतायाः कथ प्राप्तिः? प्रकृतितः आग्रयणाग्रताद्यग्रतानामेव प्राप्तत्वात्। एवमन्यत्रापि द्रष्टव्यम्। एव कृत्वाचिन्तयोदारणे दर्शिते यदापि औपदेशिकत्र्यनीकया कृत्वाचिन्तोद्धाटन तदा तु गवामयनविकृतौ यत्र प्राकृतभागापेक्षया अधिको भागः तदन्तर्गतेष्वधिकेष्वहस्सु प्राकृततद्भागाविकृतिषु नामातिदेशवत्सु वा कथं तत्प्राप्तिरिति विचारणीयमित्यर्थः। तथाच तत्र गवामयनत्वेन प्रकृतित्वं तत्तत्सत्रत्वेन च विकृतित्वमभ्युपेत्य सामान्यातिदेशकल्पनं यद्यावश्यकं वार्तिकमते तदा भाष्यकारमतेपि समानत्वादौपदेशिकत्र्यनीकाकल्पनेपि न निस्तार इति भावः।

(२७)—छन्दोव्यतिक्रमात् व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात् ॥ ८८ ॥

व्यूढात्मके द्वादशाहे छन्दोव्यतिक्रमस्समाम्नातः—'छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् गायत्री त्रिष्टुभः त्रिष्टुप् जगत्या. जगती गायत्र्याः' इति। लोकं स्थानम्। त्रिष्टुप्स्थाने गायत्री कर्तव्येत्यर्थः। सोऽयं छन्दोव्यतिक्रमः किं गायत्र्यादिरूपेणार्थवादेषु मन्त्रेषु वा स्तुतानामर्थानामपि भवेत्? उत मन्त्राणामेवेति चिन्तायां—

अर्थानामपि केषांचित् गौण्या वृत्त्या अर्थवादेषु गायत्र्यादित्वेन सङ्कीर्तनात् तेषामपि व्यतिक्रमं मन्यते। तत्र 'गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तरः' इत्यर्थवादात्तेषामपि गायत्र्यादित्वम्। अतश्च 'स्थविष्ठत्वादिगुणको मध्यमः परिधिः दक्षिणस्य स्थाने दक्षिणश्चोत्तरस्योत्तरो मध्यमस्य' इति व्यतिक्रमः। तथा सवनीययागाङ्गभूतः प्रातस्सवनिकोऽष्टाकपालोऽष्टत्वसङ्ख्यावत्त्वात् 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' इत्याद्यर्थवादे गायत्रीत्वेन संस्तवाच्च 'गायत्रो माध्यन्दिनस्यैकादशकपालस्य त्रैष्टुभत्वेन संस्तुतस्य स्थाने, कर्तव्यः, स च तार्तीयसवनिकस्य द्वादशकपालस्य जागतत्वेन संस्तुतस्य स्थाने, स च प्रातस्सवनिकस्य स्थाने' इति व्यतिक्रमः। एवं पवमानानामपि सवनत्रयस्थानां व्यतिक्रमः। तेषामपि 'श्येनोसि गायत्रछन्दास्सुपर्णोसि त्रिष्टुप्छन्दास्सखाऽसि जगतीछन्दा' इति मन्त्रेषु गायत्र्यादित्वेन सङ्कीर्तनात्। अत्र च स्तुतिस्वरूपस्य व्यतिक्रमस्स्पष्ट एव। एवं च तत्तत्पवमानाङ्गभूतः सर्वोऽपि मन्त्रो व्यतिक्रमयितव्यः॥

एवं भक्षस्यापि सवनत्रयगतस्य व्यतिक्रमः। तस्यापि 'गायत्रछन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दसः' इति मन्त्रे गायत्र्यादित्वेन संस्तवात्। यद्यपि च भक्षव्यतिक्रमे नभक्षस्वरूपे

---

छन्दोव्यतिक्रमाद्व्यूढे

अर्थवादेष्विति। अर्थवादपदं मन्त्राणामप्युपलक्षणम्। अर्थवादोऽपि न विधिसन्निहित एवेति नियमः। तेनाष्टाकपालादिविधिसन्निधौ गायत्रत्वादिरूपेण स्तावकार्थवादाभावेपि जातेष्टिविधिसन्निधिपठितार्थवादे तादृशस्तुत्येह व्यतिक्रमसिद्धिः। यदष्टाकपालो भवतीति। एतेनेह गायत्र्यादिपदैः अष्टाकपालादीनां स्तुत्यभावेपि अष्टादिशब्दे सङ्ख्यासामान्यात् गायत्र्याद्युपस्थितिरिति— अधिकरणमालोक्तमपास्तम्। विधायकाष्टाकपालादिपदानां स्तावकत्वायोगात् चतुर्विंशतिसङ्ख्यया कथञ्चित् तदुपस्थितिसम्भवेति अष्टत्वादिसङ्ख्याभिः तत्तदुपस्थितेर्नैयत्याभावाच्च। एवञ्चेति। पवमानस्तोत्राणां स्वरूपत एव भेदेन व्यतिक्रमे सिद्धे तत्प्रकाशकमन्त्राणां तदङ्गभूतानां सिद्ध एव स इत्यर्थः। यद्यपि चेति। प्रातस्सवनिकभक्षपात्राणा-

कश्चिद्व्यतिक्रमः। तथाऽपि तत्तद्भक्षमन्त्राणामेव पूर्वोत्तरपदोपेतानां व्यतिक्रमाद्व्यतिक्रम इति ध्येयम्। सिद्धान्ते तु न पूर्वोत्तरपदानां व्यतिक्रमः, अपि तु गायत्र्यादिपदानामेवेति विशेषः। एवमन्यत्रापीति प्राप्ते—

अर्थानां स्वतो गायत्र्यादित्वे प्रमाणाभावात् गौणार्थग्रहणस्य च सत्यां गतावन्याय्यत्वात् गायत्रीछन्द एव त्रिष्टुप्स्थाने कुर्यादिति वाक्यार्थावगतेः यत्र मन्त्रे स्वातन्त्र्येण वाऽन्यविशेषणत्वेन वा त्रिष्टुप्प्रकाशिता तत्र गायत्रीप्रकाशनं कार्यम्। अतश्च तत्र त्रिष्टुप्पदलोपो गायत्रीप्रकाशनार्थं तत्पदप्रक्षेपश्चार्थिकः।

---

मन्यत्र व्यापृतत्वेपि पात्रान्तरोत्पत्त्या तत्र स्थापितः शक्यते माध्यन्दिने कर्तुम्। एव माध्यन्दिनसवनिकस्तृतीयसवने। तार्तीयसवनिकस्तु स्वसंस्कार्य[1]साध्ययागानां तृतीयसवनरूपाणां प्रातस्सवनेऽनुष्ठानाशक्तेः तच्छेषरूपसंस्कार्याभावे नैव कर्तुं शक्यत इति तार्तीयसवनिकयागशेषप्रतिपत्तित्वेन अतिदेशात्प्राप्तो भक्षः प्रातस्सवनिकयागशेषप्रतिपत्तौ विनियुज्यते, इतरसवनगतभक्षव्यतिक्रम इवेति वक्तव्यम्। ततश्च भक्षस्वरूपे न कश्चिद्व्यतिक्रम इत्यर्थः। तथापि तत्तद्भक्षमन्त्राणामिति। 'भक्षेहि माविश' इत्यादिमन्त्रोऽसाधारणैः साधारणैश्च तत्तद्वाचकैः पदैः उपेतः यद्यप्येको मन्त्रः, तथापि सूक्तवाकन्यायेन विभागाश्रयणे मन्त्रभेदात् तत्तदसाधारणपदघटितमन्त्राणां व्यतिक्रम इत्यर्थः। अत्र च मन्त्रगतानामेव व्यतिक्रमो नार्थानाम्। न हि तेषां गायत्र्यादिशब्दवत्त्वमस्तीति शास्त्रदीपिकासिद्धान्तग्रन्थव्याख्यानमात्ररसिकतया व्यतिक्रमवाक्यगतगायत्रादि[2]पदानां एकदेशविकृतन्यायेन गायत्र्यादिशब्दानां गायत्र्यादिच्छन्दोवाचकत्वात् स्वार्थवाचकत्वरूपशक्यसम्बन्धेन मन्त्रपठित 'गायत्रच्छन्दस' इत्यादिशब्देषु लक्षणामङ्गीकृत्य 'गायत्रादिशब्दं त्रिष्टुप्शब्दस्थाने कुर्यात्' इत्येवं वाक्यार्थेनार्थेषु तथाभूतशब्दत्वाभावेन न तेषां ग्रहणमिति प्रकाशकारैः सिद्धान्तोपवर्णनं कृतम्, तत् व्यतिक्रमवाक्यगतगायत्र्यादिपदानां विनैव लक्षणया निर्वाहे तदङ्गीकारे प्रयोजनाभावादयुक्तमित्यभिप्रेत्य तन्त्ररत्नाद्युपपादितरीत्यैव सिद्धान्तमाह—अर्थानामिति। गौणार्थग्रहणस्येति। छन्दोवाचकगायत्र्यादिपदानां स्वार्थवृत्त्यष्टत्वादिसङ्ख्यासमानजातीयसङ्ख्यादिमत्त्वरूपगुणयोगेनाष्टाकपालाद्यर्थेषु गौणी स्वीकार्या। तादृशार्थग्रहणस्यान्याय्यत्वादित्यर्थः। अन्यविशेषणत्वेन वेति। 'गायत्रच्छन्दसः त्रिष्टुप्छन्दसः' इत्यादिना पवमानविशेषणत्वेन वेत्यर्थः। आर्थिक इति। एवम् ऐरं कृत्वोद्गेयमित्यनेन इरापदस्य प्रत्यक्षतो विधानात् गिरापदघटिते मन्त्रे असमाम्नात-

---

1. संस्कार्यासा—मा
2. गायत्र्यादि—मा

तेन 'श्येनोऽसि त्रिष्टुप्छन्दाः' इत्येवमादिमन्त्रप्रयोगः प्रातस्सवनादौ कार्य इति न पदार्थेषु स्थानबाधः ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
दशमाध्यायस्य पञ्चमः पादः

---

मपि यथा मन्त्रत्वं न त्वन्योहवदमन्त्रत्व, एवमिहापि व्यतिक्रमविधिना गायत्रादिपदप्रक्षेपस्य विधानात् तेषामपि प्रक्षिप्तानां पदानां मन्त्रत्वमिति प्रकाशकारोक्तमपास्तम् । अन्यस्य च्छन्दसः स्थाने अन्यप्रकाशनस्य विधानेपि पदप्रक्षेपस्य आर्थिकत्वेन अन्योहे इव मन्त्रत्वे मानाभावात् । यथा चैवं सति इरापदस्यापि विधिसत्वेपि न मन्त्रत्वं तथा आम्नातेत्यधिकरणे द्वितीये उपपादित कौस्तुभ एव द्रष्टव्यम् । विस्तरभयान्नोच्यते । तेन श्येनोसीति । अत्र 'श्येनोसि जगती च्छन्दाः सुपर्णोऽसि गायत्रछन्दाः सखासि त्रिष्टुप् छन्दाः इत्याद्यूहप्रदर्शनार्थ प्रत्याहारन्यायेना-द्यन्तपदोपादानमिति ध्येयम्, इतरस्यासङ्गतत्वापत्तेः । अत्र च मन्त्रगतैः गायत्र्यादिशब्दैः तस्मिन् तस्मिन् सवने छन्दो विद्यमानमेव प्रकृतौ प्रकाशितम् । व्यूढे तु तत्तच्छन्दसोऽविद्य-मानस्य न तैः पदैः प्रकाशन कर्तुं शक्यते इत्याशङ्कोत्तरमुक्तं प्रकाशकारैः—भक्षे तावन्नैव गायत्र्यादिछन्दोऽङ्गभूतम् । अतस्तत्तत्सवने विद्यमानं तद्द्वारैव भक्षविशेषणत्वेन श्रवणं तत्सवनान्तरेपि क्वचिद्विद्यत एवेति तद्द्वारैव भक्षविशेषण भवितुमर्हत्येव । बहिष्पवमाने तु तद्गतमेव गायत्र छन्दो विशेषणत्वेनोच्यते । तन्माध्यन्दिनपवमानेप्यस्त्येव । एवं त्रैष्टुभ-मार्भवे, तेन सर्वत्र विद्यमानमेव छन्दः प्रकाश्यत इति, तदार्भवपवमानबहिष्पवमानयोः त्रिष्टुप्जगतीछन्दसोः विद्यमानत्वे युक्तमेव । तदभावे तु तत्तत्पवमानेषु तत्तच्छन्दसाम-भावेपि वचनबलात् तत्तच्छन्दस्कत्वस्य आहार्यारोपेणापि देवस्यत्वादिपदार्थानामिव प्रकाशन कार्यमित्यर्थः इत्यभिप्रेत्योपेक्षितं पूज्यपादैः । एवमर्थानां व्यतिक्रमाभावे स्थिते यत्तैत्तिरीय-शाखायां सप्तमाष्टकद्वितीयप्रपाठकेऽष्टमानुवाके 'अथो यथा वहीयसा प्रतिसारं वहन्ति तादृगेव तत् छन्दांस्यन्योन्यस्य लोकमभ्यध्यायन् तान्येतेनैव देवा व्यवहारयन्' इत्यादिना पूर्वमैन्द्रवायवादि-ग्रहाणां त्रयाणां गायत्रत्रिष्टुप्जागतछन्दस्त्वेन स्तुतानां व्यूढरूपाग्रताविशेषे समूढापेक्षया पञ्च-मेहनि शुक्राग्रतास्थाने ऐन्द्रवायवाग्रता, षष्ठेऽहनि आग्रयणाग्रतास्थाने शुक्राग्रता सप्तमे च

# अथ दशमाध्यायस्य षष्ठः पादः

(१)—एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥ तृचे वा लिङ्गदर्शनात् ॥ २ ॥

योन्यामेकस्यामेवोत्पन्नानि सामानि तस्यामेव कर्मकाले गेयानि स्वाध्यायकाले तथैवाभ्यस्तत्वात् सामविशेषे तृचोत्पत्तिवैयर्थ्यापत्तेश्च, 'एकं साम' इत्यादेस्तद्विषयत्वेनानुवादोपपत्तेश्चेति प्राप्ते—

'ऋक् सामोवाच मिथुनीसम्भवावेति। सोऽब्रवीत् न वै त्वं ममालं जायात्वे वेदो मम महिमेति ते द्वे भूत्वोचतुः। सोऽब्रवीत् न वै वां ममालं स्थो जायात्व इति। तास्तिस्रो भूत्वोचुः। सोऽब्रवीत् सम्भवामेति तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इत्यर्थवादोपष्टब्धेन विधिना तृचे सामविधिप्रतीतेस्तृच एव गानम्। दर्शितश्चास्य वाक्यार्थो नवमे ॥

---

ऐन्द्रवायवाग्रतास्थाने पुनः शुक्राग्रता, अष्टमे शुक्राग्रतास्थाने आग्रयणाग्रता, नवमे आग्रयणाग्रतास्थाने ऐन्द्रवायवाग्रता इत्येवं प्रकारेण गायत्रीत्रिष्टुब्जगतीछन्दसामर्थविषयेऽपि व्यतिक्रमदर्शनं तत् व्यूढप्रकारस्य विहितस्य स्तुतिमात्रं, न तु तत् छन्दोव्यतिक्रमविधिरिति ध्येयम्।

इति भाट्टदीपिकाप्रभावल्यां
दशमाध्यायस्य
पञ्चमः पादः

---

अथ षष्ठः पादः

एकस्यामेवर्चीति। तेन बृहद्रथन्तरवैरूपवैराजशाक्वररैवतादीनामेव साम्नामुदाहरणत्वं, न तृचोत्पत्तिकानामित्युक्तम्। यान्यपि ज्यौतिष्टोमिकानि ऋग्द्वयोत्पत्तिकानि रथन्तरादीनि सामानि तेषामपि प्रगाथसमाख्यया प्रग्रथनेन तृच एव गानान्नोदाहरणत्वमिति, तेषामुदाहरणत्वं शास्त्रदीपिकाप्रदर्शितमपास्तमिति सूचयितुं एवकारः प्रयुक्तः। भाष्यस्वारस्यमप्येवं सति लभ्यते। अर्थवादोपष्टब्धेनेति। तेनास्यैव लेट्त्वादिना विधित्वोपपत्तेः न सिद्धवदनुवादानुपपत्त्या

अत एव 'अष्टाक्षरेण **प्रथमाया ऋचः प्रस्तौति द्व्यक्षरेणोत्तरयोः। यद्योन्यां गायति तदुत्तरयोः'** इत्यप्याम्नानेनोपपद्यते। **सामविशेषे तृचोत्पत्तिस्तु** मन्त्रत्वसिद्ध्यर्थेति **न विरोधः। सिद्धोऽप्ययमर्थः शिष्यहितार्थं** पुनरिहोच्यते ॥

---

## (२)—स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥

**'रथन्तरे प्रस्तूयमाने सम्मीलयेत्' इति विधाय 'स्वर्दृशं प्रति वीक्षेत' इति श्रुतम्।** तत्र रथन्तरयोनिभूतायां ऋचि **'ईशानमस्य जगतस्स्वर्दृशम्' इति श्रुतस्य स्वर्दृक्छब्दस्य किं वीक्षणेनाङ्गाङ्गिसम्बन्ध ? उत कालार्थस्संयोगः ? इति चिन्तायां—**

**रथन्तरसमाप्त्यवधिकस्य सम्मीलनस्या**वध्यन्तरापेक्षाभावात् **द्वितीयया** निर्णीतप्रयोजनस्य **स्वर्दृक्छब्दस्याङ्गत्वेन** वीक्षणमेव **धात्वर्थो विधीयते।** यत्तु—**स्वर्दृक्छब्द एव स्मार-**

---

विधिकल्पनमित्यर्थः। **अत एवाष्टाक्षरेणेति।** अत्र च प्रथमोत्तराप्दयोः लिङ्गत्वम्[1]। तथाच तृचगान सिद्ध्यतीत्यर्थः। **मन्त्रत्वसिद्ध्यर्थेति।** यत्रैकस्यामेवोत्पन्नं साम उत्तरयोरतिदिश्यते तत्र साम्न उत्तरागताक्षरसंस्कारकतया ऊहितत्वात् अन्योह इव नैव मन्त्रत्वं भवति। तृच एवोत्पन्नस्य तु तत्रैव पाठान्मन्त्रत्वसिद्धिः प्रयोजनमित्यर्थः। **पुनरुच्यत इति।** सिद्धान्ते पाठप्रातिकर्गाधारत्वस्य प्राप्तस्य बाधात् बाधप्रसङ्गेन पुनरुच्यत इत्यर्थः।

---

### स्वर्दृशं प्रति वीक्षणम्।

स्वर्दृशमिति पदस्य तात्पर्यं दर्शयति—**तत्र रथन्तरेति। अवध्यन्तरापेक्षेति** एतेन सिद्धान्तेऽपेक्षितविधित्वमुच्यमानं निरस्तम्। **निर्ज्ञातप्रयोजनेति।** स्तुत्यर्थत्वेन निर्ज्ञातप्रयोजनस्य। **वीक्षणमेवेति।** तथाच वीक्षमाणः स्वर्दृक्शब्दमुच्चारयेदित्यर्थः। अत्र यद्वीक्षेत तत् स्वर्दृशा स्वर्दृक्शब्देनेत्येवं वीक्षणोद्देशेन स्वर्दृक्शब्दस्य प्रकाशकतया विधानम्, द्वितीया च तृतीयार्थे। प्रतिशब्दश्च वीप्सार्थको न्यायप्राप्तायां वीक्षणावृत्तौ आवृत्तिमनुवदति सपदादिवत् भावे क्विप्प्रत्ययात्, स्वः स्वर्गो यद्दर्शनं तदिदं दर्शनमित्येवं स्वर्दृक्शब्दः वीक्षणप्रकाशकः सम्भवत्येवेति प्राचीनैः पूर्वपक्षान्तरं कृतमनूद्य दूषयति—**यत्त्विति। गौर-**

---

1 B निमित्तम्

**कतया वीक्षणाङ्गत्वेन विधीयत इति पूर्वपक्षान्तरं मूले कृतं तत्—मन्त्रे ईशानादिपदैक-वाक्यतया श्रुतस्य स्वर्दृक्छब्दस्य स्तोत्राङ्गत्वेन निर्ज्ञातप्रयोजनस्य रागप्राप्तवीक्षणाङ्गत्वायोगात् वीक्षणस्यापि स्मारकपदविशिष्टस्यारादुपकारकतया विधौ गौरवाद्यापत्तेरु-पेक्षितम्।** अतश्च **स्वर्दृक्पदकाले वीक्षणं आद्यन्तयोः सम्मीलनमिति प्राप्ते—**

**अदृष्टार्थस्य वीक्षणस्य मध्ये विधौ गौरवापत्तेः प्रतिशब्दयोगेन चास्याः द्वितीयायाः कर्मप्रवचनीयनिमित्तत्वेन कर्मत्वार्थकत्वाभावात् प्रतिशब्दानर्थक्यापत्तेश्च कालार्थ एवायं संयोगः। प्रतिशब्देन कालस्य सूचितत्वाच्च न तल्लक्षणाऽपि।** अत एव रागप्राप्त**वीक्ष-णानुवादेन कालविधाने कृते अर्थान्निमीलनस्यायं अवधिरिति सम्पद्यते ॥**

---

वाद्यापत्तेरित्यत्र धात्वर्थगतविधेयतात्याग आदिपदार्थः। एवञ्च सम्मीलनविधिना निवर्तितस्य वीक्षणस्य[1] प्रतिप्रसवरूपेण विधिः इत्याद्यमेव पूर्वपक्ष युक्तं मत्वा तत्र प्रयोजनं दर्शयन्नुपसहरति —**अतश्चेति। अत एव रागप्राप्तेति।** स्वर्दृशमिति पदस्य स्तुत्यर्थत्वेन कृतार्थत्वात् वीक्षण-स्यापि प्रयोजनान्तरार्थं रागतः प्राप्तस्य सम्मीलनेन निवर्तितस्यैव उद्देशात् कृतार्थत्वेन आग्निमारुतानु-याजयोरिवानयोः कालार्थ एव सम्बन्धो युक्त इति स्वर्दृक्पदोपलक्षिते काले वीक्षणम्। ततः पूर्वं सम्मीलनमित्यर्थात् वीक्षणस्य प्रतिप्रसवः सम्मीलनस्य चोत्तरावधिश्च सिद्ध्यतीत्यर्थः।

अत्र **प्रकाशकारैः** अनपेक्षितसम्बन्धाद्वाक्यभेदप्रसङ्ग इति **शास्त्रदीपिका**गतसिद्धान्त-कारिकायां पूर्वपक्षे आपादितस्य वाक्यभेदस्य सिद्धान्तेपि कालविधायकत्वेन 'न दीक्षितस्यान्नम-श्नीयात' इत्येतत्समीपसमाम्नातेपि 'क्रीतराजको भोज्यान्न' इत्यवधिसमर्पके इव वाक्यभेदस्य सत्वात् समदोषत्वेनायुक्तत्वमाशङ्क्यानपेक्षितसम्बन्धापत्त्यभिप्रायिका वाक्यभेदोक्तिः पूर्वपक्षे। सिद्धान्ते तु एकवाक्योक्तिस्तु आकाङ्क्षितसमर्पकत्वेन ज्ञेया। अत एवानयैव दिशा रेवत्यधिकरणे गुणफलसम्बन्धपूर्वपक्षेऽग्निष्टुद्वाक्यैकवाक्यता। कर्मान्तरत्वसिद्धान्ते च वाक्यभेद इति भाष्य-कारोक्तिः वाक्यभेदस्य पक्षद्वये साम्येपि पूर्वक्रतुसम्बन्धे भवत्येव किञ्चिदेकवाक्यरूपम्। क्रत्वन्तरसम्बन्धे तु न तद्भेद इत्येव वार्तिके समाहितेत्युक्तम्। तत्पूर्वपक्षवेलायामेव सिद्धान्तेप्यनपेक्षितविधित्वापादनव्याजेनायुक्तमिति सूचितं **पूज्यपादै**। किञ्चानपेक्षितविधित्वा-पादनापेक्षया वाक्यभेदापादनं तच्छ्लोकव्याख्याने **शास्त्रदीपिकायां** पृथगेव दूषणत्वेन प्रतीय-मानं कथमिव सङ्गच्छते। अतोऽनपेक्षितविधित्वस्योभयपक्षेपि तुल्यत्वेन तत्प्रयुक्तवाक्यभेदस्य सिद्धान्तेपि समत्वात यादृश पूर्वपक्षेऽसम्भव्येकवाक्यत्व सिद्धान्त एव शक्योपपाद तन्त्ररत्ने

---

1 A. reads पक्षान्तर

वस्तुतस्तु एकवाक्यतालाभायायं निमीलनविधेरर्थवाद एव। तेन चार्थवादिका वधिकल्पना। अत एव निमीलनवाक्य एव स्वर्दृक्पदावधीति पदकल्पना घृतादिपदवदिति ध्येयम्॥

प्रयोजनं पूर्वपक्षे स्पष्टम्। उत्तरयोश्च रथन्तरावृत्तौ सम्मीलनस्याप्यावृत्तेर्यावदुत्तरासमाप्ति सम्मीलनं पूर्वपक्षे। सिद्धान्ते तु उत्तरयोस्स्वर्दृक्पदाभावेऽपि तत्पदाभिव्यञ्जकरथन्तरभागावधिकमेव सम्मीलनं, अत एव विधेयसामर्थ्यानुरोधेन सम्मीलनविधौ रथन्तरपदेन लक्षणया तदवधिकपूर्वभागस्यैवोद्देश्यतेत्यपि ध्येयम्॥

इदं तत्र तत्र गतार्थमपि निमीलनस्योत्तरासु बाधोपयोगितया शिष्यहितार्थमुक्तम्।

---

## (३)—पृष्ठ्यस्य युगपद्विधेरेकाहवत् द्विसामत्वम्॥ ४॥ विभक्ते वा समस्तविधानात्तद्विभागे विप्रतिषिद्धम्॥ ५॥

द्वादशाहे रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यषट्सामयुक्तः पृष्ठ्यषडहस्समाम्नातः। गवामयने च 'पृष्ठ्यषडहो बृहद्रथन्तरसामा कार्यः' इति श्रुतम्। तेन च वैरूपादीना निवृत्तिरित्यविवादम्। निवर्तक च किं समुच्चितं बृहद्रथन्तरं? उतैकैकम्? इति चिन्तायां—

---

सूचित तादृशं स्वयमुपपादयति—वस्तुतस्त्विति। स्पष्टमिति। पूर्वपक्षोपसहार एवाद्यन्तयोस्सम्मीलनमिति ग्रन्थेनोक्तमित्यर्थः। प्रयोजनान्तरमप्याह—उत्तरयोश्चेति। ततश्च यथैव कण्वरथन्तरे स्थानापत्त्यतिदेशेन सम्मीलनप्राप्तौ शेषिभूतस्वर्दृक्पदाभावात् वीक्षणस्य लोपः, तथैवोत्तरमपि मध्ये लोपात् आन्तं समीलनं पूर्वपक्षे इत्यर्थः। विधेयसामर्थ्येति। स्वर्दृक्पदावधिकसम्मीलनरूपविधेयसामर्थ्येत्यर्थः। असन्नयतो वत्सापकरणाभावेपि तदुपलक्षितकालसत्वात् "वत्सैरमावास्यायां"इति विहितं व्रतं भवत्येवेति षष्ठे उपपादितम्; तेन न्यायेन, तथा त्रिरवघ्नन्नाह्वयतीत्यत्रोपपादितेन तार्तीयन्यायेन च गतार्थत्वमभिप्रेत्याह—इदं तत्र तत्रेति। बाधोपयोगितयेति। पूर्वोक्तरीत्या उत्तरयोर्वीक्षणस्य मध्ये बाधोऽबाधश्च सम्मीलनस्य पूर्वपक्षे। सिद्धान्ते तद्वैपरीत्यमित्यर्थः।

---

### पृष्ठ्यस्य युगपद्विधेरेकाहवत्।

वैरूपादीनामिति। एवं स्थिते च्छन्दोगकल्पे गावामयनिके पृष्ठ्यषडहेपि द्वादशाहिकपृष्ठ्यषडहवत् होतुः पृष्ठे वैरूपादीनं निवेशप्रदर्शन शाखान्तरीयत्वेन नेयमिति भावः।

**अस्य द्वन्द्वगर्भबहुव्रीहित्वात् द्वन्द्वेन च बृहद्रथन्तरयोः परस्परसाहित्यावगतेरेकैकस्मिन्नहनि द्वयोस्संसवादिवत्समुच्चयप्रतीतेः समुच्चितमेव निवर्तकं** समासेन च समुच्चय**विशिष्टयोरेव विधेयषडहविशेषणत्वेन विधानान्न विधेयानेकता उद्देश्यानेकता एकप्रसरताभङ्गो वा ॥**

**न चास्य शुद्धत्रिपदबहुव्रीहितयाऽप्युपपत्तेरतिदेशप्राप्तनिरपेक्षसाधनत्वानुरोधेनैकैकस्मिन्नहन्येकैकस्यैव करणप्रतीतेर्न समुच्चितयोर्निवर्तकतेति वाच्यम्। 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यं समासवचनम्' इति कात्यायनवचनेन त्रिपदबहुव्रीहौ द्वन्द्वस्यावश्यकत्वात् ॥**

**न चास्य यत्र द्वन्द्वाभावेऽन्यथारूपं द्वन्द्वकरणे चान्यथा, यथा वाक्त्वचप्रियः इति द्वन्द्वकरणे, तथात्वे समासान्तत्वसिद्ध्या तन्निमित्तटच्प्रत्ययकरणेन वाक्त्वचं इति रूपसिद्धेः। अन्यथा द्वन्द्वाकरणे वाक्त्वक्प्रिय इति रूपापत्तेः,** तत्र टच्प्रत्यययुक्तरूपस्यैव **साधुत्वं नान्यस्येति वक्तुं द्वन्द्वविधायकत्वं** अपेक्षितविधेर्न्याय्यत्वात्, **न तु प्रकृते उभयथाऽपि रूपस्याविशेषेण द्वन्द्वविधिप्रयोजनाभावादिति मूलोक्तं युक्तमिति वाच्यं,** प्रकृतेऽपि **शुद्धबहुव्रीहिपक्षे पूर्वपदप्रकृतिस्वरत्वापत्तेः। द्वन्द्वकरणे चान्तोदात्तत्वप्राप्तेस्स्व-**

---

**अत्र च** "उद्देश्यव्यापिका सा यदि भवति तदाप्यादिमाव्याप्तिबन्धः स्यात्" इति विधिरसायनश्लोकविवरणे षडहोद्देशेन बृहद्रथन्तरसामत्वं विधेयमित्युक्तम्। तत्र यदि केवलं षडहपदमुद्देश्यं तदा आभिप्लाविकेपि षडहे तत्तत्सामापत्तिः। पृष्ठ्यत्वेन विशेषणे विशिष्टोद्देश्यतापत्तिः। **तथा द्वयोर्विधाने** विधेयानेकता। तथा बहुव्रीह्यर्थान्यपदार्थोद्देशेन तद्विधाने एकप्रसरता**भङ्गापत्तिरिति** दूषणापत्तिमभिसन्धाय यावन्नामातिदेशेन पृष्ठ्यषडहे बृहद्रथन्तरादीनि सामानि इह **प्राप्यन्ते, ततः पूर्वमेवानेन वचनेन** समुचितबृहद्रथन्तरविशिष्टस्यैव तस्य वैरूपादीनां निवृत्तिफल**त्वेन** विधानमित्याशयेन विधेयांशं दर्शयति—**समासेन चेति। द्वन्द्वतत्पुरुषयोरिति।** द्वन्द्वतत्पुरुषवर्तिनोः द्वयोर्द्वयोः पूर्वपदयोः तृतीये उत्तरपदे परतः स्थिते समासस्य नित्यत्वम्। कस्य समासस्येत्यपेक्षयां द्वन्द्वतत्पुरुषयोरिति ज्ञापकबलात तयोरेव नित्यत्वमित्यर्थः। **तत्र टच्प्रत्ययेति।** 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इत्यनुशासनेन विहितद्वन्द्वप्रयुक्तटचः प्राप्तेत्यर्थः। एव द्विगुतत्पुरुषसमासाकरणे 'गोरतद्धितलुकि' इत्यनुशासनविहिततत्पुरुषप्रयुक्तटच्प्रत्ययनियमात् **पञ्चगवधन** इत्यस्यैव साधुत्वम्, न तु पञ्चगोधन इत्यस्यापीति तत्पुरुषोदाहरण द्रष्टव्यम्। **प्रकृते रूपभेदाभावेपि** त्रिपदबहुव्रीहौ 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा. ६–२–१) इति पूर्वपद**स्वरप्राप्तेः** द्वन्द्वगर्भतत्करणं 'समासस्य' (पा. ६–१–२२३) इत्यनुशासनेनान्तोदात्तत्वापत्तेः तत्कृत**विशेषसिद्ध्यर्थमावश्यकमेव** कात्यायनवचनात् द्वन्द्वकरणमित्यभिप्रेत्य समाधत्ते—**प्रकृतेपीति।**

**रविशेषस्यैव प्रयोजनत्वात्।** अतो **द्वन्द्वस्यावश्यकत्वात् तेन साहित्यप्रतीतेस्सहितयोरेव निवर्तकनेति प्राप्ते—**

द्वन्द्वावगत**साहित्यस्य षडहापेक्षयाऽप्युपपत्तेरतिदेशप्राप्तपृष्ठस्तोत्रगतनैरपेक्ष्यबाधेन तन्निरूपितत्वकल्पने प्रमाणाभावेन नैकैकस्मिन्नहनि उभयोस्समुच्चयः॥**

किञ्च **मात्र पूर्वं द्वन्द्वं कृत्वा पश्चाद्बहुव्रीहिः। तथा वे द्विपदबहुव्रीहेरेवापत्तौ उत्तरपद इत्यस्यासङ्गतत्वापत्तेः।** उत्तरपदशब्दो **हि व्याकरणे** समासान्ते **व्यवह्रियते। तद्यदि बहुव्रीहिः पूर्वं ततस्तदन्तरूपे उत्तरपदे निमित्ते द्वन्द्वो विधीयेत नान्यथा।** अत एव पार्थसारथे. **पूर्वद्वन्द्वोक्तिरपास्ता।**

---

**कात्यायनवचनानपेक्षणेन तावत्** सर्वथा द्वन्द्वगर्भस्य नावश्यकत्वम्, महाविभाषाधिकारेण सर्वेषामपि समासानामनित्यत्वप्राप्तेः। अतो विभाषाधिकारापवादककात्यायनवचनादेव तस्य नित्यं प्राप्तेः द्वन्द्वगर्भबहुव्रीहिरेव वाच्यः तदापि सिद्धान्तसिद्धिं दर्शयति—**द्वन्द्वावगतेति।** **क्वचित्** कस्यचित् सन्निवेशेनापि षडहे बृहद्रथन्तरयोः सम्भवत्येव साहित्यमिति यस्मिन्नेवाहनि **पृष्ठस्तोत्रं** तदहर्गतपृष्ठस्तोत्रनिरूपितमेव तयोस्साहित्यमिति नियमे प्रमाणाभाव इत्यर्थः। अधुना **कातीयवचनबलात्** न द्वन्द्वगर्भत्वं बहुव्रीहौ सिद्ध्यतीत्याह—**किञ्चेति।** **उत्तरपदे इति।** समासचरमावयवरूपोत्तरपदे निमित्ते विधीयमानो द्वन्द्वः द्विपदबहुव्रीह्याश्रयणे तस्मिन् काले उत्तरपदत्वाभावात् कथमनेन वचसा प्राप्नुयात्। नहि बहुव्रीहिसमासात्प्राक् सामपदस्य समासान्तपदत्वमस्ति। द्वन्द्वगर्भस्यैव तस्याङ्गीकारादित्यर्थः। **समासान्ते इति।** समासस्य चरमावयवे रूढ इत्यर्थः। अत एव **पार्थसारथेरिति।** यद्यपि सिद्धान्ते तन्त्ररत्नशास्त्रदीपिकयोः **पार्थसारथिना** द्वन्द्वगर्भताया विभाषाधिकारेण नावश्यकत्वम्; रूपभेदाभावाच्च कातीयवचनाप्रवृत्तिमात्रं चोक्तम्। न तु पूर्वपक्षोक्तद्वन्द्वगर्भत्वमनुमतम्। यत्तु पूर्वपक्षे द्वन्द्वगर्भत्वं तेनोपपादितं तत् स्वयमपि पूर्वपक्षवेलायामुपपादितमेवेति 'पार्थसारथेः पूर्वं द्वन्द्वोक्तिरपास्ता' इत्यनुक्तोपालम्भदूषणमिव भवति; तथापि कातीयवचनाप्रवृत्त्या पूर्वपक्ष्युक्तद्वन्द्वगर्भतां दूषितवतस्तस्यैतद्वचनप्रवृत्तौ सत्यां तथैव द्वन्द्वगर्भता भवतीति व्यतिरेकेणानुमत प्रतीयते; तद्दूषणाभिप्रायमेतदिति ज्ञेयम्। तथा चैतद्वचनबलात् त्रिपदबहुव्रीहिरेवादौ सिद्ध्यति, न तु पूर्वकृतद्वन्द्वगर्भ इति पूर्वोत्तरपक्षयोः द्वन्द्वगर्भविकारोऽयुक्त इति तात्पर्यार्थः। रूपभेदाप्रसक्तेरिह **कातीयवचनस्याप्रवृत्तिरिति यत्पार्थसारथिना** सिद्धान्ते उक्तं, तत् पूर्वपक्ष्युक्तरीत्या रूपभेदानुपलम्भेपि स्वरविशेषसिद्ध्यर्थं तस्य प्रवृत्तेरनिवार्यत्वादयुक्तमित्यभिप्रेत्य सिद्धान्तेपि तत्प्रवृत्ति

अतश्च **पूर्वं त्रिपदबहुव्रीहिं कृत्वा पश्चात्प्रयोजनसिद्ध्यर्थं द्वन्द्वविधिः। तेन बहुव्रीहिवेळायामन्यपदार्थे परस्परानन्वितयोरेव बृहद्रथन्तरयोरन्वयात् पश्चादवगम्यमानसाहित्यस्य च षडहापेक्षयाऽप्युपपत्तेर्नैकस्मिन् दिने तयोस्समुच्चयः।** अत एवातिदेशानुरोधात् **'आद्ये रथन्तरं द्वितीये बृहत्' इत्येव क्रमावगतेः द्वन्द्वावगतः क्रमोऽप्यल्पाचतरत्वादेव व्याख्येयः॥**

---

दर्शयन् सिद्धान्त साधयति—**अतश्चेति**। यद्यपि वेदे यथास्वरपाठमेव समासप्रवृत्तेरवश्यवक्तव्यत्वात्, तस्याश्च विभाषाधिकारेणैव निर्णयोपपत्तेः न कातीयवचनप्रवृत्त्यङ्गीकारेण पठितस्वरान्यथाकरणमाश्रयितुं शक्तम्। अतो वेदे स्वरानुरोधेन लक्षणप्रवृत्तावाश्रीयमाणायां एतद्वचनस्य यत्र न स्वरानुरोधेनैव निर्णयः सम्भवति लोके तत्रैव प्रवृत्तिरिति छन्दोव्यतिरिक्तविषयमेवैतद्वचो व्यवतिष्ठत इति वाच्यम्। अत एव न वाक्त्वगित्यादि[1]वैदिकप्रयोगेषु यदि बहुव्रीहिस्वरस्यैव पाठः तदेदं वचनं नैव प्रवर्तत इति। लोके प्रयोगान्तरापत्तिनिवारणार्थं तत्प्रवृत्तावपीह रूपभेदाप्रसक्तेर्नैव तद्वचनप्रवृत्तिरिति युक्तमेव **पार्थसारथिवचनमिति** भाति; तथापि **कातीयवचनोद्देश्यतावच्छेदकरूपाक्रान्तत्वे** सति तद्वचनप्रवृत्तेरनिवारणात् वेदेपि पठितस्वरान्यथाकरणरूपं शक्यत एव वक्तुं फलम्। एवं स्थिते द्वन्द्वस्वरस्यैव नित्यत्वे यद्बहुव्रीहिस्वरपठनं तत् छान्दसत्वेनैवान्यत्रेव परिहर्तव्यम्; न त्वेतावता लक्षणप्रवृत्तेः कुण्ठीभावः, इतरथा 'सुप्तिङुपग्रहलिङ्गनराणाम्' इत्यादिछान्दसानुशासनप्रणयनवैयर्थ्यापत्तेरिति ध्येयम्। **अत एवेति**। प्रयोजनार्थमुत्तरकाले द्वन्द्वाङ्गीकारात् द्वन्द्वप्रयुक्तः पूर्वनिपातो लभ्यत एवेत्यर्थः। **अतिदेशानुरोधादिति**। दशरात्रान्तर्गतषडहातिदेशानुरोधादित्यर्थः। यदा तु **प्राचामुक्तरीत्याऽत्र** त्रिपदो बहुव्रीहिः न तु उत्तरमन्त्रद्वन्द्वस्य नित्यत्वं तदा यद्यपि बृहत्पदस्य प्रथमतः पाठादौपदेशिकेन क्रमेण आतिदेशिकक्रमस्य शक्यते बाधो वक्तुम्, तथापि 'जगती वै छन्दांसि प्रत्यवरोहन्ति आग्रयणं ग्रहाः बृहत्पृष्ठानि' इति गवामयनोत्तरे पक्षसि षाडहिकस्य पञ्चमाह्नो बृहत्पृष्ठत्वलिङ्गादेव 'बृहद्रथन्तरसामा कार्य' इति वाक्येन क्रमविशिष्टत्वेन तयोर्विधानमिति ज्ञेयम्। एतत्प्रभृतिका हि सर्वे विधयो गवामयनपूर्वपक्षस्येवावान्तरप्रकरणान्निविशन्ते इति पूर्वस्मिन् पक्षसि यदि प्रथमेहनि बृहत् द्वितीये रथन्तरमित्येव क्रम आश्रीयते तदा उत्तरपक्षसि प्रातिलोम्यविधानात् प्रातिलोम्येन तदनुष्ठाने रथन्तरपृष्ठत्वमेव उत्तरपक्षोगतषाडहिकपञ्चमेऽहनि प्राप्नोति यदा तु पूर्वस्मिन् पक्षसि अयुग्मेऽहनि रथन्तरं, द्वितीयादियुग्मेऽहनि बृहदित्येवं क्रमः, तदा उत्तर-

---

1 A वाक्प्रिय

(४)—समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ विहारप्रतिषेधाच्च ॥ ७ ॥ श्रुतितो वा लोकवद्विभागस्स्यात् ॥ ८ ॥ विहारप्रकृतित्वाच्च ॥ ९ ॥ विशये च तदासत्तेः ॥ १० ॥ त्रयस्तथेति चेत् ॥ ११ ॥ न समत्वात्प्रयाजवत् ॥ १२ ॥

ज्योतिष्टोमे वैकल्पिकी पश्वेकादशिनी समाम्नाता। सा द्वादशाहे द्वादशस्वपि सुत्यासु भेदेन तथैव कर्तव्यतया प्राप्ता। तस्यां च 'अन्वहमेकैकमालभेत द्वादशे आग्रम्' इति वचनेन विहारपक्षं विधाय 'एकादशिनान् प्रायणीयोदयनीययोरालभेरन्' इति पक्षान्तरं श्रुतम्। तत्र किं प्रायणीयोदयनीयोद्देशेनैकादशिनविधिः? उतैकादशिनानुवादेन प्रायणीयोदयनीयोपलक्षितकालविधिः? इति चिन्तायां—

प्रायणीयोदयनीयपदस्योद्देश्यपरत्वे सम्भवति लाक्षणिककालोपलक्षकत्वे प्रमाणाभावात् द्वितीयविधिप्रकारसम्भवे च तृतीयविधिप्रकारस्यान्याय्यत्वात् प्रायणीयोदयनीयोद्देशेनैवैकादशिनविधिः। द्वन्द्वोपात्तत्वाच्च नोद्देश्यानेकता। एकपदोपादानाच्च न विधेयानेकताऽपि ॥

न चातिदेशेनैव तत्र तत्प्राप्तिसम्भवे पुनस्तद्विधिवैयर्थ्यमिति वाच्यं, अतिदेशेन सर्वसुत्यासु प्राप्स्यमानानामेकादशिनानां दशरात्रे परिसङ्ख्यार्थत्वात्। न चैवं सैव दोषः। निषादस्थपत्यधिकरणन्यायेन काललक्षणापेक्षया तस्या अदोषत्वात् ॥

वस्तुतस्तु—अतिदेशेन सर्वत्र सम्भवत्प्राप्तिकाया एकादशिन्या विहारविधिनैव एकैकपश्वतिरिक्तदशपशूनां द्वादशस्वपि सुत्यासु परिसङ्ख्यासिद्धौ प्रायणीयोदयनीययोरप्राप्ताया एवैकादशिन्या विधानेन वैयर्थ्याभावः ॥

---

पक्षसि पञ्चमेऽहनि अयुग्मे बृहत्पृष्ठत्वं लभ्यत इत्युपपद्यते बृहत्पृष्ठत्वादिलिङ्गम्। अतोऽत्र क्रमोऽविवक्षित इति।

---

समासस्त्वैकादशिनेषु।

द्वितीयविधीति। धात्वर्थोद्देशेनान्यस्य विधानमिति तृतीयविधिप्रकारापेक्षया धात्वर्थस्यान्योद्देशेन विधानमिति द्वितीयविधिप्रकारस्य युक्तत्वं, धात्वर्थसमानाधिकरणविधेयत्वस्य तत्र

अतश्च प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् प्रायणीये सम्पूर्णैकादशिनी उदयनीये च सम्पूर्णा इति न विभज्य तस्याः प्रयोगः। दशरात्रे च नैकातिरिक्तानां दशानां पशूनां पक्षेऽप्यङ्गता इति तेषां तत्र बाध इति प्राप्ते—

नेयमप्राप्तपरिसङ्ख्या प्रायणीयोदयनीययोस्तद्विधिना इतरसुत्यासु तद्विषये नैराकाङ्क्ष्यापादनासम्भवेन तत्र तद्विषयेऽतिदेशप्रतिबन्धकत्वायोगात्। अतश्च सर्वत्र तत्प्राप्तौ कचित्तद्विधिः स्ववैयर्थ्यपरिहारार्थं इतरत्र तत्परिसङ्ख्यां सूचयतीत्येव विधयाऽयं परिसङ्ख्याविधिर्भवेत्। न चास्य वैयर्थ्यं, कालविधानेन चरितार्थत्वात्। न चास्यापूर्वविधित्वं, द्वयोः पक्षयोः परस्परनैरपेक्ष्येण युगपत्प्रवृत्तयोः पौर्वापर्ये प्रमाणाभावात्।

---

लाभादित्यर्थः। अतश्च प्रतिप्रधानमिति। यतो द्वन्द्वः उभयपक्षे आवश्यकः तत्रोद्देश्यत्वे सति तद्गतसाहित्यस्याविवक्षा अतश्शब्दार्थः। पक्षेप्यङ्गतेति। 'अन्वहमेकैकमालभेत' इति विहारपक्षे एकातिरिक्तदशानां पशूनां परिसङ्ख्यया दशरात्रे नैवाङ्गत्वमुभयपक्षेपि। द्वितीये तु पक्षे सिद्धान्ते सर्वद्वादशाहाङ्गभूतायास्तस्याः प्रत्यहमनुष्ठाने प्राप्ते प्रायणीयवाक्येन कालमात्रविधानात् भवति दशरात्राङ्गत्वेपि दशानां पशूनामिति यत्पक्षे तस्यास्तदङ्गत्वमभिमतं तदपि नेत्यर्थः। अत्र च प्रथमे विहारपक्षे दशरात्रे दशानां पशूनामङ्गत्वाभावमङ्गीकृत्य अपिशब्दः प्रयुक्तः।

वस्तुतस्तु प्रत्यहमेकैकत्रैष्टुभमार्भवे, तेन सर्वत्र विद्यमानमेव छन्दः प्रकाश्यते इति तदा आर्भवपवमानबहिष्पवमानयोस्त्रिष्टुप्जगतीच्छन्दसोः विद्यमानत्वे युक्तमेव। तदभावे तु तत्तत्पवमानेषु तच्छन्दसामभावेपि वचनबलात् तत्तच्छन्दस्त्वस्याऽऽहार्यारोपेणापि देवस्यत्वादि पदार्थानामिव प्रकाशनं कार्यमित्यर्थ एव युक्त इत्यभिप्रेत्योपेक्षित पूज्यपादैः। एवमर्थानां व्यतिक्रमाभावे स्थिते यत् तैत्तिरीयशाखायां सप्तमाष्टकद्वितीयप्रपाठके अष्टमानुवाके "अथो यथा वहीयसा प्रतिसारं वहन्ति तादृगेव तत् छन्दांसि अन्योन्यस्य लोकमभ्यध्यायन् तान्येतेनैव देवा व्यवहायन्" इत्यादिना पूर्वमैन्द्रवायवादिग्रहाणां त्रयाणां गायत्रत्रिष्टुप्जागतछन्दांसि न स्थितानां व्यूढरूपाग्रताविशेषसमूढापेक्षया पञ्चमेऽहनि शुक्राग्रतास्थाने ऐन्द्रवायवाग्रता। षष्ठेऽहनि आग्रयणाग्रतास्थाने शुक्राग्रता। सप्तमे चैन्द्रवायवाग्रतास्थाने शुक्राग्रता। अष्टमे शुक्राग्रतास्थाने आग्रयणग्रता, नवमे आग्रयणाग्रतास्थाने ऐन्द्रवायवाग्रतेत्येव प्रकारेण गायत्रीत्रिष्टुप्जगतीच्छन्दसामर्थविषयेपि व्यतिक्रमदर्शनं तद्व्यूढप्रकारस्य विहितस्य स्तुतिमात्रम्। न तु तत्तच्छन्दोव्यतिक्रमविधिरिति प्रत्यहमेकैकपशुयागानुष्ठानेपि एकादशिनानां सर्वसुत्याङ्गत्वमस्त्येवेतीहैव सिद्धान्ते वक्ष्यते। तदा च पक्षपदोत्तरं प्रयुक्तोऽपिशब्दोऽङ्गतापदेन सम्बध्यते।

अन्यथा **व्रीह्यादिविधेरपि नियमविधित्वानापत्तेः। प्रायणीयादावेकस्य पशोर्विहार-विधिनैव प्राप्तौ दशानामेव तत्र विधाने एकादशिनपदवैरूप्यापत्तेः। न चैवमादिदूषणानां काललक्षणापेक्षया फलमुखत्व, अधिकरणत्ववाचिन्यास्सप्तम्याः उद्देश्यतापरत्वे लक्षणा-यास्तत्रापि समानत्वात्,** तद्वरं **प्रातिपदिके काललक्षणा ॥**

**वस्तुतस्तु—सप्तम्यर्थोऽधिकरणत्वं द्वेधा कालिकं, दैशिकं च। 'पौर्णमास्यां' इत्यादौ कालिकेऽपि प्रयोगात्।** अतश्च **सप्तम्यर्थे कालिके अधिकरणत्वे कालोपाधित्व-संसर्गेण प्रायणीयोदयनीययोरन्वयान्न काललक्षणाऽपि।** अत एव 'जन्यमात्रं **कालोपाधिः' इति मते घटे कालिकसम्बन्धेन पट इत्यत्र न लक्षणा। अतश्चैकादशिनानुवादेन विधे-यकालविशेषणीभूतयोः प्रायणीयोदयनीययोः द्वन्द्वोपात्तसाहित्यस्य विवक्षितत्वात् मिळित्वा एकादशिनी द्वादशसुत्याङ्गभूतापि उभयत्र कार्या ॥**

---

तथा च पूर्वविहारपक्षेऽङ्गत्वे सत्यपि तत्तदहोरूपकालविधानमात्रादेव बाधः। इह तु द्वितीय-पक्षेऽङ्गत्वाभावादेव[1] बाधः इत्यर्थो द्रष्टव्यः। **अन्यथेति।** पूर्वं यवविधिप्रवृत्त्या यवानामेव प्राप्त्या पक्षेपि यवानामप्राप्त्यसम्भवात् व्रीहिभिर्यजेतेति विधि· अपूर्वविधिरेव स्यात् **न नियमविधिः।** अतः युगपत्प्रवृत्तयोः शास्त्रयोः पौवापर्ये प्रमाणाभावात् पक्षेऽनियतद्रव्याणां प्राप्तौ उभाभ्यामपि व्रीहियवशास्त्राभ्यां नियमः क्रियत इति वक्तव्यम्। तद्वदिह अन्वहपक्षस्य पूर्वप्रवृत्तिमभ्युपगम्य अस्य विधेरपूर्वविधित्वे नैव प्रमाण किञ्चिदिति समकालमेवानयोः शास्त्रयोः परिसङ्ख्याविधित्व वाच्यम्। तत्तु अन्यथापि प्रयोजनलाभेऽयुक्तमित्यर्थः। **प्रकाशकारैः** अङ्गीकृतां काल-लक्षणामभिप्रेत्याह—**तद्वरमिति। अतश्चेति।** 'पौर्णमास्यां यजेत' इत्यादौ सप्तमीप्रयोगेण **न** तावत् कालिकमधिकरणत्वं नाम नास्तीति वक्तुं शक्यते। तथाच सम्भविनः कालिकाधि-करणत्वस्यैवेहाङ्गीकारात् तत्र प्रकृत्यर्थभूतयोः प्रायणीयोदयनीययोः स्वोपाधिककालिकसम्बन्धे-नान्वयाङ्गीकारे प्रायणीयोदयनीयोपाध्यवच्छिन्नकालस्य संसर्गविधया बोधोपपत्तेः न लक्षणेत्यर्थः। ननु यत्र कालवाचकात्सप्तमी तत्र कालिकाधिकरणत्वस्वीकारेपि इह तदभावे कथं तदधिकरण-त्वाङ्गीकार इत्याशङ्कां कालवाचकपदप्रयोगाभावेपि कालिकाधिकरणत्वसाधनेन निराकर्तुं दृष्टान्तमिव दर्शयति—**अत एव जन्यमात्रमिति।** कालोधिपाधिः कालस्य महाकालस्य उपाधिः परिच्छेद-कमित्यर्थः। यैस्तु नवीनतार्किकैः महाकालस्योपाधिभूतं यज्जन्यमात्र तस्य कालोपाधित्वात् खण्डकालत्वमेवाङ्गीक्रियते, तेषां घटे पट इत्यादिषु कालोपाधित्वमात्रेणापि पूर्वोक्तरीत्या निर्वाहे

---

1. A पक्षसत्वाभावादेव

एवं च दशरात्राङ्गत्वप्रापिचोदकोऽपि न बाधितो भवति। एवं विहारपक्षेऽपि 'अन्वहम्' इत्यनेन कालस्यैव विधानात्सर्वसुत्याङ्गभूतैवैकादशिनी विहृत्य कर्तव्या। न तु एकैकसुत्याया एकैकः पशुरङ्गं दशपशुप्रापिचोदकबाधापत्तेः।

अत एव दशाहान्तर्गतैकसुत्यामात्रविकारे एकाहादौ प्राकृतस्थानरूपकालाभावेऽपि पक्षद्वयेऽपि 'गुणलोपे च मुख्यस्य' इति न्यायेन सकलैकादशिनीप्राप्तिरविरुद्धा। प्रायणीयोदयनीययोर्मेळनं च 'प्रायणीये पञ्चोदयनीये षट्' इत्येवं रूपं, अवशिष्टस्यान्तिमस्य तत्रैव कर्तव्यत्वात्॥

---

(५)—सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात्॥ विधेस्तु विप्रकर्षस्स्यात्॥ १४॥

'विश्वजित् सर्वपृष्ठः' इत्यत्र गाडहिकानां रथन्तरादीनां साम्नां विश्वजिदङ्गत्वेन विधिरिति स्थितम्। तत्र षण्णामपि षडहे माहेन्द्राख्यरथन्तरपृष्ठस्तोत्रसाधनत्वस्यैव क्लृप्तेरिहापि तत्रैव संसवादिवत् समुच्चयेन निवेश इति प्राप्ते—

---

कालत्वाङ्गीकारे नैव किञ्चित् प्रमाणं पश्यामः। इतरथा आकाशोपाधिभूतस्य गृहस्याप्याकाशत्वापत्तिः। तत्रापि 'गृहे शब्द उत्पन्न' इत्यादिप्रतीतेः समत्वादिति ध्येयम्। यदा तु कालवाचकपदोत्तरसप्तम्यैव कालिकमधिकरणत्वं प्रतिपाद्यते, नान्यत्र, प्रमाणाभावादित्यालोच्यते; तदा प्रकृते कालिकाधिकरणत्वस्यैव निश्चयाभावे प्रकृत्यर्थस्योपाधित्वघटितसंसर्गेणान्वयनियमे नैव किञ्चित् प्रमाणमिति कालिकाधिकरणत्वसिद्ध्यर्थमेव सर्वत्र काललक्षणा आवश्यिक्येवेत्यवधेयम्। **प्राकृतस्थानकालेति**। तत्तदहरुपलक्षिततत्स्थानरूपस्य अथवा प्रायणीयोदयनीयस्थानरूपस्य वा कालस्याभावेपीत्यर्थः। **पक्षद्वयेपीति**। विहारसमासरूपपक्षद्वयेपीत्यर्थः। **तत्रैव कर्तव्यत्वादिति**। उभयोस्साम्येन ग्रहे सति अवशिष्ट एव निवेशजिज्ञासायां अन्तिमापेक्षया यः पूर्वतनः पशुयागः तत्प्रत्यासत्त्यनुग्रहात् उदयनीय एव निवेश इत्यर्थः।

---

**सर्वपृष्ठे पृष्ठशब्दात्।**

बहुत्ववाचकसर्वशब्दस्यैकस्मिन् माहेन्द्रस्तोत्राख्ये पृष्ठेऽनुपपत्तेः, पृष्ठपदेन तत्साधनरथन्तरादिसाम्नां लक्षणया विधानं यत्सप्तमे उक्त तत् उत्तरविवक्षयाऽनुवदति—**विश्वजित् सर्व-**

'पवमाने रथन्तरं आर्भवे बृहत् मध्यत इतराणि वैरूपं होतुः पृष्ठे वैराजं मैत्रावरुणस्य शाक्वरं ब्राह्मणाच्छंसिनः रैवतमच्छावाकस्य' इति वचनेन स्तोत्रान्तरेषु संनिवेशविधानात् न सर्वेषां होतुः पृष्ठ एव निवेशः। न च तत्र क्लृप्तानामप्यनेन वचनेन स्तोत्रान्तरेषु पुनर्विधानं, विशिष्टविधौ गौरवापत्तेः। वैरूपस्य होतु पृष्ठे पुनर्विधिवैयर्थ्यापत्तेश्च। अतश्च क्रतुसम्बन्धित्वेन प्राप्तानां साम्नां लाघवात्स्तोत्रान्तररूपद्वारसम्बन्धमात्रकरणेन सर्वेषां क्लृप्तसम्बन्धस्यापि बाधनम्॥

न चैवं रथन्तरादिधर्माणां पृष्ठापूर्वसाधनत्वस्यैव क्लृप्तत्वेनेह स्तोत्रान्तरे तदनापत्तिः। 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति' इति न्यायेन आवश्यकस्तोत्रत्वाद्यनुरोधेन च साङ्गस्यैव रथन्तरपदेन लक्षणया विधानादिहैव पवमानापूर्वसाधनत्वबोधोपपत्तेः॥

---

**पृष्ठ। इति पवमाने इति।** माध्यन्दिने इति शेषः। मध्यत इतराणीत्यस्यैव विवरण—'वैरूपं होतुः पृष्ठ' इत्यादिवचनानि। तत्र **मध्यतः** माध्यन्दिनार्भवपवमानयोर्मध्ये इत्यर्थः। वचने सति पूर्वपक्षायोगशङ्कां विशेषाशङ्काप्रदर्शनव्याजेन परिहरति —**न च तत्रेति।** माहेन्द्रस्तोत्रं तच्छब्दस्यार्थः। **क्लृप्तसम्बन्धस्यापीति।** पृष्ठाख्यस्तोत्रसम्बन्धस्य क्लृप्तस्यापि बाधनं वचनेनेत्यर्थः। **प्रधानं नीयमानमिति।** यद्यपि नवमे उभयसाम्नीत्यधिकरणे (पू. मी. ९–२–४७) ससवगोसवादौ 'पवमाने रथन्तरं कुर्यात्' इति पवमानस्तोत्रसाधनत्वेन विहितरथन्तरं न पृष्ठस्तोत्रापूर्वप्रयुक्तम्, [नवा] सम्मीलनादिधर्माणां प्राप्तिरिति स्त्रोक्त्या एतद्विरुद्धम्, तथापि यान्विना रथन्तरस्वरूपनिष्पत्तिरेव न सम्भवति तेषां स्तोभादीनां तद्घटितऋचः प्राप्तावावश्यकत्वात् तथाभूतधर्मविशिष्टत्वेन विधानाभिप्रायमेवात्र लक्षणाभिधानमिति ध्येयम्। इतरथा रथन्तरपदे इह साङ्गरथन्तरलक्षणया सकलधर्मप्राप्तिवत् तुल्यन्यायतया तत्रापि सम्मीलनादिधर्मप्राप्तेरनिवार्यत्वात्।

वस्तुतस्तु रथन्तरस्वरूपनिष्पादकधर्माणां अन्यथानुपपत्त्यैव प्राप्तिसम्भवे तदर्थं लक्षणाश्रयणेन विधौ प्रयोजनं न किञ्चिदस्तीत्यतः अप्राप्तसम्मीलनादिधर्मप्राप्त्यर्थमेव लक्षणा वाच्येति सर्वथा तत्रत्येन तत्प्राप्त्यभावाभिधानेन विरुद्धमेवैतदिति ज्ञेयम्।

---

(६)—वैरूपसामा क्रतुसंयोगात् त्रिवृदेकसामा स्यात् ॥ १५ ॥ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥ त्रिवृद्वदिति चेत् ॥ १७ ॥ न प्रकृतावकृत्स्नसंयोगात् ॥ १८ ॥ विधित्वान्नेति चेत् ॥ १९ ॥ स्याद्विशये तन्न्यायत्वात्कर्माविभागात् ॥ २० ॥ प्रकृतेश्चाविकारात् ॥ २१ ॥

विकृतिविशेषे—'उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामा' इत्यादिना विहितानां वैरूपवैराजादिसाम्नां कस्मिन् स्तोत्रे निवेश इति चिन्तायां—

वैरूपादीनामन्यपदार्थेन क्रतुना सम्बन्धावगमेऽपि साक्षात्क्रतोस्सामसाध्यत्वायोगादवश्यं स्तोत्रद्वारकत्वावगतेर्विनिगमनाविरहात् प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वाच्च सर्वस्तोत्र एव निवेशः। यथा—'आग्नेया ग्रहा भवन्ति' इत्यत्र सर्वप्राकृतग्रहेष्वग्निः यथा वाऽत्रैवैकविंशस्तोमकता सर्वस्तोत्रेषु ॥

न च प्रकृतौ 'यदि रथन्तरसामा यदि बृहत्सामा' इत्यादौ बृहद्रथन्तरयोरेव बहुव्रीह्यन्तत्वनिर्देशात् अत्रापि वैरूपादीनां बहुव्रीह्यन्तत्वनिर्देशसादृश्येन बृहद्रथन्तरकार्यमाहेन्द्रस्तोत्रसाधनत्वावगतिरिति वाच्यं, अविशेषप्रवृत्तवचनेन सर्वस्तोत्रसाधनत्वावगतौ सादृश्यमात्रेण तत्सङ्कोचे प्रमाणाभावात्। इतरथा 'धेनुर्दक्षिणा' इत्यत्रापि गोत्वसादृश्येन तन्मात्रकार्यापत्तिप्रसङ्गः ॥

अस्तु वा कौत्सादिवत् समसङ्ख्यप्राकृतसामबाधेन 'अत्र ह्येवावपन्ति' इति वचनेन पवमानस्तोत्रयोरेव निवेशः। सर्वथा न माहेन्द्रस्तोत्र एव निवेश इति प्राप्ते—

'कौत्सं भवति' इत्यादिवत् 'वैरूपं भवति, उक्थ्यो वैरूपवान्' इत्येवंविधनिर्देशमकृत्वा बहुव्रीहिनिर्देशः स्ववैयर्थ्यपरिहारार्थं वैरूपादेर्बहुव्रीहिपदनिर्दिष्टबृहद्रथन्तरकार्यार्थत्वं गमयति। शक्यते वाऽत्रापि कौत्सादिन्यायेनैव समसङ्ख्यप्राकृतसामबाधकतया यत्किञ्चित्स्तोत्रे तन्निवेशप्रसक्तौ सादृश्यविशेषेण तन्नियमः। 'अत्र ह्येवावपन्ति' इत्यस्य सामान्यवाक्यत्वात् ॥

---

वैरूपसामा क्रतुसंयोगात्।

कौत्सादिवत्समसङ्ख्येति। यत्र कौत्सं भवतीत्यादिना एकस्य द्वयोः बहूनां वा साम्नामपूर्वतया विधानं तत्र समसङ्ख्यत्वादिना तत्तत्सङ्ख्यप्राकृतसामस्थानापन्नत्वेपि वचनबलात्

न ह्यत्र प्राकृतस्तोत्रानुवादेन वैरूपादिविधानं, येन 'आग्नेया ग्रहाः' इतिवत् सर्वस्तोत्रेषु निवेशस्स्यात्। अपि तु क्रतुसम्बन्धित्वेन श्रुतस्यानर्थक्यतदङ्गन्यायेन स्तोत्रसम्बन्धः। न चानर्थक्यतदङ्गन्यायेनावतीर्णस्य सर्वविषयत्वं, तथात्वे याज्यादावपि चातुस्स्वर्यबाधेन वैरूपापत्तेः। अतो यत्र कुत्रचिन्निवेशे प्राप्ते सादृश्येन तन्नियमः॥

अस्तु वा त्रिवृदादिस्तोमवत् तत्रापि सर्वविषयत्वं तथाऽपि बहुव्रीहिनिर्देशवैयर्थ्यपरिहारार्थमेव माहेन्द्रस्तोत्रविषयत्वोपपत्तिः। अत एव प्रकृतौ 'पृष्ठैरस्तुवते' इति वाक्येन पृष्ठबहुत्वविधिपक्षेऽपि कण्वरथन्तरस्य न सर्वपृष्ठेषु निवेशः। किन्तु 'बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवति' इति वाक्यद्वये द्वयोरेव साम्नोः पृष्ठपदसामानाधिकरण्यस्यान्यथा वैयर्थ्यापत्तेस्तत्परिहारार्थं पृष्ठपदसामानाधिकरण्यनिर्दिष्टानां कण्वरथन्तरादीनामपि तत्कार्यापन्नत्वप्रतीतेर्माहेन्द्रस्तोत्र एव निवेशः॥

न हि 'बृहत्पृष्ठं भवति' इत्यादौ स्तोत्रानुवादेन सामविधिः सामविशिष्टस्तोत्रविधिर्वा सम्भवति, वामदेव्यादिसाम्नामिव बृहद्रथन्तरयोरपि पाठादेव प्राप्तेः। स्तोत्रस्य तत्साध्यस्तोत्राणामिव प्रमाणान्तरेणैव प्राप्तेश्च। अतोऽस्य वैयर्थ्यपरिहारार्थं कण्वरथन्तरादीनां स्वकार्यकारित्वमित्युक्तं चित्राधिकरणकौस्तुभे। एवमत्रापि वैरूपादीनां बहुव्रीहिनिर्देशवैयर्थ्यपरिहारार्थमेव माहेन्द्रस्तोत्रे निवेशः॥

---

पवमानद्वये निवेशवत् इहापि तत्रैव निवेश इत्यर्थः। अस्तु वेति। यत्र कुत्रचिन्निवेशे प्राप्ते स्वसाध्य[स्तोत्रापे]पेक्षायां बहुव्रीह्यन्तत्वनिर्देशेन नियमः कर्तव्यः। यदा तु सर्वत्रैव निवेशः प्रमाणायातः तदा नियमापेक्षया बहुव्रीह्यन्तत्वनिर्देशस्य नियामकत्वासम्भवेपि तदीयवैयर्थ्यपरिहारार्थमपूर्वतयैव तत्र निवेशबोधकत्वं तस्येत्यर्थः। एकविंशतिस्तोमकत्वस्य प्रकृतत्वेन एकविंशादिस्तोमवदिति वक्तुमुचितम्; तथापि उभयवादिप्रसिद्धदृष्टान्तप्रदर्शनार्थं 'वैरूपसामा क्रतुसयोगात त्रिवृदेकसामा स्यात्' इति पूर्वपक्षसूत्रोपादानाभिप्रायेण त्रिवृदादिस्तोमवदित्युक्तम्। अतश्च यथा 'त्रिवृदग्निष्टुदग्निष्टोम' इत्यादौ त्रिवृदादिस्तोमत्वं सर्वस्तोत्रेषु निविशते तद्वदित्यर्थः। अत एव सर्वत्र निवेशे न कस्यचिद्वैयर्थ्यप्रसक्तिः प्रत्युत क्रतुसाद्गुण्य[1] साधनतयैव विधानम्। यथा धेनुवाक्ये तत्र भवत्येव सर्वस्थानापन्नत्वं धेनोरिति सादृश्यस्य नियामकत्वेनाप्यपेक्षेति ध्येयम्। **तत्साध्यस्तोत्राणामिवेति**। तच्छब्देन वामदेव्यादिसाम्नां परामर्शः। **एवमत्रापीति**। वस्तुतस्तु समानन्यायात् रथन्तरसामेत्यादिप्राकृतबहुव्रीह्यन्तत्वनिर्देशस्य वैयर्थ्यापत्तिरपि वैकृतवैरूपादिसाम्नां तत्सास्थानापन्नत्वे नियामिका शक्यत एव वक्तुमित्यपि द्रष्टव्यम्। इतरत् स्पष्टार्थम्।

---

1 क्रतुदाक्षिण्य

(७)—त्रिवृति सङ्ख्यात्वेन सर्वसङ्ख्याविकारस्स्यात् ॥ २२ ॥ स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥

त्रिवृच्छब्दस्य बहिष्पवमाने तृचत्रयानुक्रमणात् 'त्रयस्त्रिकपालास्त्रिवृता स्तोमेन सम्मिताः' इत्याद्यर्थवादाच्च स्तोत्रीयानवकवाचित्वस्थापनेऽपि लोके वेदे च 'त्रिवृद्रज्जुः' इत्यादौ त्रित्ववाचित्वस्य सत्वात् 'त्रिवृदग्निष्टदग्निष्टोमः' इत्यादौ अग्निष्टुद्यागसम्बन्धित्वेन श्रुतस्य त्रिवृत्त्वस्य शास्त्रस्य महाविषयत्वसिद्ध्यर्थं तदीयाङ्गभूतप्राकृतसङ्ख्याकार्ये निवेशप्रतीतेः प्राकृतसङ्ख्याबाधेन सर्वाणि त्रिगुणितानि कर्तव्यानीति प्राप्ते—

त्रिवृच्छब्दस्य त्रैगुण्ये यौगिकत्वात् स्तोत्रीयानवके च रूढत्वेन प्रकृते योगबाधेन रूढ्यर्थग्रहणावगतेरग्निष्टुद्यागाङ्गभूतस्तोत्रमात्रे स्तोमान्तरबाधेन त्रिवृत्स्तोमविधिः ॥

---

त्रिवृति सङ्ख्यात्वेन ।

त्रिवृच्चर्वश्ववालाधिकरणे 'त्रिवृद्बहिष्पवमानम्' इत्यत्र त्रिवृच्छब्दस्य स्तोत्रीयानवकवाचित्वम्, उत्तरत्र नवर्चामेवानुक्रमेणाम्नानात् साधितम्। तस्य च यद्यपि बहिष्पवमानवाक्ये त्रिवृच्छब्दोपादानाभावेपि नवर्चाम्नानादेव प्राप्तिसम्भवान्न बहिष्पवमानवाक्यगत-त्रिवृच्छब्दार्थनिर्णये प्रयोजनम्; तथापि यत्र न तथाविधस्तोत्रीयर्चां पाठः यथा अग्निष्टुदादौ तत्र त्रिवृच्छब्देनैव केवलेन तन्नवकप्राप्तिः तदधिकरणविचारप्रयोजन यदुक्तं तस्यैव बाधोपयोगितया आक्षेपपूर्वकसमाधानार्थमिदमधिकरणमिति सूचयन् पूर्वपक्षमाह—त्रिवृच्छब्दस्येति। ननु चरुशब्दस्यौदनवाचित्वसाधनप्रयोजनाक्षेपसामाधानपरेण अत्रत्यप्रथमपादगतेन चर्वधिकरणेनैव तुल्यन्यायतया आक्षेपसमाधानस्य त्रिवृच्छब्दे सिद्धेः गतार्थमधिकरणमित्याशङ्कां निराकर्तुं तद्वैषम्यं सूचयन्नाह—लोके वेदे चेति। चरुशब्दस्य वेदे प्रयोगानुरोधेनौदनवाचित्वमेव। स्थाल्यां तु तत्सम्बन्धाल्लक्षणयेति, यत्र सौर्यादिवाक्येषु चरुशब्दप्रयोगः तत्र लाक्षणिकार्थग्रहणे मानाभावाद्युक्तं शक्यार्थग्रहणम्। इह तु लोके वेदेपि त्रैगुण्ये प्रयोगात् शक्यार्थस्यैव निर्णयाभावे न स्तोत्रीयानवकस्यैव ग्रहणं युक्तम्, प्रत्युत शास्त्रस्य महाविषयत्वलाभाय त्रैगुण्यस्यैवेति विशेषाशङ्कापनोदनार्थमेतदारम्भ इत्याशयः। आदिपदेन "त्रिवृता ग्रन्थिनैकेन" इति मानववाक्यप्रयोगोऽपि सङ्गृहीतः। वाचित्वस्य सत्वादिति। एतेन रथकाराधिकरणेन गतार्थताशङ्का परास्ता उभयत्रापि रूढत्वादित्यर्थः। यौगिकत्वादिति। यद्यपि लोके न योगः प्रसिद्धः तथापि अहीनोरूकादिशब्देष्विव त्रिः वर्तते आवर्तते तत् त्रिवृत् इत्येवं

## (८)—उभयसाम्नि विश्वजिद्विभागस्स्यात् ॥ २४ ॥ पृष्ठार्थे वाऽतदर्थत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥

**संसवादौ यत्र बृहद्रथन्तरयोस्समुच्चयविधिः तत्र किमुभयोः प्राकृतपृष्ठस्तोत्र एव निवेशः? अथवा एकस्य पृष्ठेऽपरस्य स्तोत्रान्तरे? इति चिन्तायां क्रतुसम्बन्धित्वेन श्रुतस्य सामद्वयसमुच्चयस्य एकस्तोत्र**निवेशाभावेऽप्युपपत्तेः प्रकृतिप्राप्तनैरपेक्ष्या**नुरोधेन स्तोत्रभेदेनैव निवेशावगतेस्तत्राप्येकस्याप्यवगतपृष्ठसम्बन्धेनैव निवेशोपपत्तौ उभयोस्तद्बाधे प्रमाणाभावात् एकस्य पृष्ठस्तोत्रे निवेशोऽपरस्य स्तोत्रान्तरे,** तत्रापि पवमान एवेति **प्राप्ते**—

नात्र **समुच्चितसामद्वयविधिः, गौरवात्। अपि तु प्राप्तसामानुवादेन समुच्चयमात्रविधिः। प्राप्तिश्चातिदेशतः पृष्ठस्तोत्र एवेति तत्रैव समुच्चय। यन्मते तु प्रकृतौ सामद्वयसाध्यपृष्ठस्तोत्रभेदः तन्मतेऽपि साम्नोः प्रकृतौ भिन्नकार्यत्वेन** नैरपेक्ष्यस्याप्रसक्तेः

---

योगस्य वैयाकरणैर्ज्ञातु शक्यत्वात्, तेनैव निर्वाहे न तत्रापि रूढिकल्पनम्। अपि तु यत्र नैव योगप्रसरः तत्रैव स्तोत्रीयानवकादौ तत्कल्पनमित्यर्थः।

---

**उभयसाम्नि विश्वजिद्विभागः स्यात्।**

**निवेशाभावेपीति।** यथा गवामयने बृहद्रथन्तरयोः समुच्चयात् षडहापेक्षया निवेशो, न तु तत्तदहर्गतपृष्ठस्तोत्रापेक्षयेत्युक्तम्, तद्वदिहापि ससवापेक्षया तन्निवेशस्सम्भवत्येवेत्यर्थः। **प्रकृतिप्राप्तनैरपेक्ष्येति।** प्रकृतौ बृहद्रथन्तरयोः नैरपेक्ष्येणैकस्तोत्रसाधनत्वमवगतम्; तदबाधानुरोधेनेत्यर्थः। अत एवोभयत्र नैरपेक्ष्यद्वयाबाधानुरोधात् एकतरस्मिन् प्रकृतिप्राप्तपृष्ठस्तोत्रसाधनत्वस्यापि बाध इत्याह—**तत्रापीति। पवमान एवेति।** कौत्सादीनामिव "त्रीणि हवा" इति वचनात् पवमान एवेत्यर्थः। "पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः" इत्यनेन समुच्चितसामद्वयस्य षडहापेक्षया विध्यङ्गीकारेपि बहुव्रीह्यन्तत्वनिर्देशसादृश्येन पृष्ठस्तोत्रद्वारकत्वमेव भवति। इह तु तदभावात् समुच्चयस्य ससवापेक्षयाप्युपपत्तेरुक्तत्वात् कथं पृष्ठस्तोत्रद्वारतयैव निवेशसिद्धान्तसिद्धिरित्यपेक्षया पृष्ठद्वारकत्व युक्त्यन्तरेण साधयति—**नात्रेति।** एकस्मिन् पृष्ठे विकल्पेन प्राप्तयोः समुच्चयविधिसम्भवेपि पृष्ठस्तोत्रद्वयवादिनः मते बृहद्रथन्तरयोर्विकल्पस्य प्रकृतावेवाभावेनात्राप्राप्त्या कथं समुच्चयविधिरित्यत आह—**यन्मते त्विति। नैरपेक्ष्यस्याप्रसक्तेरिति।** एकस्मिन् कार्ये उभयोर्विधिभेदेन करणतया विधाने तद्गतनैरपेक्ष्यबाधप्रसक्त्या

**स्तोत्रयोरेव निरपेक्षयोर्विकल्पेन साधनत्वादुभयोरसाम्नोरेकपृष्ठापूर्वरूपावगतावान्तर-कार्यबाधे प्रमाणाभावेनावश्यकैकपृष्ठस्तोत्र एव समुच्चयविशिष्टसामद्वयविधान,** अन्यथा सामान्तरांशे **स्तोत्रान्तररूपद्वारान्तरस्याक्लृप्तस्य कल्पनापत्तेः ॥**

अतश्चोभयमतेऽप्येकस्मिन्नेव **पृष्ठस्तोत्रे द्वयोस्साम्नोस्तदाधारर्चोश्च समुच्चय । तत्रापि 'पूर्वाह्णो वै रथन्तरं अपराह्णो** बृहत्' इत्यर्थवादात् आद्या **अष्टौ रथन्तरेण अन्त्या नव** बृहता इति प्राप्तेऽपि **साम्नस्तृचपाठसम्पत्त्यर्थं पर्यायभेदेन केपुचित्प्रथमतो रथन्तरं पश्चात् बृहत् इति ध्येयम् ॥**

---

समुच्चयो नाङ्गीक्रियते ; किन्तु विकल्पः । प्रकृते च पृष्ठभेदेनैकस्मिन् कार्ये तयोर्विधानमिति नैरपेक्ष्यबाधप्रयुक्तविकल्पाप्रसक्तावपि द्वयोः पृष्ठस्तोत्रयोरेव विकल्पः सम्पद्यते । तदा च प्रकृतौ यादृशोपकारद्वारा बृहद्रथन्तरयोः स्तुतिसाधनत्वमासीत् तादृशोपकारद्वारा विकृत्यङ्गत्वेन प्राप्तयोः समुच्चयस्यैवेह विधानमिति पृष्ठस्तोत्रयोरेव तादृशोपकारद्वारा प्राप्तिसम्भवेन तत्रैव एकैक-पृष्ठे समुच्चितसामद्वयसिद्धिरित्यर्थः । एवं स्थिते पृष्ठस्तोत्रभेदवादिमते यन्नवमे लक्षणया स्तोत्रयोरेव समुच्चयविधानमित्युक्तम्, तदेतन्न्यायफलीभूतत्वाभिप्रायेणैव नेयम् । इतरथा लक्षणायां प्रमाणाभावात् एतदधिकरणपूर्वपक्षानुत्थानापत्तेश्च । **सामान्तरांशे इति** । द्वयोर्मध्ये एकतरस्य पृष्ठे निवेशे प्राकृतद्वारलोपाप्रसक्तावपि अन्यसामान्तरांशस्य पवमाने निवेशे भेदसम्भवात् द्वारान्तरकल्पनापत्तिरित्यर्थः । **अतश्चेति** । यतः स्तोत्रयोरेव विकल्पादिहापि तथैव प्राप्तिः, अतश्चैकस्मिन्नेव पक्षप्राप्ते पृष्ठस्तोत्रे एकपृष्ठवादिमते इव द्वयोः साम्नोः समुच्चय इति नानुष्ठाने भेदः । न च नैरपेक्ष्यबाधापत्तिरिति वाच्यम् । अतिदेशप्राप्तसामकार्या-नुरोधेन सामाङ्गनैरपेक्ष्यबाधस्यैव युक्तत्वात् स्तोत्रान्तरवृत्तिसामान्तरबाधस्याप्यधिकस्यापत्तेश्च । अतः पृष्ठस्तोत्र एव द्वयोः समुच्चय इत्यर्थः । **इति प्राप्तेपीति** । प्रायणीयोदयनीययोः ऐकादशिनानां विभागे यः उक्तो न्यायः तेन न्यायेनेति शेषः । **तृचपाठसम्पत्त्यर्थमिति** । तृचाधिकर्क्षु अथैकस्य साम्नो गाने तृचनियमविध्यवगततृचाधिकरणत्वबाधापत्तेः एकस्य रथन्तरस्य प्रथमतस्तृचे गानं कृत्वा परतृचे बृहदित्येवं पर्यायभेदेनेत्यर्थः । 'उभे बृहद्रथन्तरे भवत' इति द्वन्द्वसमासानुरोधे बृहत्पदस्य अल्पाच्कत्वेनापि विहितपूर्वनिपातमादायापि बृहत्पदस्य पूर्वपाठोपपत्तेः क्रमासाधकत्वात् । प्रकृतौ 'यदि रथन्तरसामा' इत्यादौ 'पूर्वाह्णो वै रथन्तरम्' इत्याद्यर्थवादे च रथन्तरस्यैव प्रथमतः पाठात् पूर्वाह्णत्वेन सस्तवाच्च तदनुरोधेन रथन्तरस्यादाव-

कल्पसूत्रकारास्तु—संसवादावप्येकस्य पृष्ठस्तोत्रेऽपरस्य पवमाने विश्वजिद्वदेव निवेशमामनन्ति—क्रत्वन्तरेषु केषुचित् 'बृहद्रथन्तरयोः पर्यायभेदेन एकं मध्येऽपर-मुभयतः' इत्येवंगर्भम्। केषुचित्तु 'एकस्यामेव बृहद्योनौ रथन्तरयोनौ वा पूर्वार्धर्चे एकं अपरमुत्तरार्धर्चे' इत्येवं समुच्चयम् ॥

---

(९)—पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्या-त्प्रकृतिवत् ॥ २७ ॥ अन्ते वा कृतकालत्वात् ॥ २८ ॥

प्रकृतौ द्वादशाहे 'त्रिवृत्पञ्चदशस्सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंशः' इति षडह-श्श्रुतः। तस्य गवामयनोत्तरे पक्षसि प्रातिलोम्ये त्रयस्त्रिंशस्याद्यत्वम्। प्रकृतौ च 'संस्थिते षडहे मध्वाशयेत् घृतं वा' इति श्रुतम्। अत्र च विकल्पविशिष्टघृतमध्व-शनभावनाविधानान्न वाक्यभेदः। तदिदं प्रकृतौ त्रयस्त्रिंशान्ते कृतमप्यत्र त्रिवृदन्त एव कार्यं प्रकृतौ त्रयस्त्रिंशस्यैव षडहान्तत्वेन तदन्तत्वस्यार्थिकत्वात्। 'संस्थिते षडहे' इत्यनेन षडहान्तत्वस्यैव विधेयत्वाच्च।

न हीदमनुष्ठानसादेश्यात् त्रयस्त्रिंशाङ्गं, येन विकृतौ तदन्त एवापद्येत, अपि तु वाक्याद्वैमृधन्यायेन षडहाङ्गम्। अनुष्ठानसादेश्यस्य वाक्येन बाधात्। अत एव न संस्थाङ्गत्वमपि शङ्कनीयम्। संस्थाया उपरमरूपाया अनुपयोगेनानुद्देश्यत्वात्। अत

---

नुष्ठानमभिप्रेत्य रथन्तरं प्रथमत इत्युक्तम्। एकस्य पृष्ठस्तोत्रे इति। 'पवमाने रथन्तरं कुर्यात् बृहत्पृष्ठं भवति' इति पञ्चविंशब्राह्मणानुरोधेन पवमाने रथन्तरमात्राभिप्रायेण विश्वजिद्वदेवेत्युक्तम्।

---

### पृष्ठे रसभोजनम्।

षडहान्तत्वस्यैवेति। एतच्च वक्ष्यमाणषडहोत्तरकालविध्यभिप्रायेण ज्ञेयम्। निमित्त-त्वपक्षे तत्र विधेयत्वासम्भवात्। ननु यथा अन्वारम्भणमारम्भद्वारैव दर्शपूर्णमासाङ्गं एवं समाप्तिद्वारैव षडहाङ्गत्वम्। अथवा साक्षात्समाप्त्यङ्गत्वमेवास्त्वित्यत आह—अत एव न संस्थेति। आरम्भस्य कर्मण्युपयोगात् आरप्स्यमाण इति लट्श्रुतेश्च तदर्थत्वसम्भवेपि इह समाप्तेरनुपयोगात् लडभावाच्चाङ्गित्वस्य साक्षात् परम्परया वाऽसम्भवादित्यर्थः। अत्रोत्तराधि-करणयोः संस्थिते इति पदस्य संस्थोत्तरकालपरत्वं, तथा संस्थागतनिमित्तपरत्वमपि भाष्य-स्वारस्यात् प्रतीयते। तत्र यथैव 'यस्सत्रायागुरते इत्यत्र यच्छब्दबलात् सत्रागोरणमात्रस्य

**एव संस्थायाः** क्तप्रत्ययोपात्त**भूतकालोपलक्षकत्वं,** 'पुत्रे जाते' इतिवद्वा **निमित्तत्वमेव।** अतश्च **हविरार्तिन्यायेन निमित्तविशेषणतया अन्वितस्यापि षडहस्योपस्थितत्वात्**

---

नैव निमित्तत्वम्, तस्य नित्यत्वात्। अपि तु लक्षणयाऽर्थाद्वा सत्रागोरणपूर्वकसत्राकरणस्यैव कादाचित्कस्येत्युक्तं षष्ठे। तेनैव न्यायेन संस्थाया नित्यत्वान्न निमित्तत्वं संभवतीति क्त-प्रत्ययोक्तभूतकालोत्तरत्वविशिष्टं मधुघृताशनं फलवतः षडहस्यैवाङ्गत्वेन विधीयते इति कालविधि-पक्षमेव युक्तं मन्यमानाः **प्रकाशकाराः** उत्तराधिकरण**शास्त्रदीपिका** [गत] निमित्तत्वोक्तिमपि कालविपरतयैव व्याचख्युः, तदभिप्रायेणाद्यं पक्षमाह—**क्तप्रत्ययोपात्तेति।** वस्तुतस्तु यदि क्तप्रत्ययस्य भावार्थकत्वमङ्गीकृत्य भूतार्थकत्वे तस्य कालस्याधिकरणत्वं सप्तम्योच्यते तदा षडह-पदसामानाधिकरण्यानुपपत्तिः। अत एव चतुर्थे जातेष्ट्यधिकरणे जननोत्तरकालविधिपक्षः **तन्त्रसारोक्तः** पूज्यपादैर्निरस्तः। अतश्च 'भिन्ने जुहोति' इत्यत्रापि भेदनोत्तरकालविधित्वापत्त्या निमित्तत्वानापत्तेः यथा पुत्रे जाते' इत्यत्रापि तत्समानन्यायान्नोत्तरकालविधित्वम्; अपि तु निमित्तत्वपरत्वमेव युक्तमिति **तन्त्रसारकारमतं** स्वयमेव दूषितं चतुर्थे। तेनैव न्यायेनेहापि निमित्तत्वपरत्वमेवाश्रयणीयमित्यभिप्रेत्य पक्षान्तरमाह—**'पुत्रे जाते' इतिवद्वेति।** अतश्च जननाश्रयपुत्रस्य सप्तम्या निमित्तबोधनेपि तस्य सर्वदा विद्यमानत्वेन निमित्तत्वानुपपत्तेः विशेषणी-भूतस्य जननस्यैव पुत्रवृत्तिनः रथन्तरपादाद्याधिकरणकौस्तुभोक्तरीत्या, अथवा हविरार्त्यधिकरण-न्यायेन लक्षणया कपालभेदनस्यैव निमित्तत्वं, एवमिहापीत्याह—**अतश्चेति।** यत्तूक्तं षडह-संस्थाया नित्यत्वान्निमित्तत्वासम्भव इति—**अत्रोच्यते।** यद्यपि संस्थायाः षडहप्रयोगे सर्वदा सत्वं तथाप्यङ्गभूतमध्वशनानुष्ठानस्य षडहादौ प्राप्तिनिवारकत्वेनोपपद्यत एव तत्। **निमित्तं हि** स्ववैयर्थ्यपरिहाराय कादाचित्कत्वं स्वस्याक्षिपति; तत्तु षडहारम्भमध्ययोः प्राप्तमध्वशन-निवर्तकतया परिहर्तुं शक्यमेवेति कादाचित्कत्वाभावेपि न किञ्चिद्बाधकम्। अत एव षडहमपेक्ष्य संस्थायाः कादाचित्कत्वमुपपद्यत एव। कथमन्यथा 'शंय्वन्ता प्रायणीया' इति वाक्ये संस्थारूपधात्वर्थविधौ शंय्वन्तत्वस्य निमित्तत्वमुत्तरत्र वक्ष्यमाणं सर्वसम्मतं सम्बद्धं भवेत्। सत्रे प्रवृत्तस्य तु सत्रसङ्कल्पस्य सत्रापेक्षया पूर्वं सत्वेन नित्यत्वान्न निमित्तत्वमिति वैषम्यम्' अत एव सायंकालाद्यवच्छिन्नजीवनस्यापि अनयैव रीत्या निमित्तत्वं सर्वैरप्युपपादनीयम्। किञ्च संस्थायाः कालोपलक्षणत्वे षडहावृत्तौ प्रथमषडहान्तेपि न लक्षणयाप्युपलक्ष्यस्यानपाय इति न्यायेन मध्वशन-प्राप्तिरापद्येत। यत्तु एतत्परिहारार्थं **प्रकाशकारैरुक्तं**—नायं 'दर्शपूर्णमासाभ्यामिष्ट्वा' इति वत् **कालविधिः।** तत्र भिन्नप्रयोगविधिपरिगृहीतयोः क्रमानपेक्षणेन कालपरत्वत्यागे मानाभावात्

अनयैव रीत्या नवमद्वितीयस्य पदार्थस्योपादानम् [?] तत्रापि क्रमानपेक्षणात् कालपरत्वमेव । एवञ्च यत्र एकप्रयोगविधिपरिगृहीतानेकविषयपौर्वापर्यं विधीयते स सर्वः क्रमविधिरेव । अत एव पञ्चमाध्यायाद्यपादान्त्ये 'त पराञ्चमुक्थ्येभ्यो गृह्णाति षोडशिनम्' इत्यत्र ग्रहणस्य कालोऽनुग्राह्य इति वार्तिके क्रम एव कालशब्देनोक्त इति तन्त्ररत्ने व्याख्यातम् । तदिह क्रमपरत्वात् कालविषये उपलक्षणन्यायो न प्रवर्तते 'संस्थाप्य पौर्णमासी' 'वाजपेयेनेष्ट्वा' इत्यादिवत् षडहस्याङ्गित्वात्, अङ्ग्यननुष्ठाने चाङ्गानुष्ठानस्य वैयर्थ्यापत्तेरपि न तन्न्यायप्रवृत्तिरिति ।

**तदयुक्तम्** । क्रमविधेः प्रागेकविधिपरिगृहीतत्वे सति तदनुरोधेन 'वेदं कृत्वा वेदिं करोति' इत्यत्र अपेक्षानुरोधात् क्रमपरत्वाश्रयणेपीह तद्विधेः पूर्वमेकप्रयोगविधिपरिग्रहाभावे लक्षणया तत्परत्वे मानाभावात् । इतरथा वैमृधबृहस्पतिवाक्ययोरपि तदापत्तेः । स्वयमेव ह्येतदध्यायान्त्याधिकरणे पौर्णमासीवाजपेयप्रयोगविध्योः[1] पूर्वमेव प्रवृत्तिः, अन्यथा पृथक्प्रयोगत्वासिद्धेः । अतः एकप्रयोगविधिपरिग्रहाभावादेव न क्रमो विधेयः, किन्तु काल एवेति वक्ष्यते । नचात्र तद्वैषम्यं किञ्चिदस्ति, पृष्ठ्यषडहस्य वाक्यान्तरेणैव विधेयत्वेन प्रयोगविधिभेदस्य समानत्वात् । अत एव यत्रोत्तरकर्मणः उत्पत्तिविधिर्भवति, यत्र वा उत्पन्नयोः कर्मणोरुपादानं तत्र पूर्वकर्मवाचकपदोत्तरमुपात्तः क्त्वाप्रत्ययः कालमात्रमेव वदति । तत्रोभयत्र क्रमापेक्षाभावेन तल्लक्षणायां मानाभावात् । यत्रापि वा एकप्रयोगविधिपरिग्रहेणास्ति क्रमापेक्षा तत्रापि बाधकान्तरसत्त्वेन क्रमपरत्वं, यथा उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीत्यत्र साय प्रातः कालप्रापकचोदकविरोधात् न क्रमपरत्वम्, अपि तु कालपरत्वमेव । अतश्च वैमृधबृहस्पतिवाक्ययोरिवात्र कालपरत्वे समाने सति यत्र विकृतिः पौर्णमास्याममावास्यायां वाऽनुष्ठीयते तत्र पौर्णमास्यनुष्ठानाभावेनाङ्गितः प्रयोजकस्याभावात् तत्संस्थोपलक्षितस्य प्रतिपदादिकालस्याप्यभावेन कथञ्चिद्वैमृधानुष्ठानाप्राप्तावपि यत्र षडहावृत्तिः सम्भवति प्रथमषडहानुष्ठानं तत्र आगामिनः प्रयोजकस्य सत्त्वात् उपलक्षणाभावेपि कालस्य सत्त्वात् तदनुष्ठानं दुर्वारमेव । अपि च क्रमपरत्वेपि गुणभूतक्रमविरोधे प्रधानभूतमध्वशनबाधे प्रमाणाभावात् तत्त्यागेन तदनुष्ठानापत्तिः । अतः संस्थाया निमित्तत्वमेव **भाष्यतन्त्ररत्नशास्त्रदीपिकोक्तं** साधु ।

एवं स्थिते य उत्तराधिकरणान्ते 'षडहावसानलक्षिते काले पुरुषाणां भोजनक्रिया विधीयते' इति कालपरं भाष्यकारवचनं तदपि निमित्तत्वपरतयैव कथञ्चिन्नेतव्यम् । कालविधानपक्षेपि अस्य भाष्यकारवचसः क्रमपरत्वस्य तवापि कल्पनीयत्वेन स्वारस्यभङ्गस्यावश्यकत्वा-

1 A. विधेः

**वैमृधवत्पदान्तरकल्पनया तदङ्गत्वमेव।** यत्तु—भाष्य**कारेण प्रकरणाद्द्वादशाहाङ्गत्व-मित्युक्तं** तद्वैमृधेऽपि तदापत्तेरु**पेक्षितम्**। यदपि तेन **मध्वशनस्य यां च यावतीं च मात्रां तृप्तिजननात् तदुत्तरकर्तव्यपदार्थोपकारकत्वप्रतीतेर्द्वादशाहाङ्गत्वमित्युक्तं, तदपि तथात्वे** तादृशद्वित्रि**पदार्थमात्राङ्गत्वापत्तेरुपेक्षितम्**। सर्वथा **गवामयने त्रिवृदुत्तरमेव मध्वशनम्॥**

---

(१०)—अभ्यासे च तदभ्यासः कर्मणः पुनःप्रयोगात् ॥ २९ ॥ अन्ते वा कृतकालत्वात् ॥ ३० ॥

**यत्र 'आवृत्तं षडहमुपयन्ति' इत्यादौ नैरन्तर्येण षडहावृत्तिश्श्रुता तत्र सर्वान्त एव मध्वशनं, षडहसंस्थायाष्षडहविषयकव्यापारोपरमरूपायास्सर्वान्त एव सत्त्वात्। अतः प्रतिषडहं निमित्ताभावादेव तस्याकरणम्॥**

---

दिति दिक्। एवं[1] वार्तिकमतेन षडहाङ्गत्व मधुघृताशनयोरुपपाद्य य उत्तराधिकरणे भाष्य-कारेण षडहाङ्गत्वपक्षे षडहाङ्गभूतमधुघृताशनयोरग्रे कर्तव्यशेषत्वेन षडहव्यापरोपरमस्यैवा-सम्भवापत्तेः महाप्रकरणाच्च द्वादशाहाङ्गत्वमेव तयोरुक्तं तदनूद्य दूषयति—**यत्तु भाष्येति। वैमृधेपि तदापत्तेरिति**। यथा वैमृधव्यतिरिक्तसाङ्गपौर्णमास्यनुष्ठानमात्रेणैव पौर्णमासी सस्थो-पपत्तिः, महाप्रकरणस्य च वाक्याद्बाधश्च तत्राङ्गीक्रियते तद्वदिहापि तत्स्वीकारे बाधकाभावादु-पेक्षितमित्यर्थः। यदपि भाष्यकारेण 'यया मात्रया यावत्येव तृप्तिः भवति तया ऋत्वजां सामर्थ्योपजननात् उत्तरकर्मोपयोगिसामर्थ्यजनकत्वलिङ्गात् वाक्यबाधेन षडहोत्तरकर्तव्यद्वादशाहा-वयवभूतोत्तरपदार्थाङ्गत्वमुक्तं, तदपि निरस्यति—**यदपि तेनेति**। यया च यावत्या मात्रया तृप्तेर्जननादिति वक्तव्ये यां च यावती मात्रमिति यद्वचन तस्यार्थमह न जाने[2]। **तादृश-द्वित्रीति**। यज्जन्या तृप्तिः यावतः पदार्थानुपकुर्यात् तादृशद्वित्रिपदार्थाङ्गत्वमेव स्यादित्यर्थः। एवमङ्गत्वे विवादेपि त्रिवृदन्ते मध्वशनमिति सिद्धान्ते नैव विवाद इत्यभिप्रेत्योपसहरति। **सर्वथेति**। सर्वथापदेन द्वित्रिपदार्थाङ्गत्वपक्षस्यापि सयुक्तिकत्व सूचितम्।

---

**अभ्यासे च तदभ्यासः**

स्पष्टार्थमेतत्।

---

1 A किञ्च

2. A. नैव जाने

न ह्यत्र प्रयोगसमाप्तिस्तदुत्तरकालतामात्रं वा संस्थापदार्थः, येन प्रतिषडहान्ते तत्सत्त्वादावर्तेत मध्वशनम्। व्यापारोपरमवाची तु संस्थाशब्दो वृद्धव्यवहारात्। न च षडहे कर्तव्ये तदुद्देश्यकव्यापारोपरमस्सम्भवति। अतस्सर्वषडहान्ते सकृदेव मध्वशनम्॥

---

## (११)—आवृत्तिस्तु व्यवाये कालभेदात्स्यात्॥ ३१॥

यत्र गवामयनादौ षडहान्यैरहोभिर्व्यवहितः पृष्ठ्यषडहस्तत्राद्यषडहोत्तरमपि व्यापारान्तरकरणेन तदुद्देश्यकव्यापारोपरमसत्त्वान्मध्वशनस्याप्यावृत्तिः। अत्राभिप्लव-षडहस्यापि द्वादशाहिकषडहविकारत्वात् तत्रापि मध्वशनप्राप्तेस्तेन व्यवधानोक्तिः पार्थसारथेश्चिन्त्या॥

---

### आवृत्तिस्तु व्यवाये

अत्र भाष्ये गवामयने व्यवहितपृष्ठ्यषडहोदाहरणं दर्शितम्। प्रथमे मासि एकः पृष्ठ्यः षडहः; ततश्चत्वारोऽभिप्लवाः षडहा भवन्ति। तत्र पूर्वतनषडहव्यापारोपरम अभिप्लवा-नुष्ठानानुपपत्तेः सस्थारूपनिमित्तसत्त्वात् पूर्वतनषडहान्त्ये कर्तव्यमेव मध्वशनमिति तद्दूषयति —अत्राभिप्लवेति। पार्थसारथिपदमुपलक्षणम्। अयमर्थः—भाष्ये सस्थास्वरूपं द्वेधोक्तम् षडहौदासीन्यम्, व्यापारान्तरकरणं वा, प्रकृते च यद्यपि न षडहौदासीन्यम्, उत्तरत्रापि तस्य करिष्यमाणत्वात्। किन्त्वभिप्लवषडहसम्बन्धि व्यापारान्तरकरणमस्तीति सस्थासत्वमुपपादितम्। तत्राभिप्लवषडहेषु पृष्ठ्यषडहातिदेशेन मध्वशनान्ताङ्गजातस्य प्राप्तेः षडहव्यापारापेक्षया च तस्य व्यापारोत्तरत्वाभावात् न तथाविधव्यापारस्य व्यवधायकता न वा षडहव्यापारौदासीन्यं सम्भवति। अतः षष्ठमासीयपृष्ठ्यषडहानन्तरं त्रयाणां स्वरसाम्नां एकस्याभिजिन्नामैकाहस्य चानुष्ठानानन्तरं पुनः सप्तमे मासि पृष्ठ्यषडहानुष्ठान भवति। तत्र स्वरसामादिभिः व्यवधानात् पूर्वषडहान्ते कर्तव्यमेव मध्वशनमित्युदाहरणं युक्तमिति। वस्तुतस्तु एतादृशे विषये षडहव्यापारानुष्ठानेन व्यधानासम्भवेपि षडहोद्देश्यकव्यापारातिरिक्तव्यापारान्तरानुष्ठानसत्त्वात् व्यवधानोपपत्तेः षडहो-द्देश्यकव्यापारोपरमसम्भवान्न किञ्चिद्बाधकम्। किञ्चाभिप्लवे पृष्ठ्यषडहसस्थाया निमित्तत्वा-भावात् मध्वशनप्राप्तिः कथम्? नहि प्रकृत्यङ्गमिति भेदनहोमः भेदनाभावे विकृतौ प्राप्यते। अत एव रथन्तरसामकज्योतिष्टोमस्य निमित्तत्वं भवदेवोक्तं विकृतावैन्द्रवायवाग्रताप्राप्तयनापत्तेः दूषितं रथन्तरपादाद्यधिकरणे कौस्तुभे इत्यपि ध्येयम्।

---

## (१२)—मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥ प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥

**द्वादशाहे गृहपतिव्रतानि 'न बहु वदेत् संस्थिते षडहे मध्वाशयेत् घृतं वा' इत्यादीनि। अत्र आशयेत् इत्यस्य णिजन्तत्वात् प्रकृतान् अध्वर्य्वादीनिति सम्बध्यते। अतश्चाध्वर्य्वादिकर्तृकं मध्वशनमपि षडहाङ्गत्वेनादृष्टार्थं** आर्थिकेन **विधिना विधीयते,** तच्च तेषा **सत्रात्मकद्वादशाहे भवेत् न वेति चिन्तायां—**

**सत्रे अध्वर्य्वादीनां यजमानत्वेन दीक्षितत्वाद्दीक्षितानां च ब्रह्मचर्यविधानात् ब्रह्मचारिणश्च मधुभक्षणप्रतिषेधात् षडहस्य च घृतभक्षणेनापि साङ्गतोपपत्तेः मध्वशनविधेश्चा**हीनविषयत्वेनाप्यु**पपत्तेः न सत्रे मध्वशनमिति प्राप्ते—**

---

### मधु न दीक्षिता ब्रह्मचारित्वात्।

**आर्थिकेनेति।** एतया निषादस्थपतिं याजयेदित्यत्र याजनस्य रागतः प्राप्तत्वात् यजनमेव विधीयते। नैवमिहानेन वाक्येन प्रयोज्यव्यापारो विधीयते गृहपतिव्यापारस्यान्यतः प्राप्त्यभावात्। अतो गृहपतिनिष्ठप्रयोजकव्यापार एव गृहपतिव्रतरूपोऽप्राप्तो विधीयते। तस्य च प्रयोज्यव्यापारफलकत्वसिद्ध्यर्थं अध्वर्य्वादिकर्तृकाशनविधिकल्पनादार्थिकत्वमित्यर्थः।

वस्तुतस्तु स्थानापत्त्यधिकरणदर्शितनावमिकरीत्या सामगानां महाब्राह्मणे 'न बहु वदेत्' इत्यादीनां ऋत्विग्धर्मत्वस्यैव स्पष्टमुपलम्भात् श्रान्तवाचां ऋत्विजामेव मध्वाद्यशनविधिरयम्। तत्र प्रयोजकव्यापारस्यानियमेन प्राप्तस्य विधाने तस्य भाष्यतन्त्ररत्नाद्यनारूढं गृहपतिव्रतत्वाश्रयणं व्रतशब्देनोपक्रमाभावान्न युक्तमिति ध्येयम्।

यद्यपि मध्वशनादेः तृप्तिजनकतया आर्थवादिकश्रमापनोदकतया वा दृष्टार्थत्वम्, तथापि कर्तृनियमेनादृष्टार्थत्वाभिप्रायेणादृष्टार्थमित्युक्तम्। अहीने यजमानभिन्नानामेवर्त्विक्त्वात् तेषां ब्रह्मचर्याविधानेन मध्वशननिषेधाप्रवृत्तेः मध्वाद्यशनमविहितमेवेति न विचारविषयत्वमित्यभिप्रेत्य सत्रात्मकद्वादशाहान्तर्गतपृष्ठ्यषडहाङ्गमध्वशनमुदाहरति—**तच्च तेषामिति। अहीनविषयत्वेनापीति।** न त्वेतावता मधुघृताशनयोः विकल्पो व्यवस्थित[1] इति भ्रमितव्यम्। प्रमाणाभावात्। अतो ब्रह्मचर्यविधिविरोधात् सत्रे घृताशनपर्यवसानेपि अहीने विरोधाभावे उभयो-

---

1. A. व्यवस्थातः

ब्रह्मचर्याश्रमपुरस्कारेणोक्तस्य मधुवर्जनस्य गृहस्थाधिकारके सत्रे अप्रसक्तेर्दीक्षित-पुरस्कारेणोक्तस्य ब्रह्मचर्यस्य च मैथुवर्जनरूपत्वेन मधुवर्जनरूपत्वाभावात्, तद्रूपत्वेऽपि वा रागप्राप्तमधुभक्षणविषयत्वेन तस्य वैधमधुभक्षणविषयत्वाभावात्, तद्विषयत्वेऽपि वा तस्येहातिदेशप्राप्तत्वेन औपदेशिकमधुभक्षणे अहीनमात्रविषयताया कल्पयितुमशक्य-त्वादहीनवत्सत्रेऽपि मधुघृतयोर्विकल्पः ॥

---

(१३)—मानसमहरन्तरं स्याद्भेदव्यपदेशात् ॥ ३४ ॥ तेन च संस्तवात् ॥ ३५ ॥ अहरन्ताच्च परेण चोदना ॥ ३६ ॥ पक्षे सङ्ख्या सहस्रवत् ॥ ३७ ॥ अहरङ्गं वांशुवच्चोदनाभावात् ॥ ३८ ॥ दशमविसर्गवचनाच्च ॥ ३९ ॥ दशमेऽहन्निति च तद्गुणशास्त्रात् ॥ ४० ॥ सङ्ख्यासामञ्जस्यात् ॥ ४१ ॥ पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥ स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् ॥ ४३ ॥ वचनादतदन्तत्वम् ॥ ४४ ॥

द्वादशाहिके दशमेऽहनि 'प्राजापत्यं मानसं ग्रहं गृह्णाति' इति श्रुतम्। तत्र किं सुत्यान्तरविधिः? उत दशमसुत्याङ्गत्वेन ग्रहणान्तरमात्रविधि ? इति चिन्तायां—

'वाग्वै द्वादशाहो मनो मानसम्' इति भेदव्यपदेशात् 'विधूतानि वै द्वादशाहस्य गतरसानि छन्दांसि तानि मानसेनैवाप्याययन्ति' इति मानसेन द्वादशाहस्याप्यायनवचनेन

---

रपि प्रवृत्त्यर्थः ब्रह्मचर्यशब्दो द्वेधा प्रयुक्तो दृश्यते। एकस्तावत् ब्रह्म वेदः तच्चरणं तदाचरणम् तदध्ययनमित्येव योगेन ब्रह्मचर्याश्रमविशेषपरः। अपरस्तु "अव्रतोऽब्रह्मचारी स्यात्" इत्यादिषु मैथुनवर्जनवाची रूढः। तत्र 'मधुमांसे च वर्जयेत्' इत्ययं निषेधो ब्रह्मचारिधर्मप्रकरणाधीतत्वात् आद्यब्रह्मचर्याङ्गम्। अथवा भाष्योक्तरीत्या पुरुषार्थो वा। अतो निषेधस्य भिन्नविषयत्वात् गृहस्थाधिकारिकसत्रात्मकषडहाङ्गभूतमध्वशनस्य नैव बाधः सम्भवतीत्यभिप्रेत्य सिद्धान्तमाह —**ब्रह्मचर्याश्रमेति**। ज्योतिष्टोमे क्रत्वर्थतया विहितस्य ब्रह्मचर्यस्य अतिदेशतः प्राप्तावपि इह न मध्वशनविधिविरोध इत्याह—**दीक्षितेति**।

---

भेदानुमानादहरन्तरविधिं मन्यन्ते। द्वादशाहपदं त्ववयुत्यानुवादस्त्रयोदशाहे रूढं वेति प्राप्ते—

भेदव्यपदेशस्यावयवावयविभेदादप्युपपत्तेः ग्रहणविधायकस्यास्य यागान्तरविधायकत्वे प्रमाणाभावात् द्वादशाहपदस्य रूढत्वकल्पने प्रमाणाभावाच्च तत्रैव ग्रहणान्तरविधिः। अत एव दशमेऽहनि 'मानसाय प्रसर्पन्ति एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इत्यादिलिङ्गान्यप्युपपद्यन्ते। विसर्गः अन्तः। किञ्च विहृतां पश्वेकादशिनीं विधाय 'अथ यः पशुरतिरिच्यते स ऐन्द्राग्नः कार्यः' इत्येकस्यैव पशोरतिरेकं दर्शयति न द्वयोः।

या तु सर्वेषामह्नां पत्नीसंयाजान्तत्वात् 'पत्नीस्संयाज्य मानसाय प्रसर्पन्ति' इति मानसस्य तद्बहिर्भावावगतिः, सा पत्नीसंयाजान्तत्वस्य सामान्यविहितत्वात् दशमाहर्व्यतिरिक्तविषयत्वोपपत्तेर्निरस्ता। अतो विकृतिषु दशरात्रे प्रवर्तमाने दशमाहाङ्गत्वेन मानसग्रहस्यापि प्रवृत्तिः, अहरन्तरत्वे बाधः इत्यध्यायसङ्गतिः॥

---

(१४)—सत्रमेकः प्रकृतिवत् ॥ ४५ ॥ वचनात्तु बहूनां स्यात् ॥ ४६ ॥ अपदेशस्स्यादिति चेत् ॥ ४७ ॥ नैकव्यपदेशात् ॥ ४८ ॥ संनिवापं च दर्शयति ॥ ४९ ॥ बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् ॥ ५० ॥

सत्रात्मकद्वादशाहे अतिदेशप्राप्तकर्तृगतैकत्वबाधेन 'ऋद्धिकामास्सत्रमासीरन्' इति औपदेशिककर्तृबहुत्वविधानात् बहवः कर्तार इति सिद्धमेव बाधप्रसङ्गाच्छिष्येभ्य उपदिश्यते॥

(१५)—अन्ये स्युर् ऋत्विजः प्रकृतिवत् ॥ ५१ ॥ अपि वा यजमानास्स्युर् ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥

---

मानसमहरन्तरम्।

इतः प्रभृति चत्वार्यधिकरणानि स्पष्टार्थानि। तत्र अनियतसङ्ख्यकत्वेनेति। एको द्वौ बहवो वा अहीनेन यजेरन् इत्यनेन कर्तनियमविधानात् अनियतसङ्ख्यत्वम्; सत्रे तु सप्तदशावराः चतुर्विंशतिपरमा इति नियतसङ्ख्यकर्तृत्वमिति भेदः।

---

कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५२ ॥ स्याद्विशये तन्न्यायत्वात्प्रकृतिवत् ॥ ५४ ॥ व्याख्यातस्तु गृहपतिवदिति चेत् ॥ ५५ ॥ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥ दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ॥ ५७ ॥ अदक्षिणत्वाच्च ॥ ५८ ॥

तत्र च यजमानैरे [illegible] र्थे 'ये यजमा [illegible] ऋत्विज' इति वचनात् [illegible] ऋत्विक्पदल [illegible] ऋत्विग्व्यपदेश [illegible] यजमान [illegible] कर्तृ [illegible] कर्तृकर्तृ [illegible] णमरणादिकं च वा यत इति। [illegible] पूर्व [illegible]। न [illegible] यजमानसंस्कारार्थतया [illegible]॥

---

(१६) सत्रत्व [illegible] पायिप्र [illegible] [illegible] व

सत्रशब्दाभिसंयोगात् ॥ ५९ ॥ यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ॥ ६० ॥

तयोः [illegible] तादिषु [illegible] पाधिवाद [illegible] द्विकरत्न [illegible] द्वादशाहेऽपि [illegible] सत्रत्वम्। द्विरात्रादि [illegible] गणेषु [illegible] चोद [illegible] नियत [illegible] कर्तृकत्वेन वैदिकानामहीनशब्दप्रयोगात् द्वादशाहेऽपि तत्स [illegible] मित्यपि प्रसङ्गात् व्यवहारसौकर्यार्थमुच्यते ॥

---

(१७)—अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभेदस्स्यात् ॥ ६१ ॥ सर्वस्य वैककर्म्यात् ॥ ६२ ॥ पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६३ ॥ ज्योतिष्टोमस्तु दक्षिणास्सर्वासामेककर्मत्वात् प्रकृतिवत् तस्मात् नासां विकारस्स्यात् ॥ ६४ ॥ द्वादशाहे वचनात्प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्परेषु तासां सङ्ख्याविकारस्स्यात् ॥ ६५ ॥

---

परिक्रियाविभागाद्वा समस्तस्य विकारस्स्यात् ॥ ६६ ॥ भेदस्तु गुणसंयोगात् ॥ ६७ ॥ प्रत्यहं सर्वसंस्कारः प्रकृतिवत् सर्वासां सर्वशेषत्वात् ॥ ६८ ॥ एकार्थत्वान्नेति चेत् ॥ ६९ ॥ स्यादुत्पत्तौ कालभेदात् ॥ ७० ॥ विभज्य तु संस्कारवचनाद्द्वादशाहवत् ॥७१

पौण्डरीको नामाहीन एकादशरात्रः। तत्र 'अयुतं दक्षिणा अश्वसहस्रमेकादशम्' इति श्रुतम्। तत्र किं प्रत्यहमश्वसहस्रं गवां चायुतं देयं? उतैकमेव विभज्य देयम्? इति चिन्तायां—

सत्यपि ज्योतिष्टोमे दक्षिणायाः प्रयोगाङ्गत्वे अहीनात्मके द्वादशाहे तथैव प्राप्तावपि च तत्र 'अन्वहं द्वादशशतं ददाति' इत्यनेन तत्तदहरङ्गत्वेन द्वादशशतविधानात् नात्र दक्षिणायाः कृत्स्नप्रयोगाङ्गत्वं, अतश्च तत्तत्प्रधानाङ्गभूतैवेयं दक्षिणाऽङ्गेषु प्रसङ्गादुपकरोतीति न ततोऽन्या दीयते। अतश्च पौण्डरीकेऽपि प्रतिसुत्यमतिदेशेन भेदेनैव दक्षिणाप्राप्तौ अश्वसहस्रमयुतं च विधीयमानं भेदेनैव द्वादशशतबाधेन प्राप्नोति।

वस्तुतस्तु—ज्योतिष्टोमेऽपि प्रयोगाङ्गकर्तॄनत्यर्थतया साङ्गप्रधानार्थत्वेन प्राप्ताया अपि दक्षिणायाः 'दक्षिणा सोमस्य' इति वचनेन प्रधानमात्रार्थत्वावसायात् द्वादशाहेऽपि प्रतिकर्मावसायिभिश्चोदकैर्भेदेनैव गृह्यमाणविशेषतया सवनीयादिवत् प्रधानमात्रार्थं दक्षिणाप्राप्तेः 'अन्वहं द्वादशशतं ददाति' इत्ययं विधिर्न प्रधानार्थत्वबोधक, किन्तु द्वादशशतातिरिक्ताश्वादिपरिसङ्ख्यार्थ एव। अन्वहमिति त्वतिदेशप्राप्तप्रधानार्थत्वानुवादः।

अहीने दक्षिणाशास्त्रम्।

**पौण्डरीको नामेति।** "पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेत" इति वाक्येन विहित इति शेषः। **तत्रायुतमिति।** तस्य द्वादशशतमित्यत्रेव महोपकारित्वात् अयुतसङ्ख्यापि गोमात्रविषयिण्येवेति प्राकृतगोगतसङ्ख्याबाधेन गवामायुतं दक्षिणात्वेन विहितमित्यर्थः। **द्वादशशतविधानादिति।** यावदतिदेशेन कृत्स्नप्रयोगाङ्गत्वेन इह द्वादशशतं प्राप्यते ततः पूर्वमेवानेन वचनेन तत्तदहरुद्देशेन द्वादशशतदानं विधीयते। तत्फलं च प्रत्यहं द्वादशशतभेदः। तस्य च प्रतिप्रधानावृत्तिन्यायप्राप्तावृत्त्यैव सिद्धेः अन्वहमितिपदगतानुशब्दोऽनुवाद इत्यर्थः। **सवनीयादिवदिति।** अग्नीषोमीयाद्यङ्गानां पृथक्कालत्वात् अगृह्यमाणविशेषतया तन्त्रत्वेपि सवनीयादीनां तत्तत्सुत्याकालीनानां तत्तत्सुत्याङ्गत्वे गृह्यमाणविशेषतया आवृत्तिर्भवति तद्वदिहापि प्रधानार्थतयाऽऽवृत्तिः सिद्ध्यत्येवेत्यर्थः। **प्रधानार्थत्वबोधक इति।** तत्त-

**अतश्च पूर्ववदेव प्रकृतिनोऽपि प्रतिसुत्यं भेदेनैव दक्षिणाप्राप्तेस्तत्राश्वसहस्रादि विधीयमानं भेदेनैव प्राप्नोतीति प्राप्ते—**

**ज्योतिष्टोमे प्रधानमात्रार्थाया अपि दक्षिणायाः प्रधानप्रयोगीयकर्त्रानतिद्वारैव प्रधानार्थत्वं** न तु **साक्षात्।** अत एव नाङ्गेषु पृथक् तस्याः **करणम्।** एवं सत्यपि **प्रधानमात्रार्थविधेः प्रयोजनं** अङ्गविकारेष्वनतिदेशः।

**अतश्च द्वादशाहेऽपि प्रतिकर्मावसायिभिश्चोदकैस्तत्तदहर्मात्राङ्गत्वेन प्राप्यमाणमपि द्वादशशतं तत्तदहः प्रयोगीयकर्त्रानतिद्वारैव प्राप्यते। अतश्चाङ्गेष्विव प्रधानान्तरेष्वपि न पृथक्करणं प्राप्नोति। अतश्च** विनिगमनाविरहादेकमेव **द्वादशशतमादावन्ते वा दीयमानं सर्वप्रधानाङ्गं सम्पद्येत। अतश्च 'अन्वहं द्वादशशतम्' इत्यनेन प्राप्ताया दक्षिणायाः पुनस्तदङ्गत्वेन विधौ वैयर्थ्यापत्तेः सकृत्क्रियमाणत्वेन प्रसक्तायाः 'अन्वहम्' इत्यनेन आवृत्तिविधिः। इतरथा अश्वादिपरिसङ्ख्यार्थत्वे अन्वहमित्यस्यानर्थक्यापत्तेः।**

**सा चावृत्तिर्न द्वादशशतस्य** तत्तत्सुत्यामात्रोपकारकतया, **एकस्मिन्नप्यहनि दीयमानस्य तस्य प्रयोगैक्येन सुत्यान्तरोपकारकत्वावश्यंभावात्। अपि तु तत्तत्प्रयोगीयकर्त्रानतिरूपव्यापाराबाधाय द्वादशशतरूपसाधनस्यैव तत्पृष्ठभावेन प्राप्तस्य बाधमङ्गीकृत्य सुत्यासमसङ्ख्यद्वादशशतसमुदायस्यैव दक्षिणात्वकल्पनया।**

त्प्रधानार्थत्वेत्यर्थः। **अत एव नाङ्गेष्विति।** यदि तु अदृष्टद्वारा साक्षात्प्रधानमात्रार्थं स्यात् तदा ज्योतिष्टोमे आनत्यर्थमतिदेशस्यैवाभावेन दक्षिणाया अप्राप्तावपि दीक्षणीयाद्यङ्गेषु अतिदेशतः प्राप्ता दक्षिणा पृथगेव स्यात्। न त्वेतदस्ति। दृष्टद्वारा तदर्थत्वसम्भवे अदृष्टार्थत्वकल्पनाऽयोगात्। अतो'दक्षिणा सोमस्य' इति वाक्य विनापि ज्योतिष्टोमप्रकरणपाठात् प्रधानमात्रार्थत्वं यत्प्राप्तं तदपि कर्त्रानतिद्वारैवेति कर्तॄणामेकत्वात् तेनैवानतिसिद्धेः नाङ्गेषु पृथक् तस्याः करणमित्यर्थः।

**एवं सत्यपीति।** यद्यपि प्रकरणात् प्रधानाङ्गभूताया दक्षिणायाः प्रसङ्गेनाङ्गोपकारकत्वेपि अङ्गाङ्गत्वाभावान्नैव तद्विकारेष्वतिदेशः प्राप्नोति येन दक्षिणा सोमस्येति वचनस्य इदं प्रयोजनमुच्येत, **तथापि** दक्षिणायाः कर्त्रानतिजनकत्वसामर्थ्यात्मकेन लिङ्गेन प्रकरणबाधे सति यत्साङ्गप्रधानार्थत्वं प्राप्त तद्बाधितुमेतद्वचनमित्याशयः। **विनिगमनाविरहादिति।** एतदहः प्रयोगमध्य एवेत्येवं नियमे नियामकाभावादित्यर्थः। **तत्तत्सुत्यामात्रोपकारकतयेति।** आवर्त्यमानं द्वादशशतं पृथक् दक्षिणारूपत्वेन तत्सुत्यामात्रोपकारकं नान्यसुत्योपकारकमिति नार्थः।

साऽपि च दक्षिणा सर्वेषामेवाह्नां [illegible]प्रयोगीयकर्तृत्वाविशेषा[illegible] सकृत् तन्त्रेण सर्वेषामुपकारिका। न तु प्रत्यहं [illegible] द्वादशशतं विभज्य [illegible] इति विभागोऽपि [illegible] प्रकृतौ। इह तु पौण्डरीके [illegible] तत्स्थाने [illegible]तम् [illegible] [illegible] [illegible]प्रयोगप्रयत्ना[illegible] [illegible] अतिदेशात्[illegible] विभाग[illegible] [illegible]शो विभज्य प्रत्यहं [illegible]। अत एव [illegible] [illegible] अथवा एकादशे[illegible] पूर्वपक्ष[illegible] [illegible] प्राप्तविभागनाशे प्रमाणाभावात्। तदर्थमधिकरणा[illegible]। स च विभाग

---

किन्तु यावदह सङ्ख्य द्वादशशतमेका द्वादशाहदक्षिणेत्येवमाकारिकाऽऽवृत्तिर्विधीयते। तथाच द्वादशद्वादशशतानि दक्षिणेत्यर्थः। सापि चेति। तथा च तन्त्रेण सर्वेषामुपकारिकया द्वादशद्वादशशतरूपया एकयैव दक्षिणयोत्पाद्यमानाऽऽनतिः कृत्स्नान् प्रयोगानुत्पद्यते। न तु प्रत्यह तदवयवविभागानुष्ठानेन भिन्नो वाऽऽनतिः तदवयवरूपा वा पृथगुत्पद्यते मानाभावादित्यर्थः। तत्स्थाने इति। द्वादशशतरूपप्राकृतदक्षिणास्थाने इत्यर्थः। प्राग्दधिकरणोत्तर "प्रत्यह सर्वसंस्कारः प्रकृतिवत् सर्वासा सर्वशेषत्वात्" इत्यादिसूत्रचतुष्टयेन भाष्यकृता यदधिकरणान्तर कृत तत्र ज्योतिष्टोमे सदोमण्डपदेशे विद्यमानेभ्यो ऋत्विग्भ्यो दक्षिणा दातु माध्यन्दिनसवने सद प्रति दक्षिणाया नयन संस्कारकत्वेन विहितम्। तदिह पौण्डरीके दक्षिणासंस्कारार्थत्वान्नयनस्य यत्र क्वचन अहनि माध्यन्दिनसवने सकृत्करणेन संस्कारसिद्धौ सकृत्करणम्। अथवा प्रकृतौ स्वीये माध्यन्दिनसवने नीयमाना दक्षिणा यागस्योपकृतवतीति इहापि सर्वेषां शेषभूता सर्वापीय (सर्वेषामह्नामङ्ग) सर्वेषामुपकर्तुं सर्वेषु माध्यन्दिनसवनेषु नेतव्येति पूर्वपक्षद्वय प्रापय्य द्वादशाहे विभागवचनात् प्रत्यह माध्यन्दिनसवने विभज्यैव नीतेति इहापि विभज्यैव नेयेति सिद्धान्त कृत। तत्र पूर्वाधिकरणे विभागस्य द्वादशाहे विहितस्य इहातिदेशात्, प्राप्तस्यानुरोधेन अयुताश्वसहस्रस्य सपूर्णस्य प्रत्यहदक्षिणात्वेन न दानमिति सिद्धान्तिते सति उत्तराधिकरणेऽपि तद्वयस्याप्यनुत्थानात् विशेषाशङ्काऽभावाच्चायुक्त तदिति पूर्वपक्षखण्डनव्याजेन सूचयति—अत एवेति। अत्र शास्त्रदीपिकायां सन्देहप्रदर्शनावसरे, 'अथवा विभज्य प्रत्यह सहस्र नेय अश्वसहस्र त्वेकादशेऽहनि नेयमिति सिद्धान्तकोट्युपन्यासमिषेण विभाग प्रदर्शित। तमनूद्य दूषयति—स च विभाग इति। अभ्याससङ्ख्य इति। चत्वारो हि षडहा एक साध्याना षडह, द्वितीय ऋतूना (त्रानाता )षडह, तृतीयस्त्रिकद्रुक, चतुर्थोऽभ्याससङ्ख्य। तत्र अग्निष्टोम त्रय उक्थ्योऽतिरात्रश्चेत्येवमह क्लृप्तयात्मकेन पञ्चाहेन अभ्याससङ्ख्यसंज्ञकेन युक्त विश्वजिदतिरात्रमन्तिममहर्गृहीत्वा य षडह सोऽभ्याससङ्ख्य चतुर्थ षडह इत्यर्थ।

न पार्थसारथिरीत्या 'प्रत्यहं गवां सहस्रं अश्वसहस्रं त्वेकादशेऽहनि' इत्येवंरूपः। मानवसूत्रे 'अन्वहं विभक्तानि सहस्राणि ददाति चतुष्टोमेऽश्वसहस्रम्' इति अश्वसहस्रस्य दशमेऽहनि विधानात्।

एवं हि पौण्डरीके आ० सूत्रे तेनोक्तम्—'एकादशरात्रेण पौण्डरीकेण यजेत पारमेष्ठ्यकामोऽश्वसहस्रं [illegible] चतुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्र इति। अतो दशमेऽहनि अश्वसहस्रं [illegible] अवशिष्टेषु गवां सहस्राणीति विभागः॥

---

(१८) लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययस्स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ७२ ॥ यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७३ ॥ आग्नेये कृत्स्नविधिः ॥ ७४ ॥ ऋजीषस्य प्रधानत्वाद्ग्रहणे सर्वस्य प्रतिपत्तिस्स्यात् ॥ ७५ ॥

---

वस्तुतस्तु "पौण्डरीक एकादशरात्रोऽयुतदक्षिणा, अन्वहं सहस्राणि ददाति सहस्रमुत्तमे अश्वशतं वेत्यापस्तम्बसूत्रात् पार्थसारथ्युक्तोऽपि युक्त एव विभाग इति ध्येयम्। एवमुक्तोपपत्त्या द्वादशद्वादशशतानामेकदक्षिणात्वस्य आनत्यभेदस्य चोपपत्तौ यत्प्रकाशकारैः अदृष्टार्थदानानतिभेदापत्त्या प्रत्यहं दानावृत्तिपक्षं प्रदूष्य ददातिलक्षणया आनयनस्यैव तन्त्रन्यायप्राप्तस्य भेदं विधत्ते। नयनं च द्वादशशतस्य सदोदेशप्राप्तया दृष्टार्थमेव। तद्भेदस्त्वदृष्टार्थं नीतस्य च नयनासम्भवात् द्वादशभेदोऽवगम्यते, तत्संस्कारार्थश्चानयनभेदः प्रकरणादङ्गं भवन् संस्कार्यद्वादशशतानां प्रकरणाप्यतामर्थायातामवगमयति। अतश्च द्वादशशतरूपैकदक्षिणा द्वादशाहेऽनेन प्रकारेण विहिता भवतीत्युक्तम्। तत्र लक्षणापत्ते एतादृशक्लिष्टकल्पनाश्रयणे प्रयोजनाभावाच्चोपेक्ष्यम्। किञ्च यथैव चतुर्गृहीतं वा एतदभूत् तस्याघारमाघारयेति वाक्येन एकस्यैव चतुर्गृहीतस्य आघारप्रयाजलयसाधनत्वं विधीयमानं अनुपपन्नं सत् अवयवश एव साधनं भवति न तु तद्भेदं, एवमिहाप्यतिदेशात प्राप्तस्य द्वादशशतस्य तस्य तन्त्रेणानुष्ठीयमानस्य विहितानयनावृत्तिरनुपपन्ना सती तदवयवभेदमादायैव पर्यवस्येत न त्वेतावता एकान्ततो द्वादशशतभेदं सिद्ध्यतीत्यलं श्रमेण।

---

विकृतिविशेषे 'मनोर्ऋच सामिधेन्यो भवन्ति' इति श्रुतम्। वेदे च पञ्चदश-सङ्ख्याधिकास्ताः पठिताः। अतस्सर्वासामपि मनोर्ऋक्त्वाविशेषात् प्राकृतऋग्बाधेन प्राकृतसङ्ख्याबाधेन च सर्वासां पाठ इति प्राप्ते—

नात्र मनोर्ऋचः संस्कार्याः येनाहर्गणे 'ऋजीषमप्सु प्रास्यति' इत्यत्र सर्वाहस्सम्बन्धि-ऋजीषप्रासनरूपप्रतिपत्तिवदिहापि सर्वेषां पाठो भवेत्। प्रकृतिवदनुवचनानुवादेन तु मनोर्ऋग्विधानात् उपादेयत्वेन बहुत्वस्य कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसानप्राप्तौ अतिदेशप्राप्तसङ्ख्यानुरोधेनैकादशैव। प्रथमोत्तमयोस्त्रिरभ्यासेन तु पञ्चदशसम्पत्तिः।

इष्यते चोत्तरान्यायेन प्रमाणान्तरसत्त्वेऽन्यत्रापि कपिञ्जलाधिकरणन्यायबाधः। यथा 'आग्नेयैस्सूक्तैरिष्टका उपदधाति' इत्यत्र यावदिष्टकमाग्नेयसूक्तग्रहणं, न तु तत्र कपिञ्ज-लाधिकरणन्यायप्रवृत्तिः॥

---

## (१९)—वाससि मनोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ ॥ तत्राहर्गणेऽर्थाद्वासः प्रकृतिस्स्यात् ॥ ७७ ॥ मानं प्रत्युत्पाद

---

### लिङ्गेन द्रव्यनिर्देशे

**मनोर्ऋच इति**। मनुशब्दवत्यो ऋचो मनोर्ऋचः। **ऋजीषमिति**। निष्पीडनेन निष्कासितरसादवशिष्टः सोमभागो ऋजीषशब्दार्थः। **उपादेयत्वेनेति**। एतेन अतिदेश-प्राप्तऋग्बाधेन लाघवात् ऋङ्मात्रस्यैव विधिः न सङ्ख्यायाः, तस्याः चोदकादेव प्राप्तेः, सङ्ख्या-विधौ च कपिञ्जलन्यायेन तदविधानमिति **प्रकाशकारोक्तमपास्तम्**। बहुत्वविध्यभावे प्राकृत-पठितऋग्बाधेन एकस्या अपि मनोर्ऋचः प्राप्तेरनिवार्यत्वात्। अतिदेशप्राप्तपञ्चदशासङ्ख्यायाः अभ्यासेनाप्युपपत्तौ तावत्सङ्ख्यानां भिन्नानामेव ग्रहणे मानाभावात्। अतो बहुत्वस्य विधेय-त्वावश्यकत्वान्न प्राप्तस्य कपिञ्जलाधिकरणन्यायस्य उत्तराधिकरणन्यायेनेहापवादकरणमुचितमिति भावः। यदपि तन्त्ररत्नादौ पञ्चदशर्चामुपादानमुक्तं तत् अतिदेशप्राप्तप्रथमोत्तमविषयत्रिरभ्यास-बाधे प्रमाणाभावादयुक्तमिति सूचयन् एकादशानामेवोपादानं दर्शयति—**एकादशैवेति**। **यावदिष्टकमिति**। उपधेयानामिष्टकानां बहुत्वज्ञापकबलात् सूक्तैरिति बहुवचनोपात्तं बहुत्वं न त्रित्वपर्यवसायीत्यर्थः।

---

येत् प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥ हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥

ज्योतिष्टोमे 'वाससि मिनोति, वाससोपावहरति' इति वचनात्सोममानोपावहरणे वासस्साधनके। अहर्गणे च प्रत्यहं सोमोपावहरणार्थं वासोभेदस्स्यात्। हविर्धानशकटे हि स्थापितस्सोमो यावानेकस्याह्नः पर्याप्तस्तावान् प्रत्यहं वाससोपावहर्तव्यः। अवशिष्टश्च शकट एव वाससोपनद्धस्स्थाप्यः। तस्मादिहार्थाद्वासोऽन्तरं प्रागुत्तमादुत्पादितव्यं उत्तमे तु प्रकृतिवन्मानवस्त्रेणैव।

न च प्रागुत्तममपि एकमेव मानवस्त्राद्भिन्नं वस्त्रमुपादाय तेनैव प्रत्यहमुपावहरणं कर्तव्यमिति वाच्यं, उपावहरणवस्त्रस्य ग्रावस्तुते दानविधानात् तस्य च मैत्रावरुणदण्डदानन्यायेन ग्रावस्तोत्रीयानुब्रुवाणग्रावस्तुदुत्साहजनकत्वेन प्रात्यहिकत्वावश्यंभावात्।

वस्त्रान्तराण्यपि च न मानकाल एवोपादेयानि। प्रकृतौ हि सौकर्यात्क्रयकालीनमानवाससैवोपनद्धस्याभिषववेळायां तेनैव वाससोपावहरणं कृतं न तु स एव शास्त्रार्थः। अतश्चेह मानकाले तावद्वस्त्रग्रहणे प्रमाणाभावात् उपावहरणकाल एव तदुपादानम्। आर्थिकस्यापि वस्त्रैकत्वस्य बाधादध्यायोपयोगिता ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
दशमस्याध्यायस्य षष्ठः पादः

---

### वाससि मानोपवाहरणे

दानविधानादिति। माध्यन्दिनीयाभिषवकाले हि 'ग्रावस्तुते ददाति' इति दानविधानादित्यर्थः। मैत्रावरुणदण्डेति। यथामैत्रावरुणसंम्प्रदानकं दण्डदानमर्थकर्म न तु दण्डप्रतिपत्तिः चतुर्थ्या तत्रापि मैत्रावरुणस्य प्राधन्यावगतेः तथैव ग्रावस्तुत्सम्प्रदानकं वासोदानं तत्तदहर्गतस्तोत्रीयापाठप्रोत्साहनेन दृष्टार्थं भवति। न ह्येकस्मिन्नहनि तद्दानेनोत्तराहर्गतस्तोत्रीयापाठे उत्साहो भवति। अतस्तदर्थं पृथगेव प्रत्यहमुपावहरणवस्त्रं कार्यमित्यर्थः। स्पष्टार्थमन्यत् ॥

इति भाट्टदीपिका प्रभावल्यां दशमस्य षष्ठः पादः

---

# अथ दशमाध्यायस्य सप्तमः पादः

(१)—पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥ प्रत्यङ्गं वा ग्रहवद-ङ्गानां पृथक्प्रकल्पनत्वात् ॥

'अग्नीषोमीयं पशुमालभेत,' इत्यत्र यद्यप्युत्पत्तिवाक्ये पशोरेव पुरोडाशवद्देवतासम्बन्धित्वेन हविष्ट्वप्रतीतिः। अतश्च तेनैव अतिदेशप्राप्तपयोबाध इत्याभाति। तथाऽपि, 'पशुं विशास्ति, लोहितं निरस्यति। शकृत्सम्प्रविध्यति वपामुद्धरति कुम्भ्यामङ्गानि पचति हृदयशूलेन हृदयम्', इत्यादिसंस्कारवाक्यपर्यालोचनया सोमस्येव स्वावयवद्वारा साधनत्वमित्यवसीयते ॥

---

पशोरेकहविष्ट्वम् ॥

अतिदेशप्राप्तपयोबाध इति। यद्यपि पशोर्हविष्ट्वेन विधिसत्वे देवतासादृश्यातिदेशेन पुरोडाशस्यैव प्राप्तेः तस्यैव बाधो युक्तः न तु पयसः। सिद्धान्ते तु हृदयादीनां हविष्ट्वात् पशुप्रभवत्वसादृश्येन सान्नाय्यविकारत्वात् तदतिदेशेन प्राप्तस्य पयसो बाधो भवति, तथापि पशोरेव हविष्ट्वेपि तस्य पशुप्रभवत्वाविरोधेन बलवता द्रव्यसादृश्येन सान्नाय्यातिदेशप्रवृत्त्यभिप्रायेण पयोबाधोक्तिर्न विरुद्ध्यते। अत्र प्राचीनैः पशोरेव हविष्ट्वपूर्वपक्षे हृदयाद्यवदानविध्यनुपपत्तिपरिहारो दर्शितः। देशलक्षणया पशोरेव तत्तद्धृदयाद्येकादशावयवेभ्योऽवदानं मध्यपूर्वार्धदेशबाधेन विधीयते। ततश्च प्रकृतिप्राप्तेऽवदाने देशानां विकल्पः। न तु हविष्ट्वसिद्ध्यर्थं अवदानविधिरिति। सिद्धान्ते च लक्षणाविकल्पयोरापत्तेः हृदयादीनामेवावदानविधानात् तेषामेव हविष्ट्वात् तत्प्रकृतित्वेनैव पशोर्विधान साधितम्। तदस्मिन्नधिकरणे हृदयादिवाक्योद्भावनेन तेषां हविष्ट्वप्रसाधने कृते सत्युत्तराधिकरणे करिष्यमाणपूर्वपक्षद्वयस्यापि क्लेशात उत्थानापत्तेः। तदुद्भावन विनाप्यत्रत्यसिद्धान्तस्यावयवद्वारा साधनत्वरूपस्य वक्ष्यमाणरीत्या निर्वाहादुपेक्ष्य युक्त्यन्तरेण सिद्धान्तं साधयति— तथापीति। पशोरवयवद्वारा

युक्तं च **काष्ठादीनां ज्वालाद्वारेव सति** तात्पर्यग्राहकप्रमाणे **परम्परया साधनत्वम्।** **व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावात्।** न हि **विशसनादौ पशुत्वं प्रत्यभिज्ञायते येन तत्सत्त्वेऽपि तस्यैव साधनत्वं कल्प्येत। त्वगादिप्रत्यक्षेणापि पशुसम्बन्धित्वानुमानमात्रम्। अन्यथा 'विनष्टः पशुः' इति प्रत्ययानुपपत्तेः।** अतोऽत्र **विशसनादिवाक्यानुरोधात् पशोः प्रदेयप्रकृतित्वमेव न तु साक्षात्प्रदेयत्वं तत् स्वावयवादीनामेवेति त एव पयोबाधकाः। तेष्वेव पयोधर्माः।**

---

(२)—हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ आज्यभागवद्वा निर्देशात्परिसङ्ख्या स्यात् ॥ ४ ॥ तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ॥ ५ ॥ अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्यानेऽनर्थकः स्यात्प्रदानत्वात्तेषां निरवदानप्रतिषेधस्स्यात् ॥ ६ ॥ अपि वा परिसङ्ख्या स्यादवदानीयशब्दत्वात् ॥ ७ ॥ अब्राह्मणे च दर्शनात् ॥ ८ ॥ श्रुताश्रुतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् ॥ ९ ॥

प्रदेयभूतावयवश्च **नैक एव यः कश्चित्।** **विशसनादितात्पर्यग्राहकसहकृतपशुसाधनत्वान्यथानुपपत्त्या हि कल्प्यमानं स्वावयवसाधनत्वं अवयविनः सर्वावयवेषु**

---

प्रकृतित्वेन साधनत्वे पशुपदे लक्षणाश्रयणापत्तिं निरस्यति—**युक्तं चेति।** **यत्त्वत्र प्रकाशकारैः** विशसनेपि पशोः प्रत्यभिज्ञानेन पशुत्वानपायात् हविष्ट्व न विरुद्धमित्युक्तम्, तद्दूषयन् पशुस्वरूपस्य विशसनेन नाशितत्वात् प्रदेयत्व न सम्भवतीति पशुसोमाधिकरणन्यायसुधोक्तं साधयति—**न हीति।** होमसंस्कार्यचतुरवत्तसम्पादकमवदानं यतो गृह्यते तेषां सर्वेषामेवावयवानां प्रदेयत्वात् तत एव चावदानादि सधर्मकमित्यभिप्रेत्याह—**अतोऽत्रेति।**

---

**हविर्भेदात्।**

पूर्वाधिकरणे सामान्यतोऽवयवद्वारा साधनत्वे उक्ते हृदयाद्येकादशातिरिक्तावयवानां हविष्ट्वपरिसङ्ख्यार्थमधिकरणान्तरमेतदुच्यत इत्यभिप्रेत्य पूर्वपक्षमाह—**प्रदेयभूतेति।** **अत एव**

व्यासक्तत्वात् सर्वावयववृत्त्यैव कल्पयितुमुचितम्। अतो विनिगमनाविरहात् सर्वेषामेव साधनत्वावगमात् प्रदेयत्वम्। 'हृदयस्याग्रेऽवद्यति' इत्यादिवचनानि तु क्रमविधानार्थानि। प्रदेयत्वेनैवैतेष्ववदानप्राप्तेरेतेषां क्रमपरत्वात्। अत एवैकादशानामयं क्रमोऽन्येषां त्वनियमः।

अथ वा 'हृदयस्याग्रेऽवद्यति' इत्याद्युक्त्वा 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति' इति श्रवणादेकादशसु द्विरवदानं अन्येषु तु पञ्चावदानसम्पादकतया त्रिरवदानमित्येवंपरत्वेन सार्थकानि। न तु इतरपरिसङ्ख्यार्थानि। अत एव 'नासयो रवद्यति न शिरसो नानूकस्य नापरसक्थ्योः' इति पर्युदासोऽपि सङ्गच्छते इति प्राप्ते—

यथैव विशसनादिसंस्कारानुरोधात् पशोरवयवप्रकृतित्वं कल्पयित्वाऽवयवानामेव साक्षाद्धविष्ट्वमवगम्यते, तथैव 'हृदयस्याग्रेऽवद्यति' इत्यादिवाक्येषु हृदयादीनामेकादशानामेव प्राकृतहविस्संस्कारकावदानसंबन्धात्तेषामेव हविष्ट्वप्रतीतेस्तत्प्रकृतित्वमेव पशोरिति न सर्वेषामवयवानां साधनता। अत एव हृदयादिवाक्यानि तेषामवदानाख्यसंस्कारविधिद्वारा हविष्ट्वबोधकानि सन्ति इतरेषां हविष्ट्वपरिसङ्ख्यार्थानीत्युक्तं पशुसोमाधिकरणे कौस्तुभे।

न चैतेषामतिदेशेनैवावदानस्य प्राप्तत्वात् 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इतिवत् क्रममात्रविधायकत्वं, एतद्वाक्याभावे 'पञ्चावत्तैव वपा कार्या' इति वचनेनैकप्रसरताभङ्गभयेन प्राकृतकार्यापन्नावदानान्तरविधेरावश्यकत्वात् वपारूपावयवद्वारैव पशोस्साधनत्वप्रतीतेर्हृदयादीनां साधनत्वस्यैवाप्राप्तौ अवदानस्य सुतरामप्राप्तेः।

अतश्च हृदयादिवाक्यैः प्राकृतावदानस्य वपासंस्कारकावदानस्यैव वा हृदयाद्युद्देशेन विधानात् तेषामपि वपावदेव हविष्ट्वसिद्धिः। अत एवावदानेषु क्रमोऽपि पाठादेव न तु श्रौतः।

---

नांसयोरिति। [1]वाहफलकयोरन्तरालमंसः; अनूकः पृष्ठकाण्डः; पश्चिमं पादयोरन्तरं अपरसक्थ्ये। एकप्रसरताभङ्गभयेनेति। प्रकृतिप्राप्तावत्तोद्देशेन पञ्चत्वविधाने एकप्रसरतापत्तेः, 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र भक्षान्तरस्येव पञ्चत्वसङ्ख्याविशिष्टावदानान्तरस्यैव वपोद्देशेन विधेरेतत्पादान्त्ये आवश्यकत्वेन वक्ष्यमाणत्वादित्यर्थः। किञ्च तावताऽवदानानां विध्यभावात् अनूद्यमानानां क्रमाकाङ्क्षाऽभावेन पाठतः क्रमप्राप्तेः अथाग्रशब्दानुपपत्तेः हृदयाद्यवदानोद्देशेन अथशब्दोक्तक्रमविधाने विशिष्टोद्देशापत्तेः उत्तरवाक्येषु तदभावे क्रमविध्यनुपपत्तेः तदर्थमनुषङ्गाङ्गीकारेऽतीव गौरवमित्यभिप्रेत्याह—अत एवावदानेष्विति। अत्र प्रकाशकारैः विश-

1. B. बाड

यत्तु—'**एकादश वै पशोरवदानानि तानि द्विर्द्विः**' इत्यनेनैकवाक्यतया द्विरवदानमात्रविधायकत्वं हृदयादिवाक्यानामिति, तन्न, तथात्वे '**हृदयं जिह्वा वक्ष**' इत्येवं गणनयाऽपि तच्छब्दापेक्षितावयवविशेषसमर्पणोपपत्तेः '**हृदयस्याग्रेऽवद्यति**' इत्यस्य वैयर्थ्यापत्तेः। एतद्वाक्याभावे वपाया एव हविष्ट्वेन हृदयादीनां हविष्ट्वाभावात् हृदयादिष्ववदानस्यैवाप्राप्तौ द्विरवदानस्य सुतरां विधानानुपपत्तेश्च ॥

अस्मन्मते तु हृदयादिवाक्यैर्हृदयाद्युद्देशेन वपासंस्कारकावदान एव प्रकृतत्वेन विहिते तदङ्गपञ्चत्वसम्पादकतया द्व्यवदानविधिर्नानुपपन्नः। भिन्नवाक्यता त्वाख्यातभेदादेव न दोष। अतो हृदयादीनामेव हविष्ट्वमिति सिद्धम्। अंसादिप्रतिषेधस्तु नित्यानुवादः ॥

---

## (३)—इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ त्र्यङ्गैर्वा शरवद्विकारस्स्यात् ॥ ११ ॥

---

सनेप्यवयविनः प्रत्यभिज्ञानेन हविष्ट्वोपपत्तौ हृदयाद्यवदानविधौ तद्बाधकाभावात्, तत एवावदाने प्राप्ते तस्मिंश्च पुरोडाशवत् सकृदेव प्रकृतितः प्राप्ते न क्रमविधिः सम्भवतीति पशोरेव सकाशादवदान हृदयादिवाक्येष्ववदानविध्यभावे आपादितम्। तत् विशसने सति पशुप्रत्यभिज्ञायाः पूर्वमेव निरस्तत्वात् तत्सत्वेपि च वपाद्वारैव तस्य साधनत्वापत्त्या साक्षात् हविष्ट्वापादनस्यायुक्तत्वादुपेक्ष्यम्। **तदङ्गपञ्चत्वेति**। सामान्यवाक्याद्धि पञ्चावत्तसम्पादनं त्रिरवदानेन प्राप्तम्; तद्बाधितुं द्विरवदानं विधीयते। वपायान्तु वचनान्तरेण सकृदवदानात् सकृदेव तदित्यर्थः। अत्र च वपायामुपस्तरणहिरण्यावदानद्वयसकृदवदानाभिघारणैः यथा पञ्चावत्तसम्पादनं तथैव हृदयादिषु उपस्तरणद्विरवदानहिरण्यावदानाभिघारणैः पञ्चावत्तसम्पादनमित्यर्थे न्यायतः सिद्धे यद्द्वितीयहिरण्यावदानमप्याचरन्ति याज्ञिकाः तत् षडवत्तत्वापत्तेः पञ्चावत्तबाधप्रसङ्गात् वचनान्तरमात्रमूलकमेवेति ध्येयम्। **न दोष इति**। न च वाक्यभेदाङ्गीकारे 'तानि' इति तच्छब्दप्रतीतैकवाक्यताबाधः। तच्छब्दार्थस्य भिन्नवाक्यत्वेपि 'तस्मिन् सीद' इत्यत्रेवान्वयोपपत्तौ नियमेनैकवाक्यतापादकत्वाभावादिति भावः।

---

**पशौ एकादश '** हृदय जिह्वा वक्षः स्तनिम वृक्यद्वयं सव्यं दोः दक्षिणं पार्श्वं सव्यं पार्श्वं दक्षिणा श्रोणिः गुदतृतीयम्**'** इत्येवंविधानि हवींषि। **तेषामेव चोत्तरार्धात् स्विष्टकृदतिदेशेन प्राप्तः॥**

**तत्रेदमपरं वचनं '**त्र्यङ्गैस्स्विष्टकृतं यजति**' इति। तत्र यद्यपि स्विष्टकृद्याग-साधनीभूताङ्गानुवादेन** त्रित्वविधाने विशिष्टोद्देशः एकप्रसरताभङ्गश्चापतति, तथाऽपि स्विष्टकृदनुवादेनातिदेशतः पूर्वप्रवृत्त्यङ्गीकारेण त्रित्वविशिष्टाङ्गानामेव प्राकृतानामाद्यानां हृदयादीनां विधानम्। यद्यपि तेषां प्रक्षेपांशं प्रति न गुणत्वं तथाऽपि त्यागांशं प्रति गुणत्वाद्विधानोपपत्तिः। अतश्च स इज्याशेषाणामेवेति प्राप्ते—

**'**दोष्णो दक्षिणस्य पूर्वार्धादग्नये समवद्यति सव्यश्रोणेर्जघनतो गुदं मध्यस्य**' इति** वचनान्तरेणान्येषामनिज्याशेषाणामेवावदेयत्वेन सङ्कीर्तनात् तेषामेव त्र्यङ्गानां स्विष्ट-कृदुद्देशेन 'त्र्यङ्गैः' इति वाक्ये विधान, तेषा च स्विष्टकृद्यागं प्रति गुणत्वेन विधानेऽपि प्रकृतौ प्रधानहविरुत्तरार्धस्यापि त्यागं प्रति गुणत्वात्तत्र तावत्समानविषयत्वाद्बाधकत्वं

---

इज्याशेषात्स्विष्टकृत्।

**स्तनिमेति** स्तनाधस्तनमांस[1] स्तनिम। **एवंविधानीति**। दैवतानीत्यर्थः। **त्र्यङ्गैरिति**। "दक्षिणोंसः, सव्या श्रोणिः गुदतृतीयमिति सौविष्टकृतानि दोषपूर्वार्धादग्नयेऽवद्यति, गुदस्य मध्यतः श्रोण्या जघनतः" इति कल्पसूत्रवाक्यशेषाभ्यामवगतैस्त्र्यङ्गैरित्यर्थः। पार्श्वद्वयमांसं वृक्यद्वयम्। सव्य दोर्वा मांसम् इदमेव क्वचिद्यकृच्छब्देन व्यवहृतम्। गुदतृतीयम्—गुदस्य तृतीयो भागः। यद्यप्येकप्रसरताभङ्गापत्त्या "वषट्कर्तुः प्रथमभक्ष" इत्यत्र भक्षान्तरस्येव स्विष्टकृत्कर्मान्तरस्यैव विधिः प्राप्नोति; तथापि विशिष्टविधिगौरवात् स्विष्टकृत्पदे लक्षणा-पत्तेश्च न तद्युक्तमित्यभिप्रेत्य प्रकारान्तरेणैकप्रसरताभङ्ग परिहरति—**तथापीति**। भक्षे तु सर्वस्यापि भक्षप्रापकप्रमाणस्य प्रत्यक्षत्वेन समबलत्वान्न ततः पूर्वं प्रथमवाक्यस्य क्लृप्तत्वेन प्रवृत्तिः सम्भवतीति वैषम्य द्रष्टव्यम्। प्रथमातिक्रमे कारणाभावादाद्यानामित्युक्तम्। तेन यैः कैश्चिदङ्गैः स्विष्टकृदित्यधिकरणमालापादितः पूर्वपक्षः परास्तः। नन्वनिज्याशेषाणामङ्गानां गुणत्वेन विधानात् इज्याशेषाणां च प्रतिपाद्यतया प्रधानत्वात् भिन्नविषयतया कथमिज्याशेषाणां बाध इत्यत आह—**तेषां चेति**। यदि स्विष्टकृत्त्यागांशेन प्रतिपाद्यत्वं भवेत्, तदा नैव गुणभूतैस्त्र्यङ्गैर्बाधो भवेत्। तेन हि प्रकृतावुत्तरार्धस्य त्यागं प्रति प्रतिपाद्यत्वाम् तत्प्रतिपत्तेः

---

1 तनिम

सुलभमेव । प्रक्षेपांशं प्रति प्रकृतौ तस्य संस्कार्यत्वेपि चार्थात् तन्निर्वर्तकत्वेन प्रक्षेपसाधनत्वस्यापि सत्त्वात्समानविषयत्वोपपत्तेरुपदेशेनातिदिष्टस्य बाधः ।

वस्तुतस्तु इहापि प्रक्षेपस्योपयुक्तसंस्कारकत्वासम्भवेऽपि निरुक्तत्र्यङ्गानां पश्वनुनिष्पन्नत्वेनाकीर्णकरत्वाल्लोहितनिरसनादिवत् तत्संस्कारकत्वोपपत्तेः तदंशेऽपि समानविषयत्वेनैव बाधः । [अत एव] प्रकृताविवेहापि श्रूयमाणविधिना त्यागांशं प्रति गुणत्वेन द्रव्यविधानेऽपि आर्थिकेन विधिना प्रक्षेपांशं प्रति द्रव्यस्य प्राधान्योपपत्तेः न तृतीयाया लक्षणाऽपि ।

नन्वेवमपि स्विष्टकृत्प्रक्षेपांशस्य प्रकृतौ द्रव्यान्तरसंस्कारार्थत्वेन विनियुक्तस्येह द्रव्यान्तरसंस्कारार्थत्वेन विनियोगेऽपि प्रत्युद्देश्यमावृत्त्या तन्त्रेण वा संस्कारोपपत्तेर्नोपदिष्टेनातिदिष्टस्य बाधापत्तिः । न ह्यैन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वेन विनियुक्तस्य प्रयोजनाकाङ्क्षाशान्तेरिन्द्राङ्गत्वबोधकश्रुत्यकल्पनवदिह स्विष्टकृतः अनिज्याशेषसंस्कारार्थत्वेन निराकाङ्क्षस्य इज्याशेषार्थत्वाकल्पनमिति वक्तुं शक्यम् । इज्याशेषार्थत्वस्य प्रकृतावेव क्लृप्तत्वेनेहाकल्प्यत्वात् । प्रदेयोत्तरार्धप्रतिपत्तिरूपोपकारस्येहानतिदेशे कारणाभावेन तत्पृष्ठभावेन तज्जनकीभूतस्विष्टकृत्प्रक्षेपांशस्यातिदेशे बाधकाभावाच्च ।

---

त्यागांशेनाजननात् तदाकाङ्क्षाया अशान्तेः । अत एवात्रापि वचनादुत्तरार्धस्य गुणत्वमेवेत्यस्त्येव समानविषयत्वमित्यर्थः । यत्र तु प्रक्षेपे प्राधान्य तत्राप्यार्थिकसाधनत्वस्यापि सत्वादस्त्येव गुणत्वमिति तुल्यविषयत्वमस्त्येवेति समानविषयत्वमुपपादयति—**प्रक्षेपांशं प्रतीति** । एतच्चातिशयार्थमुक्तम् । **वस्तुतस्तु** अग्निस्विष्टकृदुद्देशेन त्यक्तानामपि त्र्यङ्गानां प्रतिपत्त्यपेक्षत्वात् तेषामेव यागोपयुक्तानां तदीयप्रक्षेपं प्रति प्रतिपाद्यतयाऽन्वयेन अतिदेशप्राप्तेज्याशेषाणामुपपद्यत एव संस्कार्यत्वेनापि बाधः । प्रकृतौ तु प्रधानयागीयद्रव्यस्य स्विष्टकृद्यागीयद्रव्यस्य चैक्यात् स्विष्टकृद्यागीयद्रव्यप्रक्षेपांशेन प्रधानद्रव्यशेषप्रतिपत्तिरपि जातेति न बाध इति वैषम्यम् । अत एव स्विष्टकृत्प्रक्षेपस्य स्विष्टकृद्यागीयद्रव्यप्रतिपत्तिरूपोपकारजनकत्वमेव । न तु प्रधानयागीयप्रदेयोत्तरार्धप्रतिपत्तिरूपोपकारजनकत्वमित्यवश्य वाच्यम् । इतरथा प्रकृते तादृशोपकाराभावेऽतिदेशः प्रक्षेपप्राप्तेरेवासम्भवादिति ध्येयम् । उपयुक्तत्वाभावेपि प्रतिपाद्यत्वसम्भवमाह—**वस्तुतस्त्विति** । यत्तु **प्रकाशकारैः** अप्राकृतकार्यार्थत्वापत्तिभिया त्र्यङ्गैरिति तृतीयायाः द्वितीयार्थे लक्षणाऽङ्गीकृता । सा प्रयोजनाभावादयुक्तेति सूचयन्नाह—**अत एव प्रकृताविवेति** । **प्रक्षेपांशस्येति** । त्यागं प्रति विशेषविहितत्र्यङ्गैर्बाधेपि प्रक्षेपांशं प्रति उभयोः संस्कार्यत्वोपपत्तेर्विरोधाभावेन बाधायोगात् त्यागानन्तरमिज्याशेषाणामप्यङ्गैः सह तन्त्रेणावृत्त्या वा प्रक्षेपः

**न च तज्जनकत्वेन प्राप्तस्येह द्रव्यान्तरसंस्कारकत्वेन विनियोगे प्राकृतसंस्कार्यस्य बाध इत्यत्र प्रमाणमस्ति। तन्त्रेणोभयसंस्कारकत्वोपपत्तेरविरोधात्। न ह्यत्र प्राकृतसंस्कार्यस्य प्रतिपत्त्यपेक्षाशान्तिः येन तज्जनकत्वेन प्रक्षेपो नानुष्ठीयेत।**

**न चैवं सौत्रामण्यां पशुपुरोडाशे देवतान्तरविधानेनाप्राकृतकार्यकल्पनेऽपि प्राकृतकार्यस्याप्यतिदेशात् पुनः पशुपुरोडाशयागकरणापत्तिः। प्राकृतकार्यस्य सुरादिद्रव्यककर्मान्तरजन्यत्वविधानेनैव जनकानाकाङ्क्षत्वात्। प्रकृते तु तत्कार्यस्यानन्यथासिद्धत्वात् युक्तं तन्त्रेण स्विष्टकृत्प्रक्षेपकरणमिति चेत्—**

**सत्यं, इहापि तत्प्रतिपत्तेर्हविश्शेषभक्षणेनैव सिद्धेः। प्रकृतौ हि 'हविश्शेषान् भक्षयन्ति' इति हविश्शेषभक्षणमविशेषेण श्रुतमपि उत्तरार्धदक्षिणार्धादौ स्विष्टकृदिडादिप्रतिपत्त्यन्तराम्नानात् संकुचितम्।**

**प्रकृते च स्विष्टकृतः कार्यान्तरसम्बन्धेन प्रयोजनानाकाङ्क्षत्वात् तत्सङ्कोचकाभावेन शेषभक्षणरूपप्रतिपत्त्यैव प्रदेयोत्तरार्धसंस्कारोपपत्ते** न स्विष्टकृत्प्रक्षेपाक्षेपकत्वम्। **अतस्सिद्धमनिज्याशेषाणामेव स्विष्टकृदिति। यद्यपि च गुदस्येज्याशेषत्वमस्ति, तथाऽपि**

---

कार्य इत्यर्थः। **यद्यपि** यथैव प्राचीनरीत्या त्र्यङ्गैरिति तृतीयायाः द्वितीयार्थलक्षणामङ्गीकृत्य अतिदेशप्राप्त एव स्विष्टकृत् प्रकृतिप्राप्तेज्याशेषसंस्कारार्थत्वबाधेन त्र्यङ्गसंस्कारार्थत्वेन विधीयत इति न हृदयादिसंस्कारार्थत्वप्रसक्तिः, तथैव लक्षणानङ्गीकारेपि अतिदेशप्राप्तप्रक्षेपस्य त्र्यङ्गसंस्कारत्वेन विधेरार्थिकत्वेन कल्पनात् इज्याशेषसंस्कारार्थत्वस्य बाधान्न तत्संस्कारार्थत्वप्रसक्तिः। यदि तु उभयोरप्यविरोधसम्भवेन बाधो न युक्त इत्युच्यते तदा उत्तराधिकरणे होतृसंप्रदानकप्राकृतहरणस्य अध्यूध्नीसंस्कारार्थत्वेन विधानाद् भागान्तरनिवृत्तेर्वक्ष्यमाणत्वेन तत्राप्यविरोधसम्भवे भागान्तरबाधानापत्तिः। **तथापि** प्राचां मतेन त्र्यङ्गविधेः प्रत्यक्षत्वेन अतिदेशतः पूर्वप्रवृत्तिसम्भवेन आतिदेशिकसंस्कार्यादाच्छिद्य विधिसम्भवेऽपि स्वमते भक्षविधेरार्थिकत्वेन तुल्यविलंबतया प्रवृत्तेरतिदेशबाधकत्वासम्भवेन इज्याशेषसंस्कारार्थत्वेन प्राप्तस्यैव प्रक्षेपस्य त्र्यङ्गसंस्कारकतया विधानोपपत्तेः न प्राकृतसंस्कार्यसम्बन्धबाधः; अत एव उत्तराधिकरणेनापि सह न विरोधः। तत्रापि विधेः प्रत्यक्षत्वादित्याशयेनाशङ्काकरणं न विरुद्ध्यते। न स्विष्टकृत्प्रक्षेपावश्यकत्वमिति। अत्र चाकीर्णप्रतिपत्तिपक्षे प्रधानोपयुक्तप्रतिपत्तिसंस्काररूपप्राकृतोपकाराभावे स्विष्टकृत्प्रक्षेपस्यातिदेशतः प्राप्त्युपपादनं पूर्वोपपादितरीत्यैव द्रष्टव्यम्। न ह्यत्र प्रक्षेपान्तरविधिः येन तस्याप्राकृतकार्यार्थतापि कल्प्येत। अतो न काचनानुपपत्तिरिति।

न तन्मध्यभागस्य स्विष्टकृदतिदेशतः प्राप्यते। अपि तु गुदतृतीयोत्तरार्धस्यैवेति तत्रापि संस्कार्यान्तरता ॥

---

(४)—अध्यूघ्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारस्स्यात् ॥ १२ ॥ शेषे वा समवैति तस्माद्रथवन्नियमस्स्यात् ॥ १३ ॥ अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥ अपि वा दानमात्रं स्याद्भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥ दातुस्त्वविद्यमानत्वादिडाभक्षविकारस्स्यात् शेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥

**पशाविडामतिदेशप्राप्तां प्रक्रम्य 'अध्यूघ्नीं होत्रे हरन्ति' इति श्रुताऽध्यूघ्नी प्राकृतस्य कृत्स्नस्य होतुरिडाभागस्य निवर्तिका न वेति चिन्तायां—**

---

**न तन्मध्यभागस्येति।** प्रधानयागार्थं हि मध्यपूर्वार्धापादानकावदाने गृहीते सति अवशिष्टगुदस्य 'मध्यत' इति वाक्यशेषावगतस्य मध्यभागस्येत्यर्थः। इदं चाधिकरणं सन्दिग्धेतु वाक्यशेषात् (जै. १-९) इत्यनेन गतार्थम्। अतिदेशप्राप्तस्विष्टकृत्कार्यानुरोधेन इज्याशेषरूपाणां त्र्यङ्गानामेव ग्रहणस्य निर्णीतत्वेन सन्दिग्धत्वाभावात्। अतो निश्चितार्थानामपि वाक्यशेषवशान्निर्णयप्रतिपादकेन त्रिवृच्चर्वेधवालाधिकरणेन गतार्थमपि बाधोपयोगितया शिष्यहितार्थं कृतमिति ध्येयम्।

---

अध्यूघ्नी तु होतुः।

अत्र प्राचां ग्रन्थेषु 'यदध्यूघ्नीं हरति तद्धोत्रे' इति पूर्वपक्षे वचनव्यक्तिमङ्गीकृत्य न भागान्तरनिवृत्तिरिति पूर्वपक्षं कृत्वा अध्यूघ्नीसंस्कारकत्वेन प्राकृतहरणस्याप्राप्तत्वात् तस्यैव संस्कार्यप्राकृताद्भागादाच्छिद्य अध्यूघ्नीसंस्कार्यसम्बन्धितया विधाने धात्वर्थविधिलाभात् भागान्तरस्य निवृत्तिरिति सिद्धान्तकरणात्, पूर्वोत्तरपक्षयोर्वचनव्यक्तिभेदः स्पष्टं प्रतीयते। तस्यैकरूपयैव तया उभयपक्षव्यवस्थापनसम्भवात् पूर्वपक्षे धात्वर्थविधित्यागे प्रयोजनाभावाच्चायुक्ततां सूचयितुं

अध्यूध्नी तावत् अत्र द्वितीयान्तत्वादुद्देश्या प्रतिपाद्या चाकीर्णकरत्वात्। तदुद्देशेन च होतृसम्प्रदानकं भक्षार्थं हरणं प्राकृतकार्यापन्नं संस्कारकत्वेन विधीयते। हरणं च यद्यपि न दानं, अध्वर्योस्स्वत्वाभावेन तस्यानुपपत्तेः। तथाऽपि भक्षार्थं समर्पणं, तत्रैव च कथञ्चित्सम्प्रदानत्वोपपत्तिः॥

अथ वा होतृकर्तृकभक्षणोपयोगित्वेन होत्रर्थत्वात्तादर्थ्यचतुर्थीयम्। सर्वथा होतृविशिष्टस्य प्राकृतस्य हरणस्याध्यूध्नीसंस्कारार्थत्वेन विधिः। अतिदेशप्राप्तं हरणमनूद्य तदाश्रितं होतृसम्प्रदानकत्वाद्येव वा तदुद्देशेन विधीयते। एतावच्च पक्षद्वयेऽप्यविशिष्टम्॥

परं तु 'अनस्थिभिरिडां वर्धयन्ति' इति वचनादनस्थिरूपायाः शिश्नाख्याया अध्यूध्न्या इडायां प्राप्तत्वात् तत्र होतृसम्प्रदानकहरणस्यापि पक्षे प्राप्तत्वेन तन्नियमविधिप्रतीतेर्होतुरेवाध्यूध्नीत्यर्थावगमेऽपि न तस्य भागान्तरनिवृत्तिरिति प्राप्ते—

'अथ यद्यत्परिशिष्टं तत्तत्समवत्तधान्यामावपति यद्धृदयं प्रास्यति जिह्वां वक्षस्तनिम तस्यै वनिष्ठुम्' इति वचनेन हृदयादीनामेवेडायां प्रासनविधानात्तदभिप्रायेणैव चानस्थिभिरित्यस्य वर्तमानापदेशस्यानुवादत्वोपपत्तेरध्यूध्न्या इडायामप्राप्तत्वेन तस्यां होतृनियमायोगात् प्राकृतहोतृहरणमेवोपस्थितत्वादप्राकृतसंस्कारान्तरसम्बन्धित्वेन विधीयते। प्राकृतहरणाश्रितो होतैव वा तथा विधीयते। ततश्च तद्धरणस्य प्रकृतौ भक्षार्थत्वात् अध्यूध्न्या अपि भक्षसिद्धिः। प्राकृतेडाभक्षणस्य च पूर्ववत् कर्त्रन्तरेणैव

---

पक्षद्वयसाधारण्येनैकरूपां तां दर्शयति—अध्यूध्नी तावदिति। होतृसम्प्रदानकहरणस्यापीति। तथा च पक्षप्राप्तहरणनियमकरणेनापीतरसम्प्रदानकहरणव्यावृत्तिमूलकभागान्तरानिवृत्तिपूर्वपक्षस्य सिद्धेः न पूर्वपक्षे धात्वर्थविधित्यागेन प्रयोजनमित्यर्थः। समवत्त धीयते स्थाप्यते यस्यां सा समवत्तधानी इडापात्रं तस्यामित्यर्थः। तनिमत इति। तनिः तनुत्वं तद्वन्तः सूक्ष्मा अवदीयमाने बर्हिषि पतिता मांसखण्डा इत्यर्थः प्रकाशकारकृतः। एतच्चार्थकरणं तनिमत इति बहुवचनान्तपाठस्य कल्पसूत्रान्तरगतस्य भाष्यादिषु स्थितत्वमात्रेण। वस्तुतस्तु 'समवत्तधान्यां षडाद्यानीडामवद्यति वनिष्ठुं सप्तम षड्भ्यो वा वनिष्ठोः सप्तमात्, अनस्थिभिरिडां वर्धयति क्लोमानं प्लीहानं पुरीततमित्यन्ववधाय यूष्णोपसिच्याभिघारयति'-इत्यापस्तम्बसूत्रे हृदयादिषट्समन्ववधानविधानप्रतीतेः तन्मध्यपतितस्तनिमरूपावयवविशेषस्यैवेहोपादानं युक्तमिति ध्येयम्। पूर्ववदिति। यथाङ्गैरनिज्याशेषैरिज्याशेषाणां हृदयादीनां प्रत्याम्नानं, न तेषां स्विष्टकृत्प्रक्षेपरूपा प्रतिपत्तिः; अपि तु इडाभक्षणादिरूपैव तथैवानिज्याशेषरूपाध्यूध्न्याः होतृकर्तृकभक्षणेनेज्याशेषप्रतिपत्तिरूपेडाविषयस्य तस्य प्रत्याम्नानात् इडाभक्षणरूपा प्रतिपत्तिः अन्यैरेव

सिद्धेर्न तस्य पुनर्होत्राऽनुष्ठानम्। अत एव नात्र होतृसम्प्रदानकहरणान्तरमेवाध्यूध्नी-संस्कारार्थत्वेन विधीयते। प्राकृतेडाभक्षणार्थहरणस्योपस्थितत्वेन कर्मान्तरत्वे प्रमाणाभावात्। अतस्सिद्धं कृत्स्नस्य होतुरिडाभागस्याध्यूध्नया निवृत्तिरिति ॥

यदा त्वापस्तम्बाद्युक्तरीत्या हृदयादीनामाद्यानां षण्णां प्रदेयानामेवेडात्वं तत्संस्कारार्थं च 'अनस्थिभिरिडां वर्धयन्ति' इत्यनेन अनस्थिकरणकं वर्धनं विधीयते, तस्यापि च दृष्टविधया भक्षौपयिकत्वात् भक्षार्थत्वमेव। तथाऽपि 'क्लोमानं प्लीहानं पुरीततम्' इत्यग्रिमवाक्यशेषेणावयवत्रयस्यैव अनस्थिपदेन ग्रहणात् अध्यूध्न्याः प्राप्त्यभावेन पूर्ववदपूर्वाया एव हरणसम्बन्धात्प्राकृतेडाभक्षविकारत्वसिद्धिः ॥

धूर्तस्वाम्यादीनां तु वाक्यशेषस्योपलक्षणात्वमङ्गीकृत्य अध्यूध्न्या अनस्थित्वेनेडावर्धकत्वात्प्राप्तायां तस्यां होतृनियममात्राङ्गीकारेणेडाभक्षाबाधकत्वाभिधानमुपलक्षणत्वे प्रमाणाभावादुपेक्षितम् ॥

---

## (५)–अग्नीधश्च वनिष्ठुरध्यूध्नीवत् ॥ १७ ॥

तत्रैव 'वनिष्ठुमग्नीधे हरन्ति' इति श्रुतो वनिष्ठुरपि तस्येडाभक्षविकारः। यद्यपि च 'तस्यै वनिष्ठुं' इत्यनेन वनिष्ठोरिडायां प्रासनं विहितं, तथाऽपि न तस्येडात्वं न वा तत्प्रासनं वर्धनवत् भक्षार्थं, अपि तु 'तस्यै इडायै वनिष्ठुम्' इति श्रवणादुप-

---

कर्तव्येत्यर्थः। पूर्वलिखितकल्पसूत्रान्तरे 'अनस्थिभिरिडां वर्धयन्ति' इत्युक्त्वा 'अथ यत्परिशिष्टम्' इत्यादिना इडाप्रासनं येषामङ्गानां विहितं तेषामेवाङ्गानामनस्थिवाक्येऽनुवादः। अत एव तदङ्गकृतमेव वर्धनं प्रासनजन्यं विवक्षितम्। पूर्वलिखितापस्तम्बसूत्रे तु अनस्थिवाक्यस्य विधित्वप्रतीतेः, तेनेडायामनस्थित्वाविशेषेणाध्यूध्नीप्राप्तिरस्त्येवेत्याशङ्कां परिहर्तुमाह—**यदापीति**। स्पष्टार्थमेतत्।

---

**अग्नीधश्च वनिष्ठुः**

विशेषाशङ्कामनुवदति—**यद्यपि चेति**। **न तस्येडात्वमिति**। इडाशब्दो हि याज्ञिकैः देवताविशेषे द्रव्यविशेषे तदाधारपात्रे च प्रयुज्यते। तदिहेडाद्रव्यत्वं नेत्यर्थः। किन्तु 'इडा तु तस्यै' इति चतुर्थ्या प्राधान्यप्रतीतेः तत्संस्कारार्थत्वमेवेत्याह—**अपि त्विति**।

स्तरणादिवत् इडासंस्कारार्थत्वमेव। अतश्च तस्य भक्षार्थत्वे प्रमाणाभावादप्राप्तमेव वनिष्टुसंस्कारार्थमग्नीत्सम्प्रदानकं प्राकृतं हरणमिति तस्यापि प्राकृतेडाभक्षनिवृत्तिः। अत एव वनिष्टौ प्राकृतषडवत्तादिधर्मप्राप्तिरित्यपि बोध्यम्॥

---

## (६)—अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥ स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसम्बन्धात् ॥ १९ ॥

प्रकृताविडाभक्षणादयश्शेषभक्षाः द्वितीयया शेषप्रतिपत्त्यर्था अपि प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारार्था अपीत्युक्तं षष्ठे। कर्तुश्च तत्तत्कार्यापूर्वसाधनत्वेनोद्देश्यता न त्वध्वर्य्वादित्वरूपेण। अतश्च पशौ मैत्रावरुणोऽपि प्राकृतकार्यापन्नत्वात् भक्षयेदेव। स हि तत्कर्तृकप्रैषानुवचनसंज्ञानां 'होता यक्षत्' इत्यादिप्रैषाणां प्राकृताध्वर्युकर्तृकयजेत्यादिप्रैषकार्यापन्नतयाऽध्वर्युकार्यापन्नः। आज्यभागाद्यनुवाक्यानां च होतृकर्तृकाणां मैत्रावरुणेन पाठात् होतृकार्यापन्नोऽपि। अतः कार्यापन्नत्वात्सोऽपि भक्षयेत्॥

---

## (७)—द्विभागस्स्यात् द्विकर्मत्वात् ॥ २० ॥ एकत्वाद्वैकभागस्स्यात् भागस्याश्रुतिभूतत्वात् ॥ २१ ॥

---

अत एवेति। यतः प्राकृतेडाभक्षस्थानापन्नो य अग्नीधो वनिष्टुभक्षः तत् एतत्स्थानापत्त्या द्विरुपस्तरणद्विरन्ववधानद्विरभिघारणरूपषट्कस्य प्राकृतधर्मस्येह प्राप्तिरित्यर्थः।

---

अप्राकृतत्वात्।

प्रयाजशेषेति। कर्तृसंस्कारस्यानतेः बलाधानस्य वापि भक्षणेन जननात् आर्थिकविधिना तदर्थत्वं कल्प्यते। तत्र यदाऽऽनतिः संस्कारः तदा स्वत एवानतस्य यजमानस्य तत्राप्राप्तेः 'यजमानपञ्चमा' इति वचनं यजमानस्यापि कर्तृत्वेन विधानार्थम्। बलाधानार्थत्वपक्षे तु पत्नीव्यावृत्त्यर्थमित्युक्तं षष्ठे इत्यर्थः। तत्कार्यापूर्वेति। अध्वर्य्वादिकार्यजन्यापूर्वेत्यर्थः।

---

तत्राप्युभयकार्योपपन्नत्वाद्भागद्वयं प्राप्तयादिति प्राप्ते—

तत्तत्कार्याङ्गभूतायास्तृप्तेस्तन्त्रेणोपपत्ते. प्रकृतौ च यावत्कर्तृणां समविभागस्यैव सत्त्वेनेहापि तथैव प्राप्तेरेक एव भागः ॥ ७ ॥

---

## (८)—प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥ अभक्षो वा कर्मभेदात्तस्यास्सर्वप्रदानत्वात् ॥ २३ ॥

तत्रैव प्रतिप्रस्थातुरपि भक्षो भवेन्न वेति संशये तस्यापि कर्तृत्वात् कर्तृसंस्कारार्थो भक्षो भवेत्। न हि यद्धविस्संस्कारकं यद्भक्षणं तत् तद्धविर्यागसम्बन्धिपदार्थकर्तृसंस्कारकमित्यत्र प्रमाणमस्ति, प्रयाजशेषाभिघारणन्यायेन हविस्संस्कारकस्य सतः कर्तृसंस्कारकत्वमात्रकल्पनात्। अतश्च वपाश्रपणकर्तुरपि प्रतिप्रस्थातुः हृदयादियागहविश्शेषभक्षकत्वे न किञ्चिद्बाधकमिति प्राप्ते—

यत्किञ्चित्कर्तृसंस्कारकत्वेऽतिप्रसङ्गादावश्यके विशेषणे स्ववाक्ये उपस्थितत्वात् यद्धविस्संस्कारकं यद्भक्षणं तद्धविर्यागसम्बन्धिपदार्थकर्त्रानतिरूपं तद्धविर्यागसम्बन्धिकरिष्यमाणपदार्थविषये बलाधानरूपं वा संस्कारं जनयतीत्येव कल्पनात् प्रतिप्रस्थातुश्च वपाश्रपणकर्तृवेपायां सर्वहोमेन शेषभक्षणाप्रसक्तेर्हृदयादियागसम्बन्धिप्राकृतपदार्थकर्तृत्वा-

---

### द्विभागः स्यात्।

भागद्वयमिति। कर्तृसंस्कारद्वारा आध्वर्यवहौत्राङ्गत्वात् प्रतिप्रधानावृत्तिन्यायात् भागद्वयम्। आनन्त्यतिरेकरूपभिन्नकार्यत्वान्न तन्त्रमित्यर्थः। तन्त्रेणोपपत्तेरिति। तन्त्रेणापि जातः तृप्त्याख्यः कर्तृसंस्कारः तत्तत्कार्याङ्गं भवत्येव। तृप्त्यतिरेकस्य तु वचनं विना फलत्वकल्पने मानाभावात् न तावता भिन्नकार्यत्वमित्याशयः। समविभागस्यैवेति। यथा प्रकृतौ कर्तृणां कर्तृत्वोपाधिमात्रेण समो विभागः कृतः न तु कर्मकरणतारतम्येण, तथैव कर्तृत्वाविशेषेणेहापि समतयैव कर्तव्यो न तु द्विगुणः, समताबाधापत्तेरित्यर्थः।

---

### प्रतिप्रस्थातुश्च।

वपाश्रपणेति। वपाश्रपणे हि आध्वर्यवसमाख्यया अध्वर्योः कर्तृत्वे प्राप्ते 'प्रतिप्रस्थाता वपां श्रपयति' इति वचनात् विधीयमानः प्रतिप्रस्थाता अध्वर्युकार्यकर्तृत्वात् प्राप्नुयाद्भक्षणमित्यर्थः। प्राकृतपदार्थेति। प्रकृतौ करिष्यमाणा ये पदार्थाः तदुपयोगिबलाधानार्थत्वं क्लृप्तमासीत्

**भावेन च तद्विशेषभक्षाप्रसक्तेः न तस्य भक्षणम्। अत एव हृदयादियागसम्बन्ध्यु-** पयाजाना **तेन करणेऽपि तेषां प्राकृतत्वाभावात् न तस्य तद्भक्षः॥**

**ननु** 'दक्षिणतो निधाय **प्रतिप्रस्थाता अवद्यति' इति वचनात् हृदयाद्यवदानस्यापि प्रतिप्रस्थातृकर्तृकत्वावगतेस्तच्छेषभक्षप्रसक्तिः।** न ह्रीदम**प्राकृतमवदानान्तरं, प्राकृताव- दानानुवादेन** प्राकृताकार्यापन्नाव**दानान्तरानुवादेन वा प्रतिप्रस्थातृमात्रस्य प्राकृताध्वर्युबाधेन विधानात्।** दक्षिणतो निधानस्य च **प्रकृतितो दक्षिणश्रोणिप्राप्त्यैवानुवादात्।** यद्यपि

---

तद्वारैव भक्षस्य प्राप्तेः तेषु पदार्थेषु तत्तत्स्थानापन्नेषु अन्येषु वा सत्स्वेव तदनुष्ठानं तत्कर्तृ- सस्कारार्थं कर्तव्यम्, न तूभयभिन्नपदार्थकर्तृसस्कारार्थमपि, तदर्थत्वेन तस्य प्राप्तेरेवाभावादि- त्यर्थः। **उपयाजानामिति।** होत्रा अनूयाजार्थं वषट्कारे कृते सति गुदकाण्डस्य समतया कृतैरेकादशभिर्भागैः शामित्राग्नौ प्रतिप्रस्थात्रा ये होमाः क्रियन्ते ते **उपयाजा** इत्युच्यन्ते। तेषां प्राकृतपदार्थत्वस्य तत्स्थानापन्नत्वस्य वाऽभावान्न तत्कर्तृसंस्कारार्थतया प्राकृतभक्षस्य प्रतिप्रस्था- तरि प्राप्तिरित्यर्थः। **दक्षिणतो निधायेति।** स्रुगासादनदेशाद्दक्षिणे वेदिभागे इत्यर्थः। अत्रैतदाशङ्कापरिहारो **भाष्यकृता** त्रेधा कृतः—कृत्वाचिन्तयेदमधिकरणम्, अथवा दक्षिणतो निधानप्रतिप्रस्थातृरूपगुणद्वयविधाने वाक्यभेदापादकगुणात् प्रदानोपक्रमभूतप्राकृतावदानापेक्षया अप्राकृतकार्यापन्नमवदानान्तरमेवेदम्। अतो न तस्य प्राकृतपदार्थत्वं, न वा तत्स्थानापन्नत्वम्; प्राकृतं तु अध्वर्युकर्तृकमेवेति तस्यैव भक्षः न प्रतिप्रस्थातुः; अथवा प्राकृतेष्यवदाने अवत्त- हविषो होमात् अर्थाक्षिप्ते आध्वर्यवसमाख्याया अप्रवृत्तेर्वा अध्वर्योः शास्त्रीयं कर्तृत्वम्। ततश्च येन केनचिदपि तदवदानकरणप्राप्तौ सन्निधानात् अध्वर्युरेव करोतीति प्रतिप्रस्थातृनियमकरणेपि न तत् काप्याध्वर्यवमिति नाध्वर्युकर्तृकपदार्थकर्तृत्वमिति। तत्र मध्यमपरिहारमनूद्य दूषयति —**नहीदमिति। प्राकृतकार्यापन्नेति।** वपावाक्ये एकप्रसरताभङ्गापत्त्याऽवदानान्तरविधे- र्वक्ष्यमाणत्वात् तस्य च प्राकृतावदानकार्यापन्नत्वात्तदनुवादेन वेत्यर्थः। **दक्षिणतो निधानस्य चेति।** यद्यत्र वेद्यां 'दक्षिणाश्रोण्यां शृतमासादयति' इति प्रकृतिप्राप्तवेदिसम्बन्धिदक्षिणाश्रोणिबाधेन स्रुगासादनदक्षिणभागस्यापूर्वस्यैव विधानमावश्यकं भवेत्; तदा गुणद्वय विधेयं भवेत् न त्वेतदस्ति, दक्षिणाशब्दस्य सामान्यपरस्य वेदिसम्बन्धिदक्षिणश्रोण्यनुवादकतयाप्युपपत्तेः। **यद्यपि न** प्राकृत्या वेदेरत्र दक्षिणश्रोणिसम्भवः, सौमिकमहावेद्यैव प्रसङ्गसिद्धेः तस्या निवृत्तत्वात्, तथापि स्वार्थाया वेदेः दक्षिणाश्रोणिरित्यनुपादानात् महावेदिदक्षिणश्रोणेरेव प्राप्ततया तत्रासा- दानाद्युपपत्तेः प्राप्तत्वात् न तस्यां निधानविधानमत्र कार्यम्; किन्तु अनुवाद एवेत्यर्थः।

**पार्थसारथिलेखनात् शाखान्तरे वैकल्पिकमध्वर्युकर्तृकमपि हृदयाद्यवदानं भवेत्। तथाऽप्यध्वर्युकर्तृकत्वपक्षेऽपि वपाश्रपणमात्रकर्तृः प्रतिप्रस्थातुरापस्तम्बाद्युक्तक्लोमादिभक्षो न विरुद्ध्यते। तस्य हृदयादिनिरूपिताकीर्णकरत्ववत् वपानिरूपिताकीर्णकरत्वस्यापि लोहितादिवदविशेषात्। अतो हृदयाद्यवदानस्योभयकर्तृकत्वेऽपि प्रतिप्रस्थातुर्भक्षोपपत्तिरिति चेत्—**

**सत्यं, तथाऽपि प्रकृतौ नानतिरूपः कर्तृसंस्कारस्तस्य दक्षिणानियमेन तयैव सिद्धेः अपि तु करिष्यमाणप्राकृतपदार्थेषु बलाधानरूप एव। न चासौ प्रतिप्रस्थातृकर्तृकत्वेऽपि हृदयाद्यवदानस्य भक्षणोत्तर प्रतिप्रस्थातुः कश्चिदस्ति। अतो न तस्य भक्षः। पार्थसारथेस्तु प्रतिप्रस्थातृकर्तृकहृदयाद्यवदानपक्षे तस्य भक्षाभिधानं निर्मूलमेव।**

**यदि तु याज्ञिकानां तथाचरणं तदा भक्षोत्तरकालीनः प्राकृतः कश्चित्पदार्थोऽनुसन्धेयः। अस्य चाधिकरणत्रयस्य यजमानपञ्चमत्वबाधकतया बाधोपयोगः।**

---

**यद्यपि** वा 'पशुगण' इति पाञ्चमिकाधिकरणे तन्त्ररत्ने प्लक्षशाखाया अप्यधिकरणत्वेनात्र वाक्ये विधानमुक्तमिति गुणद्वयविधानादवदानान्तरं भवेत् **तथापि** प्राकाशाध्वर्युदानवत् प्राकृतकार्यापन्नतयैव विधीयते। अन्यथाऽदृष्टार्थत्वापत्तेः। तस्यैव च 'ऐडान्यवद्यति' न तावत्येव होतव्यम् सौविष्टकृत्तान्यवद्यति' इति वचनादवदानोपक्रमता बाध्यत इति प्रतिप्रस्थातुः प्राकृतपदार्थस्थानापन्नपदार्थकर्तृत्वात् प्राप्नोत्येव भक्ष इति भावः। **यद्यपि चेति।** पार्थसारथिपदं भाष्यकारस्याप्युपलक्षणम्। **तदापीति। शातपथवाक्येन** प्रतिप्रस्थातुः कर्तृत्वेन विधानेपि **तैत्तिरिय**शाखायां तस्यानाम्नानात् अध्वर्युकर्तृत्वेप्यापस्तम्बसूत्रे मैत्रावरुणषष्ठानां सप्तमस्य प्रतिप्रस्थातुश्च हृदयाद्यङ्गशेषभक्षणमाम्नातम्; तत्रैवेडायां क्लोमप्लीहपुरीततैः आकीर्णकरतयाऽवस्थितैः वर्धनमप्युक्तम्। तत्र पूर्वोक्तसिद्धान्तरीत्या प्रतिप्रस्थातुर्हृदयाद्यङ्गशेषभक्षणं न्यायेनाप्राप्तमपि वचनबलादेवेष्टव्यम्। यत्तु क्लोमादिभक्षणम् तत्तु अवदानस्याध्वर्युकर्तृकत्वपक्षेपि तस्य वपाश्रपणमात्रकर्तृत्वेनैव स्यादित्यर्थः। **अत्र तन्त्ररत्ने** अवदानेऽध्वर्युकर्तृकत्वमार्थिकं भाष्योक्तमवत्तहोमविधिनाऽर्थाद्विधीयमानस्य प्रधानैककर्तृकत्वात्। समाख्यानाचाध्वर्युकर्तृकत्वं शास्त्रीयमेवेति प्रदूष्य, तदाध्वर्यवमवदानं कुर्वन् लभेतैव प्रतिप्रस्थाता भक्षमित्युक्तम्; तदनूद्य पूर्वोक्तयुक्त्या दूषयति—**पार्थसारथेस्त्विति। अधिकरणत्रयस्येति।** मैत्रावरुणस्य भक्षकर्तृत्वेनातिदेशप्राप्तयजमानपञ्चमत्वस्य बाधः, प्रतिप्रस्थातृकर्तृत्वेन तु न बाध इति बाधोपयोगितेत्यर्थः। यद्यपि यजमानपञ्चमत्व होतुरग्नीधश्च भक्षान्तरविधानेनैवाबाधितमिति अवशिष्ट-

(९)—विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनश्श्रुतिरनर्थिका स्यात् ॥ २४ ॥ अपि वाऽऽग्नेयवत् द्विशब्दत्वं स्यात् ॥ २५ ॥ न वा शब्दपृथक्त्वात् ॥ २६ ॥ अधिकं वाऽर्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ प्रतिषेधस्स्यादिति चेत् ॥ २८ ॥ नाश्रुतत्वात् ॥ २९ ॥ अग्रहणादिति चेत् ॥ ३० ॥ न तुल्यत्वात् ॥ ३१ ॥ तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ अपूर्वतां तु दर्शयेत् ग्रहणस्यार्थत्वात् ॥ ३३ ॥ ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥ स्विष्टकृद्भक्षः प्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ३५ ॥ अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥

चातुर्मास्येषु 'मरुद्भ्यो गृहमेधिभ्यस्सर्वासां दुग्धे सायमोदनं निर्वपेत्' इति गृहमेधीयेष्टिं विधाय 'आज्यभागौ यजति यज्ञतायै' इति श्रुतम् । तत्रातिदेशप्राप्तेष्वप्याज्यभागेषु पुनःकिमर्थमिति बाधोपयोगितया चिन्तायां—

अनुवादमात्रमित्याद्यः पक्षः ।

अनुवादमात्रत्वे वैयर्थ्यापत्तेः सौर्यादौ निर्वपत्यादेः प्रकृतिसादृश्यबोधनद्वारा प्रकृतितानियामकत्ववदस्यापि तादृशवाक्यवत्वसादृश्येन अस्याप्याज्यभागविधायकत्वमङ्गीकृत्य तादृशार्थवत्त्वसादृश्येन वा प्रकृतिनियम इत्यपरः ॥

---

त्रित्वस्यैव बाध इति वक्तुमुचितम् , तथापि त्रित्वस्यार्थिकस्य अतिदेशतः प्राप्त्यभावेन बाधानुपपत्तेः युगपदेव सर्वबाधकशास्त्राणां प्रवृत्तेरतिदेशप्राप्तयजमानपञ्चमत्वबाधोक्तौ न किञ्चिद्बाधकम् ।

---

### विकृतौ प्राकृतस्य विधेः

निगदव्याख्यातमेतदधिकरणं क्वचिदेव व्याख्यायते । अज्यभागेष्विति । अत्र बहुवचनबलादाज्यभागपदमङ्गसामान्यपरम् । ननु सिद्धान्तेऽतिदेशस्यैवाभावे पूर्वकर्मोपस्थापकप्रमाणा—

औषधद्रव्यकत्वेनानेकदेवताकत्वेन चैव प्रकृतिविशेषनियमोपपत्ते 'आज्यभागौ यजति' इत्यस्य वैयर्थ्यापत्तेः निर्वपत्यादेश्च यागलक्षकतया साधुत्वाद्यर्थं च सार्थकस्य सादृश्योपपादकत्वेऽपि बाधकाभावादुपदेशातिदेशाभ्यां विधानस्य विहितविधानायोगेनानुपपत्तेश्च चोदकप्राप्तस्यैष्टिकविध्यन्तस्य प्रशंसार्थमिदं सार्थवादकं वचनम्। इत्थमयं विध्यन्तः प्रशस्तः यत्राज्यभागौ विधेते तौ च यज्ञतायै इति विध्यन्तप्रशंसाद्वारा यागस्तुतिरिति तृतीयः॥

असम्बन्धिवाचनिकगुणव्यवहितत्वेन गृहमेधीयविध्येकवाक्यत्वाभावादर्थवादत्वानुपपत्तेरभ्यासात्कर्मान्तरमेवेदमप्राकृतकार्यमाज्यभागधर्मकं गृहमेधीयाङ्गतया विधीयत इति चतुर्थः॥

न तावदभ्यासात्कर्मान्तरं वक्ष्यमाणरीत्याऽनन्यपरत्वाभावात्, नापि प्रकरणान्तरात्, अनुपादेयगुणाभावेन तदसत्त्वात्; उपादेयगुणाभावस्यैव प्रकरणान्तरप्रयोजकत्वेऽप्यतिदेशोपस्थितत्वेनासन्निधेरभावाच्च। प्रकरणान्तराधिकरणस्थकौस्तुभोक्तरीत्या सिद्धान्तेऽप्यसन्निधेरभावाच्च। अतः प्राप्ताज्यभागपुनश्श्रवणं परिसङ्ख्यार्थमिति पञ्चमः।

परिसङ्ख्याऽपीयं विकृत्यन्तरे नाज्यभागाविति शेषिपरिसङ्ख्या वा स्यात्, आज्यभागातिरिक्तप्रयाजादिरूपशेषपरिसङ्ख्या वा, नोभयथा, त्रैदोष्यापत्तेः। आद्ये विकृत्यन्तराणामनुपस्थितेश्च। गृहमेधीयाज्यभागविधिना विकृत्यन्तरे नैराकाङ्क्ष्यापादनासम्भवेन चोदकपरिलोपकत्वानुपपत्तौ फलतः परिसङ्ख्यानुपपत्तेः। नान्त्यः—प्राप्तपरिसङ्ख्यात्वे शास्त्रप्राप्तस्यात्यन्तं बाधायोगेन 'न तौ पशौ करोति' इतिवत् विकल्पापत्तेः क्लृप्तोपकारकेणाप्याज्यभागमात्रेण गृहमेधीयस्य नैराकाङ्क्ष्यापादनायोगेन चोदकपरिलोपकतया अपूर्वत्वज्ञापनद्वारा फलतः परिसङ्ख्यारूपसिद्धान्तस्याप्यनुपपत्तेश्च। न हि प्रकृतावाज्यभागमात्रस्य नैराकाङ्क्ष्यापादकत्वं दृष्टं, अपि तु प्रयाजादिसहितस्यैव। अतः कथमपि परिसङ्ख्यात्वायोगात् अतिदेशस्य विशेषशास्त्रेणानेनोपदेशेनोपसंहारः। अस्मिंश्च पक्षे उपदेशातिदेशाभ्यां प्रमितस्यैवाज्यभागस्यानुष्ठाने फलमित्यभ्युदयशिरस्कत्वकल्पना सिद्धान्तापेक्षयाऽनुष्ठाने विशेष इति षष्ठः।

---

भावेऽसन्निधेःसत्वात् उपादेयगुणसामान्याभावमात्रेण कर्मान्तरत्वापत्तिरित्यत आह—**प्रकरणान्तराधिकरणेति।** भेदाननुगुणस्वेतराबाध्यपूर्वकर्मोपस्थापकप्रमाणज्ञानमात्ररूपस्य सन्निधेः भेदप्रमाप्रतिबन्धकत्वेन इहाज्यभागाभेदादेवातिदेशस्य बाध्यत्वेपि स्वेतराबाध्यत्वात् सन्निध्युपपत्तेः कौस्तुभे उपपादितत्वान्न दोष इत्यर्थः। [4] **तमुक्थ्येनेति।** सन्निधे भेदप्रमाप्रतिबन्धकतेति अथातोऽग्निमिति वाक्येन अग्निष्टोमाङ्गस्याग्नेः उक्थ्यादिविकृतिष्वतिदेशेनैव प्राप्तौ पुनर्वचनं

उपदेशस्य प्रत्यक्षत्वेन झटिति प्रवृत्तौ तन्मात्रविषयस्यातिदेशस्य कल्पने प्रमाणाभावादाज्यभागमात्रेण नैराकाङ्क्ष्यापादनायोगेन चेतराङ्गविषयेऽतिदेशस्यावश्यकत्वात् तद्वर्ज्यातिदेशः। न च प्रत्यङ्गमतिदेशभेदे प्रमाणाभावादेकव्यापारेणैकेनैवातिदेशेन सर्वाङ्गप्राप्तौ आज्यभागयोरपि प्राप्त्युपपत्तेरितराङ्गमात्रविषयत्वानुपपत्तिरिति वाच्यं, विरोधिशरदर्शनेनातिदेशस्यैकस्यैव कुशविषयत्वाकल्पनेन तस्येतराङ्गविषयत्ववदाज्यभागयोरपि प्रथमप्रवृत्तप्रत्यक्षविधिदर्शनेनैकस्यैवातिदेशस्य तद्विषयत्वाकल्पनेन तस्य तदितराङ्गविषयत्वोपपत्तेः। न चैवमपि तेनैवाज्यभागप्राप्त्युपपत्तेरुपदेशानर्थक्य, 'तमुक्थ्येन' इत्यादिवत् आज्यभागाश्रितगुणकामप्राप्त्यर्थं तदुपपत्तेः। न चैवं गुणकामप्राप्तिफलकत्वेऽपि चोदकपरिलोपकत्वेन परिसङ्ख्याफलकत्वस्याप्यवर्जनीयत्वापत्तिः, आज्यभागमात्रेण नैराकाङ्क्ष्यापादनायोगेन तस्य चोदकपरिलोपकत्वानुपपत्तेः। यदि तु नाज्यभागाश्रिताः गुणकामाः केचिद्दृष्टचरा इत्युद्भाव्यते ततो यजुर्भ्रेषप्रायश्चित्तसिद्ध्यर्थोऽयमुपदेशः। आतिदेशिकत्वे हि तस्य कल्पितत्वेन यजुर्वेदत्वाभावात् यजुर्वेदप्रमिताङ्गताकपदार्थभ्रेषनिमित्तकप्रायश्चित्तानुपपत्तिरिति सप्तमः।

सिद्धान्तस्तु—न गुणकामप्राप्तिरिहोपदेशप्रयोजनं, तत्सत्त्वेऽपि गुणकामप्राप्त्यनुपपत्तेः। दर्शपूर्णमासप्रकरणपठितानां हि गुणकामानां प्रकरणाद्दर्शपूर्णमासापूर्वसाधनीभूताज्यभागयोरेवाश्रयत्वं, नाज्यभागमात्रस्य, तथात्वे गृहमेधीयेऽपि अतिदेशप्राप्ताज्यभागाश्रितगुणकामप्राप्त्यापत्तौ तत्र तदुपदेशानर्थक्यात्।

नापि यजुर्भ्रेषप्रायश्चित्तप्राप्तिः, विकृत्यङ्गत्वस्य यजुर्वेदप्रमितत्वाभावेऽपि आज्यभागोत्पत्तेर्यजुर्वेदप्रमिततया सौर्यादाविवेहाप्यातिदेशिकत्वे तत्प्राप्त्युपपत्तेः। अपि तु क्लृप्तोपकारप्राकृताज्यभागविधिना प्रथमप्रवृत्तेन झडित्याज्यभागोपस्थापनात् तेनैव निराकाङ्क्षस्य गृहमेधीयविधेर्नातिदेशकल्पकत्वम्। न च प्रकृतौ यावत्प्रमाणप्रमिताङ्गैरेव नैराकाङ्क्ष्यदर्शनात् इहापि नाज्यभागग्रहणमात्रेण नैराकाङ्क्ष्यं, गौरवेण प्रकृतौ यावत्प्रमाणप्रमितत्वस्य नैराकाङ्क्ष्यप्रयोजकत्वाकल्पनात्। अपि तु परप्रयुक्ताङ्गान्तरसहितप्रयाजादित्वस्यैव। तेनैव रूपेण जनकतया क्रतूपकारोद्देशेन विहितत्वात्।

वस्तुतस्तु सहितत्वमपि न तन्त्रं, अपि तु प्रयाजादिजन्यादृष्टत्वमेव। तच्च साङ्गजन्यमेवेति प्रकृतौ साहित्यस्याप्यङ्गत्वान्न तद्भिन्नैकेनाङ्गेन तत्सिद्धिः।

अत एव च विकृत्यन्तरे उपहोमानन्वयेऽपि प्राकृताङ्गमात्रेण प्रकृतौ तेषामाकाङ्क्षाशामकत्वदर्शनात् विकृतावप्याकाङ्क्षाशामकत्वं नानुपपन्नम्। अत एव तत्सन्निधिपठितोपहोमविधिं दृष्ट्वा तु तदन्यथानुपपत्त्यैव विकृतेराकाङ्क्षामुजीव्य तेषां तदङ्गत्वेऽवगते तत्साहित्यस्याप्यङ्गत्वावगमात् न प्राकृताङ्गमात्रेण क्रतूपकारसिद्धिः।

एवं च प्रकृतेऽप्याज्यभागान्वयात्पूर्वमन्याङ्गानन्वयात् तत्साहित्यस्याङ्गत्वानवगतेरा-ज्यभागजन्यादृष्टत्वेन प्रकृतावाकांक्षाशामकत्वस्य क्लृप्तत्वाद्युक्तं तन्मात्रेणाकाङ्क्षाशान्ते-रतिदेशपरिलोपकत्वम्।

अत एव तत्सन्निधिपठितोपहोमविधिवशेन तेषामङ्गत्वावगतावेव तत्साहित्यस्या-ङ्गत्वावगतिः। न तु प्राकृताङ्गान्तरसाहित्यस्यापि। तेषामाकाङ्क्षाविरहेणातिदेशस्यै-वाकल्पनेनाङ्गत्वस्यैवानवगतेः।

न चैवं पाठक्रमेण प्रथमावगताङ्गेनैव प्रकृतेरपि नैराकाङ्क्ष्यात् तदुत्तराङ्गानां प्रकरणग्राह्यत्वानापत्तिः। प्रकरणस्य युगपत् सर्वाङ्गग्राहित्वेन पाठक्रमस्य दुर्बलस्यानिया-मकत्वात्। अन्यथा प्रथमेनैव नैराकाङ्क्ष्ये इतरस्य कर्मान्तरत्वापत्तौ व्रीहियवयोर्विकल्पा-नापत्तेः।

अत एव गृहमेधीयस्य प्रकरणे आम्नातानामाज्यभागस्विष्टकृदादीनामपि नान्यतरेणैव नैराकाङ्क्ष्यं, अपि तु प्रकरणाविशेषात् क्लृप्तोपकारकत्वाविशेषाच्च पाठक्रममतन्त्रीकृत्य सर्वैरेव।

अतश्च क्लृप्तोपकारैराज्यभागादिभिरेव नैराकाङ्क्ष्यात् गृहमेधीयस्यातिदेशकल्प-कत्वाभावेन अपूर्वत्वावगतेराज्यभागाद्यतिरिक्ताङ्गानां प्रमाणाभावेनैवाप्राप्तेः फलतश्शे-षान्तरपरिसङ्ख्येति सिद्धम्।

न चैवं पञ्चमपक्षाविशेषः, तत्र चोदकप्राप्तपरिसङ्ख्यात्वाङ्गीकारेण चोदकपरिलोप-पूर्वकाप्राप्तपरिसङ्ख्यारूपसिद्धान्तापेक्षया तस्य भेदात्। न चैवं तयोः पक्षयोरनुष्ठाने विशेषाभावः। प्राप्तपरिसङ्ख्यापक्षे आज्यभागविधेर्लक्षणया तदितरपरिसङ्ख्यार्थत्वेन अब्राह्मणमानय इत्यत्र ब्राह्मणभिन्नस्य तत्सजातीयस्यैव मनुष्यादेर्ग्रहणवदाज्यभागभिन्न-स्याज्यभागसमानजातीययागान्तरस्यैव परिसङ्ख्यापत्तेः। सिद्धान्ते प्रापकप्रमाणाभावेन तद्भिन्नस्य सर्वस्यैव परिसङ्ख्यापत्तेः विशेषसत्त्वात्।

अत एव स्विष्टकृच्छ्रपणमपि पञ्चमपक्षे समानजातीयत्वात् प्राशित्रादिशेषकार्याणां निवर्तकमेव। 'अथ इडामवद्यति' इति तु स्विष्टकृद्विधिनिवर्तितेडाभक्षप्रतिप्रसवार्थ-मिति प्राञ्चः।

---

तदाश्रितगुणकामप्राप्त्यर्थमिति वक्ष्यते। तद्वदित्यर्थः। स्विष्टकृदादीनामिति। आज्यभाग-विधिवदग्निं स्विष्टकृतं यजतीति पुनर्विधानादित्यर्थः।

वस्तुतस्तु—इडाश्रवणस्यैव शेषकार्यान्तरपरिसङ्ख्यार्थत्वं स्विष्टकृच्छ्रवणस्य च प्रतिप्रसवार्थत्वमित्यत्र विनिगमनाविरहादुभयोरपि परिसङ्ख्यार्थत्वमेवाज्यभागश्रवणवत्। तत्रावान्तरसादृश्यादाज्यभागश्रवणमर्थकर्मभूतयागान्तरपरिसङ्ख्यार्थम्। स्विष्टकृच्छ्रवणं चाश्रयिकर्मान्तरपरिसङ्ख्यार्थम्। इडाश्रवणं च भक्षान्तरपरिसङ्ख्यार्थं पञ्चमे पक्षे।

सिद्धान्ते तु युगपत्सर्वैरेव क्लृप्तोपकारप्राकृताङ्गपुनश्श्रवणैर्नैराकाङ्क्ष्यापादनेन चोदकलोपावगमात् सर्वाङ्गनिवृत्तिरेव प्रापकप्रमाणाभावात्फलम्।

न चैवं 'तमुक्थ्येन' इत्यादावपि सत्यपि गुणकामप्राप्तिफलकत्वे चयनस्य क्लृप्तोपकारकत्वेन चोदकपरिलोपापत्ति। तस्याहवनीयसंस्कारकत्वेन तत्प्राप्त्यर्थमतिदेशोपजीवित्वेन तत्परिलोपकत्वानुपपत्तेः। प्रकृत्यङ्गताबोधकविधिसमकालीनविधिबोधितस्यास्य चयनस्योक्थ्यादौ क्लृप्तोपकारकत्वानिश्चयाच्च। प्रकृते त्वेवं विशेषाभावाच्चोदकपरिलोपकत्वेन सिद्धं गृहमेधीयस्यापूर्वत्वम्॥

---

(१०)—शंय्विडान्तत्वे विकल्पस्स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकस्स्यात्॥ ३८॥ नित्यानुवादो वा कर्मणस्स्यादशब्दत्वात्॥

ज्योतिष्टोमे 'शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीस्संयाजयन्ति इडान्ता आतिथ्या सन्तिष्ठते नानुयाजान् यजति' इति श्रुतम्। तत्र किं प्रायणीयातिथ्ययोः शंय्विडान्तत्वं नियतं उत पक्षे पत्नीसंयाजानुयाजवर्जं कृत्स्नसंस्थत्वमपीति चिन्तायां—

आद्यवाक्याभ्यां शंय्विडान्तत्वे विहिते तदुत्तरभाव्यङ्गपरिसङ्ख्यात्रगतेः सर्वेषां तेषामकरणे प्राप्ते पत्नीसंयाजानुयाजमात्रे अकरणपुनश्श्रवणं तद्भिन्नाङ्गेषु सूक्तवाकसमिष्टयजुरादिष्वकरणपरिसङ्ख्यार्थं, अतश्च तेषामपि पक्षे करणमिति प्राप्ते—

अकरणबोधकशास्त्रस्य प्रत्यक्षत्वेनाप्राप्तपरिसङ्ख्यात्वायोगात्प्राप्तपरिसङ्ख्यायां च त्रैदोष्यापत्तेरष्टदोषदुष्टविकल्पापत्तेश्च शंय्विडान्तत्वमेव नियतम्। एवं च 'न पत्नीस्संयाजयन्ति' इत्यादेर्नित्यानुवादत्वादिना तदेकवाक्यतयैवोपपत्तेर्न वाक्यभेदाङ्गीकारोऽपि।

---

शंय्विडान्तत्वे विकल्पः।

पक्षे करणमिति। प्रकृतौ हि प्रधानयागनारिष्ठहोमप्राशित्रभक्षणानूयाजसूक्तवाकशंयुवाकपरिधिप्रहरणहविश्शेषभक्षपत्नीसंयाजाज्येडाफलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनानीत्येवं क्रमप्राप्तौ इडाभक्षणान्ता आतिथ्या; 'तच्छंयोरावृणीमहे' इति मन्त्रः शंयुः, तदन्ता प्रायणीया विहितेति इडाभक्षणोत्तरभाविनां अनूयाजप्रभृतीनां सर्वेषामङ्गानां लोप आतिथ्यायाम्।

(११)—प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात् प्रतिषेधस्स्यात् ॥ ४० ॥ प्राप्तेर्वा पूर्वस्य वचनादतिक्रमस्स्यात् ॥ ४१ ॥ प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम् ॥ ४२ ॥

प्रकृतौ द्वौ शंयू पत्नीसंयाजानां पुरस्तादेक परस्तादपरः। तथेडे अपि; अनूयाजानां पुरस्तादेका पश्चादपरा। तत्र पूर्वाभ्यां प्रायणीयातिथ्ययोः शंय्विडान्तता उतोत्तराभ्यामिति सन्देहे—

'पर्यग्निकृतं पत्नीवतमुत्सृजति' इतिवदत्र प्रायणीयाद्यनुवादेन शंय्विडान्ताङ्गरीतिमात्रविधानात् तस्याश्च क्लृप्तोपकारकतया आज्यभागवच्चोदकपरिलोपकतया तदुपरितनाङ्गनिवृत्तिरार्थिकी। अत एव सन्तिष्ठतिरर्थप्राप्तानुवादः साधुत्वार्थः। तत्र च तद्गुणसंविज्ञानबहुव्रीहिणा शंय्विडान्तपदार्थविधानात् पूर्वशंय्विडोत्तरपदार्थानामप्युत्तरशंय्विडान्तत्वाविशेषेण विधानावगतेस्तदुत्तरभाविनामेव निवृत्तिः।

---

प्रायणीयायां तु शंयुवाकोपरितनानां सः। एवमकरणस्य प्राप्तस्य पुनरनूयाजपत्नीसंयाजविषये पुनः श्रवणात् तद्व्यतिरिक्ताङ्गेषु अकरणं परिसङ्ख्यार्थम्। ततश्च विधितः प्राप्तस्य अकरणस्य पुनः प्रतिषेधाद्विकल्पे सति पक्षे करणमित्यर्थः। अत्र च 'पत्नीसयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुप्रहरति' इत्येदप्युदाहरणं समानन्यायाद्द्रष्टव्यम्।

---

प्रतिषेधार्थवत्त्वाच्च।

द्वौ शंयू इति। यद्यप्यापस्तम्बसूत्रे नोत्तरशंयुः, तथापि शंयुवाको भवेन्न वा इत्याश्वलायनसूत्रे विकल्पेन तस्य विधानाभिप्रायेण तद्वित्वं द्रष्टव्यम्। इदं चाधिकरणमर्थतः पूर्वं द्रष्टव्यम्। अन्यथा पूर्वशयोरग्रहणे उत्तरशंय्वन्ताङ्गानां करणस्यैवापत्तौ पत्नीसयाजान्तवाक्यस्य अकरणपरिसङ्ख्यार्थत्वपूर्वपक्षासम्भवात्। इतरत् स्पष्टार्थम्। वस्तुतस्तु शंय्विडान्तत्वस्य निमित्ततबोधकयच्छब्दाद्यभावे निमित्तत्वे प्रमाणाभावात् 'न पत्नीः सयाजयन्ति नानूयाजान् यजति' इत्यनुवादज्ञापकबलादेव प्रथमशंय्विडान्ताङ्गरीतिविधानमित्येव सिद्धान्तकरणं युक्तम्। अत एव शंय्विडान्तत्वविधौ त्वरारूपहेतुप्रदर्शनपरभाष्यलिखितार्थवादोऽपि प्रथमशंय्विडाग्रहणे समञ्जसो भवति; अन्यथा कर्माधिक्यस्यापत्तौ त्वरानुपपत्तेरिति ध्येयम्।

---

अत एव पत्नीसंयाजादीनामप्युत्तरशंय्विडापूर्वभाविपदार्थत्वात्करणप्रसक्तौ 'न पत्नीस्संयाजयन्ति' इत्यादिस्तत्पर्युदासविधया शंय्विडान्तत्वविध्येकवाक्यतापन्नस्सन्नर्थवान्। अतः पत्नीसंयाजानूयाजवर्जं उत्तरशंय्विडान्तं सर्वं कार्यमिति प्राप्ते—

नात्र शंय्विडान्ताङ्गरीतिविधिः। तथात्वे धातोरत्यन्तपारार्थ्यापत्तेः। अपि तु शंय्विडान्तत्वे निमित्ते प्रायणीयाद्युद्देशेन प्रयोगोपरमरूपा संस्थैव धात्वर्थो विधीयते। पात्नीवतवाक्ये तु पर्यग्निकरणे निमित्ते प्रयोगोपरमरूपोत्सर्गविधाने यागस्याप्यकरणापत्तेस्तत्र त्यागरूपोत्सर्गानुवादेन पर्यग्निकरणान्ताङ्गरीतिविधानमेवाश्रितम्। प्रकृते तु धात्वर्थविधिलिप्सया प्रयोगोपरमस्यैव शंय्विडान्तत्वे निमित्ते विधानात्पूर्वयोरपि शंय्विडयोः कृतयोर्निमित्तस्य संजातत्वेन कर्तव्य एवोपरमः।

पत्नीसंयाजादिप्रतिषेधस्तु नित्यानुवादत्वेनार्थवादमात्रमौचित्येन शंय्विडान्तत्वस्तुत्यर्थं न विरुध्यते। अतः पूर्वाभ्यामेव शंय्विडान्तता।

---

(१२)—उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥ स्रौवेण वा गुणत्वात् शेषप्रतिषेधः स्यात् ॥ ४४ ॥ अप्रतिषिद्धं वा प्रतिषिध्य प्रतिप्रसवात् ॥ ४५ ॥ अनिज्या वा शेषस्य मुख्यदेवताऽनभीज्यत्वात् ॥ ४६ ॥

ज्योतिष्टोमे उपसदो नाम 'अग्निमनीकं सोमं शल्यं विष्णुं तेजनम्' इति प्रधानत्रयं विधाय 'अग्निर्हि मुखम्' इत्यनेन स्तुत्वा 'नान्यामाहुतिं पुरस्ताज्जुहुयात् यदन्यामाहुतिं पुरस्ताज्जुहुयात् अन्यन्मुखं कुर्यात् स्रुवेणाघारमाघारयति' इति

---

उपसत्सु।

अत्र स्रुवेणाघारमाघारयतीत्यस्याघारप्रतिप्रसवार्थत्वपूर्वपक्षः सम्भावनामात्रेण। प्राकृतीभ्य आघारादिभ्योऽन्यां औपसदीं वैकृतीमाहुतिं पुरस्तात्कुर्याच्चेत् अन्यन्मुखं कुर्यादित्येवं यदन्यामित्यस्य विधित्वाश्रयणेन आघारनिषेधानुमानात्, आघारे निषिद्धत्वस्य आघाराविध्यर्थवादत्वेनोपपत्तेरयुक्तत्वात्, अतिदेशप्राप्तस्य निषेधाश्रयणे "न तौ पशौ करोति" इतिवत् विकल्पेनैव प्रतिप्रसवोपपत्तौ तत्पुनर्विधाने प्रयोजनाभावाच्चेति प्रकाशकारैरुक्तं तत् आघारनिषेधाश्रयणेन विकल्पाप्रसक्तेरयुक्तमिति सूचयितुमाह—नान्यामाहुतिमिति। सम्भवति प्रवृत्तिविशेषकरत्वेन

श्रुतम्। तथा 'अप्रयाजास्ता अननुयाजास्ताः' इति च। तत्रोपसदां किं गृहमेधीयवद-पूर्वत्वं न वेति चिन्तायां—

'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इत्यनेन प्रधानपूर्वभाव्याहुतिमात्रपर्युदासादा-घारस्यापि पर्युदासे प्राप्ते 'स्रुवेणाघारमाघारयति' इत्यस्य प्रतिप्रसवत्वेन सार्थक्यात् नास्याज्यभागश्रवणवदपूर्वतापरत्वम्। अत एव अप्रयाजा इत्याद्यवयुत्यानुवादोऽनूयाज-पर्युदासप्रशंसार्थः। ततश्चोत्तराघारप्रयाजाज्यभागानूयाजवर्जं सर्वं प्राकृतमङ्गजातं कार्य-मित्येकः पक्षः।

यद्वा 'नान्यामित्यादिः स्रुवेणाघारमाघारयति' इत्यन्तस्सर्वोऽपि प्रधानविधेरेवा-र्थवादः। अन्यां आग्नेयीतोऽन्यां प्रधानाहुतिम्। तत्र हेतुः अग्निर्मुखमिति। अङ्गत्वात्तु स्रौवाघारादिकरणेऽपि न दोष इति च स्तुतिः। अतश्च सर्वाङ्गकरणेऽतिदेशेन प्राप्ते 'अप्रयाजाः' इत्ययं प्रयाजानुयाजमात्रपर्युदास इति द्वितीयः।

वस्तुतस्तु—'स्रुवेणाघारमाघारयति' इत्यस्यानुवादत्वेनोपलक्षणत्वे प्रमाणाभावात् स्वतन्त्रविधित्वेऽपि नापूर्वतापरत्वं, अपि त्वाघारत्वावच्छेदकावच्छेदेन स्रुवमात्रविधानं, तत्र च पूर्वाघारे स्रुवप्राप्तावप्युत्तराघारे तत्प्राप्तिः फलम्। हिरण्यगर्भमन्त्रवद्वा तन्मात्रे स्रुवविधानं ततश्चास्याघारविधायित्वाभावात् नापूर्वतापरत्वमिति तृतीयः।

---

सप्रयोजनत्वे नार्थवादत्वकल्पनं युक्तम्। अतो 'नान्यां' इत्यस्य विधित्वम्; तदपि पर्युदास-विधयेति प्रधानाहुतिभिन्नपूर्वाहुतिभिन्नामाहुतिं कुर्यादित्यर्थेन पर्युदस्तस्य तस्य प्रतिप्रसवो युक्त इत्यर्थः। अत एवेति। यतः पूर्वाहुतिभिन्नानामनुष्ठानविधानेनापूर्वभाविनां सर्वेषां करण-प्रसक्तौ अनूयाजानामपि तत्प्राप्तिः अत एव तत्पर्युदासार्थो 'अननूयाजास्ता' इति विधिः; तस्यैव 'अप्रयाजा' इत्यर्थवाद इत्यर्थः। ततश्चोत्तराघारेति। उत्तराघारादित्रयं पूर्वाहुतित्वात् पर्युदस्तम्; अनूयाजास्तु विशेषत एव वचनेन पर्युदस्ता इति तदुभयवर्जं सर्वमित्यर्थः। प्राचीनानुक्तमपि[1] सयुक्तिकत्वात् स्वय तृतीयमपि पूर्वपक्षमाह—वस्तुतस्त्विति। उपलक्षणत्व इति। सर्वाङ्गेति शेषः। हिरण्यगर्भेति। हिरण्यगर्भमन्त्रो यत्रैव मन्त्रजन्यनियमादृष्टं क्लृप्त उत्तराघारे, तत्रैव यथा निविशते, तथैव जौहवे उत्तराघारे नियमादृष्टं क्लृप्तं तत्रैव निविशते। पूर्वाघारे हि 'जुह्वा जुहोति' इति विधिनियमितया जुह्वैव होमप्राप्तौ प्रकृतौ स्रुवविधिरेवेति तत्र न नियमादृष्टक्लृप्तिरित्यर्थः। अत्र प्रकाशकारैः विधिद्वयमध्यपठितस्य

---

1 B नुक्तमार्गेपि

सिद्धान्तस्तु—'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इत्यस्य पृथङ्निषेधविधित्वकल्पने वाक्यभेदापत्तेरस्यार्थवादत्वावसायात् न तावदाद्यः पक्षः। पाठक्रमादेवाग्नेय्या प्रधानप्राथम्यसिद्धेस्ततः पूर्वमन्यस्याः आहुतेः प्रधानभूताया अप्रसक्तत्वादेव तन्निषेधानुवादानुपपत्तेः 'आघारमाघारयति' इत्यस्योपलक्षणत्वेनानुवादत्वाङ्गीकारे वैयर्थ्यप्रसङ्गाच्च न द्वितीयोऽपि।

अत एव अग्निर्मुखमित्येव प्रधानस्तुतिः। नान्यामित्यादिस्तु स्रुवेणेत्यस्य विधेश्शेषः। प्रधानस्य पुरस्तात् पूर्वं स्रौवाघारादन्यामाहुतिं उत्तराघारप्रयाजाज्यभागादिरूपां न जुहुयात्। अतो लाघवात् स्रौवाघार एव कार्य इति तत्स्तुतिः। अत एव नोत्तराघारे स्रुवविधिरिति तृतीयोऽपि। अर्थवादानुसारेणास्य धात्वर्थविधिमात्रपरत्वनिश्चयात्। स्रुवमात्रविधौ प्रधानात्पूर्वमाहुत्यन्तरस्यापि प्रसक्तत्वेन तन्निषेधानुवादानु-

---

नान्यामिति भागस्यानन्तर्यात् 'नाग्नेय्याः अन्यां प्रधानाहुतिं पुरस्ताज्जुहुयात्' इति व्याख्यानेन "अग्निमनीकम्' इत्येतच्छेषतैव युक्ता; न तु व्यवहिताया आघाराहुतेः अन्यामिति व्याख्यानेन आघारविधिशेषतेत्युक्तम्। तद्दूषयितुमाह—अत एवेति। यतः पाठक्रमेण आग्नेय्या एव प्राथम्यप्राप्तौ अप्रसक्तप्राथम्योत्तरप्रधानाहुतेः प्राथम्यनिषेधानुपपत्तिः, अत एव विधेयस्रौवाघारान्यनिन्दाकरणेनैवातिदेशप्राप्तस्रौवाघारस्यैवान्यपदार्थे प्रतियोगित्वेनान्वयेनाघारविधिशेषत्वमेव तन्त्ररत्नसूचितं युक्तम्। प्रधानार्थवादस्तु अग्निर्मुखमित्येवेत्यर्थः। स्रौवाघारादन्यासामाहुतीनां मुखत्वाभावात् प्रसक्तान्यमुखत्वनिषेधानुवादानुपपत्तिः समानैवेति चोद्यनिरासाय प्रधानस्य परस्तात् पूर्वमित्युक्तम्। यदि प्रधानात्पूर्वं स्रौवाघाराद्याज्यभागान्तं प्राकृतं क्रियते तदा सर्वमेवैतत्, अथवा आज्यभागावेव प्रधानस्य मुखं भवतीत्यन्यदेव मुखं कुर्यात्। स्रौवाघारातिरिक्तपरिसङ्ख्यायां तु स्रौवस्यैव प्रधानाव्यवहितपूर्वमनुष्ठानात् तस्यैव भवति मुखत्वम्। अतो नानुपपत्तिरित्यर्थः।

एतेन न यां कांचन प्राकृतीमाहुतिं स्रौवाघारादन्यामिह कुर्यात् केवलं स्रुवेणाघारमाघारयतीति तन्त्ररत्नव्याख्याने पुरस्ताच्छब्दत्यागापत्तिदूषणं प्रकाशकारोक्तमपास्तम्। पूर्वोक्तरीत्या प्रधानात्पूर्वं यां काञ्चिदित्यन्वयेन तदबाधोपपत्तेः। न चैतावता प्रधानपूर्वभाविनीनामेव परिसङ्ख्यापत्तिः, 'अप्रयाजा अननूयाजास्ताः' इतिवत् सर्वाङ्गपरिसङ्ख्यानेपि प्रधानपूर्वभाविमात्राणामेव नित्यानुवादतयोपपत्तेः। आहुत्यन्तरस्यापीति। सर्वाङ्गपरिसङ्ख्याऽभावादिति पूर्वं शेषः।

---

पपत्तेः। अतोऽत्र सौवाघारस्यैव विधेयत्वादाज्यभागश्रवणवदपूर्वतापरत्वमेव। अप्रयाजा इति च तस्यैवौचित्येन स्तुतिरिति सिद्धम्।

---

## (१३)—अवभृथे बर्हिषः प्रतिषेधात् शेषकर्म स्यात् ॥ ४७ ॥ आज्यभागयोर्वा गुणत्वात् शेषप्रतिषेधस्स्यात् ॥ ४८ ॥ प्रयाजानां त्वेकदेशप्रतिषेधात् वाक्यशेषत्वं तस्मान्नित्यानुवादस्स्यात् ॥४९॥ आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत्स्यात् ॥ ५० ॥

ज्योतिष्टोम एव 'वारुणेनैककपालेनावभृथं यन्ति' इत्यनेनावभृथसंज्ञकामिष्टिं विधाय 'अप्सुमन्तावाज्यभागौ यजति' इति श्रुतम्। तत्रातिदेशप्राप्ताज्यभागानुवादेनाप्सुपदोपेतमन्त्रमात्रविधानात् मन्त्रयोर्लिङ्गक्रमाभ्यां प्राप्तत्वेऽपि चाप्सुमद्देवतायास्तद्विशेषणस्य वा द्वितीयया विधानोपपत्तेराज्यभागविध्यभावेनातिदेशपरिलोपकत्वानुपपत्तेरपूर्वत्वाभावात् सर्वं प्राकृतमङ्गजातं कार्यम्।

यत्तु 'अपबर्हिषश्चतुरः प्रयाजान् यजति, अपबर्हिषौ द्वावनूयाजौ' इति वचनं तत् बर्हिःप्रयाजानुयाजपर्युदासमात्रार्थमिति प्राप्ते—

अप्सुमत्त्वस्याज्यभागविशेषणत्वेन प्रतीयमानस्य स्वातन्त्र्येण देवताविधायकत्वं तद्विशेषणत्व वा तावन्नैवोपपत्तिमत्। अप्सुपदोपेतमन्त्रविधिस्तु सम्भाव्यमानो मन्त्रयोः 'अप्स्वग्ने सधिष्टव, अप्सु मे सोमो अब्रवीत्' इत्यनयोः अनुवाक्यात्वेनाज्यभागक्रमाम्नातयोर्लिङ्गादेवाज्यभागाङ्गत्वावगतेः प्राप्तत्वेनासम्भवी।

---

### अवभृथे बर्हिषः।

**तद्विशेषणस्य वेति।** आज्यभागोद्देशेनाप्सुमत्त्वरूपगुणस्य स्वाश्रयदेवताकत्वसम्बन्धेन विधानात् प्राकृतदेवतयोरेव स गुणो निविशत इत्यर्थः। **स्वातन्त्र्येणेति।** विष्णु यजतीतिवत् द्वितीयया देवतात्वाभिधानेन देवतापरत्वस्याप्सुमन्तौ यजतीति पर्यवसानात् आज्यभागपदसामानाधिकरण्यानुपपत्तेः अप्सु गुणस्य अथवा अप्सुदेवताया एव विधानस्य मतुपः सम्बन्धिपरस्य देवतात्वे लक्षणायाः प्राकृतदेवताबाधस्य चापत्तेः नैवोपपत्तिमत्वमित्यर्थः। **अनुवादत्वेनेति।** एतेनानयोः ऋचोर्मध्ये पूर्वा अनुवाक्या उत्तरा याज्येति प्रकाशकारव्याख्यानं आश्वलायनसूत्रे

अत्रोपपदार्थस्य प्राप्तत्वाद्धात्वर्थमात्रविधिप्रतीतेर्युक्तमवभृथस्यापूर्वत्वम्। अपबर्हिष इति तु प्रयाजचतुष्टयस्यानुयाजद्वयस्य च वस्तुतो बर्हिःप्रयाजानूयाजव्यतिरिक्तस्य विधानम्। विशिष्टविधिन्यायेन वा पर्युदासविशिष्टप्रयाजानूयाजविधिः।

---

(१४)—विरोधिनामेकश्रुतौ नियमस्स्याद्ग्रहणस्यार्थवत्त्वात् शरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥ उभयप्रदेशान्नेति चेत् ॥ ५२ ॥ शरेष्वपीति चेत् ॥ ५३ ॥ विरोध्यग्रहणात्तथा शरेष्विति चेत् ॥ ५४ ॥ तथेतरस्मिन् ॥ ५५ ॥ श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥ ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिस्स्यात् ॥ ५७ ॥

प्रकृतौ वैकल्पिकानामनेकेषामतिदेशेनानियमेन प्राप्तौ विकृतौ यत्रैकस्य पुनश्श्रवणं यथा 'खादिरो यूपो भवति, बृहत्पृष्ठं भवति, यवमयः पुरोडाशः' इत्यादिषु तत्र यूपाद्युद्देशेन खादिरत्वादिमात्रविधानादपूर्वतापरत्वे यूपादीनामप्राप्त्यापत्तेरनुवादमात्रत्वे चानर्थक्यात्पालाशत्वादिव्यावृत्तिफलको नियमविधिरेवाय खादिरत्वादेः। प्रकृतावाक्षेपलभ्यद्रव्यान्तरव्यावृत्तिफलकव्रीह्यादिनियमवदिति।

---

ऽनयोरनुवादत्वेनैव विधानादनवधानकृतमेवेति सूचितम्। उपपदार्थस्येति। तथाचाप्सुमन्ताविति अप्सुपदेनैकदेशवाचिना लक्षणया तत्पदघटितमन्त्रद्वयस्याभिधानात् तादृशमन्त्रवत्त्वस्याज्यभागयोः प्राप्तत्वादनुवादः सन्नामधेयम्। न चैतावता संज्ञान्तराद्भेदापत्तिः; सञ्ज्ञायाः पूर्वकर्मण्यपि प्राकृतमन्त्रबाधकापूर्वमन्त्रवत्त्वेन योगेनोपपत्तावपूर्वकर्मान्तरापादकत्वे मानाभावादिति भावः। विशिष्टविधिन्यायेनेति। पूर्वस्मिन् पक्षे प्रयाजानूयाजव्यतिरिक्तस्य गृहमेधीयपञ्चमपक्षे तत्सजातीयवर्जनस्येव सजातीयत्वेनारादुपकारकमात्रस्य करणापत्तिः। अतः प्रयाजानूयाजपदयोः तात्पर्यग्राहकत्वमङ्गीकृत्य अपबर्हिषः पदे अपगतबर्हिः प्रयाजानूयाजलक्षणया तद्व्यतिरिक्तप्रयाजानूयाजमात्रविधिरित्यर्थः।

---

विरोधिनामेकश्रुतौ।

इतः प्रभृति चत्वार्यधिकरणानि स्पष्टार्थानि

---

अतिदेशस्य च पालाशादिविषयत्वाकल्पनादेव न तत्प्राप्तिः प्रामाणिकीति सिद्धमेव शिष्यहितार्थमुक्तम्।

---

## (१५)—सर्वासां च गुणानामर्थवत्त्वात् ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥ अधिकं स्यादिति चेत् ॥ ५९ ॥ नार्थाभावात् ॥ ६० ॥

वैकृतं श्यामाकादिद्रव्यं, सूर्यादिदेवता क्रियान्तरसाधनं च शरादि प्राकृततत्स्थानापन्नद्रव्यदेवताकुशादेः निवर्तकं न वेति सन्देहे—

उभयोरपि प्रमाणसिद्धत्वात्कल्प्यत्वेऽप्यतिदेशस्य प्रयाजादिविषये आवश्यकत्वेन कुशादिविषयत्वावश्यंभावात् दुर्बलप्रमाणप्रापितस्यापि च प्रबलप्रमाणप्रापितेनाप्यत्यन्तबाधायोगादुभयोरपि तुल्यबलत्वेन विकल्पः। न हि प्रत्यङ्गं भिन्नोऽतिदेशः, कथंभावाकाङ्क्षिण्या विकृत्या लाघवेन प्रकृतिवदित्येवमाकारकस्यैकस्यैवातिदेशस्य कल्पनात्; अतो न क्वचिदपि प्रत्याम्नानाद्बाध इति प्राप्ते—

उपकारपृष्ठभावेन पदार्थानामतिदेशात् यदुपकारजनकीभूतः पदार्थो विकृतावाम्नातस्तदुपकारजनकीभूतप्राकृतपदार्थातिरिक्तपदार्थानामेव विकृतावतिदेशात् कुशादिपदार्थस्याकाङ्क्षाभावेऽतिदेशविषयत्वस्यैवाकल्पनात् कुशानां नैव प्रामाणिकत्वम्। अत एव वस्तुतः अप्राप्तस्यैव कुशादेर्विशेषादर्शने सति प्रापकशास्त्रस्याहवनीयादिशास्त्रवत् क्लृप्तत्वेन कुशादिविषयत्वभ्रमात्प्राप्तबाधत्वव्यवहारः।

विस्तरेण चैतन्निरूपितं कौस्तुभे बलाबलाधिकरणे। अतस्सिद्धः प्रत्याम्नानाच्छरादिभिः कुशादीनां बाधः। इह सिद्ध एव च बाधः पूर्वं तत्र तत्र व्यवहृत इति ध्येयम्।

---

## (१६)—तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पस्स्यात् ॥६१ यावच्छ्तीति चेत् ॥ ६२ ॥ न प्रकृतावशब्दत्वात् ॥ ६३ ॥

औदुम्बरत्वादि वैकृतं प्राकृतखादिरत्वादीनां पूर्वन्यायेनैव निवर्तकं; न च द्वयोर्यूपयोस्समुच्चयेन बन्धनसाधनता, नैरपेक्ष्येण साधनत्वविधानात् प्राकृतयूपोद्देशेनौदुम्बरत्वमात्रविधानेन यूपद्वयाप्रसक्तेश्च। सिद्ध एव चायमर्थश्शिष्यहितार्थमुच्यत इति वेदितव्यम्।

---

(१७)—विकृतौ त्वनियमः स्यात्पृषदाज्यवत् ग्रहणस्य गुणार्थत्वात् उभयोश्च प्रदिष्टत्वात् गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥ विरोधित्वाच्च लोकवत् ॥ ६६ ॥ क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥ विरोधिनां च तच्छ्रुतावशब्दत्वाद्विकल्पस्स्यात् ॥ ६८ ॥ पृषदाज्ये समुच्चयात् ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥ यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ॥ ७० ॥ क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ॥७१

यत्र प्राकृतानां वैकल्पिकानां व्रीहियवादीनां कर्मानुत्पत्तिवाक्ये अन्यतरस्य शुक्लादिगुणयुक्तस्य श्रवणं तत्र द्रव्योद्देशेन गुणमात्रविधानात् द्रव्यांशे विधानाभावेन नेतरद्रव्यबाधः। यत्र तूत्पत्तिवाक्ये एव तच्छ्रवणं यथा 'सोमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणाम्' इत्यादौ तत्रातिदेशप्राप्तव्रीह्यनुवादेन शुक्लगुणविधौ यागादेरपि विधेयत्वेन वैशिष्ट्याभावाद्वाक्यभेदापत्तेर्व्रीह्यादेरप्यतिदेशप्राप्तस्य विशिष्टविधिसन्दष्टतया प्राप्तस्यापि विशेषणस्य विशिष्टविधिमात्रविषयत्वावश्यंभावेन विधेयत्वात्तेन यवव्यावृत्त्युपपत्तिः।

वस्तुतस्तु—एतादृशस्थले अतिदेशप्राप्तेः पूर्वमेवैतद्विधिप्रवृत्त्यङ्गीकारात् व्रीहीणामपि फलतो नियमविधिविषयतया यवव्यावृत्तिसिद्धिः।

---

(१८)—यथाश्रुतीति चेत् ॥ ७२ ॥ न चोदनैकत्वात् ॥ ७३ ॥

---

### यथा श्रुतीतिचेत्।

यद्यप्यत्र 'षड्विंशतिरित्येव ब्रूयात्, इत्यत्रैव एवकारार्थेतरनिवृत्तेरेव विधिः प्रतीयते न त्ववदानोद्देशेन पञ्चत्वविधिः, न वा पञ्चत्वविशिष्टावदानविधिरिति, पञ्चावदानं च वपायामुताङ्गेष्वपीति विशेषचिन्ता न युक्ता; तथापि तत्रातिदेशतः समस्यवचनस्य आम्नानाच्च षड्विंशतिवचनस्य च प्राप्तौ एवकारार्थविधानेन इतरनिवृत्तौ जातायां षड्विंशतिपदस्यैव प्राप्तेरनुवादत्वसम्भवेपि इह एकस्य चतुरवत्तस्यैवातिदेशतः प्राप्तेः तस्य निवृत्तिकरणेन

दैक्षे पशौ 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति श्रुतं पञ्चावदानं वपायामेव उताङ्गेष्वपीति चिन्तायां—

नात्रावदानानुवादेन पञ्चत्वविधिः, तथात्वे हृदयादिवाक्यैस्तेषामेवावदानसम्बन्धेन हविष्ट्वाद्वपाया इतराङ्गवत्तदभावेनावदानाप्राप्तेर्वपाश्रवणस्यानुवादत्वानुपपत्तेः। एकस्मिन् पदे उद्देश्यविधेयभावाङ्गीकारे एकप्रसरताभङ्गापत्तेश्च। अतोऽत्रावदानमेव हृदयादिवाक्य इव वपोद्देशेन हविष्ट्वसिद्ध्यर्थं विधीयते पञ्चत्वं तु जामदग्न्यादीनामतिदेशेनैव प्राप्तत्वात्पाक्षिकानुवादः।

वस्तुतस्तु—एवकारश्रवणात 'यद्यपि चतुरवत्ती' इत्यनुवादाच्च जामदग्न्याजामदग्न्यसाधारण्येन नित्यत्वसिद्ध्यर्थं पञ्चत्वस्यापि विधिप्रतीतेर्विशिष्टविधिरेवायम्। तथाऽपि चमसाधिकरणन्यायेन वपाभ्यासापूर्वसाधनत्वस्यैव लक्षणान्नाङ्गेषु पञ्चावदानप्रसक्तिः।

न चाङ्गेषु तत्प्रसक्त्यभावे 'तानि द्विर्द्विरवद्यति' इति वाक्यस्यैव वैयर्थ्यापत्तेस्तत्परिहारार्थं वपाग्रहणस्यैवैकस्य प्रकृतहविर्मात्रोपलक्षणत्वमिति वाच्यं, वपाग्रहणस्योपलक्षणत्वाभावेऽपि अङ्गेषु जामदग्न्यपक्षे पञ्चावदानप्रसक्तेस्तत्सम्पादकतया प्राप्तत्रित्वबाधेन द्वित्वविध्युपपत्तेर्वैयर्थ्याभावादिति प्राप्ते—

---

पञ्चावत्तस्यार्थात्प्राप्त्यसम्भवेनानुवादानुपपत्तेरगत्या पञ्चावत्तैव विधेया; एवकारार्थस्तु[1] चतुरवत्तनिवृत्तिमादायानुवाद इत्यभिप्रेत्याह—**श्रुतं पञ्चावदानमिति**। अत्र भाष्यकारेण अवदानानुवादेन पञ्चत्वविधानम्; तत्र वपाया विशेषणत्वे विशिष्टोद्देशापत्तेः वपाया ग्रहैकत्ववत् अविवक्षितत्वात् अङ्गावदाने पञ्चत्वविधिरिति सिद्धान्तितम्; तत्पूर्वपक्षे दूषयति—**नात्रेति**। एवं वाक्यार्थाङ्गीकारेणापि पूर्वपक्षमाह—**तथापीति**। यत्तु वपाग्रहणस्यात्र विवक्षितत्वे हृदयाद्यवदानेषु चतुरवत्तस्यैव प्राप्तौ तत्सम्पादकतया "द्विर्हविषोऽवद्यति" इति द्विरवदानस्यातिदेशत एव प्राप्तेः पुनः "तानि द्विर्द्विरवद्यति" इति द्विरवदानविधिर्व्यर्थ एव भवेदिति वपाग्रहणमुपलक्षणमेव। तदाहि पञ्चत्वसम्पादनाय अतिदेशतः त्र्यवदानं प्राप्तं बाधितु द्विरवदाननियमविधिः सार्थकः, उपस्तरणाभिघारणयोरन्यतरस्य वृद्ध्या च पञ्चत्वसम्पादनमिति **सिद्धान्तबीजम्**; तदनूद्य दूषयति—**न चाङ्गेष्विति**। अत्र च सिद्धान्ते वपापदस्योपलक्षणत्वं प्राचीनोक्तं **प्रकाशकारैरेवं** व्याख्यातम्—वपापदेन कियन्तोऽवयवा लक्ष्यन्ते? इत्यपेक्षया हृदयादिवाक्यैः विशेषत एकादशान्वयेऽवदानस्य कृते तेषामेव अवदेयतासिद्धिरिति। तत्र यदि येषां प्राकृताव-

---

1. र्थस्य च

पञ्चावदानवाक्ये **एकप्रसरताभङ्गपरिहारार्थं पञ्चत्वविशिष्टावदान्तरस्य प्राकृतकार्यापन्नस्य वपोद्देशेन विधानं अतिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा प्राकृतावदानस्यैव पञ्चत्वविशिष्टस्य वपोद्देशेन विधानम्।**

**अत एव द्वितीयपक्षे पञ्चत्वांशे** नित्यत्वसिद्ध्यर्थं **विधिः। अवदानांशे च हविष्ट्वसिद्ध्यर्थं एकप्रसरताभङ्गपरिहारार्थं चेति द्रष्टव्यम्। उभयथाऽप्यवदानांशेऽ**तिदेशप्रतिबन्धा**दुपस्थितत्वाच्च हृदयादिवाक्येषु वपासंस्कारकस्यैवावदानस्य हृदयाद्युद्देशेत विधिः। न च वैपरीत्यमेव किं न स्यादिति वाच्यं, अवदानानुवादेन पञ्चत्वविधावेकप्रसरताभङ्गादेरेव नियामकत्वात्।**

**न चोत्पत्तिशिष्टसंस्कार्यावरोधे संस्कार्यान्तरस्य** निवेशायोगः। **सोमसंस्कारार्थस्यैवाभिषवभक्षादेः पूतीकफलचमसाद्यर्थत्ववत् प्रधानभूतसंस्कार्यान्तरानुरोधेन विनियोगान्तरकरणे बाधकाभावात्। संस्कार्यस्योत्पत्त्यनन्वयित्वेन कर्मभेदासाधकत्वात्। अतश्च वपासंस्कारकावदानस्यैव हृदयाद्युद्देशेन विधानात् तस्य च पञ्चत्वविशिष्टतया हृदयादिष्वपि** नित्यं पञ्चावदानप्राप्तिः।

---

दानसम्बन्धो विशिष्य विहितः तदवयवलक्षणायां एकादशानामेव जहत्स्वार्थलक्षणया लक्ष्यतापत्तौ वपायां पञ्चावत्ततानापत्तिः। प्राकृतावदानकार्यापन्नावदानान्तरस्यैव हृदयादिवाक्येषु विधेः स्वयमेवाङ्गीकृतत्वेन प्राकृतावदानविधानानुपपत्तिश्च। **यदा तु** वपापदेन अजहत्स्वार्थलक्षणया वपासहिताङ्गान्तराणि लक्ष्यते, तत्राङ्गान्तरलक्षणायां हृदयादिवाक्यानि विशेषसमर्पकाणीत्युच्यते **तदा** 'हृदय जिह्वा वक्ष' इत्येतावतापि विशेषसमर्पणोपपत्तेः अवद्यतिपदोपादानवैयर्थ्यम्। अतोऽवश्यं वपावाक्यविहितावदानस्यैव हृदयाद्युद्देशेन विनियोगान्तरकरणस्य सर्वैरप्यङ्गीकरणीयत्वात् तेनैव वपाया अग्रिमहृदयाद्यङ्गेष्वपि पञ्चावत्तप्राप्तिसम्भवात् किमिति वपावाक्ये वपापदे लक्षणाश्रयणमित्यभिप्रेत्य वाक्यद्वयेपि विधेयार्थं विनैव लक्षणां दर्शयति—**पञ्चावदानवाक्य इति। नित्यत्वसिद्ध्यर्थमिति।** पञ्चत्वविध्यभावे प्राकृतावदाने जामदग्न्यानामेव पञ्चत्वम्; न त्वजामदग्न्यानामपि तत्प्राप्नुयात; अतः सर्वेषामपि नित्यं तत्प्राप्त्यर्थं तद्विधिरित्यर्थः। **अतिदेशप्रतिबन्धादिति।** तत्प्रतिबन्धे हि सति प्राकृतावदानाप्राप्तेः तस्यैव न हृदयाद्युद्देशेन पुनर्विधिः सम्भवतीत्यर्थः। **निवेशायोग इति।** तथाचावदानान्तरतापत्तौ पञ्चावत्ततानापत्तिरित्यर्थः। **नित्यं पञ्चावदानप्राप्तिरिति।** एवं स्थिते येषां जामदग्न्यानां पञ्चत्वसम्पादकत्रित्वं प्राप्तं तदबाधेनाजामदग्न्यानामपेक्षितपञ्चत्वसम्पादकत्वेनैव 'द्विर्द्विरवद्यति' इति वाक्यस्य प्रवृत्त्युपपत्तेः, अजामदग्न्यानामेव एकादशावदानेषु द्वित्वं जामदग्न्यानान्तु यथाप्राप्त त्रित्वमेवेत्यजामदग्न्यानां पञ्चत्वसम्पादकतया प्राप्तत्रित्वबाधः फलतीत्यभिप्रेत्याह—

तत्प्रकारा **परं** तत्र तत्र **व्यवस्थिताः**। **प्रकारबोधकवाक्येषु** वपादितत्तद्द्रव्योद्देशेनैव **तत्प्रकार-विधानात् अवदानस्य च प्रकरणप्राप्तस्यानुवादादिति कौस्तुभे विस्तरः**।

**इति श्रीखण्डदेवविरचितायां**
**भाट्टदीपिकायां दशम-**
**स्याध्यायस्य**
**सप्तमः**
**पादः**

---

**तत्प्रकारा इति। तत्र तत्रेति।** यथा वपायाः कृत्स्नाया एवावदानविधानात् द्विमध्यपूर्वार्धोपादानकत्वबाधेन हिरण्यशकलावदानप्रकारः पञ्चत्वसम्पत्तये कल्पसूत्रे व्यवस्थितः, तथा हृदयादिष्वपि स एव द्वित्वमध्यपूर्वार्धोपादानकत्वाबाधेनापि हिरण्यशकलावदानप्रकारो व्यवस्थित इत्यर्थः।

एतेन **शास्त्रदीपिकायां** अङ्गेषु द्व्यवदानवचनात् उपस्तरणाभिघारणयोरन्यतरवृद्ध्या पञ्चत्वसम्पत्तिरुक्ता सामान्यसिद्धार्थकथनमात्रपरत्वेनैव कथञ्चिन्नेया। **तन्त्ररत्ने** वपायामिव हिरण्यशकलेनैव पञ्चत्वसम्पत्तेरुक्तत्वेन उपस्तरणादिवृद्धौ मानाभावात्। तथा याज्ञिकाचाराभावाच्च। अतएव कृष्णलपेटिकायां (१०-२-२) वपाहृदयादौ कल्पसूत्रोक्तैवावदानवृद्धिरुक्ता **पूज्यपादैः**। **वपादितत्तद्द्रव्योद्देशेनेति।** 'कृत्स्नां वपामवद्यति' इति वाक्ये अवदानाश्रितसकृत्त्वं वपोद्देशेन विधीयते, तदा वपावदाने द्वित्वमध्यापादानकत्वस्य अर्थप्राप्तत्रित्वस्यापि च बाध एव। एवं तानि द्विरिति वाक्ये अवदानाश्रितद्वित्वस्य तत्पदोपात्तहृदयाद्येकादशाङ्गोद्देशेन विधानात त्रित्वमात्रस्यैवार्थतः प्राप्तस्य बाधः, नतु मध्यापादानकत्वस्यापि। वपावत् तात्पर्यग्राहकाभावात्। यद्यपि वपोद्देशेनैव प्रकारविधान तथापि वपागतपञ्चावदानस्यैव विनियोगान्तरात् तदीयपञ्चावदानप्रकारप्राप्तौ अवदाननाशे तद्बाधेपि अविरोधितया हिरण्यशकलोपादानं, तदपि पञ्चत्वाविरोधाय एकमेव न तु द्वयम् षडवत्ततापत्तेः, अत एव हिरण्यशकलेनेत्येकवचनोपादनं **तन्त्ररत्ने**। **याज्ञिकानान्तु** तद्द्वयप्रक्षेपोऽयुक्त एव, वाचनिको चेति ध्येयम्। अस्तु अवयववत् हिरण्यशकलमिति **कातीयसूत्रे** अङ्गेषु द्व्यवदानानन्तरमेकस्यैव हिरण्यशकलस्य

# अथ दशमाध्यायस्य अष्टमः पादः

(१)—प्रतिषेधः प्रदेशोऽनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वात् विकल्पस्स्यात् ॥ अर्थप्राप्तवदिति चेत् ॥ २ ॥ न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥ अपि तु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात् ॥ ४ ॥

तदेवमर्थलोपात्प्रत्याम्नानाच्च बाधो निरूपितः प्रतिषेधादिदानीं निरूप्यते । महापितृयज्ञे अतिदेशप्राप्तस्य होतृवरणस्य प्रतिषेधश्श्रुतः 'न होतारं वृणीते' इति । तथा अनारभ्याधीतस्य 'आश्रावयेति चतुरक्षरं, अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः,' इति

---

विधानात् तत्प्राप्तिरिति विशेषः पशुसोमाधिकरणे कौस्तुभे सूचित इत्यर्थः ।

इति श्रीशम्भुभट्टविरचितायां
भाट्टदीपिकाप्रभावल्यां
दशमाध्यायस्य
सप्तमः
पादः

---

अथाष्टमः पादः

प्रतिषेधः

**इदानीमिति** । त्रिप्रकारे बाधे निरूपयितव्ये सति द्वयोर्निरूपणे कृते उर्वरितस्यायमेवावसर इति स निरूप्यत इत्यर्थः । **महापितृयज्ञ इति** । साकमेधाख्यचातुर्मास्यपर्वान्तर्गता पित्र्येष्टिः महापितृयज्ञः । वाक्यद्वयेपि करिष्यमाणस्य प्रतिषेधपर्युदासविचारस्य अध्या-

यज्ञमात्रोद्देशेन विहितस्य येयजामहस्य 'नानूयाजेषु येयजामहं करोति,' इति प्रतिषेधश्श्रुतः तयोः किं नित्यं होतृवरणादिबाधकत्वं उत विकल्पेनेति चिन्तायां—

न तावदयं होतृवरणव्यतिरिक्तं प्रकृतिवत्कुर्यात् अनूयाजव्यतिरिक्तेषु च यज्ञेषु येयजामहः कर्तव्यः इत्येवंविधः पर्युदासः, अत्यन्ताभाववाचिनो नञः प्रधानभूतभावनान्वयसम्भवे अन्योन्याभाववाचित्वमङ्गीकृत्य गुणभूतधात्वर्थान्वयाङ्गीकारे प्रमाणाभावात्। अन्योन्याभाववाचकस्य नञस्तद्वति पदार्थान्तरे लक्षणापत्तेश्च। अतः प्रतिषेध एवायम्। तस्य च प्राप्तिसापेक्षत्वात् प्राप्तेश्च प्रकृते शास्त्रीयत्वाच्छास्त्रप्राप्तस्य चात्यन्तं बाधायोगादगत्या ग्रहणाग्रहणवद्विकल्पः।

ननु प्रतिषेधस्य प्राप्तिसापेक्षत्वे किं बीजम्? न तावदभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वात् प्रतियोगिप्राप्त्यर्थं तत्, येयजामहादिरूपस्य प्रतियोगिनोऽनूयाजादिषु प्रसिद्ध्यभावेऽपि यागान्तरेषु प्रसिद्धत्वात्। न ह्यनुयोगिनि प्रतियोगिप्रसिद्धिरभावबोधे कारणं, ह्रदे बह्निप्रसिद्ध्यभावेऽपि ह्रदे वह्निर्नास्तीति बोधस्यानुभविकत्वात्। अत एवोद्देश्यप्रसिद्ध्यर्थमेव प्राप्तिसापेक्षत्वमित्यप्यपास्तम्, निषेधाधिकारे प्रतियोगिनमुद्दिश्यानुयोगिवृत्तिनञर्थस्यैव विधेयत्वात्॥

---

यार्थबाधोपयोगितां दर्शयितुं बाधविषयमेव संशयमाह— **तयोरिति**। सिद्धान्त्यभिमतं पर्युदास दूषयति—**न तावदिति**। **धात्वर्थान्वयेति**। धात्वर्थेन सहान्वय इत्यर्थः। एतच्चोपलक्षणम्। यथैव होतृवाक्ये वरणप्रतियोगिकान्योन्याभावबोधनेन धात्वर्थेन सह नञः सम्बन्धः, एवमनूयाजपदेनापीत्युभयान्वयस्य समत्वात्। **लक्षणापत्तेश्चेति**। होतृवाक्ये अन्योन्याभाववाचकस्य नञः तदनुयोगिपदार्थान्तरे लक्षणायां वरणस्य धात्वर्थस्य एकदेशेऽन्योन्याभावेऽन्वयासम्भवात् नञ्धातुभ्यां यथा वरणभिन्नं लक्षणीयं, तथैव द्वितीयान्तहोतृपदार्थस्य कर्मत्वेन धात्वर्थैकदेशभूतेपि अन्वयानुपपत्त्या होतृकर्मकवरणभिन्नं लक्षणीयमिति पदत्रये लक्षणा, अनूयाजवाक्ये तु नञनूयाजपदाभ्यां अनूयाजभिन्नमिति पदद्वये एव लक्षणेति सूचयितुं सामान्यतस्तद्वदर्थान्तरे इत्युक्तम्। तत्र नञ इत्युपलक्षण पदान्तरस्यापि। शास्त्रविहितप्रतिषेधे विकल्पो न केवलमिहैव पूर्वपक्षिण इष्टः येन सर्वथा सिद्धान्ते दूषणीय एव भवेत्। सिद्धान्तेपि उत्तराधिकरणेषु तदङ्गीकारात्। अतः सिद्धान्तेपीष्टस्य विकल्पस्य अत्रैव पूर्वपक्षेऽनुपपत्तिनिरासेनोपपत्तिं दर्शयितुमाशङ्कते— **नन्विति**। **नह्यनुयोगिनीति**। यत्र यदभावः साध्यते स अनुयोगिपदस्यार्थः। **उद्देश्यप्रसिद्ध्यर्थमेवेति**। अनूयाजाधिकरणयेयजामहोद्देशेन पित्र्येष्टिसम्बन्धिहोतृवरणोद्देशेन चाभावमात्रविधाने सति उद्देश्यप्रसिद्ध्यर्थमित्यर्थः। **निषेधाधिकार इति**। ह्रदे वह्निर्नास्तीत्यादौ वह्निमुद्दिश्यैव ह्रदाधिकरणत्वनिषेधबोधनवदिहापि येयजामहादौ अनूयाजाधिकरणत्वाभावबोधने येयजामहप्राप्तेरनू-

न च तथाऽपि प्रसक्तपुरुषनिवृत्तिप्रयोजनकत्वात् निषेधस्य प्रसक्त्यभावे वैयर्थ्यापत्तेस्तत्परिहारार्थं प्राप्त्यपेक्षत्वमिति वाच्य, निषेधाभावे सामान्यशास्त्रेण भ्रान्त्या आहवनीयशास्त्रेणेव पदहोमे आहवनीयस्य अनूयाजादिषु येयजामहादीनां प्रसक्तत्वात्। अतश्च यथैव पदशास्त्रं सामान्यशास्त्रस्य तात्पर्यग्राहकं सत् तस्य तद्व्यतिरिक्तविषयतां कल्पयति एव निषेधशास्त्रमपि सामान्यशास्त्रस्य तद्व्यतिरिक्तविषयत्वे तात्पर्यग्राहकत्वादेव सार्थकम्॥

न च सामान्यशास्त्रानालोचनेऽपि पदशास्त्रस्य पदविधायकत्ववत् निषेधशास्त्रस्य प्रसक्त्यभावेन शाब्दबोधाजनकत्वम्। पदशाब्दबोधवदेव प्रतियोगिप्रसिद्धिमात्रेणानुयोगिवृत्त्यभावविषयकशाब्दबोधोपपत्तेः। अतश्च भ्रान्तिप्राप्तस्यापि निषेधोपपत्तेः न प्राप्तेश्शास्त्रीयत्वेन विकल्प इति चेत्—

न, सकलकारकान्वितभावनारूपाख्यातार्थ एव प्रतियोगितासंसर्गेण नञर्थाभावस्योत्सर्गेणान्वयादनूयाजाधिकरणकयेयजामहानुकूलकृतेरेव प्रतियोगितया तत्प्रसिद्धिं विना शाब्दबोधाजनकत्वेनैवास्य तत्प्राप्तिसापेक्षत्वात्। न हि यत्नमात्रस्य अभावप्रतियोगिता सम्भवति। अतश्च कारकविशिष्टायास्तत्त्वावश्यंभावे विनिगमनाविरहात् सर्वविशिष्टाया एव तत्।

अत एव न येयजामहमात्रस्यैव प्रतियोगित्व, नञः प्रधानभूताख्यातार्थान्वयसम्भवे गुणभूततदन्वयस्यान्याय्यत्वात्। अत एव यत्र 'ह्रदे वह्निर्नास्ति' 'नान्तरिक्षे न दिवि' इत्यादौ तद्बाधस्तत्रागत्या वह्न्यादेरेव प्रतियोगित्वमङ्गीकृत्य तदुद्देशेनैवानुयोगिवृत्त्यभावविधानम्। यत्र तु न बाधस्तत्र निरुक्तकृतेरेव प्रतियोगित्वात् तदुद्देशेनैवाभावमात्रविधिः। अत एव प्रतियोगिप्रसिद्ध्यर्थमिवोद्देश्यप्रसिद्ध्यर्थमपि प्राप्तिसापेक्षता, निषेधस्य तद्व्यतिरेकेण शाब्दबोधस्यैवाजननात्। सा च प्राप्तिः क्वचिद्रागतः क्वचिच्छास्त्रतः। आद्या 'न कलञ्जं भक्षयेत्' इत्यादौ। अन्त्या प्रकृते। सा च प्रमारूपेवेति युक्तो विकल्पः।

---

याजवृत्तितानपेक्षणादित्यर्थः। ननु यत्र क्वचित्सिद्धस्य येयजामहस्य प्रतियोगिनोऽनूयाजेषु निषेधो व्यर्थः, तस्य स्वत एव सिद्धत्वात्। अतोऽनूयाजवृत्तित्वेनैव प्रसक्तस्य तस्य निषेधे प्राप्त्यपेक्षत्वमावश्यकमित्याशङ्कामनूद्य दूषयति—नचेति। सार्थकमिति। यत्र प्रत्यक्षमपि सामान्यशास्त्रं तत्राप्येतद्विशेषशास्त्रालोचनेन तद्व्यतिरिक्ततयैव व्यवतिष्ठते, तत्र किमु वक्तव्यं यत्र होतृवरणे सामान्यशास्त्रमप्रत्यक्षं कल्प्यं तत्र शरन्यायेन विशेषशास्त्रविषयातिरिक्ततयैवेत्यत्रेत्यर्थः। येयजामहानुद्दिश्य अनूयाजाद्यधिकरणाभावविधानं पूर्वपक्ष्युक्तं निराकर्तुमुपक्रमते —नेति। सर्वविशिष्टाया एवेति। यथैव येयजामहविशिष्टायाः तथैवाविशेषादनूयाजाधिकरणयेयजामहविशिष्टाया इत्यर्थः। न कलञ्जं भक्षयेदित्यादाविति। कलञ्जभक्षणं

न हि भ्रमात्मकप्रसिद्धिमादाय तत्सम्भवः। निषेधशास्त्रानालोचने सामान्यशास्त्रमात्रालोचनेन भ्रमसम्भवेऽपि निषेधशास्त्रस्यैव प्रथमालोचने विशेषदर्शनसत्त्वेन सामान्यशास्त्रतो भ्रमानुपपत्तेः, वस्तुतस्तादृशप्रतियोगिनोऽप्रसिद्ध्या तदुद्देश्यकतदभावप्रमानुपपत्तेश्च।

न च यस्य सामान्यशास्त्रमात्रालोचनेन भ्रमात्मकेष्टसाधनताज्ञानादनूयाजेषु येयजामहकृतिरुत्पन्ना तत्पुरुषीयकृतेरेव प्रसिद्धाया अनूयाजाधिकरणकयेयजामहकृतित्वेन प्रतियोगित्वात् तदभावविषयकप्रमोपपत्तिरिति वाच्यं, एतदात्मनि तत्पुरुषीयकृत्यभावस्य स्वतस्सिद्धत्वेन तदंशे विधिवैयर्थ्यात्, पुरुषान्तरीयकृत्यभावस्य एतत्पुरुषीयनिवारणाप्रयोज्यत्वानुपपत्तेश्च। अभावे तत्प्रयोज्यत्वं हि निवारणानुमेयानिष्टसाधनताज्ञानस्याभावप्रतियोगिभूतकृतिसामग्रीविघटकत्वम्।

न चान्यदीयकृतिसामग्री बलवदनिष्टानुबन्धित्वज्ञानाभावरूपा अन्यदीयानिष्टसाधनत्वज्ञानाद्विघट्यते। अतश्चैतदात्मनिष्ठकृतिसामग्र्येव एतदात्मनिष्ठानुबन्धित्वज्ञानान्निवर्तनीया। सा च निषेधस्य प्रथमालोचने विशेषदर्शनसत्त्वात् भ्रमात्मिका न सम्भवति। तज्जन्यकृतिस्तु प्रतियोगिभूता अप्रसिद्धैव।

अतोऽवश्यं निषेधशास्त्रस्य प्रथमालोचनेऽपि तदपेक्षितप्रतियोगिप्रसिद्ध्यर्थं सामान्यशास्त्रमालोच्यैवानूयाजाधिकरणकयेयजामहानुकूलकृतित्वावच्छिन्नकृतेरेव सामान्यशास्त्रप्रमितायाः प्रतियोगितामङ्गीकृत्य निषेधशास्त्रार्थावधारणमित्यङ्गीकर्तव्यं, अतश्च सामान्यशास्त्रप्रमितस्याप्यत्यन्तं बाधायोगाद्विकल्पो युक्त एव। तदा हि सामान्यशास्त्रेण येयजामहस्य फलभूमार्थिनेऽनूयाजसाद्गुण्यजनकत्वानुमानात् निषेधेन च फलभूमार्थित्वाभावे येयजामहाभावेऽपीतराङ्गैस्साद्गुण्यजनकत्वस्यानुमानादुभयोर्ग्रहणाग्रहणवदविरोधः।

रागप्राप्तनिषेधे तु रागेण कळञ्जभक्षणादाविष्टसाधनत्वावगमेन प्रसक्तायाः कळञ्जभक्षणानुकूलकृतेरभावे निषेधशास्त्रेण निवारणाविषयत्वेनावगतेऽर्थात्तद्विषयस्य कळञ्ज-

---

कदाचित्प्राप्तं, कदाचित्तद्वर्जनमपि रागतः। तत्र नानेन प्राप्तस्य प्रतिषेधः क्रियते; तन्निषेधस्य पक्षप्राप्तवर्जनेनैव सिद्धेः। किन्तु यःपक्षे वर्जनायोगःप्राप्तःतस्य तद्व्यावृत्तिरिति, वर्जननियमविधिरित्यर्थात् कलञ्जभक्षणव्यावृत्तिः फलम्, अस्तु वा रागतः प्राप्तस्यैव निषेधविधिः, तथापि तस्या भ्रमरूपत्वमपि शक्यं कल्पयितुम्; प्रकृते तु शास्त्रात्प्राप्तिरेव नियता न तद्वर्जनम्। अतः तस्याः प्रमारूपत्वात् सर्वथा बाधे शास्त्रप्रामाण्यहानेः पक्षे बाधमङ्गीकृत्य विकल्प एव युक्त इत्यर्थः। तादृशप्रतियोगिन इति। अनूयाजाधिकरणयेयजामहरूप-

भक्षणादेरनिष्टसाधनत्वाक्षेपात् नित्यं तद्भक्षणेऽनिष्टोत्पत्तिर्नित्यं च अनिष्टक्षेपात् तन्निवृत्तिरिति वैषम्यं, अतो होतृवरणयेयजामहादीनां महापितृयज्ञादिषु न नित्यं बाध इति प्राप्ते—

यत एव प्रतिषेधपक्षे विकल्पोऽष्टदोषदुष्टोऽत एव पर्युदासाङ्गीकरणम्। पर्युदासत्वं चाख्यातार्थव्यतिरिक्तप्रतियोगिताकाभावबोधकवाक्यत्वं, न तु नञः आख्यातातिरिक्तान्वयित्वं 'न होतारं वृणीते' इत्यत्र होतृवरणव्यतिरिक्तत्वरूपस्य नञर्थस्याख्यातार्थ एवान्वयात्। न च तत्रापि 'न होतारं वृणीते' इत्यत्र नञर्थस्यात्यन्ताभावस्यैव होतृवरणे प्रकारत्वेनान्वयः। नञोऽन्यान्वयस्य व्युत्पन्नत्वेऽपि अभावप्रतियोगिभूतस्य वरणस्य कृतिसाध्यत्वाभावेन भावनान्वयानुपपत्तेः। अत एव न तस्य विशेष्यत्वमपि, धात्वर्थस्य नञर्थे अन्वयाव्युत्पत्तेश्च। अतो नञोऽन्योन्याभाववाचकत्वस्यापि सत्त्वात् तत्परत्वमेवाङ्गीकर्तव्यम्। तत्रापि नञ्धातुभ्यां लक्षणया वरणव्यतिरिक्तपदार्थजातस्यैव बोधनात्तस्यैवाख्यातार्थान्वयः॥

यद्यपि च 'तदन्यतद्विरुद्धतदभावेषु नञः' इति प्रसिद्धरन्योन्याभाववत्यपि शक्तिः, तथाऽपि धात्वर्थस्य तत्रान्वयाव्युत्पत्तेर्लक्षणा आवश्यिक्येव। सा च विकल्पापेक्षया न दोषः। एवं नानूयाजेष्वित्यत्रापि॥

तत्र च यद्यपि नञ्येयजामहपदाभ्यां येयजामहव्यतिरिक्ताङ्गजातस्य लक्षणामङ्गीकृत्य अनूयाजोद्देशेन तद्विधिरूपः पर्युदासोऽपि सम्भाव्यते। तथाऽपि येयजामहव्यतिरिक्तत्वस्य विशेष्यापेक्षायां विशेष्यभूतानामङ्गानामनारभ्यविधावनुपस्थितत्वात् नासावङ्गीक्रियते। अपि तु नञनूयाजपदाभ्यामेवानूयाजव्यतिरिक्तं लक्षयित्वा तस्य सप्तम्योद्देश्यत्वाङ्गी-

---

प्रतियोग्यप्रसिद्धौ तदभावप्रमानुपपत्तिः; ह्रदादिवाक्ये तु पूर्वोक्तरीत्या वह्निमुद्दिश्यैव ह्रदवृत्त्यभावविधानात न प्रमात्वक्षतिरित्यर्थः। अग्रिमो ग्रन्थः सर्वोऽपि स्पष्टार्थः। **अत एव न तस्येति।** नञर्थस्य धात्वर्थं प्रति विशेष्यत्वमित्यपि न; तथात्वे वरणाभावस्य कृतिविषयत्वाभावेन कृतावन्वयानुपपत्तेरित्यर्थः। **तत्रान्वयाव्युत्पत्तेरिति।** अन्योन्याभावस्यैकदेशत्वेन भावनान्वयाव्युत्पत्तेश्च, तत्र वरणस्यान्वयानुपपत्तेरित्यर्थः। **विकल्पापेक्षयेति।** न केवलं विकल्पे अष्टदोषग्रस्तत्वम्, अपितु द्विरदृष्टकल्पनापि इति, लक्षणा तदपेक्षया न दोष इत्यर्थः। **अनारभ्य विधाविति।** 'सप्तदशः प्रजापतिर्यज्ञमन्वायत्त' इत्यनारभ्य विधावित्यर्थः। **नासावङ्गीक्रियत इति।** यद्यप्युत्तराधिकरणवक्ष्यमाणरीत्या विशेष्यभूताङ्गविशेषावगमस्य प्रमाणान्तराधीनत्वेपि प्रकृतवाक्यस्यानुगतधर्मावच्छिन्नरूपेण सम्भवत्येव बोधकत्वमिति न तथाविधपर्युदासाङ्गीकरणे बाधकं, तथापि उभयथा सम्भवति पर्युदासे यत्रैव विशेष्योपस्थितिः (प्राग्भवति) तत्रैव

**कारात् तदुद्देशेन** येयजामहविधिरूप एव, अव्यवहितत्वात्, **तद्विशेष्यस्य यागान्तरस्य सामान्यविधिनोपस्थितत्वात्।**

**अत एवोभयत्रापि पर्युदासे होतृवरणव्यतिरिक्तत्वेनानूयाजभिन्नत्वेनैव च यथाक्रमं** विधेयता **उद्देश्यता च। न तु प्रयाजत्वादिना, तद्रूपप्रवेशे गौरवात्। तस्य सामान्यशास्त्रैकवाक्यतयैव लाभाच्च।** अत एव **नात्र** पदैकवाक्यता। **अपि तु 'पुरोडाशं चतुर्धा करोति' इत्यादिवद्वाक्यैकवाक्यतैव।** अत एव तन्मात्र**सङ्कोचार्थादुपसंहारात्तदन्यसङ्कोचार्थस्य पर्युदासस्य भेद इतिन्यायसुधाकारः।**

---

तदङ्गीकारेण वाक्यार्थसम्भवे किमिति क्लिष्टकल्पनया तदाश्रयणं कर्तव्यमित्यर्थः। **येयजामहविधिरूप एवेति।** एतेनानूयाजव्यतिरिक्तयज्ञे येयजामहस्य सामान्यविधित एव प्राप्तेः न तस्य विधानम्। अपितु यद्येयजामह करोति तदनूयाजव्यतिरिक्तेष्वित्येव वचनव्यक्तिमाश्रित्य येयजामहानुवादेन अनूयाजव्यतिरिक्तविषयत्व विधीयत इति तन्त्ररत्नानुसारिन्यायप्रकाशोक्तमपास्तम्। प्राप्तस्यापि अनूयाजव्यावृत्तिफलकत्वेन पुनर्विधाने बाधकाभावात्। सामान्यवाक्ये यावत्सामान्यपरेण यज्ञपदेन विशेषलक्षणया विशेषा उद्देश्यत्वेन स्वीक्रियन्ते तावदनेन पर्युदासवाक्ये अनूयाजव्यतिरिक्तत्वेन तेषु समर्पितेषु तद्गतस्य पूर्वप्रतीतस्योद्देश्य[त्व] त्यागे मानाभावाच्च। अत एव 'आग्नेयं चतुर्धा करोति' इति वाक्ये आग्नेयपदस्य विशेष्यसमर्पकतया उद्देश्यपरत्वमेवाङ्गीकृतं तृतीयप्रथमपादान्त्ये। अतो येयजामहविधिरूप एव पर्युदासो युक्त इत्यर्थः। **उपस्थितत्वादिति। यद्यपि** यज्ञस्येव येयजामहाक्षरव्यतिरिक्तानां यजेत्यादिद्वादशाक्षराणामपि तत्रोपादानादुपस्थितिः समा, **तथापि** आश्रावयेति चतुरक्षरमित्यादेः सामान्यविधिगतसप्तदशसङ्ख्यायोगादवयवभूताक्षरविशेषसमर्पकतयाऽर्थवादरूपत्वात् "एष वै सप्तदश" इति विधिना यज्ञोद्देशेन सप्तदशाक्षराणां विधौ येयजामहव्यतिरिक्तानि सप्तदशाक्षराणीत्येवमन्वयासम्भवेन न तेषां विशेष्यत्वसम्भव इत्यर्थः। **विधेयतयेति।** प्रकृतिवच्छब्देन विधेयभूतविशेष्यस्यैवोक्तेः होतृवरणातिरिक्तस्य विधेयत्वमेव न तु नञ्होतृपदाभ्यां लक्षणया होतृभिन्नस्य अनूयाजभिन्नयज्ञस्येवोद्देश्यतेत्यर्थः। **पदैकवाक्यतेति।** आख्यातद्वयसत्वेन पृथग्वाक्यत्वस्यैव प्रतीत्या पदरूपत्वाभावादित्यर्थः। ननु सामान्यतः प्राप्तस्य येयजामहस्य नानूयाजेष्वित्यनेन अनूयाजव्यतिरिक्ते सङ्कोचनात् पर्युदासस्य उपसंहारादभेदापत्तिरित्याशङ्कां निरस्यति—**अत एव तन्मात्रेति।** अनूयाजभिन्ने लक्षणया तदुद्देशेन विधानादेवेत्यर्थः। तथा च आग्नेयवाक्योपसंहारे सति आग्नेयरूपस्वविषयमात्रे चतुर्धाकरणस्य नियमरूपः सङ्कोचः। इह तु अनूयाजरूपे विषये सः इति भेदं

न चैवं पर्युदासेऽपि पर्युदासनीयप्राप्तिसापेक्षत्वाद्विकल्पापत्तिः। तस्याः पदादाविव तार्किकभ्रान्तिमादायाप्युपपत्तेः। न हि तद्व्यतिरेकेण पर्युदासविधेः प्रतिषेधविधिवच्छाब्दबोधानुपपत्तिः। भेदप्रतियोगिभूतहोतृवरणानूयाजप्रसिद्धिमात्रेण तदुपपत्तेः। न च 'न होतारं वृणीते' इत्यत्र पर्युदासोपपत्तावपि 'नानूयाजेषु' इत्यत्र पर्युदासाङ्गीकारे सुबन्तसम्बन्धादननुयाजेष्विति नञो नित्यसमासापत्तिः। सुबन्तसम्बन्धे वाक्यस्याप्युपपत्तौ नित्यसमासे प्रमाणाभावात्।

यदाऽपि हि वैयाकरणरीत्या समासस्य विशिष्टार्थेषु शक्तिः वाक्यस्य च प्रत्येकं विशेषणविशेष्यरूपावयवार्थेषु, तदा भिन्नार्थकत्वेनैव समासविधिना वाक्यस्य साधुत्वानिवारणात् 'नानूयाजेषु' इति वाक्ये न किञ्चिद्बाधकम्। अत एव समासवाक्ययोर्विकल्पविधायकविभाषासूत्रप्रत्याख्यानार्थं 'वावचनमनर्थकं स्वभावसिद्धत्वात्' इति कात्यायनवचनमपि सङ्गच्छते। स्वभावसिद्धत्वात् भिन्नार्थकत्वरूपन्यायसिद्धत्वादित्यर्थः।

वस्तुतस्तु—उभयोरपि समासवाक्ययोः विशिष्टार्थगमकत्वस्य तुल्यत्वात्समासविधिना वाक्यस्यासाधुत्वप्रसक्तौ विकल्पविधायकं विभाषासूत्रं पाणिनेः सार्थकमेवेति

---

न्यायसुधाकारोऽर्थवादपादेऽवादीदित्यर्थः। न्यायसुधाकारपदोपादानेन मतान्तरमप्यत्र सूचितम्। नहि पर्युदासमात्रे तदन्यमात्रं सङ्कोच्यत इति नियमोऽस्ति। 'नेक्षेतोद्यन्तम्' इत्यत्र सत्यपि पर्युदासे सामान्यप्राप्तस्य सङ्कोचासम्भवात्। अत उपसहारो नाम सामान्यतः प्राप्तस्य विशेषे सङ्कोचन—रूपो व्यापारविशेषो विधेः। पर्युदासस्तु प्रत्ययातिरिक्तेन धातुना नाम्ना वा नञः सम्बन्ध इति स्वरूपेणैव स्पष्टो भेदः। एवं स्थिते नेक्षेतोद्यन्तमित्यादिपर्युदासे सामान्यप्राप्तस्य विशेषे सङ्कोचाभावेपि क्वचित् प्रकृतोदाहरणे यजिसामान्ये प्राप्तस्य येयजामहस्य अनूयाजव्यतिरिक्तेषु सङ्कोचनात् यदि विधेरुपसहारविधित्वं भवति नैतावता कश्चन विरोधः। नञोऽनूयाजसम्बन्धेन जातेपि पर्युदासे विधेर्विधायकत्वे क्षत्यभावात्। अतः सामान्यप्राप्तस्य विशेषे सङ्कोचरूपोपसहारस्याग्नेयवाक्य इवेहासम्भवेपि न पर्युदासभेदापत्तिः। एतावान् परं विशेषः। आग्नेयादयो विशेषाः स्वपदोपस्थापिताः। प्रकृते तु पर्युदासेन तस्योपस्थितिरिति। अत्रच वाक्यद्वयस्यापि न पारमार्थिक्येकवाक्यतास्ति, द्वयोरपि निराकाङ्क्षत्वात्, तथापि वाक्यद्वयेनापि स्वस्वार्थे बोधिते सामान्यवाक्येन यागविशेषापेक्षायां विशेषवाक्ये विशेष्यापेक्षायां च अङ्गवाक्यप्रधानवाक्ययोरिव यदेकवक्यताकल्पनं तदेव वाक्यैकवाक्यतापदेन गृह्यते। विस्तरेण चैतदुत्तराधिकरणे दर्शयिष्यते। **वस्तुतस्त्विति**। यथैव गोशब्दाल्लिङ्गवियुक्तोऽर्थः प्रतीयते, गावीशब्दे तु लिङ्गयुक्त इत्येवं प्रकारभेदेपि प्रधानभूतार्थैक्यादेकार्थत्वमङ्गीकृत्य गोशब्दनियमात्

**कात्यायनवचनमेव न्यायविरोधादप्रमाणम्** । अत एव **विभाषासूत्रात्प्राचीनानां** कुम्भकाराद्युपपदादिसमासाना **न विकल्पः** । अतो **नानूयाजेष्विति वाक्यस्यापि साधुत्वा-द्युक्तस्तत्रापि पर्युदासः** ॥

---

## (२)—अपूर्वे चार्थवादस्स्यात् ॥ ५ ॥

**दर्शपूर्णमासयोराज्यभागौ प्रकृत्य 'न तौ पशौ करोति न सोमे' इति श्रुतम् । तत्र पशुवाक्ये तावत् पूर्वाधिकरणोक्तरीत्या** भाष्यकारस्वारस्याच्च **यद्यपि पर्युदास इत्येव प्रतीयते ।** तथाऽपि **न तावत् नञ्पशुपदयोरन्वयाङ्गीकारेणापशौ करोतीत्येवंरूपः, तथात्वे दर्शपूर्ण-मासयोरेवोद्देश्यत्वात् तयोश्चापशुत्वादेव पर्युदासवैय्यर्थ्यात्** । न हि तेन **पशावतिदेश-**

---

गावीशब्दनिवृत्तिः, एव राजपुरुषादावपि विशेषणविशेष्यभावरूपप्रकारभेदेपि विशिष्टार्थगमकत्वस्य तुल्यत्वेन समासानियमविधिना वाक्यानुवृत्तिप्राप्तौ सार्थकं पाणिनेर्विभाषासूत्रमित्यर्थः । **उपपदस-मासानामिति** । विभाषाधिकारात् प्राक् उपकुम्भमित्यादावव्ययीभावसमासो विहितः तत्र नित्यसमास एव भवति । वाक्यस्य तु सर्वथा निवृत्तिरेव । एव 'उपपदमतिङ्' इति सूत्रेण कुम्भकार इत्युपपदसमासो विहितः । तत्रापि 'नित्यं क्रीडाजीविकयोः' इति सूत्रगतनित्यपदानुवृत्तेः नित्यसमास एव, वाक्यस्य तु निवृत्तिस्तत्रोभयत्रापि, **कात्यायनमते** वृत्तिवाक्ययोर्भिन्नार्थत्वेन पक्षे वाक्यप्रयोगस्याप्यापत्तिः स्यादित्यर्थः । अतो यथा समासे पर्युदासप्रतीतिः तथा वाक्येपि सम्भवत्येव तत्प्रतीतिरित्युपसहरति—**अत इति** । अतश्चानूयाजेषु येयजामहप्रापकस्य विधेरेवा-भावान्नित्यं तस्य बाध इति प्रयोजनं सिद्धान्ते द्रष्टव्यम् ।

---

### अपूर्वे च ।

अत्र **भाष्यकारेण** 'न तौ पशौ न सोमे' इति वाक्यद्वयमुदाहृत्य 'न सोम' इति वाक्य एव पूर्वाधिकरणन्यायेन प्राप्तं पर्युदासत्वं न सम्भवतीति प्रतिषेधत्वं पूर्वपक्षयित्वा अर्थ-वादत्वं सूत्रानुरोधात् सिद्धान्तितम् । ततश्च 'न पशौ' इति वाक्ये प्रतिषेधवत्सिद्धान्तानुद्भाव-नात् तद्वाक्ये पूर्वाधिकरणन्यायसिद्धं पर्युदासत्वमेवाङ्गीकृतं भासते ; तदभिप्रायेणाह— **भाष्यकारेति** । **वार्तिककृता** तु यदर्थवादत्वं 'न सोमे' इत्यत्र सिद्धान्तयिष्यते तस्यापि समानन्यायात् 'न सोमे' इतिवत् पर्युदासप्रतिषेधविचारविषयत्वं सम्भवत्येवेति तत्रापि कृतो विचारः, तत्र प्रतिषेधत्वं सिद्धान्तितम् । तदभिप्रेत्याह—**तथापीति** । **नहि तेनेति** । दर्श-

**निवृत्तिस्सिध्यति।** पशुप्रकरणस्थाज्यभागप्रापकातिदेशविधिनैकवाक्यतामङ्गीकृत्य आज्यभागव्यतिरिक्त प्रकृतिवदित्येवंविधः पर्युदासस्तु अतिदेशविधेर्दूरस्थत्वाद्दर्शपूर्णमासप्रकरणस्थपर्युदासेनैकवाक्यताऽनुपपत्तेरयुक्तः।

वस्तुतस्तु—**न सर्वत्र पर्युदासविधौ पदैकवाक्यता, तथात्वे आख्यातद्वयानन्वयापत्तेः। अपि तु आख्यातद्वयसत्त्वे वाक्यैकवाक्यतापि। अतश्च प्रकृते दूरस्थत्वेऽपि वाक्यैकवाक्यत्वोपपत्तेर्नायुक्तः पर्युदासः।** न च 'आज्यभागव्यतिरिक्तं पशौ कुर्यात्' इतिवाक्यस्य

---

पूर्णमासोद्देश्यकाज्यभागविधिनेत्यर्थः। अत्र च पर्युदासस्य 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्' इति पूर्वाधिकरणसिद्धान्तसूत्रस्वारस्यात् अनूयाजभिन्नेष्वित्यादिपदसमर्पितार्थानां सामान्यवाक्यगतविशेषाकाङ्क्षियजत्यादिपदप्रतिपाद्यार्थेनाभेदान्वयात् सामान्यविध्येकदेशरूपतया यदेकवाक्यत्वमेवापर्युदासवाक्यगतं येयजामह करोति इत्यनुवाद इत्येकः पक्षः। **द्वितीयस्तु** पशुवाक्यैकवाक्यतापक्षः प्रागेव सूचितः। तदिह भाष्यस्वारस्यात् 'न तौ' इति वाक्ये पर्युदासत्व यदा, भाष्यकारस्य वक्ष्यमाणरीत्या वाक्यैकवाक्यतापक्ष एव सम्मत इति प्रतीयते। पदैकवाक्यतायां प्रकृतिवच्छब्दस्य पशुवाक्यगतस्यासन्निधानेन तत्रान्वयानुपपत्त्या 'आज्यभागव्यतिरिक्तं प्रकृतिवत्' इत्येवं पर्युदाससम्भवात्। **वार्तिककारेणा**सन्निधानादेकवाक्यत्व न सम्भवतीति पर्युदासखण्डनात् पदैकवाक्यत्वमेव सम्मतं तस्येति प्रतीयते। **तन्त्ररत्ने** तु प्रथमतो वाक्यैकवाक्यतापक्षमुद्भाव्य पदैकवाक्यतापक्षोऽप्युक्तः। तत्र **प्रकाशकारैः** एतदधिकरणसिद्धान्तस्थैर्याय 'दीक्षितो न जुहोति' इत्यादिवाक्येषु प्रतिषेधत्वसिद्धान्तस्थापनं परमतत्वेनाङ्गीकृत्य भाष्यकारसम्मतमपि वाक्यैकवाक्यतापक्षमुपेक्ष्य पदैकवाक्यतापक्षस्यैव युक्तत्वमङ्गीकृतम्। तद्वैपरीत्येन वाक्यैकवाक्यतापक्षमेव युक्तत्वेन दर्शयति—**वस्तुतस्त्विति**। आख्यातान्तवाक्यद्वयस्य परस्परमन्वयायोगात्र यथा दध्यादिवाक्याग्निहोत्रहोमविध्योः पदैकवाक्यता, किन्तु वाक्यैकवाक्यता, तथेहापीति, तद्वदेव दूरस्थेन पशुपदोपस्थापितप्रकृतिवत्पदयुक्तपशुविधिवाक्येनापेक्षावशात् एकरूपसम्बद्धार्थप्रतिपादकत्वाद्वाक्यैक—वाक्यतैव युक्तेति न पर्युदासखण्डनमसन्निधानात्कर्तुं शक्यम्। एवं दीक्षितवाक्येपि यथा भाष्यमतेन पर्युदासत्व युक्तं तथा तत्रैव वक्ष्यत इत्यर्थः।

यत्तु **प्रकाशकारैः** एतद्व्यतिरिक्ते कस्मिन् एतद्व्यतिरिक्तं किम्? इति विभज्यमानसाकाङ्क्षत्वात् तद्विशेषसमर्पकतया पर्युदासपदमिति पदैकवाक्यताया उपपादनं कृतं **तदनूद्य दूषयति—न चाज्यभागेति**। गृहमेधीयपञ्चमपक्षन्यायेन होतृवरणसजातीयस्य

विशेष्यविशेषसाकाङ्क्षतया स्वार्थबोधे समाप्त्यभावः। विशेष्यविशेषस्य प्रमाणान्तराऽवगमोपपत्तौ अनुगतधर्मावच्छिन्नमादाय शाब्दबोधोपपत्तेः। इतरथा वाक्यमात्रस्य निराकाङ्क्षतानापत्तेश्च। अतोऽत्र पर्यदासखण्डनमेवं कार्यं, विकल्पभिया खलु पर्युदासः इष्टः, स चात्र पर्युदासपक्षेऽप्यावश्यक इति व्यर्थं पर्युदासाङ्गीकरणम्॥

तथाहि पशुप्रकरणे—'अग्नय आज्यस्यावदीयमानस्यानुब्रूहि, सोमायाज्यस्यावदीयमानस्यानुब्रूहि, अग्नय आज्यं प्रस्थितं प्रेष्य, सोमायाज्यं प्रस्थितं प्रेष्य, होता यक्षदग्निराज्यस्य जुषतां हविर्होतर्यज' इत्यादिप्रैषाणामाम्नानात्तेषां च लिङ्गादाज्यभागमात्राङ्गत्वादाज्यभागयोरपि करणप्रतीतेः विहितप्रतिषिद्धत्वाद्विकल्प इति। अतस्सिद्धं 'न तौ पशौ करोति' इत्ययं प्रतिषेध इति। तदर्थवादश्च 'न सोमे' इति। यथा सोमे आज्यभागावप्रसिद्धौ तथा पशावपीति निन्दा न ह्ययं सोमे आज्यभागयोर्निषेधः पर्युदासो वा सम्भवति सोमस्यापूर्वत्वेन तत्राज्यभागप्रसिद्ध्यभावात्।

न च सोमाङ्गभूतदीक्षणीयादिषु प्रसक्ताज्यभागपर्युदास, तथात्वे तत एव पशावपि तत्सिद्धेः 'न तौ पशौ' इत्यस्य वैयर्थ्यात्। पूर्वप्रतिषेधैकवाक्यत्वे सम्भवति वाक्यभेदस्यान्याय्यत्वाच्च। अतोऽत्राज्यभागकर्तव्यतामात्रप्रतियोगिकोऽभावः सोमे प्राप्त एव निन्दार्थमनूद्यते। प्रतियोगी च दर्शपूर्णमासादौ प्रसिद्ध इति सिद्धमस्य 'नान्तरिक्षे न दिवि' तिवन्नित्यानुवादत्वम्॥

---

वरणान्तरस्यैव प्राप्त्युपपत्तावाकाङ्क्षाऽभावाच्च। **वाक्यमात्रस्येति**। प्रयाजादिवाक्यानामपि इष्टविशेषसाकाङ्क्षतया निराकाङ्क्षत्वानापत्तिरित्यर्थः। एवमेकवाक्यत्वासम्भवेन वार्तिकोपपादितं पर्युदासखण्डनमुपेक्ष्य प्रकारान्तरेण तत्खण्डयति—**अतोऽत्रेति**। एवं पशुवाक्यस्य-प्रतिषेधत्वमुपपाद्य तेनैव न्यायेन 'न सोमे' इत्यत्रापि प्राप्तप्रतिषेधत्वं पूर्वपक्षिणाऽऽपादनीयं निरसितु, अपूर्वे चार्थवादः स्यात' इति प्रस्तुताधिकरणसिद्धान्तसूत्रार्थमुपपादयति—**तदर्थवादश्चेति**। **वैयर्थ्यादिति**। एतच्च वाजपेयस्य यूप इत्यत्रेव षष्ठ्यभावे परम्परासम्बन्धग्रहणे मानाभावात् सोमप्रातिपदिके तदङ्गलक्षणापत्तेरप्युपलक्षणम्। ननु सर्वपदेषु स्तुतिलक्षणापेक्षया एकस्मिन्नेव सोमप्रातिपदिकेऽङ्गलक्षणैव युक्ता इत्यत आह—**पूर्वप्रतिषेधेति**। पर्युदासपक्षेपि लक्षणाद्वयापत्त्या तत्स्वीकारेण भिन्नवाक्यत्वापेक्षया सर्वपदेषु एकां स्तुतिलक्षणामाश्रित्यैकवाक्यत्वं युक्तमित्यर्थः।

## (३)---शिष्ट्वा तु प्रतिषेधस्स्यात् ॥ ६ ॥

यत्र तु तस्मिन्नेवार्थे प्रत्यक्षो विधिः तस्मिन्नेव च निषेधः, यथा 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति' इति तत्र विकल्पस्यावश्यकत्वात् प्रतिषेध एव। न तु पर्युदासः, लक्षणायां प्रमाणाभावात्। नाप्यर्थवादः प्राप्त्यभावात्।

न च तत्र 'समिधो यजति' इतिवत् विधिना क्रतुसाद्गुण्यजनकत्वाक्षेपात् निषेधेन च 'नानृतं वदेत्' इतिवत् क्रतुवैगुण्यजनकताक्षेपात् एकस्यैव षोडशिग्रहणस्य क्रतुसाद्गुण्यवैगुण्यजनकत्वं विरुद्धमिति वाच्यं, एतादृशविषये निषेधेन षोडशिग्रहणाभावेऽपीतराङ्गैः क्रतुसाद्गुण्योत्पत्तिरित्यस्यैवाक्षेपात्। विधिना च षोडशिग्रहणस्यापि क्रतुसाद्गुण्ये सहकारित्वमित्याक्षेपात्। अतश्च षोडशिग्रहणे प्रवृत्तिसिद्ध्यर्थं करणपक्षे फलभूमाऽपि कल्प्यत इति ध्येयम्।

अत एव प्रथमतो विधिप्रवृत्त्या प्रतियोगिप्रसिद्धौ जातायां निषेधेन निषेधे कृते पश्चाद्विधेयस्य फलभूमकल्पनमिति विशेषः।

---

## (४)---न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ॥ ७ ॥

अग्निहोत्रे 'जर्तिलयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति, नारण्यान्, अथो खल्वाहुः, अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च, पयसा-

---

शिष्ट्वा तु प्रतिषेधः

स्पष्टार्थमधिकरणमेतत्

---

**न चेदन्यं प्रकल्पयेत्।**

इह विध्युत्तरनिषेधत्वेन भासमानानां तन्निरासेनार्थवादत्वं पूर्वाधिकरणापवादेन प्रतिपाद्यते। **जर्तिलयवाग्वेति।** जर्तिलाः कृष्णतिलाः, गवीधुकाः तृणतण्डुला इति **भट्टभास्करः।** जर्तिलाः अरण्यतिलाः गवीधुका अरण्यगोधूमा इति **माधवः।** तत्राहुतिपदेनान्वितस्य नञः

ऽग्निहोत्रं जुहुयात्' इति श्रुतम्। तत्र जर्तिलगवीधुकयोः प्रथमवाक्येन विहितयोः अनाहुति इत्यनेन प्रतिषेध उत सर्वोऽयं पयोहोमविधेरर्थवाद इति चिन्तायां—

आख्यातभेदश्रवणेन भिन्नवाक्यत्वस्यैव प्रतीतेः स्तुतिलक्षणयैकवाक्यत्वकल्पने प्रमाणाभावात् प्रथमवाक्यद्वयेच स्पष्टविधिश्रवणेन जर्तिलगवीधुकयवाग्वोर्विधेयत्वावश्यकत्वात् अनाहुतिरित्यनेन च निन्दोन्नीततन्निषेधकल्पनात्तयोर्विहितप्रतिषिद्धत्वाद्विकल्पः। अन्त्यस्तु पयस एव विधिरिति प्राप्ते—

यद्यप्याद्यो जर्तिलगवीधुकयोर्विधिस्स्यात् तथाऽप्यनाहुतिरिति निन्दया न स्वतन्त्रनिषेधोन्नयनम्, तत्फलस्य विकल्पस्य व्रीहियवन्यायेन पयोविधिबलेनैव सिद्धत्वात्। अत एव अनाहुतिरिति निन्दा न हि निन्दान्यायेन पयोविधिस्तुत्यर्थैव ॥

वस्तुतस्तु—जर्तिलगवीधुकविधिरपि पशुनिन्दाद्वारेण पयः प्रशंसार्थैव, न तु तद्विध्यर्थः पश्वपेक्षया प्रशस्तयोरप्यनयोः पयोऽपेक्षया निन्द्यत्वमेव, अतः पय एव प्रशस्ततरमिति स्तुतिः ॥

श्रूयमाणोऽपि च विधिर्वाशब्देन विधिशक्तिप्रतिबन्धान्न विधायकः। न ह्ययं वाशब्दो विकल्पविधायकः तस्य न्यायादेव सिद्धेः। अपि तु 'विषमपि वा भक्षयेत् न तु परान्नं भुञ्जीथाः, इतिवदन्यविधानतात्पर्यक एव। अतस्सर्वोऽयं स्तुतिलक्षणया पयोविध्येकवाक्यतापन्नस्स्तुत्यर्थः। एवं च एकवाक्यताऽपि लभ्यते ॥

---

जर्तिलादिनाऽन्वयासम्भवेन आहुतिपदेनान्वितत्वयैवानाहुतिरित्येवं पर्युदासस्यासम्भवे वाऽनुपपत्तेः पर्युदासपक्षं विहाय प्रतिषेधत्वेनैव पूर्वपक्षकोटिं दर्शयति—**प्रतिषेध इति**। **व्रीहियवन्यायेनेति**। ननु न्यायाद्विकल्पप्राप्तावपि समबलतया प्राप्तविकल्पनिरासाय निषेधकरणं सार्थकम्। तथा चानुकल्पतया विकल्पसिद्धिरित्याशङ्कां एकवाक्यत्वे सम्भवति वाक्यभेदस्यान्याय्यत्वेन हेतुना निरसितुमाह—**अत एवानाहुतिरिति**। स्पष्टार्थमन्यत्।

## (५)—पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥

**आधाने 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः।** यद्यजुषा **जुहुयाद-यथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः, परापतेत् तूष्णीमेव जुहोति' इति श्रुतम्। तथा चातुर्मास्येषु त्र्यम्बकहोममधिकृत्य 'अभिघार्या अनभिघार्या इति मीमांसन्ते—यदभि-घारयेत् रुद्रायास्ये पशूनिदध्यात्। यन्नाभिघारयेत् न रुद्रायास्ये पशूनभिदध्यात्। अथो खल्वाहुरभिघार्या एव न ह्यनभिघृतं हविर्भवति' इति श्रुतम्।** तत्राप्यन्तिमस्यैव **विधेस्सर्वोऽयं शेषः।** न तु होमतदभावयोरभिघारणानभिघारणयोश्च **होतव्यं न होतव्यं अभिघार्या अनभिघार्या इति विधिप्रतिषेधश्रवणाद्विकल्पः। तयोर्मीमांसाविशेषणत्वेन विधिशक्तिप्रतिबन्धात्।**

**न च विकल्पे पक्षद्वयावलम्बनेन प्रयोगकाले मीमांसोपपत्तेरन्यतरस्यैव विधेयत्वे एकपक्षावलम्बितया मीमांसाऽनुपपत्तिरिति वाच्यं, अन्तिमविधितः पूर्वं सन्दिग्धत्वेन मीमांसोपपत्तेः। अतश्च विचारपूर्वकस्य तस्यान्ते निश्चायकत्वात् स्तुत्युपपत्तिः।**

---

**पूर्वैश्च तुल्यकालत्वात्।**

**यद्यजुषेति। यजुषा** प्रातःकालोचितेन सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहेत्यनेन, यदि जुहुयात् अयथापूर्वं व्युत्क्रमेण स्यात्; अग्निर्ज्योतिरिति मन्त्रकरणकाहुतेः प्राथम्याभावात्। यदि च तदर्थं सायंकालप्रतीक्षया सायंहोमो अग्निर्ज्योतिरित्यनेन क्रियते तावत्पर्यन्तमाधान-सिद्धोऽप्यग्निः व्यर्थमवस्थानात्परापतेदित्यर्थो **विद्यारण्यस्वामिकृत**भाष्ये। तथा साकमेधे पर्वणि यावन्तो यजमानस्य पुरुषास्तावन्त एककपालाः पुरोडाशाः एकश्चाधिकः तैः त्र्यम्बकमन्त्रेण कृतो होमस्त्र्यम्बकहोमः उच्यते; तमधिकृत्येत्यर्थः। अत्र च पूर्वोदाहरणे तुल्यकालत्वाद्यथा जर्तिलानां विधिनिषेधौ अन्तिमाद्विधेः पूर्वकालीनावेव, एवं होमाभिघारणयोरपि विधिनिषेधावन्तिमा-द्विधेः पूर्वकालीनावित्यर्थकेन 'पूर्वैश्च तुल्यकालत्वात्' इत्येकेनैव सूत्रेण जर्तिलादिवाक्यसाम्यस्यै-वातिदेशेन सिद्धान्तितत्वात् न पूर्वपक्षेणार्थ इत्यभिप्रेत्य सिद्धान्तेनैवोपक्रमते—**तत्रापीति। ननु** जर्तिलवाक्ये सर्वथा विध्यभावादप्रसक्तप्रतिषेधस्यासम्भवेपि इह सिद्धान्तेपि होमाभिघारणयो-र्विधेयत्वावश्यंभावे प्राथम्यात् प्रथमपठितयोरेव तद्वाक्ययोस्तद्विधिः। तदा च प्राप्तिसत्वात् मध्ये 'न होतव्यम्' 'नाभिघारयेत्' इति तयोर्निषेधोऽपीति विकल्पः। 'यदभिघारयेत्' 'यद्यजुषा जुहुयात्' इति च विधेयनिन्दानुपपत्तेः निषेध्यनिन्दाद्वारा निषेधार्थवादः; मीमांसा च विकल्पात् प्रयोगाभिप्रायानुवाद इति विशेषाशङ्कामनूद्य परिहरति—**न त्विति।** इतिकरणपरा-मृष्टयोर्विधिनिषेधयोर्मीमांसाविशेषणत्वस्य वाक्यीयत्वात स्वातन्त्र्येण विधिशक्तिप्रतिबन्धकत्वमिति

**एतादृशोऽयं होमोऽभिघारणं च** यद्दोषदुष्टमपि **बहुतरगुणवत्त्वात्कर्तव्यमेव।** होमे तु नैव **कश्चिद्दोष इति स्तुतिः।**

**अत्र च त्र्यम्बकहोमस्य दर्वीहोमत्वेनापूर्वत्वादपूर्वमेवाभिघारणं विधीयते। तूष्णीं होमे हि नाग्निहोत्रहोमत्वं, प्रमाणाभावात्।** नाप्यग्निहोत्र**धर्मकत्वं, अर्थवादगतस्य नाम्नोऽनतिदेशकत्वात्।** शास्त्रदीपिको**क्तरीत्या विधिगतत्वेऽपि वा तस्याप्याधानद्वारा-ऽग्निप्रयोजकत्वेनाग्निसम्बन्धित्वाविशेषात्प्रायणीयादिवदनतिदेशकत्वाच्च। अतोऽपूर्व एवाय होम आधानाङ्गत्वेन विधीयते।** तत्र मन्त्रे **प्रमाणाभावादेव तूष्णीमित्यनुवादः। देवता त्वनादिष्टे प्रजापतिः।**

---

विधित्वानुपपत्तेर्युक्तमेव विधिशक्तिप्रतिबन्धकत्वम्। अस्य तु अनन्यविशेषणत्वादप्रतिबद्धं विधित्वं स्वातन्त्र्येण युज्यत इत्यभिप्रेत्य **अन्तिमविधित** इत्युक्तम्। **दोषदुष्टमपीति।** अनभिघारणे रुद्रास्यपशुनिधानानापादकत्वात् प्रशस्तमभिघारणं यद्यपि तद्दोषजनक, तथापि हविर्गतरूक्षतानिवृत्तिद्वारा हविः सपादकत्वात् कर्तव्यमेवेत्यर्थः। **होमे त्विति।** साय प्रात. कालान्यतरकाले तदनुष्ठाने एकतरदोषसत्त्वेपि प्रातः काले तूष्णीहोमकरणे **न** कोऽपि दोष इत्यर्थः। अत्र च तूष्णीहोमे अग्निहोत्रपद नामातिदेशकमिति याज्ञिकाचारानुसारेण **प्रकाशकारै**रुक्तं दूषयितुं पञ्चमाध्यायोक्तमर्थं पुनरिहापि दर्शयति—**नापीति। शास्त्रदीपि-कायां** विधिवाक्यस्य तूष्णीमेव होतव्यमग्निहोत्रमित्यग्निहोत्रपदघटितस्य लिखनात् विधिगतस्य नाम्नोऽतिदेशकत्वमाशङ्क्य निराकरोति—**शास्त्रदीपिकेति।** यथैवाग्न्यर्थद्रव्यकहोमत्वेन योगेन नित्याग्निहोत्रे तत्पदप्रवृत्तिः तद्वद्योगस्येहापि समत्वेन मुख्यत्वोपपत्तेः न गौणतयाऽतिदेश-कत्वमिति भावः। अपूर्व एवायमित्युक्तम्। तत्र उपादेयगुणयोगसामान्याभावसहकृता-सन्निधिरूपप्रकरणान्तरं, अथवा अनन्यपरविधिपुनः श्रवणरूपाभ्यासो वा प्रमाणं दर्शयितुमाह— **तत्र मन्त्रे इति। वस्तुतस्तु** विधावग्निहोत्रपदसत्वे नित्याग्निहोत्रेऽग्निदेवताकद्रव्यकहोमत्वयोगेन तत्पदप्रवृत्तिः **न तेनैव** योगेनेह तत्पदप्रवृत्तिरिति प्रायणीयपदवैषम्यात् भवत्येव नामातिदेशकत्वं तस्य। अतः एव तदतिदेशेन 'अग्निर्ज्योतिः' इति मन्त्रयोः प्राप्तिमुपजीव्यैव 'यद्यजुषा जुहुयात्' इति यजुः करणकहोमाशङ्का उपपद्यते। तत्परिहारार्थं तुष्णीविधानं च। **यत्तु** कर्मान्तरत्वेपि अग्निहोत्रधर्मातिदेशानङ्गीकारे यद्यजुषा जुहुयात् अयथापूर्वमित्यस्य पवमानेष्टिभ्यः पूर्वं यजुषा जुहुयात, अयथापूर्वं यत्र जुहुयात् अग्निः परापतेत; अतः तूष्णी होमे कृते होमोऽकृतप्राय इव भवतीति **सोमनाथकृत**व्याख्यानं, **तदपि** यजुषः पवमानेष्टिभ्यः पूर्वमनुष्ठानेपि प्राप्तिसम्भावनाया अभावादयुक्तम्। अतश्चैतादृशार्थवादज्ञापकबलादग्निहोत्रनाम्ना च अग्नि-

याज्ञिकास्तु **अग्निहोत्रधर्मातिदेशं मन्यन्ते। तदा तूष्णींत्वस्यापि विधिः। परं तु तदा कर्मान्तरत्वे प्रमाणं मृग्यम्॥**

---

## (६)—उपवादश्च तद्वत् ॥९॥ प्रतिषेधादकर्मेति चेत् ॥१०॥ न शब्दपूर्वत्वात् ॥११॥

**आधाने—'वारवन्तीयं गायति वामदेव्यं गायति यज्ञायज्ञीयं गायति' इति सामानि विहितानि। ततो 'न ब्रह्मा सामानि गायति' इति श्रुतम्। तत्रायं न तावत् ब्रह्मकर्तृकत्व-प्रतिषेधः पर्युदासो वा, ब्रह्मणो विध्यभावेन प्राप्त्यभावात् तदुभयानुपपत्तेः। आधान-सामसु हि यद्यपि यजुर्वेदविहितत्वाद्विनियोगविधिवेदनिबन्धनोऽध्वर्युरेव कर्ता न्यायेन**

---

होत्रधर्मातिदेशो युक्त इत्यभिप्रत्याह—**याज्ञिकास्त्विति। तदेति।** नामातिदेशप्राप्त-यजुर्बाधकत्वेनेत्यर्थः। **परन्त्विति।** पूर्वमुक्तस्य प्रकरणान्तरन्यायस्य अभ्यासस्य वा तूष्णींत्वगुणविधानेऽसम्भवान्न कर्मान्तरत्वे प्रमाणम्। तथा चाख्यातासमानाधिकरणस्य नाम्नः व्यवहितपरामर्शकत्वात् प्रसिद्धहोमानुवादेन तूष्णींत्वगुणमात्रविध्यापत्त्या आधानानन्तरं पवमानेष्टिभ्यः प्राक् प्रातर्नित्याग्निहोत्रहोमस्तूष्णीं कर्तव्य इत्यर्थः सिद्ध्येत्। न त्वपूर्वत्वेनाधा-नाङ्गत्वमित्याशयः।

वस्तुतस्तु आधानाऽव्यवधानेन पवमानेष्टिभ्यः प्राक् आहवनीयाद्यसिद्धौ नित्याग्निहोत्रस्या-प्राप्तेः तदुत्तरं प्राप्ते सायं होमे तत्तत्क्रमपठितमन्त्रावरुद्धे तूष्णींत्वस्य निवेशायोगात् गुणादेव कर्मान्तरम्। तस्मिंश्च पूर्वोक्तरीत्या भवत्येवाग्निहोत्रधर्मातिदेश इति याज्ञिकमतमेव युक्त-मिति **मृग्यमिति** पदेन सूचितम्।

---

**उपवादश्च तद्वत्।**

**अत्र** भाष्ये 'उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि' इति सिद्धवदर्थवादो लिखितः। 'न ब्रह्मा सामानि गायति' इत्येवं निषेधवाक्यम्। तस्यापि उप समीपे कालविलम्बमन्तरेणैव वीताः परैः त्यक्ता अग्नयो भवन्ति यदि ब्रह्मा गायतीत्येवं निन्दोन्नीतनिषेधवाक्यकल्पनया सिद्धवन्निषेधवाक्यमुदाहरति—**ततो न**

स्वरवत् प्राप्नोति, तथाऽपि वाचनिकोद्गातृकर्तृकत्वान्न ब्रह्मकर्तृकत्वम्। अतोऽयं ब्रह्मा ब्राह्मण इति व्युत्पत्त्या उद्गातारमेव ब्रह्मशब्देनानूद्य गाननिषेध एवेति गानस्यैव विकल्पः।

यदाऽपि कल्पसूत्राद्यनुसारात् ब्रह्माऽपि उद्गात्रा सह वैकल्पिको विहितस्तदाऽपि तेनैव ब्रह्मणो विकल्पसिद्धेर्नानेन ब्रह्मणो निषेधः, वैयर्थ्यात्। अतस्तदाऽप्ययं गाननिषेध एव तद्विकल्पसिद्ध्यर्थ इति ध्येयम्॥

---

## (७)—दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधस्स्यात् ॥ १२ ॥ अक्रतुयुक्तानां वा धर्मस्स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥ तस्य वाऽप्यानुमानिकमविशेषात् ॥ १४ ॥ अपि तु वाक्यशेषत्वादितरपर्युदासस्स्यात् प्रतिषेधे विकल्पस्स्यात्॥

ज्योतिष्टोमे—'दीक्षितो न ददाति न जुहोति न पचति' इत्यादि श्रुतम्। तत्र किमयं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानां चोपदिष्टानामतिदिष्टानां च होमादीनां प्रतिषेधः पर्युदासो वा? उतोपदिष्टवर्जं सर्वेषां? उत पुरुषार्थानामेवाग्निहोत्रहोमादीनामिति चिन्तायां—

अविशेषात् सर्वेषामेवेति प्राप्तौ, विकल्पप्रसङ्गादाहृत्यविहितानां ग्रहादिहोमानां प्रतिषेधपर्युदासयोरनुपपत्तेस्तद्वर्जं सर्वेषामेव पर्युदासः, प्रतिषेधे विकल्पापत्तेरिति प्राप्ते—

---

ब्रह्मेति। तद्विकल्पसिद्ध्यर्थ इति। तदा च ब्रह्मशब्दस्य मुख्यार्थपरित्यागेन तस्यैव सामगानस्य प्राप्तस्य विकल्पसिद्ध्यर्थो निषेध इत्यर्थः। अत्र चाधाने उद्गातृवरणाभावात्, प्रत्युत 'ब्रह्माऽग्न्याधेये सामानि गायति। प्रतिषिद्धान्येकेषाम्' इति आपस्तम्बादिसूत्रे ब्रह्मण एव विधिदर्शनात् उद्गातुः प्रापकं वचनं मीमांसाभाष्यकारलिखनादेवानुमेयमिति ध्येयम्। स्पष्टार्थमन्यत्।

---

दीक्षितस्य दानहोमपाक।

ग्रहादिहोमानामिति। 'ग्रहै जुहोति' इत्यादि विधिविहितग्रहचमसौदुम्बरीहोमानामित्यर्थः। तद्वर्जमिति। उपदिष्टग्रहहोमादिवर्जमित्यर्थः। अत्रच यद्यपि 'दीक्षितस्य

ज्योतिष्टोमस्यापूर्वत्वेन तत्रातिदेशिकहोमानामभावात् तदङ्गभूतेष्टिपशुसम्बन्ध्यातिदेशिकानां च 'न सोमे' इतिवत्प्रतिषेधपर्युदासानुपपत्तेः, कथञ्चिदुपपत्तावपि वा प्रतिषेधे विकल्पापत्तेः, पर्युदासाङ्गीकारे च लक्षणाप्रसङ्गात्पुरुषार्थानामेवाग्निहोत्रादीनां प्रतिषेधः। न च तदाऽपि विकल्पापत्तिः, पुरुषार्थत्वेन प्राप्तानां क्रत्वर्थत्वेन प्रतिषेधात्, भिन्नविषयत्वेन विकल्पानापत्तेः।

**यत्र ह्येकार्थावेव विधिप्रतिषेधौ, यथा—'न तौ पशौ करोति' इत्यादौ, तत्र विकल्पः। यत्र तु पुरुषार्थो विधिः क्रत्वर्थो निषेधः, यथा—स्त्रीगमनमांसभक्षणादेः।**

---

दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात्' इति पूर्वपक्षसूत्रे प्रतिषेधत्वस्य पूर्वपक्षत्वम्; 'अपितु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्' इति च सिद्धान्तसूत्रे पर्युदासत्वस्य सिद्धान्तत्वं प्रतीयते इति वैपरीत्येन पर्युदासत्वेन पूर्वपक्षकरणमयुक्तं; तथापि **पार्थसारथिना** सूत्रभाष्यस्वारस्यभङ्गेन प्रतिषेधत्वस्यैव सिद्धान्तित्वात् तन्मते पर्युदासपक्षस्य पूर्वपक्षत्वेन स्वयमपि पर्युदासपक्षमेव तन्मतं दूषयितुं पूर्वपक्षत्वेनोपपादयति—**सर्वेषामेव पर्युदास इति**। आतिदेशकानां चतुरवत्तहोमादीनां अग्निहोत्रहोमादीनां चेत्यर्थः। यत्तु **पार्थसारथिना** विकल्पापत्त्या पुरुषार्थानामेवाग्निहोत्रहोमानां पर्युदासः, सोऽपि अदीक्षितो ऽग्निहोत्रादि कुर्यादित्येवरूप इत्युक्तम् **तत्** तुल्यन्यायात् क्रत्वर्थानामातिदेशिकानामपि पर्युदासोपपत्तेः, तेषां सर्वेषां पर्युदासाश्रयणे बाधकाभावादुपेक्षितं **पूज्यपादैः**। सर्वेषामेव पर्युदासे प्रथमतः आतिदेशिकानां स न सम्भवतीत्याह—**ज्योतिष्टोमस्येति**। यथैव अदीक्षितोऽग्निहोत्रादि कुर्यादित्येकवाक्यतया अग्निहोत्रादिविधिशेषत्वं पुरुषार्थानां पर्युदासे तथातिदेशिकानां पर्युदासे 'अदीक्षितः प्रकृतिवज्जुहोति' 'ददाति' इत्येवं एकवाक्यतया प्रकृतिवच्छब्दशेषत्वमपि वक्तव्यम्। अत एव होमदानादिवर्जं प्रकृतिवदित्येव आतिदेशिकविषयो न पर्युदासः, तथात्वे तादृशस्य पुरुषार्थहोमादिविषयेऽसम्भवेन वैरूप्यापत्तेः। तत्र ज्योतिष्टोमवाक्यशेषभूतप्रकृतिवच्छब्दस्यैवापूर्वत्वेनाभावात् न तच्छेषत्वं सम्भवति। अतः तदङ्गभूतदीक्षणीयोत्तरभाविप्रायणीयाद्युत्पत्तिवाक्यशेषभूतप्रकृतिवच्छब्दशेषत्वं वाच्यम्। तदपि न युक्तमित्याह—**तदङ्गभूतेति**। **न सोम इतिवदिति**। यद्यपि सोमाङ्गेषु आज्यभागव्यतिरिक्तं कुर्यादिति पर्युदासे 'न तौ पशौ करोति' इत्यस्य वैयर्थ्यमिव नेह कस्यचिद्वैयर्थ्यापत्तिरूपं बाधकमस्ति, तथाप्यङ्गानां उभयत्राप्युपस्थितौ क्लेशसाम्यमभिप्रेत्य 'न सोम' इतिवदित्युक्तं द्रष्टव्यम्।

**पुरुषार्थस्स्मार्तो विधिः क्रत्वर्थश्च श्रौतः प्रतिषेधः, न च तत्र विकल्पः। तद्वत् प्रकृतेऽपीति पार्थसारथिः।** प्रकरणान्तराधिकरणादौ **वार्तिकस्वरसोऽप्येवम्।**

वस्तुतस्तु—**सामान्यतः पुरुषार्थतया प्रसक्तस्यापि दीक्षितपुरस्कारेण क्रत्वर्थतया प्रतिषेधोऽपि तेन रूपेण यदि नैव प्राप्तिः तदा प्रतियोगिप्रसिद्ध्यभावादेव न प्रतिषेध। यदि तु तदर्थं प्राप्त्यङ्गीकारस्तदा तस्याश्शास्त्रीयत्वावश्यभावात् 'न तौ पशौ करोति' इत्यादिवत् विकल्पो दुरुद्धर एव।**

**न च मांसभक्षणादिप्रतिषेधतुल्यत्वं, मांसभक्षणे तावत् यत्र क्रत्वर्थैडाभक्षणादौ विधिः तत्र विहिते निषेधाप्रवृत्तेर्नैव निषेधः। तस्य रागप्राप्तमांसभक्षणविषयत्वेनाप्युपपत्तेः। यस्तु श्राद्धे 'देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्' इत्यादौ च मांसभक्षणविधिः, सोऽभ्यनुज्ञाविधिमात्र न त्वत्र मांसभक्षणस्य वस्तुतो वैधता। श्राद्धेऽपि दातुरभ्युदयः। भोक्तुस्तु ग्रहणश्राद्धभोजनवत् रागत एव प्रवृत्तिः। अतः क्वापि विहितमांसभक्षणप्रतिषेधाभावात् न तत्र विकल्पप्रसक्तिः।**

**स्त्रीगमने तु यद्यपि 'ऋतौ भार्यामुपेयात्' इत्यत्र कालविशिष्टभार्यागमनस्यैव विधिः, न तु रागप्राप्तभार्यागमनानुवादेन कालमात्रविधिः। 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति' इति** अगमने निन्दाश्रवणात्। **तथाऽपि गुणभूतकालानुरोधेन प्रधानभूतगमनावृत्तेरन्याय्यत्वात् षोडशदिनात्मकऋतुकालमध्ये सकृदेकस्मिन् कस्मिंश्चि-**

---

**प्रकरणान्तराधिकरणादाविति।** "अथवा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासपरिमितः प्रतिप्रसवः। स तु प्रयोगमध्य एव क्रियते" इति प्रकरणान्तराधिकरणगतवार्तिके प्रतिषिद्धानामित्युपादानात् तस्य प्रतिषेधत्वमेव सम्मतम्। ततश्च **यद्यपि पुरुषार्थ-फलप्रत्यासत्तेः** तार्तीयन्यायेन[1] क्रत्वर्थस्यैव बाधकं प्राप्नोति **तथापि** सामान्यविशेषन्यायेन सावकाशनिरवकाशन्यायेन च विपरीतो बाध इत्यर्थः। आदिपदेन प्रवर्ग्याधिकरणगतवार्तिकेपि यदेतेषु प्रतिषेधत्वमुक्तं; तदपि सङ्ग्रहीतम्। तदेतत्पार्थसारथ्यभिमतं दूषयति— **वस्तुतस्त्विति। प्राप्त्यङ्गीकार इति।** यावज्जीववाक्येनेति शेषः। **अगमने निन्दाश्रवणादिति।** घोरायां भ्रूणहत्यायां पच्यते नात्र संशय' इति ऋतुस्नातामित्यस्योत्तरार्धम्। तेन चागमननिन्दाया जर्तिलन्यायेन विधेयस्तुत्यर्थत्वोक्तेः व्यतिरेकेण गमनस्यैव विधेयत्वात् न विहितप्रतिषेधः सम्भाव्यत इत्यर्थः। **तिसृषु वेति।** 'तस्मिन् युग्मासु संविशेत्' इति वचने युग्मास्विति बहुवचनस्य कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसानात् तस्य चोपादेयगतत्वेन

---

1 A स्तोत्रीयन्यायेन

**द्दिने** त्रिषु वा **दिनेषु गमनविधानेऽपि** ऋतुदिनीयप्रवृत्तेरैच्छिकत्वात् **तस्याः क्रत्वर्थनिषेधेन निषेधेऽपि न विकल्पप्रसक्तिः।** अत एव दैवादिना **पञ्चदशदिनपर्यन्तमगमने षोडशेऽहनि ऋतुप्रसक्तौ पुरुषार्थत्वात् गमनमेव क्रत्वर्थनिषेधोल्लङ्घनेनापि कार्यमिति धर्मशास्त्रविदः। सर्वथा यत्किञ्चिद्वैधनिषेधे विकल्प एवेति प्रकृतेऽपि विकल्पप्रसङ्गो दुरुद्धरः।**

किञ्चैवं **यावज्जीववाक्येन** दीक्षितस्याप्यग्निहोत्राकरणे **प्रत्यवायबोधनात् क्रतुमध्ये तेनाकरणेऽपि प्रत्यवायपरिहारार्थं प्रायश्चित्तप्रतिहोमयोरापत्तिः।** एतेन **वैधक्रियानिषेधे विकल्पः न तु तत्कारकनिषेधेऽपि, अत एव 'रात्रौ श्राद्धं न कुर्वीत' इत्यादौ श्राद्धानुवादेन रात्रिरूपाधिकरणनिषेधेऽपि न विकल्पः। अतः प्रकृतेऽप्यग्निहोत्राद्यनुवादेन दीक्षितकर्तृनिषेधः क्रत्वर्थतया विधीयत इति कारकनिषेधान्न विकल्प इति** केषांचिदुक्त**मपा-**

---

विवक्षामभिप्रेत्य **तिसृष्वित्युक्तम्।** दिनेष्विति दिनपदं रात्र्युपलक्षणम्। **ऐच्छिकत्वादिति।** तथा चात्र ऋतुगमनविधेः क्रत्वतिरिक्तकाले सावकाशत्वात् सामान्यरूपत्वाच्च, विशेषविषयकेण निरवकाशेन तत्प्रतिषेधेन बाधः। न च प्राप्तिसापेक्षत्वेन तदुपजीव्यत्वम्। तस्यास्तद्दिने इच्छयापि सम्भवेन तच्छास्त्रानपेक्षणादित्यर्थः। अत एव यदा गमनविधेः निरवकाशत्वं तदा गमनविधिना भवत्येव निषेधसङ्कोच इत्याह—**अत एव दैवादिनेति।** द्वयोरपि विधि-प्रतिषेधयोरन्यत्र सावकाशयोरेकत्र समावेशे समबलत्वात् केन कस्य बाध इत्यपेक्षायां पुरुषार्थ-त्वादित्युक्तम्। एतेन ऋतौ स्त्र्युपगमनस्य रागतः प्रसक्तस्यैवायं निषेधः। यत्र तु ऋतौ स विहितः तस्य दर्शाङ्गनिषेधे विकल्प इष्टः। तत्र देशकालकर्त्रादेरुपादानेन तन्निषेधेन विकल्पोद्धारासम्भवात् इति **प्रकाशकारोक्तमपास्तम्।** रागतः प्राप्तिमादाय निषेधो-पपत्त्यङ्गीकारे शास्त्रीयर्तुगमननिषेधे विकल्पस्यानुक्तिसहत्वात्। पूर्वोक्तरीत्या षोडशदिनेषु मध्ये ऋतुदिने तत्प्राप्तेरैच्छिकत्वेन तस्या विकल्पानापादकत्वाच्च। पुरुषार्थानां निषेधपक्षे दूषणान्त-रमप्याह—**किञ्चैवमिति।** न च क्रत्वतिरिक्तदिने ऋतुगमनशास्त्रस्येव निमित्तशास्त्रस्यापि सावकाशत्वमिति वाच्यम्। तत्र ऋतुगमनशास्त्रस्य सकृत्करणताबोधकत्वेन अन्यत्र सावका-शत्वेपि जीवनस्य निमित्तत्वव्याघातापत्त्या सर्वदा जीवनसत्वेऽनुष्ठानस्यैव शास्त्रविषयत्वेन सावकाशत्वासम्भवात्। अतो युक्तैव कालान्तरे प्रायश्चित्ताद्यापत्तिरित्यर्थः।

यत्वत्र विकल्पापत्तिदूषणपरिहाराय **प्रकाशकारैः** कल्पितं तदनूद्य दूषयति—**एतेनेति। केषांचिदुक्तमिति।** यत्र हि दीक्षितादीक्षितसाधारण्येन होमादिषु कर्तृत्वेन प्राप्तिः तत्र दीक्षित-कर्तृत्वस्य निषेधे अर्थात् तद्धोमादिविधयोऽदीक्षितं प्रत्येव प्रवर्तेरन् इति न क्रियाया निषेधः।

स्तम्। एवमपि दीक्षितस्य प्रतिहोमाद्यापत्तेरनिवारणात्।

किञ्च—कारकस्यापि दीक्षितादेर्नैच्छातः प्राप्तिः' अपि तु वैधी; अतस्तत्रापि विकल्पापत्तिरनिवार्यैव। अत एव यत्र कारकस्य कालादेराक्षेपतो यस्य कस्य चिदनियता प्राप्तिस्तत्र रात्रिविषये प्रवृत्तेरैच्छिकत्वात् तन्निषेधेऽपि न विकल्प इत्युक्तं तृतीये। यत्र तु कारकस्यापि दीक्षितादेरदीक्षितसाधारण्येन समुच्चयेनैव यावज्जीवादिवाक्यतः प्राप्तिस्तत्र तत्प्राप्तेर्वैधत्वावश्यंभावात् क्रत्वर्थे पुरुषार्थे एव वा तन्निषेधे विकल्पो दुष्परिहर एव। यदि चैवं नेष्यते तदा वरणानुवादेन होतृरूपस्य कर्मकारकस्यैव निषेधात्तत्रापि विकल्पानापत्तिः॥

किञ्चैवं नञर्थस्य न तावन्मुख्यविशेष्यता, आख्यातार्थमुख्यविशेष्यकत्वस्यैव सिद्धान्तात्। नापि दीक्षितादौ प्रतियोगितासंसर्गेणान्वयः, तस्याख्यातातिरिक्तान्वये पर्युदासत्वापत्तेः। नापि दीक्षितप्रतियोगिकाभावस्य विषयतया कृतावन्वयः; अभावस्य कृतिविषत्वानुपपत्तेः। अत एवमादिस्थले सर्वत्र दीक्षितकर्तृकाग्निहोत्रादिकृतिरेवाभाव-प्रतियोगिनी वाच्या। अतश्च विशिष्टक्रियानिषेध एवायं, फलतो विशेषणविषयत्वात्तु कारकनिषेध इत्युच्यते। तत्र च कारकस्य नियतप्राप्तौ विकल्पोऽनियतप्राप्तौ त्वैच्छिकत्वान्नेति विवेकः॥

अतः कथमपि प्रतिषेधे विकल्पस्य परिहर्तुमशक्यत्वात् सूत्रभाष्यन्यायसुधाकाराद्य-भिप्रेतः पर्युदास एवायम्। स च दूरस्थैरप्यग्निहोत्रादिविधिभिर्वाक्यैकवाक्यताम्¹

---

अत एव न होमसामान्यस्योद्देश्यत्वेपि क्रत्वङ्गहोमेषु तत्कर्तृत्वनिषेधः; तथात्वे तेषां दीक्षितपुरस्कारेणैवाहत्यविधानेन तन्निषेधे क्रियाया एव निषेधापत्तेः तस्याश्च विहितत्वेन विकल्पापत्तेः। अतः पुरुषार्थहोमाद्यनुवादेनैव तन्निषेध इति केषांचिदुक्तमित्यर्थः। **प्रतिहोमादीति**। स्वकाले अकृतो होमः कालान्तरेऽनुष्ठीयमानः प्रतिहोमशब्दार्थः। **अपि तु वैधीति**। यावज्जीववाक्येन जीवनगतनिमित्तत्वानुरोधेन जीवनवतः कर्तृत्वेन विधानात् दीक्षितस्यापि तद्वतः कर्तृत्वेन वैधी प्राप्तिरित्यर्थः। **तृतीये इति**। प्रवर्ग्याधिकरण इति शेषः। **न्यायसुधाकारादीति**। पूर्वलिखितप्रकरणान्तराधिकरणवार्तिकगतस्य प्रतिषिद्धा-नामिति पदस्य तत्रैव अत्रत्यसिद्धान्तसूत्रोपन्यासपूर्वकं पर्युदासोपलक्षणतया **न्यायसुधायां** व्याख्या-नकरणात् न्यायसुधाकाराभिप्रेत इत्यर्थः। **कथमपीत्यनेन प्रकाशकारमते** कारकनिषेधेपि क्रत्वर्थहोमानामप्युद्देश्यत्वापत्तिरपि सूचिता। किं कारकनिषेधे वैधक्रियाया आर्थिके निषेधेपि क्रत्वर्थपुरुषोपजीव्यत्वाभावे विकल्पाप्रसक्तिरित्युच्यते उत आर्थिकनिषेधेपि प्राप्त्युप-जीव्यत्वात् विकल्पः प्राप्येतैवेति; आद्ये क्रत्वर्थहोमादीनामर्थतः प्रतिषेधेपि विकल्पानापत्तेः

भ्युपगम्य 'न दीक्षितोऽग्निहोत्रं जुहोति' इत्येवंरूपः। न तु सन्निहितैरपीष्टि पशुप्रकृतिवच्छब्दैरेकवाक्यतामङ्गीकृत्य होमादिवर्जं प्रकृतिवदित्येवं रूपः। तथात्वे होमत्वस्य भेदप्रतियोगितावच्छेदकस्यौपदेशिकहोमसाधारण्येन तेषामपि पर्युदासे विकल्पस्यानिवार्यत्वात्। आतिदेशिकहोमत्वे लक्षणापत्तेः॥

अस्मन्मते तु होमत्वसामानाधिकरण्येन दीक्षितभिन्नकर्तृकत्वे विहिते ये दीक्षितमात्रपुरस्कारेण होमाः प्रामाणिकास्तद्भिन्नहोममादाय तत्पर्यवस्यतीति न लक्षणा। न च मन्मतेऽपि घटभिन्नं गृहस्थमानयेत्यादौ घटस्य गृहस्थत्वप्रतीतिवत् होमवर्जं प्रकृतिवत्कुर्यादित्युक्ते प्राकृतहोमत्वस्यैव प्रतियोगितावच्छेदकत्वप्रतीतेर्न लक्षणेति वाच्यं, तथापि दीक्षितपदश्रवणेन दीक्षितकर्तृकप्राकृतहोमत्वस्यैव प्रतियोगितावच्छेदकत्वापत्तेस्तादृशस्य चाप्रसिद्धतया निरुक्तपर्युदासानुपपत्तेः। न च दीक्षितकर्तृकत्वस्य प्रतियोगितावच्छेदककोटिप्रवेशानङ्गीकारात् प्राकृतहोमत्वस्यैव तदङ्गीकारेण प्राकृतहोमभिन्नोद्देशेन दीक्षितकर्तृविधिः प्राकृतहोमादिषु तत्परिसङ्ख्याफलको न विरुध्यत इति वाच्यं, तथात्वे प्राकृतहोमादिभिन्नपदार्थेषु प्रयोजककर्तृतया दीक्षितप्राप्तावप्यध्वर्य्वादिबाधेन साक्षात्कर्तृत्वेन प्रतिप्रसवविधेरेवापत्तेः।

प्राकृतहोमेषु चाध्वर्य्यादीनामेव कर्तृत्वसिद्ध्यर्थं पर्युदासोपपत्तेर्न होमपरिसङ्ख्यापत्तिः। न चेष्टापत्तिः। तथात्वे 'एतया पुनराधेयसम्मितयेष्ट्वेष्ट्वाऽग्निहोत्रं जुहोति' इति विधौ प्रकरणान्तरन्यायेन कर्मान्तरत्वापत्त्या कालविशिष्टकर्मान्तरविधाने

---

तदापत्तिदूषणदानस्यासङ्गतत्वम्। द्वितीये तु, पुरुषार्थहोमादीनामपि दीक्षितपुरस्कारेणार्थान्निषेधापत्तेः तत्रापि विकल्पापत्तिस्तुल्येति कारकनिषेधेपि न निस्तारः। यदि तु विधेयदीक्षितकर्तृत्वनिषेधसामर्थ्यादेव तेषां क्रत्वर्थहोमानामनुद्देश्यत्वं, तदा तेषु निषेधस्यैवाप्रवृत्तेः विकल्पाप्रसक्तौ 'विकल्पापत्त्या न तत्र निषेध' इत्युक्तेरसम्बद्धत्वमिति दिक्। यत्तु पार्थसारथिना दूरस्थाग्निहोत्रादिविधिभिरेकवाक्यतानुपपत्तेः 'दीक्षितो न जुहोति' इत्यादिपर्युदासासम्भवात् पर्युदासवादिनो 'न होतारं वृणीते' इत्यत्रेव नञो धात्वन्तरसम्बन्धाङ्गीकारेण होमदानादिवर्जं प्रकृतिवत् इत्येवं पर्युदासस्यैवापत्तौ पुरुषार्थहोममात्रविषयत्वसिद्धान्तभङ्गापत्तिः सूचिता—तां भाष्यदर्शितपर्युदासपक्षाङ्गीकारेण निरस्यति—नन्विति। उपदिष्टहोमवारणाय यद्यातिदेशिकहोमविशेषे लक्षणाया अङ्गीकारः तदा पर्युदासलक्षणया धातोः पृथगधिकलक्षणापत्तिदूषणमाह—आतिदेशिकेति। विहिते इति। ततश्च दीक्षितभिन्नकर्तृत्वरूपस्य विधेयगुणस्य दीक्षितमात्रकर्तृकेषु निवेशायोगात् विधेयसामर्थ्यानुरोधेन उद्देश्यविशेषलाभसम्भवेन न लक्षणा; नवा क्रत्वर्थहोमानामुद्देश्यत्वमित्यर्थः। एककर्तृकत्वेति। अङ्गप्रधानयोरेकदीक्षितकर्तृक-

गौरवापत्तेः। अतो विकल्पभिया निषेधे निवृत्ते पुरुषार्थाग्निहोत्राद्यनुवादेनादीक्षिताधिकारिकत्वस्यैव विधानरूपः पर्युदासः। तदा च पर्युदसनीयत्वेनोपस्थितत्वादग्निहोत्रस्य प्रकरणान्तरन्यायासम्भवेन कर्मान्तरत्वानुपपत्तेस्तस्यैवावभृथोत्तरं करणप्रसक्तौ अवध्यन्तरमात्रविधाने लाघवम्। अत एवाग्निहोत्राद्यङ्गकर्तृविधिः ज्योतिष्टोमप्रकरणे एतत्प्रयोजनक एव। अत एव दीक्षादशायामग्निहोत्रहोमस्य न प्रतिहोम इत्युक्तम्।

---

## (८)—अविशेषेण यच्छास्त्रमन्याय्यत्वात् विकल्पस्य तत्सान्दिग्धमाराद्विशेषशिष्टं स्यात् ॥१६॥

सामान्यशास्त्रस्य क्लृप्तत्वेऽपि तद्विहिताहवनीयाद्यपेक्षया विशेषशास्त्रविहितपदादेः

---

त्वसिद्ध्यर्थं अध्वर्य्वादिकर्तृपर्युदासापत्तेः पर्युदसनीयत्वेन पुरुषार्थहोमानामनुपस्थितेः एतयेत्यत्र कर्मान्तरत्वापत्तिरिति तात्पर्यार्थः। **एतत्प्रयोजनक एवेति।** अग्निहोत्रहोमस्य कर्मान्तरत्वाभावप्रयोजनक एवेत्यर्थः। यतो दीक्षितभिन्नस्यैवाग्निहोत्रहोमनित्यदानादिष्वधिकारः, न दीक्षितस्य, अतएवाधिकारे सति कर्मलोपप्रयुक्तप्रायश्चित्तप्रतिहोमयोरापत्तावपि अनधिकारे सति तल्लोपाप्रसक्तेः न तद्द्वयं दीक्षापगमे इत्युक्तं षष्ठे इत्याह—**अतएवेति।** दीक्षादशायामित्यस्य अव्यवहितेन अग्निहोत्रहोमस्येत्यनेनान्वयः। अतश्च दीक्षादशायां प्रसक्तस्याग्निहोत्रहोमस्य न प्रतिहोमो दीक्षापगमे इत्यर्थः।

---

**अविशेषेण यच्छास्त्रमन्याय्यत्वात्।**

नञ्प्रसङ्गं परिसमाप्य प्राप्तबाधप्रसङ्गादुपस्थितो विशेषशास्त्रेण सामान्यशास्त्रस्य बाध इदानीं निरूप्यते। अस्य च बाधस्य तत्र तत्र बहुशः प्रसङ्गात् उपपादितस्यापि विशेषतोऽत्र निरूपणे उदाहरणं प्रसिद्धमेवेति तदप्रदर्श्यैव सिद्धान्तेनोपक्रमते—**सामान्यशास्त्रस्येति। पदादेरिति।** 'पदे जुहोति' 'वर्त्मनि जुहोति' 'गार्हपत्ये पत्नीसंयाजान् जुहोति' इत्यादिवाक्यविहितपदादेरित्यर्थः। **पदं** क्रयार्थं नीयमानाया गोः सप्तमम्। **वर्त्म** हविर्धानयोरनसोः। ननु यदि होमविधिभिरनियमेन आधार आक्षिप्येत ततः आहवनीयपदादिविधेर्नियमविधिविषयत्वेन दृष्टार्थत्वात् व्रीहियवाभ्यामिव पक्षे नित्यं बाधः स्यात्। न त्वेतदस्ति; यत्र क्वचनाधारेपि प्रक्षिप्ते द्रव्ये होमविधिवाक्यार्थोपपत्तेः। इतरथा आहवनीयप्रति-

प्राबल्यमेव। न च होमस्याधारं विनाऽपि प्रक्षेपमात्रतयोपपत्तेः पदाहवनीयादीनामदृष्टार्थत्वात्समुच्चयोपपत्तौ बाधानापत्तिः। सत्यप्यदृष्टार्थत्वे सप्तम्यन्तत्वेनाधिकरणतयैव तज्जननादुभयोश्च निरपेक्षयोः प्रमितहोमाधिकरणत्वान्यथानुपपत्त्या विरोधस्यावश्यकत्वेन सामान्यशास्त्रस्य तद्विषये बाधोपपत्तेः। सामान्यशास्त्रं हि जुहोतेः होमत्वसामान्यवाचित्वात् व्यक्तिलक्षणया तदवच्छिन्नव्यक्तिमात्रे आहवनीयं विदधत् शक्यसम्बन्धालोचनेन निर्ज्ञातसम्बन्धसकलव्यक्तिलक्षणापूर्वकं यावत्पदहोमव्यक्तिं लक्षयेत्तावत् विजातीयहोमे पदस्य विहितत्वात् तेनैव निराकाङ्क्षः पदहोमो नाहवनीयं गृह्णाति।

यद्यपि च विजातीयहोमोऽपि जुहोतिना लक्ष्य एव, लक्ष्यतावच्छेदकवैजात्यस्यापि तत्र लक्षणा जुहोतेः व्यापकीभूतहोमत्वसामान्यवाचित्वादित्यधिकं गौरवम्। तथाऽपि तस्य विधिबलेनैव झडित्युपस्थितत्वात् प्राबल्यम्। अत्र हि पदविशिष्टो विजातीयहोम एव विधीयते। अतश्च पदस्योत्पत्तिशिष्टत्वादपि प्राबल्यम्। यद्यपि च वाक्यान्तरेण होमप्राप्तिर्भवेत् तथाऽपि तन्मात्रानुवादेन प्राकरणिकवाक्येन पदविधानात्प्राकरणिकत्वादपि तस्य प्राबल्यं, निरवकाशत्वादपि च तत्।

अतश्चाहवनीयस्सामान्यविहित उत्पन्नशिष्टोऽनारभ्य विहितः सावकाशश्चेति दुर्बलः। अतो वस्तुतस्तच्छास्त्रं पदहोमातिरिक्तविषयमेव। भ्रान्तिमात्रं त्वेतद्वाक्यादर्शनजनितं तद्वाक्यदर्शने सति बाध्यत इत्यसकृदावेदितम्। एवं विशेषविधिना सामान्यविधिवत्सामान्यनिषेधोऽपि बाध्यत इति बोध्यम्। अत एव न हिंस्यादिति निषेधो विहितहिंसायां न प्रवर्तते, तस्य विहितातिरिक्ते सावकाशत्वात्।

ननु निषेधस्य सङ्कोचे प्रमाणाभावः, तेन हिंसामात्रस्य पापसाधनत्वावगतावपि विधिना वैधहिंसायां स्वर्गक्रतूपकारादिसाधनत्वावगतौ बाधकाभावात्। न ह्यनर्थ-

---

निध्यापत्तेः। अत आहवनीयपदादीनामदृष्टार्थतया विधानात् प्रयाजानूयाजादिवत् समुच्चयस्यैवापत्तौ बाधविचारोऽयमसङ्गत इत्याशङ्क्य परिहरति—**न चेति**। **सत्यपीति**। आहवनीयादेरदृष्टार्थत्वेपि तददृष्टस्याधारताजननद्वारैवोत्पत्तेः अवान्तरदृष्टकार्ये पदादेः विधानात युक्तो बाधः इत्यर्थः। अत एवादृष्टरूपाग्निसादृश्यास्यान्यत्रासम्भवान्न प्रतिनिधिरित्याधाराग्निहोत्राधिकरणे **कौस्तुभे** द्रष्टव्यम्। प्रायोऽधिकरणान्तं स्पष्टार्थम्। तत्र—**नन्विति**। **यत्त्वत्र मधुसूदनस्वामिभिः** अष्टादशाध्यायगीताश्लोकव्याख्याने उक्तं–विधिना बलवदिच्छाविषयसाधनत्वबोधरूपां प्रवर्तनां कुर्वताऽनर्थसाधने तदनुपपत्तेः स्वविषयस्य प्रवर्तनागोचरस्यानर्थसाधनत्वाभावोप्याक्षिप्यते, तेन विधिविषयस्य नानर्थहेतुत्वं युज्यत इति, तदनूद्य दूषयति —**न ह्यनर्थेति**। लिङ्बोध्येष्टसाधनत्वस्य प्रवृत्तिरूपफलोपधायकत्वासम्भवेनैव प्रवर्तनाविषयत्वानु-

साधनत्वावगतौ प्रवर्तनाविषयत्वं विरुध्यते। तादृशानर्थे बलवद्द्वेषाभावदशायां स्वर्गादौ रागमात्रेण प्रवृत्त्युपपत्तेः। अत एव लौकिकहिंसायामपि तादृशानर्थे बलवद्द्वेषाभावदशायां तात्कालिकेष्टे रागौत्कट्यमात्रेण दृश्यत एव प्रवृत्तिः। सर्वत्रैव हि प्रवर्तनया तद्विषये यागादौ वस्तुतो यो रागौत्कट्यविषयः स्वर्गादिस्तत्साधनत्वमात्रमनुमीयते। निषेधेन च स्वविषये हिंसादौ वस्तुतो यो द्वेषौत्कट्यविषयः पापादिस्तत्साधनत्वमात्रमनुमीयते। रागद्वेषयोरौत्कट्यं तु जन्मान्तरीयकर्मवशात् कादाचित्कमिति न तत्र विधिनिषेधयोर्व्यापारः। तद्व्यापारभूतयोश्च पापसाधनत्वस्वर्गसाधनत्वयोस्तात्कालिकसुखदुःखसाधनत्ववत् नैव कश्चिद्विरोधः।

अतो दैक्षवायव्यादिपशुहिंसायास्सत्यपि प्रत्यवायसाधनत्वे क्रतूपकारभूत्यादिसाधनत्वाविरोधान्न निषेधस्य तद्व्यतिरिक्तविषयत्वं, यत्रापि नित्यपशुयागस्थले अकरणे प्रत्यवायश्रवणं तत्रापि करणे स्वल्पः प्रत्यवायोऽकरणे भूयानित्येवं कल्पनात् प्रवृत्त्युपपत्तेः न कोऽपि विरोधः। अत एव—

> जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
> कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥

इति मनुस्मृतौ जपादिप्रशंसाऽप्युपपद्यते। मैत्रः हिंसादिरहितः। अत एव साङ्ख्यानामयमेव सिद्धान्त इति चेत्—

> सत्यं, अयमभिप्रायो जैमिनिव्यासप्रभृतीनां-'धर्मेण पापमपनुदति'
> प्रवृत्तिसंज्ञके धर्मे फलमभ्युदयः परः।
> न हि धर्माद्भवेत्किञ्चित्पापं नरकदं क्वचित्॥

---

पपत्तिर्वाच्या, नचात्र सा प्रसरतीत्यभिप्रेत्य दूषणमाह—तादृशानर्थे इति। एतेन पूर्वोक्तरीत्याऽविरोधमाशङ्क्य यच्चोदनासूत्रे शास्त्रदीपिकायां 'सत्यमङ्गविधिमात्रालोचनायां नास्ति विरोधः ज्योतिष्टोमविधिस्तु साङ्गं प्रधान पुरुषस्य विदधत् पुरुषार्थहिंसानिषेधमग्नीषोमीयहिंसायामवगतं निरुणद्धि। नह्यग्नीषोमीयहिंसां वर्जयित्वा शक्यते ज्योतिष्टोमोऽनुष्ठातुम्। तस्मादस्ति विरोध इत्युक्तम्। कर्तव्यतया विहितत्वेन वर्जनबाधेपि पुरुषनिषेधबोधितया पापजनकत्वबोधविरोधाभावेन बाधप्रामाण्यभावात् पापोत्पत्तेरनिवार्यत्वात्।

एवं विरोधप्रसक्तिमयुक्तां मत्वा स्वयं साक्षात् पापजनकत्वेनैव विरोधमुपपादयति—अथ

न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति ।
धर्मः प्रज्ञां वर्धयति क्रियमाणः पुनः पुनः ॥

वृद्धप्रज्ञस्ततः पश्चात्पापं नारभते नरः ।
धर्मनिर्धूतपापानां संसिध्यन्ति मनोरथाः ॥
अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥

इत्याद्यसङ्कुचद्वृत्तिश्रुतिस्मृतिपुराणेतिहासवशात् पापाजनकत्वव्याप्यं धर्मत्वं पापजनकत्वव्याप्यं चाधर्मत्वं प्रतीयते । अत एव कैश्चिन्नैयायिकैर्यथाक्रमं विधिनिषेधस्थले तस्य लिङ्वाच्यत्वमप्यङ्गीक्रियते । अतश्च विधिस्थले प्रवर्तनया इष्टसाधनत्वानुमानवत् तेन पापाजनकत्वस्याप्यनुमानात् तद्विरोधेन निषेधस्तद्व्यतिरिक्तविषय एव पापजनकत्वं कल्पयन् तद्व्यतिरिक्तविषयस्सम्पद्यत इति सिद्धोऽत्रापि विशेषविधिना सामान्यनिषेधस्य सङ्कोचात्मको बाधः । विशेषनिषेधेन परं सामान्यविधेर्न सङ्कोचः, अपि तु विकल्प इत्युक्तम् । न तु वैपरीत्येऽपि । अत एव व्याससूत्रं 'अशुद्धमिति चेन्न शब्दात्' इति ।

---

मभिप्राय इति । पापाजनकत्वस्यापीति । यद्यपि न फलोपधायकत्वानुपपत्त्या इष्टसाधनतावत् पापाजनकत्वमाक्षेपणीयं; पूर्वोक्तरीत्या तावन्मात्रेणापि प्रवृत्तिरूपफलोत्पत्तेः सम्भवात्, तथापि पापजनकत्वभ्रान्त्या न प्रवर्तितव्यमिति संशयव्युदासेन निर्विचिकित्सप्रवृत्तिसिद्धये तदाक्षेपः प्रयोजनवानेव । अत एव तदुत्पत्तिविध्यवगतपापाजनकत्वमुदाहृतश्रुतिस्मृतिष्वनूदितं, न तु, तेषां स्वातन्त्र्येण तद्बोधकत्वकल्पनमित्यवधेयम् । विशेषनिषेधेनेति । यथा 'न तौ पशौ करोति' इत्यत्र आज्यभागव्यतिरिक्तविषयतया नातिदेशस्य सङ्कोचः, तथात्वे प्राप्तेरेवाभावे निषेधवाक्यार्थानुपपत्तेः अतो विधिमात्रस्य निषेधाद्विकल्प इत्युक्तं प्राक् । प्रकृते तु निषेधस्य सामान्यरूपस्य अन्यविषयतयाप्युपपन्नत्वेन वैधहिंसामात्रोपजीव्यत्वाभावात् सङ्कोच एवेत्यर्थः । अस्मिन् मीमांसकसिद्धान्ते व्याससूत्रमपि सम्मत्यर्थमुदाहरति—अत एवेति । एतच्च कर्मणां स्वर्गादिफलजनकानामपि आनुषङ्गिकहिंसादिमत्त्वेन पापजनकत्वात् तेभ्य एव जीवानां व्रीह्यादिस्थावरशरीरोत्पत्तिरित्याशङ्काया अनुवादपूर्वकनिराकरणार्थं तृतीयाध्यायप्रथमपादान्त्यसूत्रम् । तेन स्पष्टमेव कर्मणां हिंसाजनकत्वेऽपि पापजनकत्वं नास्तीति प्रतिपादितमिति पूर्वोपपादितमदुक्तरीतावनुग्राहकमित्यर्थः । अत्र च क्रत्वर्थहिंसाया हिंसिधातुवाच्यत्वमेव नास्तीति निषेधाप्रवृत्तिं ये मन्यन्ते ते नक्षत्रवादावल्यां शिक्षिताः तत्रैव द्रष्टव्याः । विस्तरभयान्न प्रपञ्च्यते । एवं स्थिते कपिञ्जलाधिकरणे वैदिकीष्वपि हिंसासु प्रत्यवायजनकत्वं भाष्यकारेणोक्तं तत् परमताभिप्रायेणैव नेयम् ।

(९)—अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम् ॥ १७ ॥ विकारे तु तदर्थं स्यात् ॥ १८ ॥ वाक्यशेषो वा क्रतुना ग्रहणात् स्यादनारभ्य विधानस्य ॥ १९ ॥

**अनारभ्याधीतं साप्तदश्यं प्राकरणिकपाञ्चदश्यावरोधात् प्रकृतौ निवेशमलभमानं विकृतौ निविशत** इति स्थितम्। **अतश्च तत्र 'य इष्ट्या' इतिवाक्यप्रमितसद्यस्कालत्ववत्सर्वविकृत्यर्थमेव। ततश्च वैमृधपशुमित्रविन्दाग्रयणादिरूपविकृतिविशेषे 'सप्तदश सामिधेनीरनुब्रूयात्' इति पुनश्श्रवणं न तावदुपसंहारार्थं, सामान्यवाक्यवैयर्थ्यापत्तेः। न ह्यत्र 'पुरोडाशं चतुर्धा करोति' इत्यादिवच्छाखान्तरत्वम्। न चैकशाखास्थत्वेऽप्यनारभ्याधीतेन सामिधेनीसम्बन्धः प्राकरणिकेन क्रतुसम्बन्ध इति विषयभेदात्सार्थक्यमिति वाच्यं, उभयत्रापि सामिधेनीपदस्यैवोद्देश्यसमर्पकत्वेन तत्स्वरूपे आनर्थक्यप्रसक्तौ लक्षणया अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकमन्त्रत्वस्यैवोद्देश्यतावच्छेदकतया विषयभेदाभावात्। अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकं परमेकत्र प्रकरणमपरत्राव्यभिचरितक्रतुसम्बन्ध इत्येतावान् भेदः। न त्वेतावता विषयभेदः, अतश्चोपसंहाररूपसाप्तदश्यपुनश्श्रवणप्रयोजनासम्भवादनारभ्याधीतवाक्यप्राप्तानुवादमात्रं साप्तदश्यपदमङ्गीकृत्य सामिधेनीविधिरेव 'अप्सुमन्तावाज्यभागौ' इतिवत् अङ्गीकर्तव्यः। अतश्च गृहमेधीयाज्यभागन्यायेनापूर्वत्वं वैमृधादीनामिति प्राप्ते—**

**सामिधेनीविधिमात्रेणापूर्वत्वाङ्गीकारे** अग्नेरप्यप्राप्त्यापत्तेरपूर्वत्वायोगात् **साप्तदश्यस्यैव क्रतुविशेषजन्यापूर्वसाधनीभूतसामिधेन्युद्देशेन विधिः। तत्फलं चानारभ्यवाक्यस्य स्वमात्रविषयत्वेनोपसंहारः। न च विषयभेदाभावात्सामान्यविधिवैयर्थ्यं,**

---

अप्रकरणे तु यच्छास्त्रम्।

**इति स्थितमिति।** तृतीये षष्ठपाद इति शेषः। न च विकृतिष्वपि कॢप्तोपकारपाञ्चदश्यप्राप्त्या निवेशानुपपत्तिरित्यत आह—**अतश्चेति।** तथा च सद्यस्कालत्वं आनर्थक्यप्रतिहतन्यायसहकृतौपदेशिकत्वेन शरवत् द्व्यहकालत्वस्य बाधकम्; तद्वत् साप्तदश्यमपि पाञ्चदश्यस्य भवत्येव बाधकमित्यर्थः। **अग्नेरप्यप्राप्त्यापत्तेरिति।** एतच्चातिशयार्थमुक्तम्, गृहमेधीये आज्यभागमात्रोपदेशेपि तदुपयोगित्वेन अग्न्यादिकतिपयपदार्थानां प्रधानोपयोगिनां भवत्येव प्राप्तिरिति नापूर्वार्थत्वहानिः, तथेहापि सम्भवादिति ध्येयम्। **अग्निहोत्रं**

उभयत्रापूर्वसाधनीभूताग्निसमिन्धनप्रकाशकमन्त्रत्वस्यैवोद्देश्यतावच्छेदकत्वेऽप्यपूर्वसाधनीभूतार्थत्वेऽपूर्वार्थत्वस्याप्यार्थिकत्वात्तस्मिन्प्राकरणिकवाक्यस्य तात्पर्यम्। अनारभ्याधीतस्य तु तत्साधनीभूतार्थत्व इति विषयभेदात्। प्राकरणिकवाक्येनैवोभयसिद्धेरनारभ्याधीतवाक्यवैयर्थ्यशङ्का तु 'अग्निहोत्रं जुहोति' इति वदभ्युदयशिरस्कत्वकल्पनया परिहर्तव्या।

न च प्राकरणिकसाप्तदश्यवाक्येन तात्पर्यग्रहादनारभ्यवाक्येन सर्वविकृतिषु नातिदेशप्राप्तपाञ्चदश्यस्य नित्यं बाधः, अपि तु विकल्पेन। अतश्च पक्षप्राप्तसाप्तदश्यनियमार्थं प्राकरणिकवाक्यमर्थवदित्येवं किं न स्यादिति वाच्यं, उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य शब्दस्वभावसिद्धत्वेन विकल्पे तद्बाधापत्तेः। अतश्चाभ्युदयशिरस्कत्वमपि प्रकल्प्योपसंहारार्थत्वमेव युक्तम्। अतश्च वैमृधाद्यतिरिक्तविकृतिषु साप्तदश्येन न पाञ्चदश्यबाधः॥

---

## (१०)—मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ २० ॥ अनाम्नाते च दर्शनात् ॥ २१ ॥ प्रतिषेधाच्च ॥ २२ ॥

अनारभ्य 'स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति श्रुतम्। तेन च वाक्यभेदमङ्गीकृत्य स्वाहाकारवषट्कारयोर्देवकर्माङ्गत्वेन विधिः विकल्पश्च न्यायादेव प्राप्तोऽनूद्यते। पुनश्च केषुचित् दर्वीहोमेषु 'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा' इति स्वाहाकारश्श्रुतः। सोऽपि पूर्वन्यायेनोपसंहारार्थ इति प्राप्ते—

---

जुहोतीतिवदिति। 'उद्भिदा यजेत' इत्यादिवत् एकेनैवाधिकारवाक्येन उत्पत्तिविनियोगसिद्धौ अग्निहोत्रं जुहोतीति वाक्यान्तरं अभ्युदयशिरस्कत्वार्थम्; तद्वदिहापीत्यर्थः। अनेनैव न्यायेन तुल्यतया पुरोडाशवाक्यस्य आग्नेयवाक्येनोपसहारसिद्धावपि आग्नेयत्वस्याग्नीषोमीयादावपि सत्त्वात् उपसंहारोप्यग्नीषोमीयादौ स्यादेव चतुर्थाकरणे इत्याक्षेपस्य समाधानार्थं श्रुतिपादान्त्याधिकरणमिति ध्येयम्।

---

### मन्त्रेष्ववाक्यशेषत्वम्।

अत्र प्रकाशकारैः एकशाखास्थत्वेन सामान्यवाक्यस्य वैयर्थ्यपरिहारासम्भवात् वाक्यद्वयेनापि साक्षादेव कर्मसम्बन्धस्य बोधनेन साप्तदश्यवाक्यवदपि परिहर्तुमशक्यत्वात् तद्वैयर्थ्यापत्त्या अनेन विशेषे नियम एव युक्त इति सिद्धान्तितम्, तत् सामान्यस्य विशेषापेक्षया उपसंहारे

अविधायकमन्त्रयोस्स्वरूपेणोपसंहारायोगात् मन्त्रकल्प्यस्वाहाशब्दविधिनोपसंहारो वाच्यः। तस्य च वषट्कारव्यावृत्तिफलकस्वाहाशब्दनियमप्रयोजनकत्वसम्भवे अनुपस्थित-शेष्यन्तरपरिसङ्ख्यारूपोपसंहारप्रयोजनकत्वानुपपत्तेः नात्रोपसंहारः, अपि तु स्वाहा-शब्दनियम एवेति प्राञ्चः।

वस्तुतस्तु—'याज्याया अधि वषट्करोति' इति वचनेन वषट्कारस्य याज्योत्तर-कालत्वविधानात् यत्र याज्यामन्त्रकरणको यागस्तत्र वषट्कार एव नियतः। यत्र तु याज्याभिन्नमन्त्रकरणकत्वं तत्र परिशेषात्स्वाहाकार एवेति व्यवस्थितविकल्प एव तयोः। एवं च 'पृथिव्यै स्वाहा' इत्यादौ स्वाहाकारपाठो मन्त्रत्वसिध्यर्थः। अत एव यत्र स्वाहाकारो न पठितस्तत्रोक्तविधितस्स्वाहाकारविधानेऽपि न तस्य मन्त्रत्वं तच्छेषे मन्त्रशेषप्रायश्चित्तं वा। न तु तत्र स्वाहाकारस्यैवाभावः। अत एवौदुम्बरीहोमादौ मन्त्रे तत्पाठाभावेऽपि 'मन्त्रेणौदुम्बरीकर्णे होमं कृत्वा भूमिगते स्वाहाकारः' इति स्वाहाकारानुवादेन कालविधिः स्वाहाकारप्राप्तावुपपद्येत। क्वचिच्च होमविशेषे न स्वाहाकरोतीति तत्पर्युदासोऽप्युपपद्यते अतो नात्रोपसंहारः। सूत्राण्यप्यस्मिन्नेवार्थे योजनीयानि।

---

सति अभ्युदयशिरस्कत्वस्यान्योपसह्रियमाणवाक्य इवेहाप्युपपत्तेरयुक्तमिति सामान्यवाक्यवैयर्थ्यापत्ति-सिद्धान्तसाधिकां युक्तिमुपेक्ष्य युक्त्यन्तरमाह—अनुपस्थितेति। एवञ्चेति। दर्विहोमेषु याज्याया अधिवषट्कारस्य पक्षेप्यप्राप्त्येत्यर्थः। मन्त्रत्वसिद्ध्यर्थ इति। स्वाहाकारस्यैव प्राप्तौ सत्यां मन्त्रत्वसिद्ध्यर्थ इत्यर्थः। यद्यपि न्यायतःप्राप्ते पुनः पाठस्य मन्त्रत्वसिद्ध्यर्थत्वेपि वचनेन विहिततया प्राप्तस्य इरापदावत् मन्त्रत्वमपि शक्यं वक्तुम्, तथापि इरापदस्य मन्त्रगतेरापदस्थाने विधानात् भवतु तत्; इहतु अपूर्वतयैव विहितस्य स्वाहाकारस्य मन्त्रत्वे मानाभावात् तत्सिद्ध्यर्थो युक्त एव तत्पाठ इत्यर्थः। औदुम्बरीहोमे इति। 'घृतेन द्यावापृथिवी आपृणेथामित्यौदु-बर्या विशाखे जुहोति आन्तादवस्रावयति भूमिगते स्वाहा करोति' इति विहितौदुम्बरीहोम इत्यर्थः। सूत्राण्यपीति। अत्र 'मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात्' इति सिद्धान्तसूत्रं प्राचीनैः नियमरूपगुणोपदेशहेतुना उपसंहारनिराकरणपरतया व्याख्यातम्। तत् पूर्वोक्तरीत्या नियमरूपगुणोपदेशपरत्वानुपपत्तेः स्वाहापदोपेतमन्त्रोपदेशस्य मन्त्रशेषनिमित्तप्रायश्चित्तप्राप्तिफलकस्य हेतुत्वप्रतिपादनपरतया व्याख्येयम्। यत्तु 'अनाम्नाते च दर्शनात्' 'प्रतिषेधाच्च' इति गुणसूत्रद्वयं तत् अनुपसंहारपक्षसाधकतया ममाप्यविशिष्टमिति त्रीणि सूत्राणि मन्त्रत्वफलकपाठ-सिद्धिरूपार्थे योजनीयानीत्यर्थः।

(११)—अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिस्स्यात् ॥ २३ ॥ मासि ग्रहणं च तद्वत् ॥ २४ ॥ ग्रहणं वा तुल्यत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ ग्रहणं समानविधानं स्यात् ॥ २७ ॥ मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥

'य एवं विद्वानग्निं चिनुते' इत्यनेनोत्पन्नस्य चयनरूपस्याग्नेः 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' इत्यनारभ्याधीतेन ज्योतिष्टोमाङ्गत्वेन विधिरिति स्थितं द्वितीये। अत्रत्याग्निष्टोमशब्दस्य ज्योतिष्टोमपरतया कौस्तुभे व्यवस्थापितत्वात्। तथा अनारभ्याधीतानामेवातिग्राह्यसंज्ञिकानां ग्रहाणां प्राकरणिकेन 'उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः' इति वचनेन ज्योतिष्टोमाङ्गत्वेन विधिः। एवं स्थिते कासुचिद्विकृतिषु अग्न्यतिग्राह्ययोः 'तमुक्थ्येन, तमतिरात्रेण, उक्थ्ये ग्रहीतव्याः' इत्यादिना पुनश्श्रवणं न तावदाज्यभागश्रवणवदपूर्वत्वार्थं प्रकृतिसमकालीनस्यास्य विधानस्य क्लृप्तोपकारकत्वाभावेन चोदकपरिलोपकत्वानुपपत्तेः अग्निसोमाद्यर्थमतिदेशस्यावश्यकत्वाच्च। अतो विकृत्यन्तरे अग्न्यतिग्राह्यपरिसङ्ख्यार्थमेवेदमिति प्राप्ते—

---

अग्न्यतिग्राह्यस्य विकृतौ।

अथातोऽग्निमिति। इष्टकाचितमग्निमनु तस्मिंश्चिते अग्नौ अग्निष्टोमेन यजन्तीत्यर्थः। एवं तमुक्थ्येनेत्यादिष्वपि द्रष्टव्यम्। अत्र चानारभ्याधीतस्याग्नेः प्राकरणिकोत्तरवेद्यवरोधेन ज्योतिष्टोमे निवेशानुपपत्तेः सर्वविकृतिषु निवेशे प्राप्ते इमानि वाक्यानि उपसंहारार्थानि। अत एव अग्निष्टोमवाक्यगतमग्निष्टोमपदमपि विकृत्यग्निष्टोमाभिप्रायम्। अतः प्राकरणिकोत्तरवेदिबाधकस्य कस्यचिदभावात् पाञ्चदश्येनेव उत्तरवेद्या अग्नेः प्रकृतौ बाधे सति अर्थाद्विकृतिषु निवेशे सिद्धे अग्निष्टोमाद्येकादशरात्रान्तासु विकृतिषु पुनर्विधानानि विकृत्यन्तरपरिसङ्ख्यार्थानीति ये मन्यन्ते, अथवा अप्यग्निष्टोमे राजन्यस्येतिवत् इह महाप्रकरणावान्तरप्रकरणाभावे प्रकृतिभूताग्निष्टोमपरत्व एव प्रमाणाभावात्, 'यदाहवनीये जुहोति' इति वाक्यगतजुहोतेरिवात्रत्याग्निष्टोमादिपदानां प्रकृतिविकृतिमात्रपरत्वमङ्गीकृत्योपदेशत एव सर्वत्राग्निप्राप्त्या तदाश्रितगुणकामानां प्राप्तिः 'नित्यात् काम्यस्य शैघ्र्यात्' इति श्लोकविवरणे विधिरसायने उपपादिता, तां निराकर्तुमाह— अत्रत्याग्निष्टोमपदेनेति। यद्यग्निष्टोमवाक्यगतमग्निष्टोमपदं प्रकृतिबोधनेऽसमर्थं भवेत् तदा कथञ्चित्स्याद्विकृतिविशेषबोधकम्; प्रत्युत अग्निष्टोमसंस्थायाः प्रकृतौ ज्योतिष्टोम एवोत्पन्नविनियुक्तायाः

अस्यां विकृतौ तद्विधानेन विकृत्यन्तरे एतद्विषये अतिदेशपरिलोपकत्वानुपपत्तेः प्राप्तपरिसङ्ख्या वाच्या। सा च त्रिदोषैव। न च वैयर्थ्यभिया एतस्य तात्पर्यग्राहकत्वमङ्गीकृत्य विकृत्यन्तरातिदेशस्य तद्विषयत्वाकल्पनमिति वाच्यं, लघुतरप्रयोजनान्तरसम्भवे दूरस्थातिदेशस्यैतद्विषयत्वाभावकल्पनपूर्वकं परिसङ्ख्याफलकत्वानुपपत्तेः॥

तथाहि–प्रकृताविव विकृतिष्वपि कासुचित्तुल्यतयोपदेशोऽग्न्याद्याश्रितानां 'श्येनचितं चिन्वीत स्वर्गकामः' इत्येवमादीनां श्येनाद्याकारतालक्षणगुणकामानां तासु विकृतिषु प्रवृत्त्यर्थः। अन्यथा हि प्रकृत्यपूर्वसाधनीभूतचयनस्यैव तत्राश्रयत्वापत्तेराष्टमिकन्यायेन तत्र तेषामप्राप्तेः। सति त्वस्मिन्विधौ प्रकृत्यपूर्वसाधनीभूतचयनस्येव तत्तद्विकृत्यपूर्वसाधनीभूतचयनस्याप्याश्रयत्वाविशेषात् गुणकामप्राप्त्युपपत्तिः। एव च चयनस्य प्रकृतौ वैकल्पिकत्वात् तन्नियमोऽपि प्रयोजनम्।

यद्यपि हि 'उत्तरवेद्यां ह्यग्निश्चीयते' इति वचनादग्न्युत्तरवेद्योस्समुच्चयस्सङ्कर्षे वक्ष्यते। तथाऽपि 'यद्यग्निं चेष्यमाणा भवन्ति' 'अग्निस्सोमाङ्गं वेच्छताम्' इति श्रुतिकल्पसूत्रपर्यालोचनयाऽग्नेः स्वाभावप्रतियोगिको विकल्प इष्ट एव। अत एवोत्तरवेदिमात्रेण निरग्निकोऽपि ज्योतिष्टोमप्रयोगः 'उत्तरवेद्यामग्निं निदधाति इति वचनादिष्टः।

अतश्च विकृतिष्वपि तथैव प्राप्तौ कासुचित्पुनः श्रवणं नियमार्थमपि सम्पद्यते। न ह्ययमतिदेशप्राप्त्युत्तरकालं शाब्दो नियमः। येन प्रकृतिसमकालीनस्यास्यातिदेशतः

---

प्रथमतस्तदङ्गत्वात् तमेव धर्मित्वेनाङ्गीकरोतीत्यनन्यापेक्षनिरूढलक्षणया तमेवाग्निष्टोमशब्दो वदति। विकृतिं तु प्रकृत्यपेक्षत्वात् साम्प्रतिकलक्षणया। नहि वैकृती अग्निष्टोमसस्थान्तरम्। किन्तु प्राकृत एव पदार्थः, तत्रैवोत्पत्त्या लब्धात्मकोऽनेन अग्निष्टोमवाक्येनोद्देश्यत्वेन समर्थ्यते इति प्रकृत्यग्निष्टोमापेक्षितत्वात् विलम्बितार्थग्रहणे नैव किञ्चित्प्रमाणम्। अतो झटित्युपस्थितप्रकृत्यग्निष्टोमाङ्गत्वेन अग्नेर्वाक्येन विनियोगे सति प्रकरणावगताङ्गभावोत्तरवेद्या बाधानुपपत्तेः न पाञ्चदश्यन्यायप्रवृत्तिः। अत एव तुल्यबलतया द्वयोरपि विकल्पे न्यायेन प्राप्ते 'उत्तरवेद्याँह्यग्निश्चीयते' इति वचनादेव समुच्चयेन प्रकृतौ निवेशोऽत्रैव वक्ष्यत इति न काचनानुपपत्तिरिति भावः। तथैव प्राप्ताविति। स्वाभावेन सह विकल्पेन प्राप्तावित्यर्थः। अत्र तन्त्ररत्ने उत्तरवेद्या सह विकल्पितस्याग्नेः नियमार्थत्वमेतेषां वाक्यानामाशङ्क्य यद्यत्र खादिरत्ववत् द्विरात्रादिविकृतिप्रकरणे एतेषामाम्नानं भवेत् ततः आकाङ्क्षया कल्प्यमानातिदेशप्रवृत्त्युत्तरभावितया नियमार्थत्वं स्यात्, न तदस्ति; एतेषां प्रकृत्यङ्गत्वसमकालमेवाङ्गताबोधकत्वेनातिदेशोत्तरप्रवृत्तिकत्वाभावादिति परिहृतम्। तदनूद्य दूषयति—न ह्ययमिति। यदपि अनारभ्याधीतं

पूर्वप्रवृत्तत्वादसम्भव आशङ्क्येत। पूर्वमेव तु प्रवृत्तेनानेन विकृत्यर्थतया विहिते चयने पश्चादपि प्रवृत्तस्यातिदेशस्य तद्विषयत्वाकल्पनवत् तदभावविषयत्वस्याप्यकल्पनात्। अत एव सन्निहितगुणकामप्रवृत्तिरूपप्रयोजनसम्भवे दूरस्थतत्तदतिदेशप्राप्त्यपेक्षपाक्षिकत्वाधीननियमप्रयोजनकल्पनानुपपत्तिरित्यपास्तम्। उक्तप्रयोजनकल्पनस्याप्यतिदेशप्राप्त्यधीनवैयर्थ्यप्रतिसन्धानसापेक्षतया अतिदेशोपस्थित्यधीनत्वात्। अतो लघुभूतप्रयोजनद्वयसम्भवे न गुरुभूतपरिसङ्ख्याफलकत्वाङ्गीकारः।

अत एव विकृत्यन्तर इव गवामयनादिरूपसत्रेऽपि प्रत्यहमतिग्राह्यप्राप्तौ 'मासि मासि अतिग्राह्या गृह्यन्ते' इति विशेषविधिरुपपद्यते। विकृतिविशेषे च कङ्कचित्यादिविशेषविधानं, 'पञ्चैन्द्रानतिग्राह्यान् गृह्णीयात्' इत्यादिविशेषविधानमप्युपपद्यते। तस्माद्विकृतिमात्रे अतिग्राह्याः कार्याः साद्यस्क्रे सारस्वतसत्रे च परमशक्यत्वादग्निर्नेष्टः।

---

## (१२)—उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वात् लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥ तत्संस्कारश्रुतेश्च ॥ ३० ॥ ताभ्यां वा सह स्विष्टकृतस्सकृत्त्वे द्विरभिघारणेन

---

'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इतिवाक्यं वैकल्पिकस्य षोडशिनो नियमार्थमिष्टमित्याशङ्क्योत्तरमुक्तम्—सत्यं प्रयोजनान्तराभावात्, इह तु सन्निहितगुणकामप्रवृत्तिप्रयोजनसम्भवान्न दूरस्थचोदकप्राप्तोत्तरवेदिनिवृत्तिः प्रयोजनं भवितुमर्हतीति तदपि दूषयति—अत एवेति। एतेन द्विरात्रादिविकृतावपि अग्निर्वैकल्पिक एव। यदा अग्निः तदा तदाश्रितगुणकामा इति प्रकाशकाराणां प्रयोजनोक्तिरप्यपास्ता। कङ्कचिदित्यादि। 'कङ्कचितं चिन्वीत' 'शीर्षचितं चिन्वीत' इत्यादिवाक्यैः कङ्कपक्ष्याकारत्वशीर्षाकारत्वगुणविधान नासति चयने भवतीति चयनस्य सर्वविकृत्यर्थत्वे लिङ्गम्। तथा प्रकृतौ अग्नीन्द्रसूर्यदेवत्यास्त्रयोऽतिग्राह्यसंज्ञका ग्रहा विहिताः। तेष्वतिदेशप्राप्तेषु ऐन्द्रातिग्राह्ये पञ्चत्वसङ्ख्याविशेषविधिः अतिग्राह्याणां सर्वविकृत्यर्थत्वे लिङ्गमित्यर्थः। परमशक्यत्वादिति। साद्यस्क्रे सद्य एव साङ्गसुत्यानुष्ठानाच्चयनपूर्वकतदनुष्ठानकालाभावात्, सारस्वते च 'शम्यापरासमीयुः' इति वचने शम्या परा दूरे अस्यते क्षिप्यतेऽस्मिन् देशे इति व्युत्पत्त्या शम्यापरासदेशविधेः देशैक्याभावादशक्यत्वमित्यर्थः।

---

तदाप्तिवचनात् ॥ ३१ ॥ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३२ ॥

दर्शपूर्णमासयोः 'चतुरवत्तं जुहोति' इत्यनेन हविष एव चतुरवदाय होमः उत हविषो द्विरवदान उपस्तरणाभिघारणाभ्यां चतुरवत्तसम्पत्तिरिति संशये—

द्वितीयाश्रुत्या **चतुरवत्तोद्देशेन प्रक्षेपविधिना चतुरवदानसंस्कृतद्रव्यत्वमेवात्रोद्देश्यतावच्छेदकं न त्ववदानसंस्कृतद्रव्यत्वमात्रं, चतुःपदस्य सुच्प्रत्ययान्तस्य जुहोत्यन्वये होमावृत्तिकल्पनापत्तेर्विशिष्टविधौ गौरवापत्त्या षष्ठविधिप्रकारापत्तेश्च निष्ठाप्रत्ययान्तावत्तपदलक्ष्यक्रियायामेवान्वयस्य व्युत्पन्नतया विशिष्टोद्देशे वाक्यभेदाभावात्। अतश्चोद्देश्यप्रसिध्यर्थं यागीयद्रव्यस्य चतुस्सङ्ख्याकावदानविधिकल्पनाद्धविष एव चतुरवत्तं गृहीत्वा तस्य प्रक्षेपाख्याप्रतिपत्तिः, उपस्तरणाभिघारणे त्वधिकस्संस्कार इति मन्वानस्योत्तरम्—नात्र चतुस्सङ्ख्याकावदानविधिकल्पना 'द्विर्हविषोऽवद्यति' इत्यनेन** द्वित्वविशिष्टावदानस्य **हविस्संस्कारार्थत्वात्।**

---

**उत्पत्तितादर्थ्यात्।**

अत्र **भाष्यकारेण** सिद्धान्ते चतुरवत्तं जुहोतीत्यत्र होमार्थत्वेन चतुस्सङ्ख्याविशिष्टावत्तविधिमङ्गीकृत्य चतुस्सङ्ख्यायाः साक्षाद्धोमान्वये गुणानुरोधेन प्रधानावृत्त्यापत्तेः तमतिक्रम्य तत्साधनपरिच्छेदद्वाराऽन्वये वक्तव्ये तत्साधनत्वस्य द्व्यवदान इवोपस्तरणाभिघारणार्थाज्येपि सत्त्वात् तमादायैव चतुस्सङ्ख्योपपत्तेः न हविष एव होतव्यस्य चतुरवदानमिति सिद्धान्तितम्, तच्च वार्तिककृता यागेषु होमस्याप्राप्तेः अनुवादायोगात्, कृष्णालादावपि होमानुरोधेन चतुरवदानापत्तेः, द्व्यवदानोपस्तरणाभिघारणमादायापि चतुस्सङ्ख्यामुवादेन सत्यां गतौ विध्यङ्गीकारे गौरवापत्त्याऽयुक्तमिति प्रदूष्य द्वितीयासंयोगात् चतुरवत्तस्यैव प्राधान्येन होमस्यैव तदर्थतया विधानात्र हविषश्चतुरवदानमिति सिद्धान्तितम्। तत्रैतन्मतेन होमस्य गुणत्वाङ्गीकारेपि पूर्वपक्षमारचयति —**द्वितीयाश्रुत्येति**। **एतेन** चतुरवत्तवाक्ये अवत्तपदस्य विशेषणप्रधानत्वमङ्गीकृत्य अवदानस्य होमार्थत्व? उत होमस्यावदानार्थत्वम्? इति संशयपूर्वकं होमस्यावदानार्थत्वेऽदृष्टकल्पनापत्तेः अवदानस्यैव होमनिष्पादकतया दृष्टार्थतालाभात् होमार्थत्वमेवेति **तन्त्ररत्ने** विचारकरणमपास्तम्। निष्ठाप्रत्ययोक्तकर्मण एव प्राधान्येन धात्वर्थप्राधान्यायोगात्, अवदानस्य सामर्थ्यादेव अवदीयमानसंस्कारत्वेन होमार्थत्वशङ्काऽनुदयात्; अवत्तस्यैव द्वितीयया प्राधान्यावगतेः अवदानस्य होमार्थत्वसिद्धान्तेन प्रयोजनाऽभावात्। **द्वित्वविशिष्टावदानस्येति**। **एतेन** 'द्विर्हविषो-

**अत एवात्रत्यचतुः पदं नोद्देश्यतावच्छेदककोटिप्रविष्टं गौरवात्। अतश्च यथैव हि पूर्वाधिकरणे 'अथातोऽग्निमग्निष्टोमेन' इत्यत्राग्निष्टोमपदेनाग्निष्टोमसंस्थाकज्योतिष्टोमत्वोक्तावपि नाग्निष्टोमसंस्थाकत्वस्योद्देश्यतावच्छेदककोटिप्रविष्टत्वं गौरवात् प्रयोजनाभावाच्च। किन्तु ज्योतिष्टोमत्वस्यैवोद्देश्यतावच्छेदकत्वं, तथा प्रकृतेऽप्यवदानसंस्कृतद्रव्यत्वमेवोद्देश्यतावच्छेदकं न तु चतुस्सङ्ख्याऽपि तत्कोटिप्रविष्टा। अत एव चतुःपदमुपस्तरणाभिघारणाभिप्रायेणानुवादमात्रम्।**

अत एव स्विष्टकृति **'सकृदुपस्तृणाति सकृदवद्यति द्विरभिघारयति चतुरवत्तस्याप्त्यै' इत्यभिघारणद्वित्वेन चतुस्सङ्ख्यासम्पत्तिं दर्शयति। तथा 'यदुपस्तृणाति तदनुवाक्यायै, यत्पूर्वमवदानं तद्याज्यायै, यदुत्तरं तद्देवतायै, यदभिघारयति तद्वषट्काराय' इति चत्वार्यवदानानि सङ्कीर्तयन्नुपस्तरणाभिघारणे दर्शयति। अतस्सिद्धं चतुःपदं प्रचयशिष्टसङ्ख्यानुवादः।**

**एवं जामदग्न्यादीनां त्र्यवदाने विहिते तेषां पञ्चावदाने पञ्चत्वमपि प्रचयशिष्टानुवाद एव। एवं प्रकृतौ चतुःपञ्चपदयोरनुवादत्वेऽपि पशौ 'यद्यपि चतुरवत्ती यजमानः' इत्यत्र पञ्चत्वस्य पञ्चत्वविशिष्टावदानस्य वा विधिरेव।** तत्राङ्गेषु द्व्यवदानस्य **वपायां च सकृदवदानस्य विहितत्वेन पञ्चत्वस्य प्रचयशिष्टानुवादत्वानुपपत्तेः।**

---

ऽवद्यति' इति वाक्ये अर्थप्राप्तेऽवदाने द्वित्वसङ्ख्यामात्रविधिपूर्वपक्षोऽपि प्राचीनैरुक्तः **परास्तः**। चतुरवत्तस्योद्देश्यत्वप्रसिद्ध्यर्थं अवदानविधिकल्पनमपेक्ष्य अवदानस्यार्थप्राप्तत्वे उच्यमाने तद्विधिकल्पनायां चतुस्सङ्ख्याविशिष्टस्यैव तस्य विधेयत्वापत्त्या तत्र द्वित्वविधानानुपपत्तेः। अतस्तत्र द्वित्वविशिष्टावदानविधिमपेक्ष्यैव चतुरवत्तवाक्यप्रवृत्तिर्युक्तेत्यर्थः। अत एव विषमशिष्टत्वात् विकल्पेनावदाने द्वयोः सङ्ख्ययोर्निवेशः पूर्वपक्ष्यभिप्रेतो निरसनीयः। अनुवादमात्रमिति तु अवदाने चतुस्सङ्ख्यायाः प्राप्त्यभावे कथं तद्गतचतुस्सङ्ख्यापरं चतुः पदमनुवादः। अतोऽवद्यतिधातुः संस्कारमात्रोपलक्षणार्थो वाच्यः। तदपेक्षया कल्पितेन विधिना 'द्विर्हविषोऽवद्यति' इति वाक्यप्राप्तावदानानुवादेन चतुस्सङ्ख्यामात्रविधानम्; अवद्यतिवाक्य एव तु चतुष्ट्वान्तर्गततया प्राप्तद्वित्वानुवादः। एवञ्च चतुरवदानपूर्वपक्षस्यैव सिद्धिरित्याशङ्कायामाह —**अत एव स्विष्टकृतीति**। ततश्चैतादृशलिङ्गदर्शनज्ञापकबलात् अवद्यतिरेव संस्कारमात्रोपलक्षणमिति संस्कारसमूहाभिप्रायेणानुवादः चतुः पदमित्यर्थः। **तत्राङ्गेषु द्व्यवदानस्येति**। तानि द्विर्द्विरवद्यतीति वचनेन अङ्गेषु हृदयादिषु द्व्यवदानस्य वपायां च 'सकृदवद्यति' इति वचनेन सकृदवदानस्य विधानेन अतिदेशप्राप्तोपस्तरणाभिघारणाभ्यां सह चतुष्ट्वस्य त्रित्वस्य वा

**अत एव यत्र नेदृशं वचनं तत्रैककपालस्य सर्वहोमार्थं सकृदवदाने उपस्तरणाभिघारणाभ्यां त्र्यवदानमेव। अत एव पूर्वपक्षे चतुस्सङ्ख्यायास्तत्र बाधः। सिद्धान्ते तु तस्याः प्रकृतावनङ्गत्वादेव न बाधः द्व्यवदानमात्रस्यैव तु बाध इति बाधोपयोगिताऽप्यस्याधिकरणस्य।**

---

## (१३)—सासदश्यवन्नियम्येत ॥ ३३ ॥ हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ॥ ३४ ॥

**यदा चतुस्सङ्ख्याया अप्युद्देश्यतावच्छेदककोटिप्रविष्टत्वेन चतुस्सङ्ख्याकावदानविधिकल्पना,** तदा **किमुपांशुयाजे चतुरवत्तं भवति नेति कृत्वाचिन्तया चिन्त्यते। इदं चोपांशुयाजे चतुर्गृहीतविधिर्नास्तीति कृत्वाचिन्तान्तरं बोध्यम्। तत्रावदानाङ्गभूतचतुस्सङ्ख्याया औषधसान्नाय्ययोः** पशुवदु**पस्तरणाभिघारणाभ्यां सम्पादितत्वादुपस्तरणाभिघारणयोश्च स्रुच्यसंसर्गार्थतया उपांशुयाजेऽर्थलोपान्निवृत्तेश्चतुरवत्तस्यापि लोप इति प्राप्ते—**

---

प्राप्तेः पञ्चत्वानुवादानुपपत्तेरिति। अथवाऽस्तु वपावाक्ये पञ्चत्वं विधीयते; तस्यैव च "तानि द्विर्द्विरवद्यति"; "सकृदवद्यति" "हिरण्यशकलेनावद्यति" इति विधिभिः प्रकारमात्रं विधीयते। न वैपरीत्येन पञ्चत्वमनुवादः। तथेहापि चतुरवत्तस्य कल्पितविधिः, तस्यैव "द्विर्हविषोऽवद्यति" इत्यादिवाक्यानि चतुरवत्तसम्पत्त्यर्थप्रकारमात्रविधायकानि। एतावान् परं विशेषः—तत्र पञ्चत्वस्य प्रत्यक्षो विधिः इह तु सस्कार्यत्वान्यथानुपपत्तिकल्पित इति। एवञ्च उत्तराधिकरणविचारे चतुरवत्तविधिमङ्गीकृत्य यत् कृत्वाचिन्ता वक्ष्यते, तदपि न कल्पनीयमापद्यत इत्यपि पक्षः **कृष्णलपेटिकायां** पूज्यपादैः स्वमतत्वेनोक्तो न विस्मर्तव्य इति ध्येयम्।

---

सासदश्यवन्नियम्येत।

**तदेति।** अत्र चतुरवत्तविधिकल्पनेपि न पूर्वाधिकरणपूर्वपक्षरीत्या इयं कृत्वाचिन्ता। तदा हि अवदातेरेव चतुस्सङ्ख्यान्वयेनोपस्तरणाभिघारणयोरधिकयोः उपांशुयाजे लोपेपि क्षतिविरहात्, उपांशुयाजे चतुरवदानोपपत्त्या पूर्वपक्षानुत्थानापत्तेः। अतः चतुरवत्तविधिकल्पनायामपि अवद्यतिं संस्कारमात्रपरामङ्गीकृत्यैव कृत्वाचिन्त्यत इत्यर्थः। **पशुवदिति।** यथा पशौ

विहितचतुस्सङ्ख्यायाः 'द्विर्हविषोऽवद्यति' इत्यनेन हविषो द्विरवदाने विहिते औषधसान्नाय्यस्थले उपस्तरणाभिघारणाभ्यां पञ्चत्वसम्पादनेपि सङ्कोचे प्रमाणाभावेनोपांशुयाजेपि प्रवृत्तायास्तस्या हविषैव सम्पादनोपपत्तेर्लोपे प्रमाणाभावात् कर्तव्यमेव चतुरवदानम्।

---

पञ्चावदाने विहितेपि उपस्तरणाभिघारणाभ्यामेव तत्सम्पत्तिः तथेहापि ताभ्यामेव तत्सम्पत्तेः तदभावे लोप उपांशुयाजेरित्यर्थः।

अत्र शास्त्रदीपिकायां कृत्वाचिन्तोद्घाटने परमार्थतस्तु चतुस्सङ्ख्याया अनुवादोपपत्तौ न होमार्थतया विधिः; किन्तु चतुरवत्तोद्देशेन होमस्यैव; तथाचोपस्तरणाभिघारणाभ्यां सम्पादनीयस्य तस्योपांशुयाजे प्राप्त्यभावेन उद्देश्यस्याप्यभावे, होमस्य नानेन वचनेनोपांशुयाजे प्राप्तिः तथापि "चतुर्गृहीतं जुहोति" इति वाक्यान्तरादेव चतुर्गृहीतविधिरित्युक्तम्।

तत्र प्रकाशकारैः, चतुर्गृहीतं जुहोति' इति वाक्यं तन्त्ररत्नस्वारस्यानुरोधेन 'तदष्टसङ्ख्यम् (पू. मी. ४–१–१७) इत्यधिकरणे चतुर्थे यदनारभ्याधीतत्वेन पठितं तदेवेदमित्यङ्गीकृत्य अनेन चतुरवत्तं जुहोतीति वाक्य इव होमानुवादेन चतुर्गृहीतविधाने अप्राप्तहोमकोपांशुयाजे चतुर्गृहीतप्राप्त्यनापत्तिदोषापत्तेः, तद्वदेव प्राप्तचतुर्गृहीतोद्देशेन होमस्यैव विधेः युक्तत्वात् चतुर्गृहीतविधिरप्यनुपपन्नः इत्याशङ्कां चतुर्गृहीते विधिरित्यर्थकरणेन परिहृत्य, प्राप्तिस्तु 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तद्गृह्णाति। चतुर्ध्रुवायाम्। सर्वस्मै वा एतद्यज्ञाय' इत्यादिभिः इत्येवं चतुर्गृहीतप्राप्त्युपपादनात्; तेन—ननु कथं तर्हि तदष्टसङ्ख्यमित्यधिकरणे होमाङ्गत्वेन चतुर्गृहीतेन होमाङ्गग्रहणाङ्गभूताष्टत्वसङ्ख्याया बाधात् अष्टावुपभृतीति वाक्ये, चतुष्कद्वयलक्षणेत्युक्तमित्याशङ्कायां परिहृतम्—होमसंस्कार्यमेव चतुर्गृहीतं प्रयाजत्रये उपांशुयाजयागे च पूर्वोक्तवाक्यैरङ्गत्वेन प्राप्तमिति घटते संस्कार्यम्। इह तु प्रयाजद्वये अनूयाजेषु च होमसंस्कार्यता चतुर्गृहीतस्योक्ता चतुर्गृहीतस्य वपायागाङ्गत्वं विनाऽनुपपन्नेत्यष्टशब्दे लक्षणां कल्पयित्वा चतुर्गृहीतस्य यागाङ्गत्वं कल्प्यते संस्कार्यत्वोपपत्त्यै इत्युक्तम्।

तत्रेदं विवेचनीयम्। उपांशुयाजे चतुर्गृहीतं प्राप्तं वा? न वा? आद्ये होमस्योपांशुयाजादिवाक्यैरप्राप्तत्वेन चतुर्गृहीतप्राप्त्यनापत्तिदोषापादनासामञ्जस्यम्। अनारभ्यविध्यप्रवृत्तावपि चतुर्ध्रुवायामित्यनेनैव तस्य प्राप्तत्वात्। द्वितीये अन्यतः चतुर्गृहीता_

**वस्तुतस्तु—पूर्वोक्तविधयाऽवत्तोद्देशेनैव प्रक्षेपविधानाच्चतुरसङ्ख्याया उद्देश्यतावच्छेदककोटिप्रवेशाभावेनाविधेयत्वादुपांशुयाजे उपस्तरणाभिघारणयोः प्रयोजनाभावेन लोपेऽपि 'द्विर्हविषोऽवद्यति' इत्यनेन द्व्यवदानस्यैव प्राप्तौ 'चतुर आज्यस्य गृह्णाति' इत्युपांशुयाजावान्तरप्रकरणपठितवाक्येनोपांशुयाजोद्देशेन ध्रौवापादानकचतुर्गृहीतविधानात् तेनैवोपांशुयाजः, तस्यैव च प्रक्षेपः, प्रतिपत्तिः।**

**यत्त्वनारभ्याधीतं 'चतुर्गृहीतं जुहोति' इति वचन तेनाविहितद्रव्यकभेदनहोमाद्यनुवादेन चतुर्गृहीतविधानं न तूपांशुयाजे, जुहोतिना यागलक्षणायां प्रमाणाभावात् प्राकरणिकध्रौवविधिना तस्यैव द्व्यवदानप्रसक्तौ अनारभ्याधीतचतुर्गृहीतबाधप्रसङ्गाच्च। अत 'आज्याच्च सर्वसंयोगात्' इत्यधिकरणभाष्यलिखितोपांशुयाजप्रकरणपठितवाक्यादेव तत्र चतुर्गृहीतविधिः। तस्यैव च तदीयप्रक्षेपः प्रतिपत्तिरिति सिद्धम्।**

---

प्राप्तौ चतुर्गृहीतोद्देशेन **होमविधिपक्षेपि** होमस्याप्राप्तेः चतुर्ध्रुवायामित्यादिभिः तस्याङ्गत्वेन प्राप्तेः हौमसस्कार्यत्वं घटते इत्ययुक्तम्।

किञ्चोत्तरप्रयाजद्वये अनूयाजेषु चतुर्गृहीतस्य होमसंस्कार्यत्वान्यथानुपपत्त्या यागाङ्गत्वेन विधिकल्पनमप्ययुक्तम्। यत्र चतुर्गृहीतस्य आद्यप्रयाजत्रयादिषु साधनत्वेन प्रत्यक्षविधितः प्राप्तिः तामुपजीव्यैव सस्कारविधेरुपपत्तौ विध्यन्तरकल्पनापादकत्वे प्रमाणाभावात्; प्रत्यक्षवाक्यविहिताष्टसङ्ख्यावरुद्धे कल्पितविध्यन्तरप्राप्तचतुर्गृहीतस्य निवेशानुपपत्तेश्च। इष्यत एव हि प्रकरणेनापि क्लृप्तक्रतुसम्बन्धपाञ्चदश्यावरुद्धायां प्रकृतौ कल्प्यमानक्रतुसम्बन्धसाप्तदश्यस्यानिवेशः। तत्र किमु वक्तव्यं प्रत्यक्षवाक्यविहितक्रतुसम्बन्धाष्टगृहीतावरुद्धे चतुर्गृहीतस्यानिवेश इति। अतो यत्र न निर्दिष्ट द्रव्यं भेदनहोमादिषु तत्रैवाकाङ्क्षया चतुर्गृहीतस्य साधनत्वेनैव विधिः अनारभ्याधीतवाक्येनेत्येव युक्तम्। उपांशुयाजे होमत्वाभावेनैतद्विधेरप्रवृत्तौ 'चतुर आज्यस्य' इत्यनेन वाक्येन तु द्वे चतुर्गृहीते विहिते। तत्र होमस्य प्राप्तिः 'चतुर्गृहीतं जुहोति' इति प्रतिपत्तिविधायकवाक्यान्तरेणैवेत्यभिप्रायक एव **शास्त्रदीपिकायां** चतुर्गृहीतवाक्योपन्यासः। एवञ्च होमाङ्गतया चतुर्गृहीतस्य विधानं अनारभ्याधीतविधिनेति यच्चतुर्थे उक्तं तेनापि न विरोध इत्येतत्सर्वमभिप्रेत्याह—**वस्तुतस्त्विति। वाक्यादेवेति।** वाक्यादेवेत्येकवचनान्तवाक्यपदं चतुर्ग्रहणवाक्यहोमविधायकवाक्ययोरुपलक्षणम्। एकत्र भाष्यलिखितत्वाभावात् अपरत्र चतुर्गृहीतविधायकत्वाभावात्। अतो भाष्यलिखितात् चतुर्गृहीतं जुहोतीति वाक्यात् तस्यैव प्रक्षेपः प्रतिपत्तिः; पूर्वलिखितात् प्रकरणपठिताद्वाक्यात् चतुर्गृहीतविधिरित्यर्थः। यद्यपि

येष्वेव चतुर्गृहीतं प्रत्यक्षविधिना विहितं, यथा आद्यप्रयाजत्रयोपांशुयाजादिषु तमादायैवानारभ्य-विधेः चतुर्गृहीतोद्देशेन होमविधायकत्वमुपपद्यत एव। उत्तरप्रयाजद्वयानूयाजेष्वपि चातुर्थिकरीत्या आतिथ्यागतानूयाजाभावहेतुज्ञापकबलादेव अष्टपदे चतुष्कद्वयलक्षणया तत्प्राप्तिः शक्यते वक्तुमिति तदेवानारभ्याधीतं वाक्य 'आज्याच्च' इत्यधिकरणे लिखितमिति युक्तमेव; तथापि चातुर्थिकभाष्यादिसकलग्रन्थस्वारस्यानुरोधेन होमाङ्गतया चतुर्गृहीतस्यानारभ्याधीतवाक्येन विधिरिति निर्विवादम्। स्पष्टमेव च पूर्वाधिकरणान्ते उपांशुयाजे अनारभ्याधीतवाक्यप्रवृत्ति-प्रदर्शनपरे सर्वेष्वप्याज्यहविष्षु चतुर्गृहीतविधानादिति तन्त्ररत्नग्रन्थे साधनत्वेनैव विधानं प्रतीयते। तेन चोत्तरप्रयाजद्वयानूयाजेष्वपि चतुर्गृहीतस्य प्राप्तिरिति प्राचामुक्तौ जुहोतिचोदनाचोदितेष्वेव तद्विधानात् यजतिष्वप्राप्तेः परं विवादे सति आज्याच्चेत्यधिकरणे (पू. मी. ३—५—१) यदीदं अनारभ्याधीतमेव वाक्यं लिखितं; तथापि तेनोपांशुयाजादौ तदप्राप्तेरवश्यं शेषाभावसाधकतया शेषप्रतिपत्तिविधायकमेव वाक्यान्तरं भाष्ये लिखितमिति कल्पनीयमेव। अत एवेह पुनर्होमसयोगः चतुर्गृहीत जुहोतीति तत्रत्यभाष्ये इहपदोपादानमुपपद्यते। एवं सत्यपि येषां अनारभ्याधीतवाक्यस्य होमविधाने एवाग्रहस्तेषां भेदनादिहोमेषु चतुर्गृहीतस्य प्राप्तिर्दुरुपपादैवेत्याशयः।

**मम तु प्रतिभाति।** प्रयाजादिषु होमविधायकवाक्यान्तराभावे चतुर्गृहीतस्य प्रक्षेपप्रतिपत्तिः तत्र यज्याक्षेपेणैवेत्यावेदितमेव सर्वप्रदानाभिक्रमाधिकरणयोः **पूज्यपादैः**। एवञ्च तथैवोपांशुयाजेपि प्रक्षेपप्राप्तेः वाक्यान्तरत्वेन कल्पितमपीदं व्यर्थं सत् चतुर्गृहीतस्योपांशुयाजे साधनत्वेन यागलक्षणया विधायकम्। न च 'चतुर आज्यस्य' इत्यनेन तस्यापि तत्र प्राप्तिः। तस्य **बोधायन**वचनत्वेन तन्मूलभूतश्रुतेरेवैवंरूपायाः भाष्यकारेण लिखितायाः पुनर्विधानत्वाभावात्। अत एव 'द्विर्हविषोऽवद्यति' इति वाक्यं औषधसान्नाय्यविषयमेव। एवञ्च "चतुर्गृहीतविधिः" इति **शास्त्रदीपिका**ग्रन्थस्य चतुर्गृहीते विधिः इति व्याख्याक्लेशोऽपि नापद्यते। यत्तु **तन्त्ररत्ने** पूर्वाधिकरणान्ते चतुरवत्तोद्देशेन होमविधानेन तथा सति उपांशुयाजे चतुरवदानं न सिद्ध्येदित्याशङ्क्य "नैष दोषः; वचनान्तरमनारभ्याधीतं 'चतुर्गृहीत जुहोति' इति ईदृशमस्ति इत्युक्तं चतुर्थे। तेन सर्वेष्वाज्यहविष्षु चतुर्गृहीतविधानादुपांशुयाजे चतुर्गृहीतसिद्धिः" इत्युक्तम्। तद्यद्यपि उपांशुयाजे होमस्याक्षेपादेव प्राप्तिरिति पूज्यपादोक्तार्थस्य साधकम्; अन्यथा होमाभावे चतुर्गृहीतसिद्ध्युक्तेरयुक्तत्वापत्तेः; तथापि जुहोतिचोदनाचोदितहोमेष्वेव चतुर्गृहीत-विध्यङ्गीकारेण ध्रौवाज्यस्य 'द्विर्हविष' इति वाक्येन द्व्यवदानस्यैव प्राप्तौ अनारभ्याधीत-चतुर्गृहीतनिवेशानुपपत्तेश्चेत्युक्त्या च दूषितमेव **पूज्यपादैः**। न चानेन न्यायेन चतुरवत्त-

वाक्येपि भाष्यरीत्या चतुरवत्तस्य साधनत्वेन विध्यापत्तिः ; चतुर्गृहीतवाक्येऽन्यथानुपपत्त्या तदङ्गीकारेपि इह सत्यां गतौ लक्षणाद्वयाङ्गीकारस्यायुक्तत्वात् ।

अथवा चतुर्गृहीतवाक्ये लक्षणाद्वयपरिहाराय श्रुतवाक्येन होमविधानेपि संस्कारापत्त्यन्यथानुपपत्त्या य एव प्रक्षेपः प्रतिपत्तित्वेन विहितः तत्प्रधानीभूतयागाङ्गत्वेन विधिकल्पनायां न किञ्चिद्बाधकम् । अत एव कृष्णलपेटिकायां प्राचां मतमुपपाद्य चतुरवत्तवाक्ये वस्तुतस्त्वित्यादिना चतुश्शब्दस्य प्रमादपाठापत्तेः चतुस्सङ्ख्याया अप्युद्देश्यतावच्छेदकत्वमङ्गीकृत्य तदवच्छिन्नस्यैव सस्कार्यत्वात् तदन्यथानुपपत्त्या च चतुरवत्तस्य यागाङ्गतया विधान कल्पितविधिनाङ्गीकृतमेव पूज्यपादैः । न चैवं तर्हि भाष्यकाररीत्या अनेनैव वाक्येन उपस्तरणाभिघारणे विहायापि चतुरवत्तसाधनत्वानुरोधेन हविष एव उपांशुयाजे चतुरवदानोपपत्तौ, किमर्थं तत्र चतुर्गृहीतवाक्यमिति वाच्यम् । पाक्षिकत्वापत्तिभिया ससर्गप्रयुक्तोपस्तरणाभिघारणद्विरवदानप्रकारस्यैव चतुरवत्तसम्पत्त्यर्थतया उपस्तरणादिवाक्यैर्विधानात् अन्यप्रकारकचतुरवत्तस्य साधनत्वेनाप्राप्तेः तदर्थं चतुर्गृहीतवाक्यस्यावश्यकत्वात् अनयैव रीत्या उपस्तरणादीनां चतुङ्ख्यासम्पत्त्यर्थत्वाङ्गीकारेपि कृष्णलचरौ नोपस्तरणादिप्रकारेण चतुरवदानमित्युक्तं **पूज्यपादैः** ।

अयमेव हि भाष्योक्तात् प्रथमत एव चतुरवत्तस्य साधनत्वेन विधिरिति पक्षाद्विशेषः यत्तत्र द्वितीयायाः तृतीयार्थलक्षणाश्रयणम् , उपस्तरणादिप्रकारस्य चतुस्सङ्ख्यासम्पादकत्वानाश्रयण च । एतदाश्रयणे हि अस्मिन्नधिकरणे उपांशुयाजे हविष एव चतुरवदानमिति सिद्धान्तेन चतुरवत्तवाक्यप्रवृत्तिप्रदर्शनस्यासङ्गतत्वापत्तिः । एतदनाश्रयणे च कृष्णलचरावप्यनेन न्यायेन चतुरवदानापत्तिः **तन्त्रत्नोक्ता** प्रसज्यत इति भाष्योक्तपक्षस्योपेक्षा । एतदधिकरणस्य कृत्वाचिन्तात्वोक्तिरपि वार्तिकमताभिप्रायिकैव **पूज्यपादानाम्** । एतच्च मीमांसक मर्यादामनुसृत्योक्तम् ।

**परमार्थतस्तु** 'यदाहवनीये जुहोति' इति वाक्य इव अनारभ्याधीतचतुर्गृहीतवाक्येपि जुहोतिना यागाङ्गभूतान प्रधानभूतांश्च होमानुद्दिश्य चतुर्गृहीतस्य साधनत्वेन विधानमित्येव प्राचीनग्रन्थानुकूल युक्तम् । तत्र यागेषु अभिक्रमणाधिकरणसर्वप्रदानाधिकरणोक्तरीत्या यजिरेव होमस्याक्षेपकः, अथवा 'वषट्कृते जुहोति' इत्यादिभिः होमस्य विधानमिति न होमप्राप्तौ यतितव्यम् । अत एव सर्वहोमेष्वविशेषेण चतुर्गृहीतप्राप्तौ ये दर्विहोमाः जुहोतिचोदनाचोदिताः अपूर्वाः, तेषु सकृद्गृहीताज्यस्यैव साधनतया वाक्यान्तरेण विधानात् चतुर्गृहीतस्य पदादिहोमे आहवनीयस्येव निवेशासम्भवेन परिशेषात् यागीयवषट्कारहोमविषयमेव चतुर्गृहीतं

सम्पद्यते । तत्र होमं प्रत्येव साधनतया तद्विधानेऽदृष्टार्थत्वापत्तेः दृष्टार्थत्वानुरोधेन जुहोतिना स्वाङ्गिभूतयागलक्षणायाः द्वितीयायास्तृतीयार्थे लक्षणायाश्च अङ्गीकारेपि न क्षतिः । इतरथा जुहोतिचोदनाचोदितेष्वेव तद्विधाने नारिष्ठहोमेष्वपि तदापत्तेः । न हि भेदनहोमादिषु केषामपि याज्ञिकायां चतुर्गृहीतानुष्ठानं दृश्यते । कथचित पूर्वोक्तरीत्या प्रयाजोपांशुयाजादौ चतुर्गृहीतप्राप्तेरुपपादनेपि पत्नीसयाजेषु तत्प्राप्तेर्दुरुपपादत्वाच्च । स्वयमेव स्वकृतबालप्रकाश-ग्रन्थे महताऽऽडम्बरेण यजिमात्रे आचारादेव होमप्राप्त्युपपादनपूर्वकं उपांशुयाजादौ अनारभ्य-विधिना चतुर्गृहीतप्राप्तेर्निरूपणेनानारभ्यवाक्ये चतुर्गृहीतस्यैव विधेः सिद्धान्तितत्वात् । तद्विरो-धेनेह संस्कार्यत्वान्यथानुपपत्त्या तत्साधनत्वविधिकल्पनस्यायुक्तत्वाच्च । एकस्यैव होमाख्यसंस्कारस्य क्वचित्प्रयोजकत्वं क्वचिन्नेत्येवं वैरूप्यापत्तेश्च । अतः चतुर्गृहीतस्य आज्यद्रव्यविशेषणफलके विधाने सति उपांशुयाजप्रयाजपत्नीसंयाजेषु सर्वेष्वपि चतुर्गृहीतप्राप्तिः, नारिष्ठहोमभेदनहोमादिषु तदप्राप्तिश्चाविरुद्धैव । यदि परमुपांशुयाजे प्राकरणिकद्व्यवदानावरोधात् , चतुर्गृहीतस्यानिवेश-परिहारार्थः 'चातुर आज्यस्य' इति चतुर्गृहीतं जुहोति' इति वा प्रतिप्रसवविधया विधायकमङ्गी-क्रियताम् । न त्वेतावता अनारभ्याधीतवाक्यस्य यागेष्वाज्यद्रव्यकेषु चतुर्गृहीतविधायकत्वं दुष्यति । अत एव दर्विहोमत्वात् सावित्रहोमेषु तैत्तिरीयशाखायामप्राप्तचतुर्गृहीतपुनर्विधिरुपपद्यते ।

यत्तु पुनः आपस्तम्बसूत्रादिषु आज्यभागयोः पुनश्चतुर्गृहीतविधानं तत् जामदग्न्यानां पञ्चावत्तविध्यर्थमनुवादमात्रम्, न त्वपूर्वतया विधान, प्राप्तत्वात् । तदेतत्सकलमभिसन्धायैव आपस्तम्बीयं परिभाषासूत्रं—अपूर्वो दर्विहोमः । जुहोतिचोदनः स्वाहाकारप्रदानः । सकृद्गृ-हीत्वा । आश्रुतप्रत्याश्रुते याज्यानूवाक्ये अवदानेषु च उपस्तरणाभिधारणे चतुर्गृहीतं वषट्कार-श्चादर्विहोमानाम् इति ।

व्याख्यातं च अवदानेष्विति पदं आज्यव्यतिरिक्तयागीयहविरवदानपरम्, चतुर्गृहीतमिति च यागीयाज्यावदानपरं कपर्दिस्वामिभिः। अतोऽनारभ्यविधिना होमोद्देशेन चतुर्गृहीतविधानमिति प्रकाशकारोक्तं, तथा अनिर्दिष्टद्रव्यकेषु जुहोतिचोदनाचोदितेषु भेदनहोमादिषु चतुर्गृहीतस्य विधानमिति पूज्यपादोक्तं च चिन्त्यमेव । यथा चैवं सति यज्याक्षेपादिना होमप्राप्तौ चतुरवत्तवाक्यस्य न वैयर्थ्यं तथा तृतीये सर्वप्रदानाधिकरणे निरूपितमित्यलं श्रमेण ।

---

(१४)—पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३५ ॥ न त्वनित्याधिकारोऽस्ति विधौ नित्येन सम्बधस्तस्मादवाक्यशेषत्वम् ॥ ३६ ॥ सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ ३७ ॥ कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥ कर्तुस्स्यादिति चेत् ॥ ३९ ॥ न गुणार्थत्वात् प्राप्ते च नोपदेशार्थः ॥ ४० ॥ कर्मणोस्तु प्रकरणे तन्न्यायत्वात् गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥ यदि तु सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥ अपि वा विहितत्वाणाद्गुर्थायां पुनश्श्रुतौ सन्देहे श्रुतिर्हि देवतार्था स्यात् यथाऽनभिप्रेतः तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥ विधि तु बादरायणः ॥ ४४ ॥ प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ तथा चान्यार्थदर्शनम् ॥ ४६ ॥

दर्शपूर्णमासयोः—'**नासोमयाजी सन्नयेत्**' **इत्यसोमयाजिनस्सान्नाय्यपर्युदासश्श्रुतः। तच्छेषतया च 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् द्वावेतावाग्नेयश्चैन्द्राग्नश्च' इति श्रुतम्। सोऽयं पर्युदासविधेरेवार्थवादः। ऐन्द्राग्नस्य 'ऐन्द्राग्नमेकादशकपालं निर्वपेदमावास्यायामसन्नयतः' इति सान्नाय्याभाव एव विहितत्वादौचित्येन स्तुत्युपपत्तेः। यदा विधिस्तदा कीदृश इति चिन्त्यते।**

---

### पुरोडाशाभ्यामित्यधिकृतानाम्।

अत्र भाष्यादिषु 'सान्नाय्येन तु सोमयाजिनम्' इति विधेः 'पुरोडाशाभ्यामेवासोमयाजिनं' इति शेषो लिखितः। तत्र तुशब्दाम्नानबलात् उत्तरस्यैव पूर्वशेषत्वप्रतीतेः न प्रकृतसिद्धान्तसिद्धिः इत्यभिप्रेत्य पर्युदासशेषतया तद्वाक्यमुदाहरति—**दर्शपूर्णमासयोरिति।** यद्यपि पर्युदासवाक्ये तैत्तिरीयशाखाम्नाते नाय शेषो दृश्यते, तथापि शाखान्तरपरतया कथञ्चित्समाधेयम्।

**तत्र पुरोडाशाभ्यामे**वासोमयाज्यधिक्रियते **न सान्नाय्येनेति प्रथमः पक्षः**। पर्युदास-विधिनैवा**स्यार्थस्य सिद्धेः 'तदु सन्नयेत्' इति शाखान्तरवचनेनासोमयाजिनोऽपि सान्नाय्य-विधानात् पुरोडाशयो**रसोमयाज्येवा**धिक्रियते न सोमयाजीति द्वितीयः। सोमयाजिन आग्नेयाभावप्रसङ्गात्** सान्नाय्यस्य **सोमयाजिनो नियतत्वेन च तदभावविहितैन्द्राग्नस्य सोमयाजिनः प्रसक्त्यभावादेतत्पक्षानुपपत्तेः कर्मान्तरं विधीयत** इति तृतीयः। **कर्मा-न्तरत्वे प्रमाणाभावादेवकारश्रवणाच्च तदनुपपत्तेर्याजनविधिरिति चतुर्थः**। **फलाश्रव-णाद्रागतः** **प्राप्तत्वाच्चैतत्पक्षस्याप्यनुपपत्ते**रसोमयागकाले **पुरोडाशाविति कालविधिरेव श्रेयानिति पञ्चमः**॥

---

**असोमयाज्यधिक्रियते इति**। तथाच 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्यस्य शेषः 'असोमयाजी स्वर्गकामः आभ्यामेव पुरोडाशाभ्यां यजेतेत्यर्थः। नन्वसोमयाजिनः पूर्वं दर्शपूर्णमासाभ्यामिष्ट्वेति वाक्येन पृथगेव पुरोडाशानुष्ठान इत्यत उक्तं—**पुरोडाशाभ्यामेवेति**। तथाच 'तदु सन्नयेत्' इति वाक्यान्तरेण असोमयाजिनोऽपि सान्नाय्यविधानात् तद्व्यावृत्त्यर्थः। पुरोडाशाभ्यामेवेति नियमः क्रियत इत्यर्थः। असोमयाजिनः सान्नाय्यपर्युदासादेव तदनुष्ठानाप्रसक्तौ, पुनर्विधानात्तदनुष्ठानप्रसक्तौ वा व्यावृत्त्यनुपपत्तेः व्यर्थो विधिः इत्याद्य पक्षं दूषयति—**पर्युदासविधिनैवेति**। सान्नाय्यव्यावृत्त्यनुपपत्तिः सकलपौर्णमासीबाधापत्तेरप्युप-लक्षणम्। तथाच समस्ताभ्यां दर्शपूर्णमासाभ्यामुत्पद्यमान फलं न विकलाभ्यां पुरोडाशाभ्यां भावितुमर्हतीत्यर्थः। अतः एवकारस्यासोमयाजिपदेनान्वयमङ्गीकृत्य द्वितीयं पूर्वपक्षमाह—**असोमयाज्येवेति**। **आग्नेयाभावप्रसङ्गादिति**। तथाच सोमयजनोर्ध्वभाविजीवने निमित्ते यत् दर्शपूर्णमासयोः नित्यानुष्ठानबोधकं यावज्जीववाक्यं तस्य बाधापत्तिरित्यर्थः। किञ्च सोमयाजिनस्तावत् सान्नाय्ययोर्नित्यत्वे सति सान्नाय्याभावे विहितस्यैन्द्राग्नस्य कथमपि प्राप्त्य-भावादेव तदधिकारव्यावृत्तिकरणं व्यर्थमित्याह—**सान्नाय्यस्येति**। **इति तृतीय इति**। अस्मिंश्च पक्षे द्वावेताविति पदद्वयं 'एतस्यैव रेवतीषु' इति वाक्यगैततत्पदमिव वक्ष्यमाणापूर्वकर्म-परम्। **एवकारेति**। तेनैवकारार्थस्यैवाविधेयत्वप्रतीत्या न कर्मान्तरविधिरित्यर्थः। **असोमयागकाल एवेति**। असन्नयत एवैन्द्राग्नविधानात् असोमयाजिन एवासन्नयि-तृत्वात् असोमयागकाले प्राप्तत्वादित्यर्थः। ननु (अ)सन्नयितृत्वानुरोधेनैव नैन्द्राग्ने असोम-यागकालकर्तव्यव्यवस्था सिद्ध्यति। सान्नाय्यस्य 'तदु सन्नयेत्' इति वाक्येन तत्-तदा सोमात् प्राक् अनिश्चयेन सन्नयेदित्यर्थकेन सोमात्प्रागपि विधानेन असन्नयितृत्वस्य सोमात्पूर्वं नियमेना-भावात्। अतः सोमपूर्वोत्तरकालयोर्विहितेन सान्नाय्येनैन्द्राग्नेन वा सान्नाय्येन यजेतेति श्रुत्या विकल्पितस्यैन्द्राग्नस्यापि सोमपूर्वोत्तरकालयोः अनुष्ठानप्राप्तौ प्राक्काल एवेति नियमः क्रियते।

तदप्यैन्द्राग्नस्यासोमयागकाल एव प्राप्तत्वादाग्नेयस्य चासोमयागकालविधौ सोमयाजिनः प्रतिषेधापत्तेरच्युतवाक्यावगतसर्वदातनत्वबाधापत्तेरर्थवाद एवायमित्यौदुम्बराधिकरणसिद्धमिति कृत्वाचिन्तोद्घाटनम्। केषु चित्पक्षेषु आग्नेयस्यासोमयागकालबाधाच्च बाधोपयोगः।

---

## (१५)—उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वात् यथा कामोप्रतीयेत ॥ ४७ ॥ ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥

उपांशुयाजे उत्पत्तिवाक्ये द्रव्याविधानेऽप्याक्षेपेण यत्किञ्चिद्द्रव्यप्राप्तौ 'चतुर्ध्रुवायां गृह्णाति' इति प्रयोजनविशेषासंयुक्तं ध्रौवाज्यं द्रव्यसाकाङ्क्षप्रकृतक्रियामात्रे अधिकाराख्यप्रकरणेन विनियुज्यमानमाज्यभागादाविवोपांशुयाजेऽपि प्राप्नोति। 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इत्यनन्यशेषभूताद्वचनाच्च वैयर्थ्यबललब्धविधिशक्तिकात्तल्लाभः। न चात्र यत्र पत्नीसंयाजादौ सामान्यतः आज्यद्रव्यकत्वं प्राप्तं तत्र लाघवात् ध्रौवतामात्रविधिरस्त्विति वाच्यं, तथात्वेऽपि दर्शपूर्णमासप्रकरणपठितचतुर्गृहीतविधिना आज्यभागादाविवोपांशुयाजेऽपि सामान्यात् आज्यद्रव्यस्य प्राप्तत्वात्

---

तथा च प्राक् सोमात् ऐन्द्राग्नसान्नाय्ये विकल्प्येते पश्चात्तु सान्नाय्यमेवेत्यर्थः सिद्ध्यत्वित्यतो दूषणान्तरमाह—आग्नेयस्य चेति। असोमयाजिपदस्य कर्तृपरस्य कालपरत्वे लक्षणापत्तेः तामङ्गीकृत्यापि ऐन्द्राग्ने कथंचित् तन्नियमविध्युपपत्तौ आग्नेये तदनुपपत्तिः। अच्युतत्वभङ्गापत्तेरित्यर्थः।

---

### उपांशुयाजमन्तरा यजतीति।

'आज्यस्यैव नौ' इति पुराकल्पार्थोन्नीतविधेः कालमात्रविधायकत्वस्य उत्तराधिकरणे वक्ष्यमाणत्वेन नाज्यविधायकत्वमित्यभिप्रेत्य यस्य कस्यापि द्रव्यस्यानियमे प्राप्ते तस्य तद्विधायकत्वेऽपि वा आज्यमात्रनियमेऽपि विशेषे प्रमाणाभावात् नियताज्यस्यैव प्राप्तौ नियमप्रापकं वचनान्तरमुपन्यस्यति—चतुर्ध्रुवायामिति। सिद्धरूपस्येतिकर्तव्यताकाङ्क्षालक्षणप्रकरणेनाग्रहणात् अधिकाराख्येत्युक्तम्। ततश्चाज्यसंस्कारार्थत्वेन विधीयमानं ग्रहणं आज्यस्वरूपे आनर्थक्ये प्राप्ते अपूर्वसाधनत्वलक्षणया प्रकृतद्रव्याकाङ्क्षिक्रियासाधनत्वमपि कल्पयति इति प्रकृतद्रव्यसाकाङ्क्षक्रियाङ्गत्वसिद्धिरित्यर्थः। उपांशुयाजेपीति। 'चतुर आज्यस्य गृह्णाति' इति विधिना

**तत्प्रकृतित्वेन ध्रौवविधानोपपत्तेः, पत्नीसंयाजादावाज्यस्थाल्याज्यस्य** वाचनिकत्वाच्च ।

**न चैवं प्रकरणादेव ध्रौवाज्यस्योपांशुयाजाद्यर्थत्वसिद्धे 'सर्वस्मै वै' इति वाक्यानर्थक्यापत्तिः। प्रकरणादयज्ञेष्वप्यलङ्करणादिषु तत्प्राप्तौ तद्व्यावृत्तिफलकत्वेन सार्थक्यात्।** अत एवात्र **यज्ञोद्देशेनैतच्छब्दार्थभूतध्रौवाज्यस्यैव विधिः तत्तात्पर्यग्राहकं च**

---

सामान्यतः प्राप्तस्येत्यर्थः । **वाचनिकत्वाच्चेति ।** अत्र **प्रकाशकारैः** पत्नीसयाजेष्वपि ध्रौवाज्यस्यैव विधौ प्रसक्ते 'आज्येन पत्नीसयाजान् यजति इति पुनराज्यविधिः व्यर्थः सन् ध्रौवाज्यविधिबाधेन तस्मादप्यन्यत् स्थाल्याज्य आग्नेय्यधिकरणन्यायेन पत्नीसयाजेषु विनियुङ्क्ते । एवमन्यत्राप्याज्ये । ततश्च प्रयाजानूयाजरूपाहवनीयसाध्येष्वेव ध्रौवविधिपर्यवसानमित्युक्तम् । **तत्** जाघन्या अपि पत्नींसंयाजेषु विशिष्य विहितत्वात् तत्र सामान्यविहितध्रौवाज्यबाधप्रसक्तौ तुल्यबलतया विकल्पप्राप्तये पुनर्विधिसार्थक्योपपत्तेः ध्रौवाज्यबाधेन आज्यान्तरविधायकत्वानुपपत्तेः अयुक्तमित्यभिप्रेत्य वचनान्तरेणैव आज्यस्थाल्याज्यस्य विधानमत्रेत्यभिप्रेत्य **वाचनिकत्वादि**त्युक्तम् । तथाच आज्येन पत्नीसयाजान् यजतीति विधेः न वैयर्थ्यापत्त्या ध्रौवाज्यबाधकत्वम् , अपि तु आज्यस्थाल्यपादानकाज्यविधायकत्वादेव तद्विधेः अर्थतः सिद्धतुल्यबलतया अनेनैव जाघन्या विकल्पः । यद्यप्याज्येनेति वचनेन आज्यस्थाल्यपादानकत्वं प्रतीयते, तथापि 'नान्तर्वेदि गृहीतस्य प्रतीचीन हरेत्' इत्यापस्तम्बवचनेन ध्रौवाज्यादीनां पत्नीसयाजाद्यर्थे प्रतीचीहरणस्य निषिद्धत्वात् , तन्निषेधसहकृतैतद्वचनेन आज्यस्थाल्याज्यस्य विहितत्वं न विरुद्ध्यत इत्यर्थः । अत्र **प्रकाशकारैः** 'सर्वस्मै वा' इति 'ध्रुवायामाज्य' इति पदोपात्तयोः वैशिष्ट्यस्य पञ्चदशान्याज्यानीत्यत्रेवाव्युत्पन्नत्वात् विधेयानेकतापरिहाराय ध्रुवायामित्येकपदेनैव तदधिकरणकद्रव्यान्तराभावेनाज्यस्यैव प्राप्तेः स्वरूपानुवादमात्रपरत्वादाज्यपदस्येति न विशिष्टविधिरित्युपपादितम् । ततश्च ध्रुवायामित्यस्यैव विधेयसमर्पकत्वान्न वाक्यभेद इत्युक्तं भवति । तत्र ध्रुवायामिति पदस्य ध्रौवाधिकरणतामात्रपरस्य ध्रुवाधिकरणकद्रव्यपरत्वे लक्षणापत्तेः ध्रुवाधिकरणत्वस्यैव विध्यापत्तौ आनर्थक्यतदङ्गन्यायेन येषां द्रव्यं क्लृप्तं तद्द्वारैव सर्वयज्ञार्थत्वोपपत्तेः अनिर्दिष्टद्रव्यकयज्ञेषु द्रव्यविधायकत्वासम्भवात् अयुक्तमित्युपेक्ष्य प्रकारान्तरेण विधेयानेकतां परिहरति —**अत एवात्रेति ।** एवं स्थिते यत् पौर्णमास्यधिकरणकौस्तुभे ध्रौवाज्यविधानमुक्तं तदप्येतच्छब्दस्यैव विधेयतापरत्वाभिप्रायेण तन्निषेधः । स्पष्टार्थमन्यत् ।

'ध्रुवायामाज्यम्' इति पदम्। अतो न विधेयानेकता। एवं चालङ्करणादावाज्यस्थाल्याज्यमेव। सर्वथोपांशुयाजे ध्रौवमेवेति तद्विकारभूतं मधूदकमाज्यस्य बाधकम्। पूर्वपक्षे त्वनियमात् नियामकमात्रमिति बाधोपयोगिता। पूर्वपक्षस्यातिमन्दत्वेऽपि शिष्यहितार्थमुक्तत्वान्न विरोधः॥

---

(१८)—तद्वच्च देवतायां स्यात्॥४९॥ तान्द्रीणां प्रकरणात्॥५०॥ धर्माद्वा स्यात्प्रजापतिः॥५१॥ देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण॥५२॥ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्यात् हौत्रस्य तत्र दर्शनात्॥५३॥ अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगात् गुणत्वान्मन्त्रो यथाप्रधानं स्यात्॥५४॥ आनन्तर्यं च सान्नाय्यस्य पुरोडाशेन दर्शयति अमावास्याविकारे॥५५॥ अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते॥५६॥ प्रतिषिध्य विधानाद्वा विष्णुस्समानदेशस्स्यात्॥५७॥ तथा चान्यार्थदर्शनम्॥५८॥ न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात्॥५९॥ गुणानां च परार्थत्वात् प्रकृतौ विधिलिङ्गानि दर्शयति॥६०॥ विकारे चाश्रुतित्वात्॥६१॥

उपांशुयाजे यद्यप्यन्यद्देवताग्राहकं प्रमाणं न भवेत्, तथाऽपि तस्य देवताकाङ्क्षायां प्राकरणिकानामेवाग्नेयादिदेवतानामनुषङ्गेणान्वयाङ्गीकाराद्देवतात्वोपपत्तिः। विरुद्धविभक्तिकस्य निराकाङ्क्षस्य च असम्बन्धिपदव्यवधानेऽनुषङ्गानुपपत्तावपि वा एकप्रयोगविधिपरिग्रहेणाग्नेयादिभिरुपांशुयाजस्य साहित्यावगतौ विभिन्नदेवताकत्वाभावेन तन्त्रत्वावगतेराग्नेयादिदेवतानां प्रसङ्गेनोपकारकत्वोपपत्तिः। तत्रापि प्रथमोपस्थितत्वादग्नेरेव।

वस्तुतस्तु—स्वतन्त्रदेवताग्राहकप्रमाणमस्त्येव। तथा हि—प्रजापतेस्तावद्यद्यपि 'यत्किञ्चित्प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत्क्रियते' इति प्रापकं प्रमाणं नोद्भावयितुं

शक्यम्। अस्याधारार्थवादत्वेन स्वतन्त्रविधित्वाभावात्। तत्त्वेऽपि वा यत्र प्रजापतिर्देवता प्रमाणान्तरेण क्लृप्तः तत्रोपांशुत्वमनेन विधीयेत न तु यत्रोपांशुत्वं तत्र प्रजापतिः। तथाऽप्याग्नेयाग्नीषोमीययाज्यानुवाक्यामध्ये तैत्तिरीयाणां प्रजापतिदेवत्ययाज्यानुवाक्याम्नानात् मन्त्रवर्णात्प्राप्तिः, तुल्यन्यायतया तन्मध्येऽग्नीषोमीययाज्यानुवाक्याम्नानाच्चाग्नीषोमयोरपि। आग्नेयैन्द्राग्नयाज्यानुवाक्यायुगळयोर्मध्ये वैष्णवयाज्यानुवाक्याम्नानात् तस्यापि।

न च 'तावब्रूतामग्नीषोमौ' इत्यनेनाग्नीषोमयोरेव विहितत्वाद्विष्णुप्रजापत्योर्न विधानमिति शङ्क्यं, तस्य कालविधायकत्वेन देवताविधायकत्वाभावात्। अस्य हि भिन्नवाक्यत्वे उपांशुयाजविध्येकवाक्यत्वेऽपि वा फलसम्बन्धसिद्ध्यर्थममावास्याव्यावृत्त्यर्थं वा कालमात्रविधायकत्वमेव न तु देवताविधायकत्वं, तस्या आज्यस्येव प्रमाणान्तरेण सम्भवत्प्राप्तिकाया विधिवैयर्थ्यादित्युक्तं उपांशुयाजाधिकरणे।

अत एव विष्णुदेवत्योपांशुयाजस्यामावास्यायामेव करणं तद्याज्यानुवाक्यायुगळस्याग्नेयैन्द्राग्नयाज्यानुवाक्यामध्ये पाठात्प्रजापत्यग्नीषोमदेवत्यस्य च आग्नेयाग्नीषोमीययोर्मध्ये समाम्नानात् पौर्णमास्यामेवेत्यपास्तम्। उपांशुयाजस्य पौर्णमास्यामेव विहितत्वेनामावास्यायामसत्त्वात्। इदं च शाङ्खायनानां 'अथ यत्सन्नयत्साम्नाय्यस्यान्तरेणोपांश्वाज्यस्य यजति' इति वचनाभावं कृत्वाचिन्तयोक्तम्। वस्तुतस्तु—उक्तवचनादमावास्यायामप्युपांशुयाजः।

न चैवं 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायां, पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् साकंप्रस्थायीये आग्नेयेन प्रचर्याग्नीधे स्रुचौ प्रदाय सहकुम्भीभिरभिक्रामेत्' इत्याद्युपांशुयाजाभावज्ञापकलिङ्गानुपपत्तिः। एतल्लिङ्गबलेनोपांशुयाजस्यामावास्यायां वैकल्पिकत्वाङ्गीकारात्। न चैवमुपांशुयाजस्योभयत्र सत्त्वेऽपि मन्त्रपाठस्य व्यवस्थितत्वात् तत्तन्मन्त्रयोस्तत्कल्प्यदेवतयोश्च तत्तत्कालिकोपांशुयाजे व्यवस्थायां

---

तद्वच्च देवतायांस्यात्।

प्राय एतदधिकरणं स्पष्टार्थम्। क्वचिदेव व्याख्यायते। न चैवं चतुर्दशेति। सवषट्काराः आहवनीयगता आहुतयः, पञ्च प्रयाजाः, त्रयोऽनूयाजाः द्वावाज्यभागौ स्विष्टकृत् पौर्णमास्यां प्रधानत्रयं चेत्येवं पौर्णमास्यां चतुर्दश। अमावास्यायां तु सम्प्रतिपन्नदेवताकत्वात् सान्नाय्यस्यैकः आग्नेयस्य एकः; उपांशुयाजस्याभावाच्च त्रयोदश भवन्तीति तदभावसाधकं लिङ्गम्। तथा पुरोडाशाभ्यामेवेत्येवकारेण असोमयाजिनः उपांशुयाजनिवृत्तिप्रतीतेरेवकारो लिङ्गम्। अमावास्याविकारे सकंप्रस्थायीये सान्नाय्यपुरोडाशानन्तर्यमेवोच्यते। तच्च उपांशुयाजेन मध्ये

विकल्पानापत्तिः। प्रधानानुरोधेन गुणावृत्तेर्न्याय्यतया तत्तद्यागीयमन्त्रमध्यपाठस्य भिन्नप्रयोगविधिपरिगृहीततयाऽनियामकत्वात्। अतः कालद्वयवर्तिन्यप्युपांशुयाजे अव्यवस्थितविकल्प एव देवतानाम्। बाधोपयोगः पूर्ववत्।

---

(१७)—द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥ अजामिकरणार्थत्वाच्च ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६३ ॥ अशिष्टेन च सम्बन्धात् ॥ ६४ ॥ उत्पत्तेस्तु निवेशस्स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वात् विधानादन्तरार्थस्य नैमित्तिकत्वात् तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥ उभयोस्तु विधानात् ॥ ६७ ॥ गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥ प्रशंसार्थमजामित्वम् ॥ ७० ॥

पौर्णमास्यमावास्ययोः क्रियमाण उपांशुयाजः किं द्विपुरोडाशायामेवेष्टौ स्यादुत सोमयागात्पूर्वमग्नीषोमीयाभावादूर्ध्वं चैन्द्राग्नाभावादाग्नेयमात्रसत्त्वेनैकपुरोडाशायामपि स्यादिति चिन्तायां—

---

व्यवधाने सति अनुपपन्नमित्याग्नेयेन प्रचर्यैति तदभावसाधकं लिङ्गमित्यर्थः। यदत्र वक्तव्यं तत्सर्वं उपांशुयाजाज्यापनयविचारे उक्तं तत्रैव द्रष्टव्यम्। प्रधानानुरोधेनेति। तत्तन्मध्यपठितानामपि तत्तद्याज्यानूवाक्यानां साधारण्येन उपांशुयाजाङ्गत्वेऽवगते कालभेदेनोपांशुयाजावृत्तौ गुणभूततया तासामप्यावृत्तिर्युक्तेति तासामन्याङ्गानामाग्नेयैन्द्राग्नसान्नाय्यापेक्षया भिन्नप्रयोगविधिपरिगृहीतत्वात् क्रमापेक्षाया एवाभावेन प्रगतपाठस्यानियामकत्वादित्यर्थः।

---

द्विपुरोडाशायां स्यादर्थान्तरत्वात्।

अत्र प्राचां ग्रन्थेषु पूर्वपक्ष उक्तस्य अन्तरागुणविधानस्य क्रमविधिपरतया व्याख्यानं कृत्वा दर्शपूर्णमासप्रयोगविधिना अनेककर्मणां क्रममात्रे आक्षिप्ते क्रमविशेषस्याकाङ्क्षितत्वात् अन्तरेति वाक्येन क्रमविधिः, तेन कालविध्यभावान्नोपलक्षणन्यायप्रवृत्तिरिति तादृशक्रमस्यैक-

अन्तराळकालस्य पूर्वोत्तरभाविपुरोडाशद्वयनिरूपकत्वात् निरूपकविशिष्टस्यैवाङ्गत्वेन तदभावे तस्याङ्गत्वाभावादन्तरालस्य च सत्यपि पौर्णमास्यादिकाले अमावास्यायामपराह्णत्ववत् पौर्णमास्याद्यवच्छेदकत्वेनान्तराळकालावच्छिन्नस्यैव तस्याङ्गतया इतरस्यानङ्गत्वात् द्विपुरोडाशायामेवोपांशुयाजकरणमिति प्राप्ते—

---

पुरोडाशायामनुष्ठाने बाधात् वैगुण्यापत्तेः तदनुरोधेन द्विपुरोडाशायामेव उपांशुयाज इति पूर्वपक्षं प्रापय्य 'तावब्रूताम्' इति वाक्येन पौर्णमासीकालविधेः तद्विशेषस्याप्याकाङ्क्षितत्वात् कालविधावपि आकाङ्क्षितविधेस्तुल्यतया पुरोडाशद्वयोपलक्षिताग्नेयोत्तरकालरूपविधेयैक्यात् शाब्दपौर्णमासी-विशेषाकाङ्क्षाया बलीयस्त्वाच्च कालविधिरेव युक्तः। क्रमे तूभयनिरूप्यत्वात् गौरव अशाब्दक्रमविशेषाकाङ्क्षितविधित्वं चेति प्रकाशकारैः सिद्धान्तितम्। तत् पुरोडाशोपल-क्षिताग्नेयोत्तररूपकालविधाने अन्तरापदस्य कालविशेषे लक्षणापत्तेः तत्परिहारार्थं अन्तरालकालस्यैव विधेयत्वावशक्यत्वात् तस्य च क्रमादेवोभयनिरूप्यत्वस्य समानत्वेन विधिगौरवस्य तुल्यत्वात्। आग्नेयाग्नीषोमीयादिषु पौर्णमास्याकालमात्रविधानेनैव नैराकाङ्क्ष्यवदिहापि पौर्णमासीकालमात्र-विधिनैव तदुपपत्तेः अनपेक्षितकालविशेषविधित्वापत्तेः; प्रत्युत आग्नेयादिष्विवेहापि क्रमविशेष-स्यैवाकाङ्क्षितत्वात् एतदाकाङ्क्षायाश्च अनुष्ठानकालीनायाः सर्वतः प्राबल्येन च क्रमविधित्वस्यैवा-पत्तेरयुक्तम्।

अपि च अन्तरावाक्यस्योत्पत्तिवाक्यत्वेन एतद्विहितकर्मणि वाक्यान्तरेण पौर्णमासीकाल-विधानात् पौर्णमासीकालविशेषाकाङ्क्षया उपांशुयाजविधेरेव प्रवृत्तेः आकाङ्क्षितविधित्वासम्भवः। अन्तरावाक्येनैव अन्तरालकालाक्षिप्ततया पौर्णमास्याः प्राप्तौ तदुत्तरप्रवृत्तपौर्णमासीविधेर्वैयर्थ्यपरि-हारार्थमेव पौर्णमासीविधानद्वारा फलसम्बन्धामावास्याव्यावृत्तिफलकत्वस्य सर्वैरपि मीमांसकैः स्वीकारात् कथमन्तरावाक्यस्य तदुत्तरप्रवृत्तिकत्वेनाकाङ्क्षितविधित्वम्। अत उत्पत्तिवाक्य—क्रमपक्षे कालविधिपक्षे वा आकाङ्क्षाया एवाभावे आकाङ्क्षितविधित्वायोगात्, अनाकाङ्क्षितस्यैव विशिष्टरूपेण यागस्य विधिरङ्गीकार्य इति स्पष्टतया प्रतीयमानकालविध्यङ्गीकारेणैव पूर्वपक्षसिद्धिं प्राचीनोक्तगुणविधानतात्पर्यं च दर्शयति—अन्तरालकालस्येति। क्रमविधित्वपक्षे क्रमस्योपादेय-त्वेन गुणभूततादृशक्रमानुरोधेन प्रधानलोपस्यान्याय्यत्वात्, यथाशक्तिप्रयोगे आरुण्याभावे क्रयस्येव एकपुरोडाशायामप्युपांशुयाजापत्तिरिति न पूर्वपक्ष एव सिद्ध्येत्। मम तु कालस्यानु-पादेयस्य त्यागायोगात्। तदभावे सिद्ध्यति तस्यां लोप इति कालविधिमादायैव तत्करणं युक्तम्। अत एव गुणविधित्वपक्षेपि मदुक्तरीत्या एकपुरोडाशायामप्युपांशु-

पुरोडाशद्वयस्य **क्लृप्तप्रयोजनत्वेन स्वत उपांशुयाजानङ्गत्वात् कालविशेषणत्वे च विशिष्टविधिगौरवापत्तेः कालोपलक्षणमात्रतया प्रतीतेः कालस्य च शङ्खवेळायामागन्तव्यमित्यादौ लोके श्रुतोपलक्षणाभावेऽप्युपलक्षकान्तरोपलक्षितस्यागमनादिक्रियान्वयदर्शने सुतरामाद्यपुरोडाशोपलक्षणेनैवान्त्यपुरोडाशरूपोपलक्षणाभावेऽपि क्रियोपलक्षणत्वोपपत्तेरेकपुरोडाशायामप्याग्नेयसत्त्वेनोपांशुयाजोपपत्तिः।**

**अतश्च नात्र पौर्णमास्यादिकालस्यान्तरालकालेन सङ्कोचाख्यो बाधः।** यदा **त्वन्तरापदेनाग्नेयोत्तरत्वरूपः क्रम एव विधीयते मन्त्रपाठक्रमप्राप्तत्वादनूद्यते वेति**

---

याजप्राप्तिरिति सिद्धान्त्येकदेशिमतस्य विधीयमान एव यागान्तरालकालगुणविशिष्टो विधीयते, 'अनुपादेयश्चान्तरालगुणः तेन यत्रैवायं गुणस्तत्रैवास्य विधिः; इतरत्र तु विधिरेव नास्ति इत्यकर्तव्य एव'' इति ग्रन्थेन **शास्त्रदीपिकायां** भाष्यादिषु च कृतो निरासः पूर्वपक्षे अनुपादेयगुणविशिष्टविध्यङ्गीकार एव सङ्गच्छते। न तूपादेयक्रमरूपगुणविधित्वपूर्वपक्षे इत्याशयः। कालविधित्वपक्षे पुरोडाशद्वयस्य विशेषणत्वापेक्षया उपलक्षणत्वेनान्वये लाघवमभिप्रेत्य सिद्धान्तमाह **—पुरोडाशद्वयस्येति। उपलक्षकान्तरेति।** पादच्छायात्वोपलक्षितस्येत्यर्थः। **ननु** पुरोडाशद्वयस्य कालोपलक्षणत्वे तुल्यन्यायात् दर्शपूर्णमासाभ्यामिष्ट्वेत्यत्रापि दर्शपूर्णमासयोः उपलक्षणत्वं किं न स्यादिति चेत्—**अत्रोच्यते**—यत्र कालो विधानकाले प्रतीतः अनुष्ठानवेलायां यं विनापि ज्ञातुं शक्यते तत्र तस्योपलक्षणत्वं शक्यते वक्तुं—यथा वत्सैरमावास्यायामित्यत्र लोकतोऽपि वत्सापाकरणाभावेपि तत्कालःशक्यते ज्ञातुम्; यथावा आग्नेयोत्तरत्वमात्रेणैव पुरोडाशद्वयान्तराळकालस्तत्रोपलक्षणत्वमेव। दर्शपूर्णमासोत्तरकालस्य तु अनियतस्य न दर्शपूर्णमासाभ्यां विना ज्ञानमिति तत्रागत्या विशेषणत्वमेवाश्रीयते। अत एव 'भिन्ने जुहोति' इति न कालरूपार्थमादाय लक्षणत्वार्था सप्तमी; विन्तु निमित्तत्वार्थैवेति सर्वसिद्धान्त इति न कश्चिद्दोषः।

वस्तुतस्तु क्त्वाप्रत्ययस्य पूर्वकालवाचित्वात् दर्शपूर्णमासवृत्तिपूर्वकालतायाः सोमाङ्गतया विधानेन कालविध्यभावान्नोपलक्षणापायन्यायप्रवृत्तिरिति ध्येयम्। **यदा त्विति।** 'यदन्वञ्चौ पुरोडाशौ' इत्यर्थवादे आग्नेयोत्तरमेव अग्नीषोमीयः क्रियते तदा जामितादोषान्न सः, किन्तु आग्नेयोत्तरं अन्यद्विजातीयं कार्यं इत्यर्थप्रतीतेः, किं तत? इत्यपेक्षया अन्तरा उपांशुयाजविधाने अन्तरात्वं आग्नेयोत्तरत्वरूपक्रमपर्यवसायि सम्पद्यते इति तदुत्तरत्वस्य एकपुरोडाशायामपि

विभाव्यते तदोत्तरपदार्थलोपे पूर्वपदार्थलोप इत्यप्रसक्तमेवेति स्यादेवोपांशुयाजः। तदेवं निरूपितस्त्रिविधो बाधः।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
दशमस्याध्यायस्याष्टमः पादः,
अध्यायश्च समाप्तः.

---

द्वितीयपुरोडाशलोपेपि सम्पद्यते न काचित् क्षतिरित्यर्थः। निरूपितमध्यायार्थमुपसंहरति—तदेवमिति।

इति श्रीमत्पूर्वोत्तरमीमांसापारावारीणधुरीण-
श्रीखण्डदेवान्तेवासिकविमण्डनशम्भुभट्टकृतौ
भाट्टदीपिकाप्रभावल्यां
दशमाध्यायस्याष्टमः पादः
अध्यायश्च
समाप्तः

---

# अथ एकादशाध्यायस्य प्रथमः पादः

(१)—प्रयोजनाभिसम्बन्धात् पृथक्सतां ततस्स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ शेषवद्वा प्रयोजनं प्रति कर्म विभज्येत ॥ अविधानात्तु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वात् विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥

---

अथैकादशस्य प्रथमः पादः

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभिष्टप्रदं नौमि श्रीरूप सुन्दरं महः ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तस्तं बालकृष्ण पितरं नमामि ॥ २ ॥

श्रीखण्डदेव प्रणिपत्य सद्गुरु मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥ ३ ॥

यद्यप्यत्र गुरोः कृतावपि मयाप्युद्राव्यते काचना
ऽसभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादरा
मद्वाक्य परिहृत्य तत्कृतिमलङ्कुर्वन्त्वियं मे मतिः ॥ ४ ॥

अत्र वार्तिककृता 'दशमे बाधाभ्युच्चयलक्षणं वृत्तमिति भाष्योक्तौ अभ्युच्चयस्य शास्त्रार्थत्वाभावेन अध्यायार्थत्वानुपपत्तिं बाधाभावस्यैवाभ्युच्चयत्वात् निरूपणीयत्वसम्भवेन परिहृत्य अर्थभेदान् अध्ययभेदापत्तौ बाधाभ्युच्चयद्वारेण अनुष्ठेयपदार्थपरिमाणस्यैव एकस्याध्यायार्थत्वाङ्गीकारेण परिहृतम् । तत् अभ्युच्चय इव परिमाणेपि अशास्त्रार्थत्वस्य स्मृतिपादे उक्तत्वात् अध्यायार्थत्वानुपपत्तेरयुक्तम् । अतो बाधमात्रस्यैवाध्यायार्थत्वं भेदमात्रस्यैव

**तदेवं दशभिरध्यायैः प्रकृतौ विकृतौ च अनुष्ठेयपदार्थेष्ववगतेषु अधुना तेषां प्रयोगविध्यवगतानुष्ठानतन्त्रत्वं निरूप्यते।** प्रयोगविधिर्हि **साङ्गप्रधानभावनायाः फलार्थमेकेन वाक्येनानुष्ठानं बोधयन्नेकवाक्योपादानात् साहित्यं बोधयति। तच्चासति बाधके**

---

द्वितीयाध्यायार्थत्वमिव युक्तम्। अभ्युच्चयस्य तु अभेदस्येव बाधाभावेऽर्थतः सिद्धत्वात् न तत्र इति दशमाद्याधिकरणे सूचिते सति बाधेनाभावरूपेण एतदध्यायसङ्गतेः स्वतोऽसम्भवे, बाध्यमानानुष्ठेयवर्गज्ञानद्वारैव तस्या वक्तव्यत्वे सति समानन्यायादन्येषामपि नवमान्तानामध्यायानां उपदिष्टातिदिष्टानुष्ठेयवर्गज्ञापकत्वाविशेषात् यथायमध्यायो दशमेन सङ्गतः, तथा तत्पूर्वतनैरपि भवत्येव सङ्गत इत्यभिप्रेत्य दशाध्याय्याप्यस्य सङ्गतित्रयं दर्शयति—**तदेवमिति**। अनुष्ठेयवर्गेऽवगते तद्विषयानुष्ठानस्य बुद्धिस्थस्य त्यागायोगात् प्रसङ्गसङ्गतिः। अथवा अनुष्ठेयवर्गज्ञानस्य तद्विषयानुष्ठाननिरूपणं प्रति स्पष्टतयैव हेतुत्वात् हेतुहेतुमद्भावसङ्गतिः। अथवा उत्पत्तिविनियोगव्यापारे निरूपिते प्रयोगविधिव्यापारस्यामेवावसर इत्यवसरसङ्गतिरित्येवं सङ्गतित्रय **अधुना प्रयोगविध्यवगतेति** पदद्वयेन सूचितम्। बाधाभावे अभ्युच्चयस्येव तन्त्राभावे आवापस्यार्थतः सिद्धत्वात् नाध्यायार्थत्वमिति सूचनाय प्राचीनैरुपात्तमप्यावृत्त्यर्थकमावापपदं न प्रयुक्तम्। प्रयोगविशेषचिन्तात्वेपि अतिदिष्टपदार्थसापेक्षत्वादेव न चतुर्थानन्तरमस्यारम्भः; नवा उपदिष्टातिदिष्टपदार्थसापेक्षतया तुल्यत्वेपि आवापापवादरूपत्वात् द्वादशोत्तरमस्यारम्भो वेति ध्येयम्। प्रयोगविध्यवगतेत्यनेन सूचितं तन्त्रे सप्रमाणत्वमेव विशदयति—**प्रयोगविधिर्हीति**। **तच्चेति**। अनुष्ठानगतं साहित्यं तच्छब्दार्थः। आग्नेयादियागत्रयाङ्गभूतानां प्रयाजादीनां प्रतिप्रधानमावृत्तेः प्राप्तावपि, सम्प्रतिपन्नद्रव्यदेवताकत्वात् सहानुष्ठानेनैव कृतः समिद्यागः भवत्येव त्रितयोपकारकत्वात् त्रितयाङ्गमिति समिद्यागानुष्ठाने एकक्षणवृत्तित्वरूपं साहित्यमनेकेषामपि समिद्यागानामुपपद्यते। एवं सान्नाय्यप्रधानयोरपि। येषां तु तनूनपातादिप्रयाजानां भिन्नदेवताकत्वात् न समिद्यागेन सह एकक्षणवृत्तित्वरूपं तदुपपद्यते; यथावा आग्नेयाग्नीषोमीयादिप्रधानानां परस्परं, तत्र तदभावे तत्तदुत्तरक्षणवृत्तित्वमादायैव साहित्यमुपपादनीयमिति **असति बाधके** इत्यनेनोक्तम्। प्रकृते च साहित्यस्यानेकप्रकारत्वेपि एतत्पादान्त्याधिकरणवक्ष्यमाणरीत्या एकक्षणवृत्तित्वरूपसाहित्यस्यापि प्रतीतेः तदेकक्षणवृत्तित्वरूपमुख्यसाहित्यं येन सिद्ध्यति तादृशमनुष्ठानगतं तन्त्रत्वं यत् तदेवाध्यायार्थत्वेन निरूपणीयम्। तल्लक्षणं च—

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।
एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधौ॥

**एकक्षणवृत्त्येव कल्प्यते**। अत एवानेकोद्देशेन सकृदनुष्ठानं तन्त्रम्। अत एव **न प्रसङ्गातिप्रसङ्गः**, तत्र प्रयाजादीनां सकृत्करणेऽपि पशुपुरोडाशादीनामुद्देश्यत्वाभावात्। दधिपयोयागयोरप्यवान्तरकार्यस्यैवोद्देश्यस्यानेकत्वान्नाव्याप्तिः।

अत एव **तद्विजातीयविषयं सजातीयविषयं** वेत्यन्यदेतत्। एकजातीय-समिद्यागस्यैवाग्नेयादित्रिकोद्देशेन सकृदनुष्ठानात्, विजातीययोर्दधिपयोयागयोरपि

---

इत्यभियुक्तवचनेन कृतम्। तस्य चायमर्थः—यत् साधारणेनानुष्ठितं सत् बहूनामुपकारकं तत् तन्त्रम्, यथा बहूनां ब्राह्मणानां मध्ये कृतो दीपः। परस्यार्थेऽनुष्ठीयमानं परस्योपकरोति यथा—दध्यानयनं वाजिनस्य। तत्रापरो वाजिनरूपोऽर्थोऽप्रयोजकः। प्रयोजकताबोधके स्वीये विधौ सत्यपि यत् परस्यार्थेऽनुष्ठीयमानस्याप्रयोजकं अयं प्रसङ्गः। यथा पशुपुरोडाशे अतिदेशेन प्राप्तानां प्रयोजकत्वसामर्थ्ये सत्यपि स्वोपकारजनकप्रयाजादीनामप्रयोजको भवति तत्र प्रसङ्गः। अनेन प्रयोजकताबोधकविध्यभावकृताप्रयोजकताशालिनि वाजिनादौ यदस्ति साधारणमनुष्ठानं दध्यानयनस्य तस्मात्, प्रयोजकताशक्तिमत्वे विद्यमानेपि यत्प्रसङ्गेऽस्ति प्रयाजानां साधारणमनुष्ठान पशुपुरोडाशादौ, तस्माच्च भिन्नतया साधारणशब्दार्थाविवक्षया तदेव लक्षणं फलितवृत्त्या उपपादयति–**अत एवेति**। यतः एकक्षणवृत्तित्वरूपं साहित्यं सम्पादनीयं अत एवेत्यर्थः। तथा च न सकृदनुष्ठानमात्रेण, न वा बहूपकारकतामात्रेणेह साधारण्यं विवक्षितम्; अपि तु अनेकोद्देश्यताकसकृदनुष्ठानकृतमेव तदिति भावः। तदेवातिव्याप्त्यादिपरिहारेण द्रढयति—**अत एवेति**। स्वर्गरूपोद्देश्यस्यानेकत्वाभावात् सान्नाय्ययागयोः सकृदनुष्ठाने प्रसक्ता-व्याप्तिं परिहरति–**दधीति**। अनयैव दिशा काम्यदर्शादिप्रयोगे पापक्षयस्योद्देश्यत्वाभावेन अनेकोद्देशेन सकृदनुष्ठानरूपतन्त्रलक्षणाभावात् काम्यनित्यप्रयोगयोः तन्त्रत्वानुपपत्तौ यत् द्वादशे जागरणाधिकरणे तयोस्तन्त्रत्वमुक्तं पूज्यपादैः तदपि समर्थनीयम्। तत्राप्येकजातीयावान्तरादृष्ट-द्वयमादायानेकोद्देश्यत्वोपपत्तेः। यदि तु अदृष्टसाजात्ये सति भेदव्यवहाराभावान्नानेकत्व-व्यवहार इत्याग्रहः, तदा निमित्तस्याप्युद्देश्यत्वात् निमित्तफलरूपोद्देश्यानेकत्वमुपपादनीयम्। आवश्यिकी चानेकनिमित्तसन्निपाते नैमित्तिककर्मणां तन्त्रतासिद्ध्यर्थं निमित्तसाधारण्यपि उद्देश्यता लक्षणाघटिकेति न दोषः। **अत एवेति**। यतः पूर्वोक्तकार्यभेदमादाय दधिपयोयागीय-तन्त्रानुष्ठानं लक्ष्यं अत एवेत्यर्थः। **इत्यन्यदेतदिति**। सजातीविजातीयविषयत्वं यत् सकृदनुष्ठाने पश्चात् प्रतीयमानं तत् न लक्षणघटकं सकृदनुष्ठानमात्रान्तलक्षणकरणेनैवोभय-सङ्ग्रहादित्यर्थः। तमेव दर्शयति—**एकजातीयेति**। अत्रादौ भाष्यादिषु स्वर्गकामपदे

**तत्त्वाच्च।** तदुपोद्घातत्वेन च दर्शपूर्णमासाद्यनेकप्रधानस्थले किं षड्यागेभ्योऽप्येका फलव्यक्तिः उत तत्तद्यागेभ्यो भिन्नं भिन्नं फलमिति चिन्तनीयम्। फलव्यक्तिभेदे हि तेषामेकप्रयोगविधिपरिग्रहासम्भवात् न तन्त्रत्वसम्भवः।

तत्र तत्तदुत्पत्तिवाक्येषु तत्तद्यागानां निरपेक्षसाधनत्वेन विहितत्वात् तदनुवादेन विधीयमानः फलवाक्ये फलसम्बन्धोऽनुवाद्ययागगतसाहित्यस्याविवक्षितत्वात् प्रत्येकमेव विज्ञायते। अतश्च तत्तदुत्पत्तिवाक्येष्वेव तेषां प्रयोगविधिः। पौर्णमास्यां पौर्णमास्या यजेत' इत्यादौ च पौर्णमास्येकत्वमात्रविधिः। तेन सामान्यविहितपूर्वाह्णादिकालबाधेनैकस्यामेव तस्यां इष्टित्रयं कार्यमिति प्राप्ते—

---

स्वर्गस्य कामनावत्पुरुषविशेषणत्वं, अथवा तत्कामनाया निमित्तत्वं इत्येवं पूर्वपक्षोपन्यासपूर्वकविचारेण फलपरत्वं सिद्धान्तितमपि अपेक्षितफलपरत्वसम्भवे निमित्तपरत्वस्यायुक्तत्वात इत्यादियुक्त्या षष्ठादौ तत्र तत्र साधितमेवास्तीति इह तन्निराकरणे प्रयोजनाभावात् उपेक्ष्य स्वर्गकामपदस्य फलपरत्वं सिद्धवत्कृत्यैव पूर्वपक्षमाह—**तत्रेति।** विहितत्वादिति हेतुना कर्मफलयोरुभयोस्समानप्राप्तिकत्वेपि यत् कर्मणामेवोद्देश्यत्वं तत् अपेक्षितविधित्वलाभमूलमिति सूचितं लिप्सासूत्रे। फलांशे विधेयत्वस्य निराकरणात् न पूर्वपक्षसिद्धिरित्याशङ्कापरिहाराय फलभाव्यकत्वरूपसम्बन्धविधानं सूचयितुं फलसम्बन्ध इत्युक्तम्। **अतश्चेति।** फलवाक्ये यागानामविधानं अतश्शब्दार्थः। एवं प्राचां रीत्योक्ते पूर्वपक्षे पौर्णमास्यादिवाक्यद्वयेन साङ्गप्रयोगविधाने सति कथं न प्रयोगैक्यमिति प्राप्तामाशङ्कां वाक्यद्वयस्यान्यार्थविधायकतयाप्युपपत्तेः न प्रयोगैक्यविधायकत्वमित्येवं परिहर्तुमाह—**पौर्णमास्यामिति।** तत्तदुत्पत्तिवाक्येष्वेव कालश्रवणात् तत्तत्कालविध्युन्नीतप्रयोगविधानसम्भवे नानेन तद्विधानं, न वा य इष्ट्येति वाक्येनेव द्व्यहकालबाधेन सद्यस्कालत्वविधानं कर्तुं शक्यं, तस्याप्यन्तेवोपादिष्टत्वेन निरवकाशत्वात्। अतः 'पूर्वाह्णो वै देवानां' इति सामान्यवाक्यविहितपूर्वाह्णकालबाधेन एकस्यामेव पौर्णमास्यामेकं यागप्रयोगं समाप्य अपरस्यानुष्ठानमित्येव रीत्या यागत्रयानुष्ठानम्; अन्यथा पौर्णमासीभेदेन तदनुष्ठानापत्तेः। अतस्तद्वारणाय पौर्णमास्येकत्वविधायकतया तत्सार्थक्यम्। एवं सति उत्तरयागद्वयानुष्ठानं मध्याह्नादौ सम्भवदपि न दुष्यतीति भावः। **यद्यपि** च भिन्नप्रयोगविधिपरिगृहीतयोरपि सङ्क्रान्तिव्यतीपातश्राद्धयोः दैवादेकदेशकालकर्तृसन्निपाते तन्त्रेणानुष्ठानवदिहापि तदुपपत्तेः। तथा प्रातःकालस्यापि औपदेशिकत्वेन द्व्यहकालत्वस्येव बाधायोगात् प्रातःकालावच्छिन्नपौर्णमासीकालस्य प्रतिप्रयोगं भेदेनैव सम्भवात्। पूर्वाह्णादिकालबाधेन एकस्यामेव तस्यां इष्टित्रयं कार्यमित्यनुपपन्नमिव; **तथापि** प्रयोगभेदे सति साङ्गतत्तत्प्रधानप्रयोगस्य भेदेन प्रातःकालावच्छिन्नायामेकस्यां तस्याम-

**उत्पत्तिवाक्येषूत्पन्नानामपि फलवाक्ये फलसम्बन्धित्वेन विनियोगविधिकरणात् विनियोगविधिविषयतया फलोद्देशेन यागानामेव विधेयत्वावगतेस्तद्विशेषणीभूतस्य साहित्यस्य तन्त्राभिधानावगतस्य विवक्षितत्वात् सर्वेभ्य एकैव फलव्यक्तिः। सर्वेषां तस्यां दण्डचक्रादिवत्समुच्चयेन कारणत्वोपपत्तेः। अतश्च तेषां वक्ष्यमाणविधयैकप्रयोगविषयत्वस्याप्युपपत्तेर्युक्तं तन्त्रत्वम्।**

---

सम्भवात् 'पौर्णमास्यां पौर्णमस्या यजेत'इति वाक्यवैयर्थ्यानुपपत्त्या प्रातःकालस्यैव विकृतिषूत्कर्षाङ्गीकारात् न बाधकम्। युज्यते च सर्वविकृतीनामेकस्यां पौर्णमास्याममावास्यायां वा अशक्यत्वादेवानुष्ठानासम्भवे प्रत्येकं तदनुष्ठानेन प्रातःकालस्य तासु निवेशः। प्रकृते तु प्रधानत्रयानुष्ठानबोधकतयैव तद्वाक्यस्य सार्थक्यान् तदनुरोधेन प्रातःकालस्य बाधेपि न क्षतिः। अत एव पूर्वाह्णादीत्यादिपदेन प्रातःकालोऽपि सङ्गृहीतः। उक्तश्च द्वयोस्तु पक्षकोटिप्रविष्टत्वान्नानुपपत्तिरिति। कामपदोपात्तत्वात् पुरुषार्थत्वाच्च फलस्यैवोद्देश्यत्वप्रतीतेः धात्वर्थविधानसम्भवे उपपदविध्यङ्गीकारस्यायुक्तत्वात्। अन्योन्यसापेक्षाणामपि फलान्वये स्वस्वापेक्षयैव तदन्वयात् अपेक्षितविधानसम्भवाच्च प्राप्तानामपि यागानामेव विधानं युक्तमिभिप्रेत्य सिद्धान्तमाह—**उत्पत्तिवाक्येष्विति**। **तन्त्राभिधानादिति**। यजिसमानाधिकरणसमुदायिपरदर्शपूर्णमासपदेन समुदायिनां यागानां तन्त्रेणाभिधानमित्यर्थः।

अत्र च **यद्यपि** फलभेदेपि दैववशसम्पन्नैकदेशकालकत्वेन आर्थिकप्रयोगविध्यवगतसाहित्येनापि पूर्वोक्तश्राद्धयोस्तन्त्रत्वं भवत्येवेति फलैक्यप्रयुक्तयागविधानकृतसाहित्यविवक्षाधीनतासाधनं तन्त्रत्वे व्यर्थमेव, नहि उक्तश्राद्धयोरेकस्मिन् फले साहित्येन विधान प्रत्यक्षविधिनाऽस्ति। न चेहाग्नेयादीनां कदाप्येकदेशकालकत्वं साहित्यबोधकविध्यभावे. तयोरिव नापततीति शक्यं वक्तुं; पौर्णमासीकालकर्तव्यानां तेषां एकस्यामनुष्ठानप्रसक्तिसम्भवात्। उत्पत्तिवाक्यावगतकालसम्बन्धाविरोधाच्च। तथाप्युत्पत्तिवाक्यावगतकालसम्बन्धस्य पौर्णमासीभेदेनाप्यनुष्ठाने विरोधाभावस्य तुल्यतया उक्तश्राद्धयोरिव कालभेदेनाप्यनुष्ठानप्रसक्तौ तन्निवारणायैवैतत्साधने प्रयासो न विरुद्धयते, न हि एकस्मिन् फले सहितानां साधनत्वेन विधाने सति तदनुष्ठानं कालभेदेन कृतं यागसाहित्यमाधास्यति। अतः साहित्येन विधानसाधनस्य एकदेशकालकत्वसिद्धिरेव प्रयोजनम्। न च पौर्णमासीवाक्येनैव भिन्नकालव्यावृत्तिः; एतादृशवाक्याभावे वैश्वदेवपर्वादौ आग्नेयादियागेषु कालैक्यादेः वैश्वदेवेन यजेतेत्येतद्विधिसिद्धसाहित्येनैवोपपादनीयत्वेन तदर्थमे-

किञ्चैवं '**पौर्णमास्यां पौर्णमास्या**' इत्यादिवाक्यवैयर्थ्यापत्तिः, युगपत्तत्तद्यागसाध्यफलेच्छानैयत्ये प्रमाणाभावेनैकस्यां पौर्णमास्यां यागत्रयकरणानुपपत्तेः। अस्मन्मते त्वस्यैकप्रयोगविधानार्थत्वस्य वक्ष्यमाणत्वान्न वैयर्थ्यम्। अतः फलवाक्ये एकफलव्यक्तिं प्रति षण्णां दण्डचक्रादिवत् समुच्चयावगमाद्वक्ष्यमाणरीत्या त्रयाणां त्रयाणामेकप्रयोगोपपत्तेर्युक्तमेव विजातीयदधिपयोयागादीनां तन्त्रत्वं, सजातीयप्रयाजादीनां चाग्नेयादिभेदेऽपि तन्त्रत्वम्।

---

(२)—अङ्गानां तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्वम्॥ ५ ॥ अर्थभेदस्तु तत्रार्थे ह्यैकार्थ्यादैककर्म्यम्॥ ६ ॥ शब्दभेदान्नेति चेत्॥ ७ ॥ कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात्॥ कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु॥ ९॥ आरम्भस्य शब्दपूर्वत्वात्॥ एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात्॥ ११॥ फलाभावान्नेति चेत्॥ १२॥ न कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात् ऐकशब्द्यादिति चेत् ॥ १४॥ नार्थपृथक्त्वात्समत्वादगुणत्वम्॥ १५ ॥ विधेस्त्वेकश्रुतित्वादपर्यायविधानात् नित्यवच्छ्रुतभूताभिसंयोगात्

---

तद्विचारारम्भोपपत्तेः। प्रातःकालविधायकशास्त्रोत्कर्षे प्रामाणाभावेन तदवच्छिन्नायास्तस्याः प्रयोगभेदे एकत्वानुपपत्तेश्च। वस्तुतस्तु पौर्णमासीवाक्यं फलभेदे सति नैकत्वविधानक्षममिहेति दूषणान्तरव्याजेनाह—**किञ्चेति**। ननु सिद्धान्तेपि फले सहितानां विधानबलादेव उपपादितरीत्या कालैक्यसिद्धेः व्यर्थ एव तद्विधिरित्यत आह—**अस्मन्मते त्विति**। **वक्ष्यमाणत्वादिति**। उत्तराधिकरणे प्रयोगविध्याक्षेपसमाधानार्थे चाधिकरणे इति शेषः। अस्य विचारस्योपोद्घाततामुपसंहरति—**अत इति**। वक्ष्यमाणरीत्येत्यस्य सजातीयप्रयाजादीनामित्यनेनान्वयः; इतरथा उत्तरत्र प्रसाधनीयस्य इहासाधितस्योपसंहारानुपपत्तेः।

---

अर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिस्स्यात् ॥ १६ ॥ तथा कर्मोपदेशत्वात् ॥ १७ ॥ क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात् सन्दोहे यथाकामी प्रतीयेत ॥ १९ ॥

**इदमप्युपोद्घात एव। प्रयाजाद्यङ्गानां क्रतूपकाराख्यफलं प्रति विकल्पेन कारणता**

---

**अङ्गानां तु शब्दभेदात्।**

अत्र भाष्यकारेण अङ्गानान्तु शब्दभेदात् क्रतुवत्स्यात् फलान्यत्वमित्येकेन सूत्रेण अङ्गेषु कार्यभेदं पूर्वपक्षयित्वा अर्थभेदस्तु तत्राथेहैकार्थ्यादैककर्म्यं; शब्दभेदान्नेति चेत्; कर्मार्थत्वात्प्रयोगे ताच्छब्द्य स्यात् तदर्थत्वात् ; कर्तृविधेर्नानार्थत्वादगुणप्रधानेषु ; आरम्भस्य शब्दपूर्वत्वादिति पञ्चसूत्र्या एककार्यत्व सिद्धान्तितम्। तदुत्तरं च एकेनापि समाप्येत कृतार्थत्वात् यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् इत्येकेन सूत्रेण अङ्गानामेकार्थत्वाद्विकल्पमाशङ्क्य फलाभावादिति चेत्; न कर्मसयोगात् प्रयोजनमशब्ददोष स्यात्; ऐकशब्द्यादिति चेत्; नार्थपृथक्त्वात् समत्वादगुणत्वमिति चतुर्भिः सूत्रैः सिद्धान्त्यापादितसमुच्चयनिराकरणेन तमेव प्रतिष्ठाप्य विधेस्त्वेकश्रुतित्वादपर्यायविधानात् नित्यवच्छ्रुतभूताभिसंयोगात् अर्थेन युगपत् प्राप्तेः यथाक्रम निवीतवत् तस्मात्संप्रयोगे प्रवृत्तिः स्यात् तथाकर्मोपदेशत्वात्; क्रत्वन्तरेषु पुनर्वचनम्; उत्तरास्वश्रुतित्वात् विशेषाणां कृतार्थत्वात्; सन्दोहे यथाकामी प्रतीयेत इति चतुर्भिः सूत्रैः तन्निराकरणेण समुच्चयसिद्धान्तः साधितः। एवं षट्सूत्र्या एकमधिकरणम्। तदुत्तरनवसूत्र्या चापरं इत्येवमधिकरणभेदपरतया पञ्चदशसूत्रीव्याख्यान कृतमपि वार्तिककृता प्रत्याख्यातम्। तस्यायमाशयः। आद्येऽधिकरणे कार्यभेदचिन्तायां यद्यवान्तरापूर्वाणि कार्यत्वेन विवक्ष्यन्ते तदा तद्भेदस्य सिद्धान्तेपि सम्मतत्वात् तदभेदसाधन दुष्करमेव। यदा तु करणगतशक्त्युद्बोधनरूपमहोपकाररूपं तदा तस्य सर्वथाप्येकत्वात् न पूर्वपक्षोत्थानसम्भवः। किञ्च कार्यभेदेपि कारकाणामिवाङ्गानां सिद्ध्यत्येव समुच्चयः, कार्यैक्येप्यपर्यायविधानात् समुच्चय एवेति फलभेदाभावात् निष्प्रयोजनत्वमपि। विस्तरस्तु **तन्त्ररत्नादौ** द्रष्टव्यः। अतः अधिकरणभेदे प्रयोजनाभावात् यथावार्तिकं पञ्चदशसूत्र्या ऐकाधिकरण्यमेव विकल्पसमुच्चयचिन्तापरं युक्तमित्यभिप्रेत्य स्वयमपि तथैव व्याचष्टे **–इदमपीति**। अत्र च यद्यपि वार्तिके अङ्गानां विकल्प उत एकेन द्वाभ्यां बहुभिश्चोपकारसिद्धिः

**उत समुच्चयेनेति चिन्ता—तत्र प्रधानानां प्रत्येकोत्पत्तावपि विनियोगे साहित्यावगमात् युक्तो दण्डचक्रादिवत्समुच्चयः। अङ्गानां तु प्रत्येकमुत्पन्नानां प्रत्येकमेव प्रयोजनाकाङ्क्षा-वशेन विनियोगविधिकल्पनात्** सत्यप्येकस्य **प्रधानस्यैतस्मिन्नेव** क्रतूपकाराख्ये **फले सर्वेषामङ्गानां तत्र साहित्यानवगमात् विकल्पेनैव तृणारणिमणिन्यायेन कारणता ॥**

न च **निरपेक्षकारणत्वावगमेऽपि बह्वङ्गाम्नानसामर्थ्यात् भूयसां** करणे **फलभूमा, तदर्थित्वाभावे त्वेकेनैव क्रतूपकारसिद्धिरिति वाच्यं,** साहित्यबोधका**भावे ईदृशकल्पनाया अन्याय्यत्वात्। अतो व्रीहियवादिवद्विकल्प एव। एवं च** वैकल्पिकानामङ्गाना**मेकै-कस्याङ्गस्य सत्यपि प्रधानप्रयोगविधिनैव प्रयोगविधाने एकाङ्गविशिष्टप्रधानप्रयोगकरणा-पत्तेः** सम्प्रतिपन्न**देवताकविजातीयाङ्गानां साहित्यानवगमात् न तन्त्रत्वम्।**

---

उपकारभूयस्त्वाच्च फलभूयस्त्वं उत समुच्चय इति पक्षत्रयोपन्यासेन आद्ये पूर्वपक्षे आद्यं सूत्र, मध्यतना पञ्चसूत्री तदुत्तरत्वेन समुच्चयसिद्धान्ते, तदुत्तरमेकं सूत्रं द्वितीयपूर्वपक्षे इत्येव सप्तसूत्री सयोज्य, तदुत्तरमष्टसूत्री पुनस्समुच्चयसिद्धान्ते योजिता , तथापि द्वितीयपूर्वपक्षस्यातिफल्गुतया आशङ्कानिराकरणव्याजेनैव दूषणीयत्वात् तदनुपन्यस्यैव .असम्भवापत्तिरित्यर्थः । ननु पूर्वं फलैक्यादेव प्रधानानां समुच्चय उक्त इति इहापि क्रतूपकाराख्यफलस्यैकत्वात् तद्वदेव समुच्चयः स्यादेवेत्याशङ्कां परिहरन्नाह—**सत्यपीति**। न केवलं पूर्वं फलैक्यमात्रात् समुच्चय उक्तः; किन्तु तन्त्राभिधानावगतसाहित्यबलात् । नचेह तद्वदङ्गानां तन्त्राभिधानमस्ति अतः साहित्या-नवगम इत्यर्थः । अत्र एकेनापीति सप्तमं सूत्रं भाष्यकृता एकेनापि अन्यतरेणापि इत्यर्थेन अधिकरणान्तररचनया विकल्पपूर्वपक्षे योजितमिव भाति; तदयुक्तम् । तथात्वे प्राप्तेषु चोत्तरा-वत्स्यात् इति सूत्रशेषे उत्तरावदिति दृष्टान्तोपादानानुपपत्तेः । न हि उत्तराणां दोहने विकल्पः पूर्वपक्षे सिद्धान्ते वाऽस्ति ; अस्मिन्नेव पादे तिसृणामेव दोह इति पूर्वपक्षयित्वा यावत्त्वं एकस्या द्वयोः बह्वीनां वा दोहस्य सिद्धान्तितत्वात् । अतः एकेनापिशब्दात् द्वाभ्यामपि बहुभिरपि इति व्याख्यया सूत्र सयोज्य वार्तिकसङ्गृहीतं द्वितीयं पक्षमाशङ्काव्याजेन उपन्यस्यति—**न चेति**। सर्वाङ्गसाहित्यं शास्त्रायातं न वा ? आद्ये सर्वथा एकस्यैवानुष्ठानमनुपपन्नम् । द्वितीये फल-भूमार्थमपि बह्वङ्गानुष्ठाने नैव प्रमाणमित्येवं सुनिरस्यतां दर्शयति—**साहित्यबोधकेति** । एकार्थत्वमेव विकल्पे प्रयोजकं न तु दृष्टार्थत्वमेव, अतो दृष्टार्थानामपि विकल्पे व्रीहियवविकल्पस्य दृष्टान्ततयोपादानं न विरुद्धम् । आदिपदेन अदृष्टार्थचित्रादीष्टीनां विकल्पोऽपि गृह्यते । **वैकल्पिकानामङ्गानामिति**। निर्धारणे षष्ठीयम् । करणापत्तेरित्यस्य एवं रूपेण प्रयोगकरण-मेवापन्नमतो हेतोरित्यर्थः । **सम्प्रतिपन्नेति**। सम्प्रतिपन्नदेवताकानां सजातीयाङ्गानां विजा-

**वस्तुतस्तु—'समिधो यजति' इत्यादि प्रत्येकं विधिश्रवणवैयर्थ्यापत्तेः प्रधानप्रयोगवाक्ये अङ्गानामश्रवणाच्च प्रयाजाद्यङ्गानामुत्पत्तिविनियोगयोरिव प्रयोगस्यापि पार्थक्येनैव प्रतीतेस्सुतरां न तन्त्रत्वम्। न वा प्रधानप्रयोगमध्यपातः। अपि तु एकं किञ्चिदङ्गं प्रधानप्रयोगाद्बहिः प्रयोगं कार्यमिति प्राप्ते—**

**पृथगुत्पन्नानामङ्गानां पृथगेव** प्रयोजनाकाङ्क्षत्वेऽपि **एकस्य प्रधानस्यैक एव** फलाधानसामर्थ्योद्बोधाख्य **उपकारस्सकृदेव स्वोपायमपेक्षते, अतश्च तयैकयैवाकाङ्क्षया खलेकपोतन्यायेन युगपत्सर्वेषामङ्गवाक्यानां** प्रधानोत्पत्तिवाक्यैकवाक्यता**मङ्गीकृत्य समिदाद्यङ्गोपकृतप्रधानेनेष्टं भावयेदित्येवंविधविनियोगविधेरेकस्यैव कल्पनादेकवाक्योपादानेन सर्वेषामङ्गानां क्रतूपकाराख्ये फले जन्यमाने साहित्यावगतेः प्रधानवदेवाङ्गानामपि युक्तं तन्त्रत्वम्॥**

---

तीयाङ्गानां च परस्परं साहित्यानवगमादित्यर्थः। तथाच समिदादीनां प्रत्येकमेव तत्तद्यागाङ्गत्वात् एकसमिद्यागरूपाङ्गविशिष्ट प्रधानत्रयं सहैवानुष्ठेयमित्यर्थसिद्धावपि समिद्यागत्रयस्य नैव परस्परं साहित्यमवगतं, येन एकक्षणवृत्तित्वरूपस्य तस्य सिद्ध्यर्थं तन्त्रं विचार्येतेति भावः। **प्रयोजनाकाङ्क्षत्वेपीति।** तस्य प्रयोजनस्य प्रतिवाक्यमश्रवणात् प्रधानापेक्षिततद्गतसामर्थ्योद्बोधनरूपमेव तत्कल्प्यम्। स चेत्येतावन्त्यक्षराणि अपेरग्रे पूरणीयानि। तेन नानुपपत्तिः। **फलाधानसामर्थ्येति।** अनेन च अपूर्वाधिकरणवार्तिके प्रधानसामर्थ्योद्बोधरूपात् उपकारात्पृथगेव सर्वाङ्गान्ते सर्वाङ्गापूर्वजन्यं तन्त्रभूतमखण्डोपकाररूपं परमापूर्वमुत्पद्यत इति तद्व्यततमं [१] अखण्डं तत्रैव समुच्चय इति कस्यचिद्भ्रमो निरस्तः। तस्य व्यापाररूपत्वेपि तन्निरूपितकारणत्वाभावात् मुख्य एव कार्ये साहित्यमिति सूचितम्। इदं चानुपदमेव व्यक्तीकरिष्यते। **प्रधानोत्पत्तीति।** यद्यपि प्राचां ग्रन्थेषु स्वर्गकामवाक्य एव कथंभावाकाङ्क्षायां अङ्गान्वयेन तदेकवाक्यताकल्पनमेव भाति। तथापि फलवाक्ये तन्त्रेणोपात्तानां षण्णां भावनानां कथंभावाकाङ्क्षायां अङ्गानां करणानुग्रहद्वारैव आरुण्यस्य द्रव्यपरिछेदद्वारा क्रयभावनायामिवान्वयात् तन्त्राभिधानावगतसाहित्यावच्छिन्नकरणानामेव द्वारतापत्त्या समुदिताङ्गत्वमेव स्यात्। ततश्चैकैकविकारे पार्वणहोमवदतिदेशो न प्राप्येत। अतस्तदेकवाक्यतामुपेक्ष्य तत्तत्प्रधानोत्पत्तिगततत्तद्भावनानां भाव्यतया फलसामान्यस्येव कथंभावाकाङ्क्षया इतिकर्तव्यतासामान्यान्वयेपि तद्विशेषाकाङ्क्षयैव वक्ष्यमाणैकवाक्यतया समिदादीनामन्वयेन तत्तत्प्रधानव्यक्त्यङ्गत्वम्। न च प्राथमिकप्रधानान्वयेनैव अङ्गानां नैराकाङ्क्ष्यात् द्वितीयाद्यङ्गत्वानापत्तिः। तत्तत्प्रधानगत-

**वस्तुतस्तु—प्रधानाकाङ्क्षासहकृतप्राथमिकाङ्गाकाङ्क्षामात्रेण तन्मात्रविषयकविनियोगकल्पनोपपत्तौ इतराङ्गप्रतीक्षणे प्रमाणाभावात् समिद्यागेन क्रतूपकारं भावयेत् तनूनपाद्यागेन क्रतूपकारं भावयेदित्येवं प्रातिस्विक एव विनियोगविधिः। अत एव वैमृधादावतिदेशोपपत्तिरपि। इतरथा हि प्रयाजादीनां प्रकृत्यङ्गत्वस्य वैमृधीयप्रकृत्यङ्गत्वसमकालतया शुद्धस्यैव वैमृधस्य प्रकृत्यङ्गत्वापत्तेः, पश्चादतिदिष्टप्रयाजाद्यकरणेऽपि क्रतुवैगुण्यानापत्तिः। विनियोगविधिभेदे तु वैमृधाङ्गताबोधव्यतिरेकेणैव प्रयाजादीनामङ्गताबोधोपपत्तेरतिदेशकल्पनया वैमृधेऽङ्गवैशिष्ट्यबोधोपपत्तेः युक्तं तदभावे क्रतुवैगुण्यम्॥**

---

कथंभावाकाङ्क्षारूपप्रकरणेन प्राथम्यस्थानरूपस्य बाधात्। षण्णामाकाङ्क्षया युगपदेव षट्सु प्रत्येकमन्वयोपपत्तेः। ततश्च 'समिदाद्यङ्गोपकृतेन आग्नेयेनेष्टं भावयेत्' इत्येवमाकारकैः षड्भिर्विनियोगविधिभिः अङ्गानां प्रत्येकविनियोगात् एकैकविकारेऽतिदेशः, तत्तत्प्रधानसम्बन्ध्यङ्गानां परस्परं च साहित्यं एकपदोपादानावगतं नासुलभम्। तथाभूतेषु विनियोगविधिषु समिदाद्यङ्गोपकृतेनेति विशेषणविशिष्टयागभावनानां इष्टसामान्योद्देशेन विध्यवगतौ समिदाद्यङ्गैः क्रतूपकारं भावयेदित्येवं रूपेण कल्पितविशेषणविधिरूपे अङ्गविनियोगविधौ सहितानामेव फले विनियोगादिति भावः।

**वस्तुतस्तु** प्रधानोत्पत्तिविध्येकवाक्यत्वाङ्गीकारेण विनियोगविधिकल्पने एकैकप्रधानसम्बन्ध्यङ्गानां मिथस्साहित्यावगमेपि द्वितीयप्रधानसम्बन्ध्यङ्गानां साहित्यावगतौ मानाभावात्, आग्नेयाग्नीषोमीयादिप्रधानाङ्गभूतानां मिथस्तदभावे तन्त्रेणानुष्ठाननिर्वाहार्थं फलवाक्ये तदुपादानमेव शरणम्। तत्र हि स्वस्वाङ्गविशिष्टानां सहितानां प्रधानानामेकेन पदेनोपादानात् यथा प्रधानानां साहित्यमवगम्यते तथा तत्प्रधानाङ्गानां पृथग्भूतानामपि तदित्येवं साहित्योपपादने अन्यत आवश्यके व्यर्थमेव प्रथमतः तत्तदुत्पत्तिवाक्यैकवाक्यताङ्गीकरणम्। **यद्यपि** च उत्पत्तिवाक्यैकवाक्यतया लाघवादेकस्यैव विनियोगविधेः कल्पना न तु षण्णामित्यभिप्रायः पूज्यपादानां भवेत् **तथापि** षडेकवाक्यताकल्पनं गौरवं कथं नापादयेत्। अतः फलविध्येकवाक्यताकल्पनयैव विशेषणविधिकल्पनया अङ्गानां विनियोगकल्पनं प्राचामुक्तं साधु। उत्पत्तिवाक्येषु इष्टसामान्यस्य भाव्यतयेव इतिकर्तव्यतासामन्यस्यैव तत्त्वेनान्वयः पूज्यपादैः सप्तमादौ अन्यत्रापि तथैवोपपादितः। सहितयागत्रयाङ्गतापत्तिस्तु एकविनियोगविधिकल्पनापक्षेपि तुल्यपरिहारैव। अत एव 'उद्देश्येऽन्यत्रवा' इति **विधिरसायनश्लोक**विवरणे **दीक्षितै**रपि फलविध्येकवाक्यतैव स्पष्टीकृतेत्यलं विस्तरेण।

**अतश्च विनियोगविधिभेदसत्त्वेऽपि** प्रयोगविध्यैक्यमादायैव**ाङ्गसमुच्चयः उपपादनीयः। तथा हि—नाङ्गविधिषु सत्यपि विधिश्रवणे** प्रत्येकं **प्रयोगविधानं उत्पत्तिविधिनैव चरितार्थस्य तस्य प्रयोगेऽपि तात्पर्यकल्पने गौरवात्। प्रयोगस्यान्यतस्सिद्धत्वाच्च। अत एव 'समिधो जयति' इत्यादौ विधिश्रवणं प्रयोगांशेऽनुवाद एव। न चैवमुत्पत्तेराख्याता-न्तपदश्रवणमात्रेणापि सिद्धेः लेट्श्रवणवैयर्थ्यं, तदभावे प्रवर्तनाबोधाभावेन यागस्यैव समानपदश्रुत्या भाव्यत्वप्रसक्तौ तस्य प्रयोजनानाकाङ्क्षत्वेनाङ्गत्वानापत्तेः।**

**अतश्चोत्पत्तिवाक्येषु विधिश्रवणेऽपि न तत्र प्रयोगविधानम्। अपि तु** प्रधान-प्रयोगविधावेव **लाघवादङ्गविधीनामप्येकवाक्यतां कल्पयित्वा पौर्णमास्यां साङ्गैः पौर्णमासी-संज्ञकैः प्रधानैः कृतैरिष्टं भावयेदित्येवं प्रधानप्रयोगविधिनैवाङ्गानामपि प्रयोगविधानम्। अतश्च तत्रैकवाक्योपादानात् प्रधानानामिवाङ्गानामपि साहित्यं उपादेयविशेषणत्वाद्विव-क्षितमिति युक्त एव समुच्चयः।**

**या तूत्पत्तिवाक्ये विनियोगवाक्ये चैकैकस्याङ्गस्य निरपेक्षस्य साधनता, सोत्प-त्तिवाक्ये प्रधानानामिवावान्तरकार्यनिरूपितेति न कश्चिद्दोषः। अत एव तत्र प्रयोग-वाक्यावगत**समुच्चयानुरोधेना**वान्तरकार्येषु वैजात्यकल्पना।**

---

एव प्राचां रीत्या विनियोगविध्यैक्यं, तथापि फलवाक्ये सहितानां प्रधानानां अङ्गविशिष्टानां फलविशेषोऽयं, अङ्गानां च सहितानां क्रतूपकारः फलमित्येव बोधनेपि तद्विशिष्टानुष्ठानस्य प्रयोगरूपस्य तेनाविधानात , अनुष्ठाने साहित्यबोधार्थं प्रयोगविधौ सहितोपादान मुख्यमावश्यक चेत् तदेव विनियोगभेदेपि तुल्यमित्यभिप्रेत्याह—**प्रयोगविध्यैक्यमादायेति**। अन्यत्र विनियोग-प्रयोगविध्योरेकत्वे एकेनैव विनियोगविशिष्टप्रयोगविधानात् अनुष्ठाने साहित्यं बोध्यते। इह तु प्रयोगविधेर्भेदात् तमादायैव तदुपपादनमित्यर्थः। **प्रधानप्रयोगविधावेवेति**। 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत'इत्येवं रूपे इत्यर्थः। एवञ्च प्रधानाना-मप्यनुष्ठाने प्रयोगविधिलभ्यमेव साहित्यम्। अत एव प्रयोगांशेऽनुवाद इत्येतत् प्रधानोत्पत्ति-विधिष्वपि द्रष्टव्यम्। **समुच्चयानुरोधेनेति**। यदि सर्वेषामेकजातीयमेव अवान्तरकार्यं स्यात् तदा व्रीहियवयोरिव विकल्पापत्तेः प्रयोगविध्यवगतः समुच्चयः न सिद्ध्येदित्यर्थः। अत्र **शास्त्रदीपिकायां** शक्त्युद्बोधरूपक्रतूपकार एव अङ्गानां समुच्चयाङ्गीकारेपि तत्तदङ्गापूर्वशक्त्यु-द्बोधरूपयोरन्तराले यदा दर्शापूर्वाणि तदङ्गापूर्वाण्यपि च समस्तानि निष्पन्नानि तदा तदीय— ब्राह्मणतर्पणानन्तरं अपर्यायविधानात् युगपत् प्रयोगवचनोपसंहारकल्पितं अङ्गानि प्रधानानि च प्रति तन्त्रभूतं समस्तान्यङ्गापूर्वाणि। अपूर्वात्मकमेकं युगपत् त्रिरवयवं प्रधानोपकारं कृत्वा

**परमापूर्वस्थानापन्नमखण्डकरणोपकाररूपमपूर्वं यदि प्रधानेष्वस्ति तदाऽङ्गेष्वप्यावश्यकं, अन्यथा तत्रापि नेति कौस्तुभे विस्तरः।**

**अवान्तरकार्ये तु यत्र प्रयोगविधितः पूर्वं नैकत्व प्रमाणान्तरेणावधारितं तत्र प्रयोगविधिना समुच्चयस्यैवावगमात् भेदकल्पनैव। यत्र त्वेकत्वमेव सामर्थ्यादिनाऽवधारितं, यथा—व्रीहियवादौ। तत्र वैकल्पिकयोरेव प्रयोगविधिना प्रयोगविधानेऽपि न समुच्चयः। यत्र वैकपश्वाद्यर्थचित्रादीनामदृष्टार्थानामपि नैकप्रयोगविधिविषयता,**

---

निवर्तते। ततस्तद्दर्शनप्रधानापूर्वाण्यपि एकफलोत्पत्तिशक्तिभूतं रांहत्य सर्वान्तमेकमपूर्वान्तरं जनयित्वा अपवृज्यन्ते। तत्तु आफललाभात् अजरं तिष्ठति इत्यपूर्वाधिकरणे वार्तिककृताऽङ्गीकृतमपि एकमङ्गापूर्वजन्यमखण्डोपकाररूपमपूर्वान्तरं प्रमाणाभावात् निष्प्रयोजनत्वाच्चायुक्तमित्युक्तं, तत् प्रतिबन्द्या दूषयितुमाह—**परमापूर्वेति**। स्थानापन्नं यत् प्रधाने परमापूर्वं सम्प्रतिपन्न तत्सदृशमित्यर्थः। यदि प्रधानेष्वस्तीत्यस्याग्रे परमापूर्वमित्यध्याहारः। **अयमर्थः**—यदि फलवाक्ये साहित्यविशिष्टानां करणतानां फलनिरूपितत्वावगमे सति तस्य व्यापारमन्तरेणानुपपत्तेः फलनिरूपकतावछेदकावच्छिन्नजन्यस्यैव व्यापारत्वकल्पनात् परमापूर्वमेकं स्वीक्रियते चेत्, तत्तुल्यन्यायतया अङ्गानामपि परस्परसहितानामेव प्रयोगविधिबलेन प्रधानोपकाररूपफलजनकत्वावगमात, तस्य चाव्यवधानेनानुपपत्तेः व्यापारापेक्षायां तदवान्तरोपकाराणां साहित्यावच्छिन्नाजन्यत्वेन व्यापारात्वायोगात् एकमखण्डमपूर्वं प्रधानोत्पत्त्यपूर्वनिष्ठशक्त्युद्बोधरूपप्रधानोपकारजनकमावश्यकमेव। एवञ्च प्रधानोत्पत्त्यपूर्वानन्तरं परमापूर्वमङ्गीकृतवतः **पार्थसारथेः** अङ्गावान्तरापूर्वानन्तरं परमपूर्वानङ्गीकरणं निर्युक्तिकमेव। यदा तु कथञ्चित् प्रधानेष्वपि न तदङ्गीकारः इत्यनेन वादिना साध्येत तदा अङ्गेष्वपि न तदपेक्षितमिति अपूर्वाधिकरणे **कौस्तुभे** विस्तर इति।

यत्तु अपूर्वान्तरप्रदर्शनपरपूर्वलिखितवार्तिकगतापूर्वपदस्य अपूर्वान्तरे प्रमाणाभावात शक्त्युद्बोधपरतया **प्रकाशकाराणां** व्याख्यानं तत् "अथ कस्मात् प्रत्यात्मकान्येवाङ्गापूर्वाणि प्रधानोपकारकत्वं, भिन्नानि च प्रधानापूर्वाणि फलबीजत्वं न प्रतिपद्यन्ते" इत्याशङ्कापरोत्तरग्रन्थस्य तत्परिहारपरग्रन्थस्य च विरोधापत्तेरुपेक्षितरम्। अत एव प्रधानोपकारं कृत्वेति वार्तिकं शक्त्युद्बोधरूपोपकारं कृत्वेत्यर्थभ्रमनिरासार्थमेव **न्यायसुधायां** फलापूर्वोत्पादनयोग्यत्वाधानात्मकोपकारपरतया व्याख्यानं योग्यतया आधीयते येन तथाभूतमुपकारं कृत्वेत्यर्थेन अवान्तरव्यापाररूप-

तत्र समुच्चयग्राहकप्रमाणाभावेन विकल्प एव साम्ये, वैषम्ये तु फलभूमेति ध्येयम्। प्रकृते तु प्रयोगविधिना समुच्चयावगतेः सर्वैरेवाङ्गैरेकक्रतूपकारसिद्धिः। सम्प्रतिपन्नदेवताकस्थले च तन्त्रत्वं प्रधानप्रयोगान्तःपातश्च सुलभ एव। सूत्रभाष्ययोरप्यस्मिन्नेवार्थे योजना सुधीभिरिहोन्नेया।

---

(३)—कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः ॥ २० ॥ अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥ २१ ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥ २२ ॥ शब्दार्थश्च तथा लोके ॥२३॥ अपि वा सम्प्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥ ऐकशब्द्यात्तथाऽङ्गेषु ॥ २५ ॥ लोके कर्मार्थलक्षणम् ॥ २६ ॥

काम्यानां कर्मणां भूयोभूयः फलकामनायां पुन पुन आवृत्तिर्न वेति चिन्तायां—

---

तथैवोपपादनीयम्। अन्यथा 'न त्वपूर्वस्य चिरकालस्थायित्वाभ्युपगमे अङ्गापूर्वाणामेव साक्षात् प्रधानोपकारकत्वोपपत्तेः अखण्डोपकारापूर्वकल्पनं व्यर्थं, प्रधानापूर्वाणां च साक्षात् फलजनकत्वोपपत्तेः फलापूर्वकल्पनं व्यर्थम्' इत्यथेत्याशङ्कापरग्रन्थावतरणिकोत्तरग्रन्थासामञ्जस्यापत्तेः। एवं च फलापूर्वोत्पादनयोग्यत्वाधानात्मकोपकारप्रदर्शनपरस्य न्यायसुधाव्याख्यानस्य शक्त्युद्बोधरूपोपकारपरव्याख्यायां स्वकृतायामनुकूलतादर्शनमपि प्रकाशकाराणामपास्तम्। अतः सर्वथा वार्तिककृतः तट्टीकाकृतश्च प्रधानेष्विवाङ्गेष्वपि परमापूर्वमावश्यकमित्येवं सम्मतमिति दिक्। स्पष्टमन्यत्। सुधीभिरुन्नेयेति। यद्यपि यथावार्तिकं भाष्यानारूढस्य विचारस्य करणे सूत्रभाष्याननुगुणता तन्त्ररत्न एव कथञ्चित्परिहृतेति तन्त्ररत्न एव द्रष्टव्येति वक्तुमुचित न तु सुधीभिरुन्नेयेति वक्तुं, तथापि विनियोगविध्यैक्यमादाय भाष्यादौ सिद्धान्ते कृते यद्विनियोगविधिभेदमङ्गीकृत्य प्रयोगविधिबलादेव तदुपपादनं कृतं तत्र सूत्रभाष्ययोजना सुधीभिरुन्नेयेत्यर्थः। प्रकरणाधिकरणे साधितमपि प्रयाजादीनामङ्गत्व न साहित्येनैव सिद्ध्यतीत्याक्षिप्य समाधानादपौनरुक्त्यं ज्ञेयम्।

---

सकृत्करणेऽपि सामग्रीसत्त्वेन पुनःपुनः कामानायां पुनःपुनः फलोत्पत्तिसम्भवान्नावृत्तिः। तथाहि—यदा तावत्फलोत्पत्तेः पूर्वमेव फलान्तरापेक्षा तदा तत्फलव्यक्त्युत्पादकापूर्वस्यैव सत्त्वात् तेनैव फलान्तरोत्पत्त्युपपत्तिः। न चैकमपूर्वमेकामेव फलव्यक्तिमुत्पादयतीत्यत्र नियामकमस्ति, प्रतिबन्धकसत्त्वेन फलधाराया आपादयितुमशक्यत्वात्। प्रतिबन्धककल्पनस्य चापूर्वोत्पत्तिद्वितीयक्षणे फलोत्पत्तिप्रसङ्गेन तत्राप्यावश्यकत्वात्। न च सकृत्करणजन्यापूर्वव्यक्तेराद्यफलव्यक्त्युत्पत्त्या नाशात् न फलान्तरोत्पत्त्युपपत्तिः, 'क्षीयन्ते चास्य कर्माणि, ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादि श्रुतिस्मृतिपर्यालोचनया तत्त्वज्ञानस्यैवापूर्वनाशकत्वेन फलस्य तन्नाशकत्वे प्रमाणाभावात्। फलैकनाश्यत्वे पशुपुरोडाशोपकारजननेनैव नाशात् पशूपकारजनकत्वानुपपत्त्या प्रसङ्गसिद्ध्यनापत्तेश्च। अतश्च फलोत्पत्त्यनन्तरमपि अपूर्वस्य सत्त्वात् फलान्तरकामनायां सत्यां तेनैवापूर्वेण फलान्तरोत्पत्तौ न किञ्चिद्बाधकम्।

यदि तु अपूर्वकल्पनायां प्रमाणाभावात् 'कृतयोगादात्मन एव फलम्' इति मूलोक्तः पक्ष आश्रीयते तदा सुतरामिति एकस्मिन् जन्मनि सकृदेव काम्यकरणमिति प्राप्ते—

---

कर्मण्यारम्भभाव्यत्वात्।

अङ्गानां समुच्चये उपोद्घातत्वेनोक्ते तत्प्रसक्तानुप्रसक्तत्वेन अङ्गप्रधानसमुच्चयरूपप्रयोगस्य आवृत्त्यनावृत्ती चिन्त्येते इति पादाध्यायसङ्गती। तथा फलसिद्धिप्रकारे विकल्पसमुच्चयव्याजेन निरूपिते प्रसङ्गात् बहुफलसिद्धिप्रकारः आवृत्त्यनावृत्तिभ्यां चिन्त्यते इत्येवमनन्तरसङ्गतिं च स्पष्टत्वादनभिधाय अपूर्वाधिकरणप्रयोजनान्तरकथनार्थतामधिकरणस्य सूचयन् अपूर्वाङ्गीकारेणैव पूर्वपक्षमाह—सकृत्करणेऽपीति। प्रसङ्गसिद्ध्यनापत्तेश्चेति। पश्वर्थं कृताः प्रयाजादयः मध्ये पशुपुरोडाशस्यापि उपकुर्वन्ति इत्ययं हि प्रसङ्गः। यदा पशुपुरोडाशोपकारजननमात्रेणैव अङ्गापूर्वाणि नष्टानि भवन्ति तदा अग्रे तेषां पश्वर्थत्वस्यैवाभावे तस्यासिद्ध्यापत्तिरित्यर्थः। यदि त्विति। अदृष्टा अश्रुता अपूर्वकल्पना, तस्य च स्थायिता फलहेतुता यागजन्यता च कल्प्या, तद्वरं कृतयागात स्वत एव स्थिरात् आत्मन एव फलं भवतीति कल्पयितुम्। इदमेवानागतावेक्षणन्यायेन अपूर्वाधिकरणे वार्तिककृता आशङ्काव्याजेन दर्शितम्।

यष्टुरेवात्मनो यागैः सङ्गतस्य स्थिरस्य च।
निमित्तत्वं वरं क्लृप्तं लाघवं हि तथा सति। [इति]

न तावत्कृतयागादात्मनः फलं, यागेनात्मन्यतिशयानाधाने यागकरण इव यागकरणात्प्रागपि आत्मसत्त्वेन फलोत्पत्त्यापत्तेः। यागध्वंसविशिष्टस्य फलजनकत्वाङ्गीकारे ध्वंसस्यैव तदापत्तौ अपूर्वाधिकरणोक्तदूषणप्रसङ्गात्। नाप्यपूर्वस्य ज्ञानैकनाश्यत्वम्, तथात्वे प्रयाजाद्यपूर्वाणामपि सत्त्वेन विकृतौ तत्करणानापत्त्या आज्यभागादेः 'न तौ पशौ करोति' इत्यादिनिषेधानुपपत्तेः। ब्रह्महत्याजन्यपापापूर्वस्य नरकभोगेऽपि सत्त्वेन पुनर्नरकान्तरप्रसङ्गाच्च। न च तत्र कामनाभावात्पुनरनुत्पत्तिः, फलकामनायाः प्रवृत्तिं प्रति कारणत्वेऽपि फलं प्रत्यकारणत्वात्। अतोऽवश्यं यत्र समवायादिसम्बन्धेन फलं तत्राभावीयविशेषणतासम्बन्धेन अपूर्वनाश इत्येवं कार्यकारणभावः कल्पनीयः। अत एव जीवन्मुक्तिशास्त्रमप्युपपद्यते।

अत्र च यदुद्देशेन तादृशापूर्वसाधनीभूतक्रियानुष्ठानं तस्यैव फलत्वं न त्वानुषङ्गिकजन्यस्यापि, स्वर्गारम्भकशरीरोत्पत्त्याऽपूर्वनाशानङ्गीकारात्, अतश्च पशुपुरोडाशोपकारोत्पत्तावपि तस्य फलत्वाभावान्न तेन प्रयाजाद्यपूर्वनाशः। अतश्चैकेनापूर्वेणैकस्यैव फलस्योत्पत्तेः फलान्तरार्थं युक्तमेव पुनःपुन काम्यकरणम्। अत एव 'तेषा ये प्रथमं यजेरन् तेषां गौरतिरात्रो ये द्वितीयं तेषामायुः' इति लिङ्गमप्युपपद्यते।

---

एवञ्च सकृत्करणेनैव कृतयागानां निष्पत्तेः पुनः करणे प्रयोजनाभावात् फलान्तरकामनायामपि कृतयागात्मनः सत्वात् तदुत्पत्तिसम्भवात् न पुनरावृत्तिरिति सुतरामित्यनेनोक्तम्। **अपूर्वाधिकरणोक्तदूषणेति**। यागनाशाद्यदि स्वर्गफलं तदा यागगतकरणता वेदेन बोधिता बाधितैव स्यात। नहि अभावप्रतियोगिनोरेकत्र कारणत्वं सम्भवतीत्यादि वार्तिकोक्तदूषणप्रसङ्ग इत्यर्थः। **अत एव जीवन्मुक्तीति**। यदि ज्ञानैकनाश्यत्वं फलानां तदा उत्पन्नज्ञानिनः तेन सर्वफलानां नाशे प्रारब्धस्यापि नाशेन शरीरपातस्यैवापत्त्या जीवन्मुक्तिशास्त्रं कमधिकृत्य प्रवर्तेतेत्यर्थः। अतो ज्ञानिनोऽपि प्रारब्ध फलं भोगेनैव नश्यतीति फलैकनाश्यत्वमेव युक्तमिति भावः। **तेषां ये इति**। गवामयने हि उत्तरे पक्षसि द्वादशाहीयदशरात्रात् पूर्वं गौः आयुः इति द्वे अहनी उक्थ्यसंस्थे भवतः। तत्र सप्तदशभिर्यजमानैः सह सम्भूय क्रियमाणे सत्रे यदि तेषां मध्ये ये प्रथममेव सत्रमारभन्ते तेषां गौरुक्थ्योऽतिरात्रः कर्तव्यः। ये पुनः द्वितीयवारमारभन्ते तेषां आयुरतिरात्रः कर्तव्यः इति कर्मद्वयव्यवस्था अनेनोच्यते। तत्र प्रथमद्वितीयशब्दौ आवृत्तौ लिङ्गमित्यर्थः।

---

(४)—क्रियाणामर्थशेषत्वात् प्रत्यक्षतस्तन्निवृत्त्याऽपवर्गस्स्यात् ॥ २७ ॥ धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गस्स्यात् ॥ २८ ॥

अवघातादिक्रियाणां दृष्टार्थत्वस्य द्वितीये स्थापितत्वात् तदनुरोधेन यावद्वैतुष्यमवघातस्यावृत्तिरिति तदधिकरणप्रयोजनमेवेदं तन्त्रप्रसङ्गादिहोच्यते। न चोद्यमननिपतनरूपस्यावघातपदार्थस्यावृत्तौ कश्चिद्बाधः, आवृत्तिवदनावृत्तेरपि शास्त्रेणानुक्ततया प्रयोजनानुरोधेनावृत्तौ बाधकाभावात्।

यत्र तु दृष्टासम्भवाददृष्टार्थोऽवघातस्तत्रानावृत्तिरेव, यथा चयने 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्त्यथैतदुपदधाति' इति। अत्र वितुषस्य सर्वौषधस्याग्रे विनियोगाभावात् प्रत्युतावघातसंस्कृतसर्वौषधपूरणस्योपधानोपयोग्युलूखलसंस्कारार्थत्वप्रतीतेः अवघातस्यादृष्टविधया सर्वौषधसंस्कारत्वेऽपि वैतुष्यप्रयोजनकत्वाभावेनावृत्त्यनापत्तिः। अवघातस्यारादुपकारकत्वे तु सुतराम्।

---

(५)—क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥ सकृद्वा कारणैकत्वात् ॥ ३० ॥ परिमाणं चानियमेन स्यात् ॥ ३१ ॥ फलस्यारम्भनिवृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥ ३२ ॥ अर्थवतस्तु नैकत्वादभ्यासस्स्यादनर्थको यथाभोजनमेकस्मिन्नर्थस्यापरिमाण-

---

क्रियमाणमर्थशेषत्वात्।

अत्र तदुपदधातीति। सर्वौषधपूर्णमुलूखलमुसलं मध्ये अग्नेः उपदधातीत्यर्थः। अत्र भाष्यादिषु सर्वौषधावघातस्य अदृष्टार्थतोक्ता; नोभयथापि सम्भवति अदृष्टसंस्कारार्थतया आरादुपकारकतया चेति पक्षद्वयेनाप्यनावृत्तिं साधयति—अत्रेति। वैतुष्यप्रयुक्तत्वेन पुरोडाश इवेह सर्वौषधस्योपयोगाभावात् सर्वौषधस्येति तृतीयार्थषष्ठ्या करणत्वप्रतीतेः सर्वौषधकरणकपूरणस्यैव उलूखलमुसलसंस्कारार्थत्वात् सत्यपि सर्वौषधस्याप्युपधानोपयोगे वैतुष्यस्य प्रयोजनवत्त्वकल्पने मानाभावात् तदभावेऽनावृत्तिरित्यर्थः।

त्वात् प्रधाने च क्रियार्थत्वादनियमस्स्यात् ॥ ३३ ॥ पृथक्त्वा-द्विधितः परिमाणं स्यात् ॥ ३४ ॥ अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणस्स्यात् क्रियार्थत्वात् ॥ ३५ ॥ अभ्यासो वा छेदनसम्मार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥ अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥

**एकस्मिन्नेव प्रयोगे पुनःपुनः क्रियमाणैरङ्गैः प्रयासगौरवेण फलाधिक्यं मन्वानस्योत्तरम् ॥**

न तावत्फलान्तरोत्पत्तिः, एकस्मात्प्रधानादेकस्यैव फलस्योत्पत्तिनियमेन प्रधानावृत्त्यभावे सामग्र्यभावेन फलान्तरोत्पत्तौ प्रमाणाभावात् । नापि तस्यामेव फलव्यक्तावतिशयमात्रं 'अतिरात्रे षोडशिनं गृह्णाति' इत्यादिवत्फलभूमा । स हि यत्र तद्व्यतिरेकेण क्रतूपकारसिद्धिः प्रमाणप्रमिता तत्रैव तद्विधिवैयर्थ्यभिया कल्प्यते यथा षोडशिग्रहणात्, यथा वा 'एका देया षड्देया' इत्यादौ ॥

प्रकृते त्वङ्गविधीनां सकृत्करणेन चरितार्थत्वात् क्रतोश्चैकक्रतूपकारमात्रापेक्षितया पुनरावृत्त्यनाक्षेपकतया पुरुषेच्छामात्रेणवावृत्तौ फलाधिक्ये प्रमाणाभावः । यत्र हि 'पशुमालभेत' इत्यादौ महान् पशुरालभ्यते यत्र स्वल्पः तत्रापि न फले तारतम्यमित्युक्तं भाष्ये । तत्र प्रयाजादीनां पुनः करणे का सम्भावना । 'गां दद्यात्' इत्यादौ तु समीचीनगोदाने फलाधिक्यमस्त्येवेति ध्येयम् ।

---

**ऋतुवच्च ।**

फलाधिक्यं पूर्वपक्ष्युक्तं किं फलानेकत्वरूपं उत फलातिशयरूपं? उभयथापि न सम्भवति इत्याह—**न तावदिति । गृह्णातीत्यादिवदिति** । इत्यादिवाक्यविधेयेष्विवेत्यर्थः । **षड्देया इत्यादाविति** । आदिपदेन "द्वादश देयाः, चतुर्विंशतिर्देयाः" इत्यस्य सङ्ग्रहः । **न फले तारतम्यमिति** । पशुत्वावच्छिन्नसाधनतामात्रस्यैव शास्त्रानुशिष्टतया महत्त्वांशे तद्व्यापाराभावादित्यर्थः । **भाष्ये इति** । उत्तराधिकरणसिद्धान्तसूत्रे इति शेषः । **का सम्भावनेति** । यत्र दृष्टोपकारद्वारा साधानत्वं तत्र ऋत्विजां बहुमांसभक्षणरूपोपकारसम्भवेपि न फले तारतम्यम् । किमुतादृष्टार्थानां पुनः करणे; अदृष्टोपकारस्य सकृत्कृतेनैव सिद्धेः फलतारतम्याकल्पकत्वादित्यर्थः । भाष्ये इत्युक्त्या स्वानमिमतत्वं सूच्यते । तत्रापि महोपकारकत्वेन फलभूयस्त्वसम्भवादिति ध्येयम् । **समीचीनेति** । धेन्वादीनां महोपकारिणां

(६)—बहुवचनेन सर्वप्राप्तेर्विकल्पस्स्यात् ॥ ३८ ॥ दृष्टः प्रयोग इति चेत् ॥ ३९ ॥ भक्त्येति चेत् ॥ ४० ॥ तथेतरस्मिन् ॥ ४१ ॥ प्रथमं वा नियम्येत कारणादतिक्रमस्स्यात् ॥ ४२ ॥ श्रुत्यर्थाविशेषात् ॥ ४३ ॥ तथा चान्यार्थदर्शनम् ॥ ४४ ॥ प्रकृत्या च पूर्ववत् तदासत्तेः ॥ ४५ ॥

**'वसन्ताय कपिञ्जलानालभेत' इत्यादौ यत्र बहुवचनं श्रुतं तत्र तस्य त्र्यादिपरार्ध-पर्यन्तसर्वसङ्ख्यावाचित्वात् चतुरादिसङ्ख्यादीनामपि शास्त्रीयत्वेन तत्करणे फलाधिक्यम्। न हि बहुवचनस्य त्रित्वमेवार्थः।** 'चत्वारो ब्राह्मणाः' **इत्यादौ चतुरादिसङ्ख्यास्वपि प्रयोगात्।**

**अस्तु वा नानार्थत्वभिया बहुवचनस्य द्वित्वाधिकसङ्ख्यायामेव शक्तिः, अतश्च 'पशुमालभेत' इत्यत्र महापशुग्रहणेऽपि यथा न वैगुण्य तथा चतुरादिग्रहणेऽपि। अस्तु वा कथंचित् कपिञ्जलोदाहरणे त्रित्वनियम, 'न हिंस्यात्' इति निषेधप्रवृत्तेस्सम्भावितत्वात्।** दर्शपूर्णमासयोः **ब्राह्मणांस्तर्पयत वै' इत्यादौ त्रित्वग्रहणे तु नैव किञ्चित्प्रमाणं पश्याम इति प्राप्ते—**

---

गोशब्देनैवोपादानात् तद्दानस्यापि शास्त्रार्थत्वेन फलतारतम्यकल्पनादित्यर्थः। वस्तुतस्तु अनेन न्यायेन महतः पशोरपि पशुपदवाच्यत्वात् तत्रापि महोपकारकतदालम्भे फलभूयस्त्व दुर्निवारमित्यतः पयस्विनीत्यादिगुणकृतमेव फलभूयस्त्वमत्रेति ध्येयम्। अत एव गां दद्यात् पयस्विनीमिति पयस्विनीविशेषणोपादान सार्थकम्।

---

**बहुवचनेन**

कपिञ्जलाः पक्षिणः। **चत्वारो ब्राह्मणा इति।** ब्राह्मणा इति बहुवचनेन त्रित्वस्यैवाभिधानात् तदवच्छिन्नेषु चतुःसङ्ख्याया बाधात् सामानाधिकरण्यानुपपत्तिरित्यर्थः। अत्र प्राचां ग्रन्थेषु त्र्यधिकानां ग्रहणे हिंसानिषेधप्रवृत्त्यापत्तेः त्रयाणामेव ग्रहणमिति सिद्धान्ते युक्त्यन्तरमुपन्यस्तम्। तस्याव्यापकतां दर्शयति—**दर्शपूर्णमासयोरिति। वस्तुतस्तु** अधिकसङ्ख्यामामपि शास्त्रेण

सत्यं, द्व्यधिकसङ्ख्यैव बहुवचनस्यार्थः। तथाऽपि चतुरादिग्रहणे त्रिग्रहणस्याव-श्यकत्वात् प्रथमातिक्रमे कारणाभावेन त्रिभिरेव शास्त्रार्थोपपत्तेर्नाधिकग्रहणम्। अत एव 'गां दद्यात्' इत्यादौ महोपकारकगोदाने अल्पोपकारकगोदानाभाव, तत्र तद्दाने फलाधिक्यं, प्रकृते तु नैवम्। अत एव 'कृष्णा याम्या अवलिप्ता रौद्रा नभोरूपाः पार्जन्यास्तेषामैन्द्राग्नो दशमः' इति लिङ्गमप्युपपद्यते।

---

(७)—उत्तरासु यावत्स्वमपूर्वत्वात् ॥ ४६ ॥ यावत्स्वं वाऽन्यविधाने-ऽनुवादस्स्यात् ॥ ४७ ॥ साकल्यविधानात् ॥ ४८ ॥ बह्वर्थत्वाच्च ॥ ४९ ॥ अग्निहोत्रे चाशेषवद्यवागूनियमः प्रतिषेधः कुमाराणाम् ॥ ५० ॥ सर्वप्रायिणाऽपि लिङ्गेन संयुज्यते देवताभिसंयोगात् ॥

साान्नाय्यदोहाधिकारे 'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति' इति श्रुतम्। तत्रापि पूर्ववत्तिस्र एवोत्तरा दोहयितव्याः। न च 'नास्यैतां रात्रिं कुमारा अपि पयो लभेरन्, नाग्निहोत्रं जुहोति' इति वचनेन साकल्यप्रतीतेर्नात्र

---

विधाने सति वैधे तदप्रवृत्तिरेवेति सम्भावितत्वादित्यनेन सूचितम्। अत एवोक्तं भाष्यकारेण—यस्तु मांसीयन् शिष्टमतिक्रामेत् स यदि तावद्वैदिकीषु हिंसासु प्रत्यवायः ततः प्रत्यवेयात्। अथाप्रत्यवायः तथापि शिष्टविगर्हणं च लभेत, कृते श्रुत्यर्थे मांसीयन् पशून् हन्तीति। **गोदानाभाव इति**। यथा त्रीननुपादाय न चतुरादीनां ग्रहणं सम्भवतीति त्रिग्रहणेनैव शास्त्रार्थसिद्धिः, नैवमिह अल्पोपकारकगामनुपादाय महोपकारिकगोदानासम्भवोऽस्ति; येन अल्पोपकारिकगामादायैव शास्त्रार्थसिद्धौ महोपकारकगोदानस्य अशास्त्रार्थत्वं भवेत्। अतस्तत्र उभयोरपि शास्त्रार्थत्वाविशेषे अल्पापेक्षया महोपकारकदानं फलातिशयकल्पकं भवत्येवेत्यर्थः। **कृष्णा याम्या इति**। कृष्णाः कृष्णवर्णाः; अवलिप्ताः नानावर्णाः। यद्यत्रोक्तन्यायेन बहुवचनं त्रित्वपर्यवसाय्येव भवेत् तदात्मिकक्रयानन्तरं (?) ऐन्द्राग्नस्य दशमत्वमुपपद्यते नान्यथेत्यर्थः।

---

त्रित्वनियम इति वाच्यं, आद्यवाक्यस्य पयःप्रतिषेधपरत्वेन द्वितीयस्य तत्पर्युदासपरत्वेन च सार्थक्येन तयोस्साकल्यपरत्वाभावादिति प्राप्ते—

नानयोः पयःप्रतिषेधपर्युदासौ, अदृष्टार्थत्वप्रसङ्गात् अपिशब्दवैयर्थ्यप्रसङ्गाच्च। अत एव तद्बलेन साकल्येन दोहनप्रतीतेः 'उत्तरा दोहयति' इत्ययमनुवादोऽनन्वारम्भमात्र-विधानार्थः। तूष्णींभावस्य मन्त्रविधानाभावादेव प्राप्तत्वात् भाष्यकारेण तूष्णींपदस्यापाठाच्च 'बहुदुग्धीन्द्राय—इति वाचं विसृजते' इत्यनेन वाग्विसर्गे मन्त्रस्य विनियुक्तत्वेन तदुत्तरकालीने उत्तरादोहने वाग्विसर्गस्य प्राप्तेश्च। अतोऽत्र यावत्स्वं दोहनमिति प्राञ्चः।

वस्तुतस्तु—न तावत् 'नास्यैताम्' इत्यादिना यावत्स्वं दोहनं विधीयते शब्दात्तस्या-प्रतीतेः लक्षणायां प्रमाणाभावाच्च। न च 'गा दोहयति' इति सामान्यविधिना गोत्रित्वे प्राप्ते 'नास्यैताम्' इत्यनेन तदर्थवादेन तात्पर्यग्रहाद्यावत्स्वं दोहनसिद्धेः 'उत्तरा दोहयति' इत्यनुवाद इति वाच्यं, सामान्यविधेर्मूलकारैरप्यलिखनात्। सत्त्वेऽपि वा यावत्स्वं दोहनस्य वाग्विसर्गात्पूर्वमेव प्राप्त्यापत्तौ 'उत्तरा दोहयति' इत्यनेन वाग्विसर्गस्यापि विधौ वाक्यभेदापत्तेश्च। सामान्यविधिना हि यावत्स्वं दोहने विहिते वाग्यमदशायामेव सर्वासां दोहनापत्तिः। सर्वदोहने मन्त्रप्राप्तिप्रसङ्गश्च।

यद्यपि च क्वापि दोहने मन्त्राभावः। तथाऽपि 'हुतस्स्तोकः' इति दुह्यमानानु-मन्त्रणस्य सर्वत्र प्राप्तिः केन वार्येत। यद्यपि च 'सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मा' इत्यानीयमानानुमन्त्रणमन्त्राणां त्रयाणामेव समाम्नानात् गोत्रयदुग्धस्य समन्त्रकं समानयनं अन्यासां त्वमन्त्रकमित्येव विशेष उपलभ्येत ; तथाऽपि दुह्यमानानु-

---

उत्तरासु

वाग्यत इति। पूर्वं तिसृणां दोहने अध्वर्योः प्राच्याः शाखाया वा अन्वारम्भो विहितः तादृशान्वारम्भरहित इत्यर्थः। आद्यवाक्यस्येति। कुमाराणां पयः प्रदानस्य रागतः प्राप्तस्य प्रतिषेधे विकल्पानापत्तावपि न 'पयसा एतां रात्रिं अग्निहोत्रं जुहोति' इति वचने विहितप्रतिषिद्धत्वेन विकल्पापत्त्या यत्प्रतिषेधत्वमुक्तं प्रकाशकारैः तदयुक्तमिति सूचयन् तत्पर्युदासपरत्वेनेत्युक्तम्। एतद्बलेनेति। समस्तस्य वाक्यस्य सान्नाय्यार्थं सर्वासां दोहनं कर्तव्यमित्येवंरूपे विशिष्टेऽर्थे तात्पर्यप्रतीतेः लक्षणा। अथवा विध्यन्तरकल्पनमाश्रयणीयम्। तथाच सर्वस्य पयसः सान्नाय्यार्थत्वात् कुमाराद्यर्थत्वस्यार्थादेव निषेधप्राप्तेः तन्निषेधरूपः शक्यार्थः अनुवादः सर्वत्वं च यावदेव सम्भवति तावदपेक्ष्येति, यस्यैका गौः तेन तावन्मात्रैव दोहनीया यस्य द्वे बह्व्यो वा तेन तावत्येवेर्थः। विधेयानेकत्वप्रयुक्तं वाक्यभेदं परिहरति—

मन्त्रणस्य सर्वत्र प्रसक्तौ पुनस्तूष्णींभावविधाने वाक्यभेदस्तदवस्थ एव। अतोऽत्र गोत्रयदोहनोत्तरकालतावाग्विसर्गानन्वारम्भतूष्णींभावविशिष्टोत्तरादोहनमेव विधीयते।

तत्र च पूर्वाधिकरणवत् त्रित्वे प्राप्ते एतदर्थवादेनैव 'नास्यैताम्' इत्यनेन तात्पर्यग्रहात् न त्रित्वनियमः। अत एव 'गा दोहयति' इति विधिसत्त्वे तेन गोमात्रनियमात् न महिष्यादिप्रसक्तिः। अत एव च 'उत्तरा दोहयति' इत्यनेन बहुत्वनियमात् नैकद्विगोदोहनेऽपि शास्त्रार्थसिद्धिः। तत्सिद्धं नात्र त्रित्वनियमः।

---

(८)—प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५२ ॥ क्रमकोपश्च यौगपद्यात्स्यात् ॥ ५३ ॥ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात् ॥ ५४ ॥ ऐकार्थ्यादव्यवाय-

---

तूष्णींभावस्येति। वाग्विसर्गस्यापि विधाविति। वाग्विसर्गस्य तदुत्तरकालस्यानन्वारम्भस्य च विधौ वाक्यभेदापत्तेरित्यर्थः। उत्तरा दोहयति' इत्यस्य विधित्वाङ्गीकारे प्रयोजनभेदं दर्शयति— अतएव चेति।

वस्तुतस्तु उत्तरा दोहयतीत्यस्य विधित्वेपि यथाऽर्थवादवशात् निश्शेषदोहनप्रतीत्या न त्रित्वनियमः, तथैव निश्शेषतानुरोधेनैव यावत्स्व दोहनमपि प्रतीयते, तदनुरोधेन बहुत्वमविवक्षितमित्येव युक्तं कल्पयितुम्। एवञ्च ' वत्सेभ्यश्च ह वा एता मनुष्येभ्यश्च पुरा आप्याययन्त। अथैतर्हि देवेभ्य एवैता आप्याययन्ति' इति लिङ्गमपि वत्समनुष्याप्यायनकर्तृत्वं यासां गोव्यक्तीनां सिद्धमस्ति तासां सान्नाय्यार्थे दोहन प्रतिपादयदुपपद्यते। नहि यस्य चतस्रः पञ्च वा गावः सन्ति तस्य तिसृणां दोहने जाते बह्वीनां वत्समनुष्याप्यायनकर्तृत्वं सिद्धमस्ति गोबहुत्वस्याविद्यमानत्वात्। अतो यस्य यावत्यः तावद्व्यक्तिमेलनेनैव यत् बहुवचनेनानूद्यते अवशिष्टानां निश्शेषदोहनमात्र एव विधेः पर्यवसानम्। एवं सति "यावत्स्वं वा अस्य विधानेनानुवादः स्यात्" इति सूत्रस्य भाष्यप्रभृतिसकलग्रन्थानां चानुकूल्यमपि लभ्यते। अत एवास्मिन् पक्षे अन्यमात्रविधानेन बहुवचनमनुवाद इत्येव सूत्रं योजनीयमिति। तत्सिद्धमिति। एकद्व्यपेक्षया त्रित्वनियमे विद्यमानेपि त्रित्वाधिकसङ्ख्याव्यावृत्तिफलकः त्रित्वनियमो नेत्यर्थः।

---

स्स्यात् ॥ ५५ ॥ तथा चान्यार्थदर्शनं कामुकायनः ॥ ५६ ॥ तन्नयायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५७ ॥ असंसृष्टोऽपि तादर्थ्यात् ॥ ५८ ॥ विभवाद्वा प्रदीपवत् ॥ ५९ ॥ अर्थाल्लोके विधितः प्रतिप्रधानं स्यात् ॥ ६० ॥ सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६१ ॥ विधेस्त्वितरार्थत्वात् सकृदिज्या श्रुतिव्यतिक्रमस्स्यात् ॥ ६२ ॥ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६३ ॥ अपि चैकेन सन्निधानमविशेषको हेतुः ॥ ६४ ॥ क्वचिद्विधानान्नेति चेत् ॥ ६५ ॥ न विधेश्चोदितत्वात् ॥ ६६ ॥

यत्रानेकानि प्रधानानि पृथगुत्पन्नानि एकफलार्थत्वेन समुच्चयेन विनियुज्यन्ते तत्र सत्यप्येकविनियोगविधिविषयत्वे उत्पत्तिविधिभेदेन प्रयोगविधिर्भिन्न एव। विशेषतश्चाग्नेयादौ उत्पत्तिवाक्येष्वेव प्रयोगान्वयिकालश्रवणात् सः। अतश्च प्रधानप्रयोगविधिविधेयानामङ्गानामपि भेदेनैवानुष्ठानम्।

न चैवं 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयवैयर्थ्यापत्तिः। आग्नेयादित्रिकस्य विभिन्नपौर्णमासीष्वप्यनुष्ठानप्रसक्तौ तस्येष्टित्रये पौर्णमास्येकत्वविधानेनार्थवत्त्वात्। तेनैकस्यामेव पौर्णमास्यामग्न्यन्वाधानादि ब्राह्मणतर्पणान्तमाग्नेयप्रयोगं समाप्याग्नीषोमीयस्य स कार्यः।

अस्तु वा विनियोगविध्येकत्ववशेनैव प्रयोगविधेरप्येकत्वं, दर्शपूर्णमासादिषु च 'पौर्णमास्यां पौर्णमास्या' इत्यादिनैव प्रयोगद्वयविधिः, तथाऽपि एकस्यामेवेष्टौ प्रतिप्रधानं गुणावृत्तिन्यायेन प्रयाजाद्यङ्गानामपि निर्वापादिसन्निपत्योपकारकवत् प्रतिप्रधानं भेदेनैवानुष्ठानम्।

---

प्रधानकर्मार्थत्वादङ्गानाम्।

उपोद्घातप्रसक्तानुप्रसक्तं समाप्याधुना साक्षादेव तन्त्रतारूपमध्यायार्थं निरूपयितुमधिकरणम्। यत्रानेकानीति। यथा द्वादशाहादाविति शेषः। अङ्गानामपीति। अपिना

अत एवारादुपकारकाङ्गसाधारण्येन सर्वत्रावृत्तिप्रसक्तौ 'सहावघ्नन्ति सह पिंषन्ति' इत्यनेन अवघातादौ सहत्वविधिरुपपद्यते। युक्तं चैतत्। अपूर्वस्य फलनाश्यत्वेन आग्नेयोपकाराख्यफलोत्पत्त्या प्रयाजादिजन्यापूर्वनाशस्यावश्यकत्वेनाग्नीषोमीयोपकारार्थं पृथगनुष्ठानस्यावश्यंभावात्। अतः प्रतिप्रधानं भेदेनैवाङ्गानीति प्राप्ते—

नोत्पत्तिविधिभेदेन प्रयोगविधिभेदः, अपि तु लाघवाद्विनियोगविध्येकत्वेनैकस्यैव प्रयोगविधेरसति विशेषश्रवणे सर्वत्र कल्पनम्। अत एव दर्शपूर्णमासादौ यत्र 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिविशेषश्रवणं तत्र सत्यपि षण्णामेकस्मिन् विनियोगविधौ प्रयोगद्वयमिष्टमेवेति वक्ष्यते। न त्वेतावता षण्णां प्रधानानां षट् प्रयोगविधयः उत्पत्तिवाक्ये कालश्रवणस्य फलसम्बन्धसिद्ध्यर्थकत्वेनोक्तत्वात्। अतश्च न तावत्प्रयोगविधिभेदादङ्गावृत्ति.।

नाप्येकप्रयोग एव प्रधानभेदात्। अनेकेषामपि प्रधानानामेकदेशकालकर्तृकत्वेनागृह्यमाणविशेषतया सकृत्कृतैरेवाङ्गैः उपकारसिद्धेरावृत्तौ प्रमाणाभावात्। न चानन्तर्यादगृह्यमाणविशेषत्वं, प्रकरणेन सर्वाङ्गताबोधे आनन्तर्यस्यानियामकत्ववत् सकृत्कृतस्याप्युपकारकत्वे तस्यावर्जनीयतया नियामकत्वाभावात्।

अत एव यत्र निर्वापादौ गृह्यमाणविशेषता तत्र भेद एव, तदपवादेनैव च सहत्वविधिः। अतस्सिद्धं प्रधानभेदेऽप्यगृह्यमाणविशेषत्वेऽङ्गानां तन्त्रत्वम्। अत एव 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते' इत्यादिलिङ्गमप्युपपद्यते। एवं च यदुद्देश्यकानुष्ठानविषयीभूतक्रियाजन्यं यदपूर्वं तन्नाशं प्रति तदन्तिमोद्देश्यस्य कारणतेति कल्पनान्नाग्नेयोपकारोत्पत्तिमात्रेण तन्नाशः। अपि तु अन्तिमप्रधानोपकारेणैवेति नाङ्गानां पृथक्करणापत्तिः।

---

प्रधानानि समुच्चीयन्ते। **अङ्गावृत्तिरिति**। ततश्च यद्यपि विनियोगविधौ अविवक्षितसाहित्यानां प्रधानानामुद्देश्यता तथापि प्रयोगविधौ सर्वेषां साहित्यावच्छिन्नानामेव प्रयोगविधानाप्नैकैकस्य साङ्गस्य प्रधानस्य भेदेनानुष्ठानं साहित्यबाधापत्तेरिति नाङ्गावृत्तिरित्यर्थः। **नापीति**। एकस्मिन्नेव पौर्णमासीकाले इष्टित्रयस्य एकप्रयोग एव प्रधानभेदात् प्रतिप्रधानावृत्तिन्यायेन अङ्गावृत्तिः नापीत्यर्थः। **गृह्यमाणविशेषतेति**। नह्याग्नेयार्थव्रीहिषु वैतुष्यार्थं कृतोऽवघातः अग्नीषोमीयार्थव्रीहिषु वैतुष्यकरो भवतीत्येवमाग्नेयार्थत्वेन गृह्यमाणविशेषता। एवं मन्त्रभेदेन निर्वापभेद इत्यपि विज्ञेयम्। **अन्तिमप्रधानोपकारेणैवेति**। यद्यप्यङ्गानां संहत्यकारित्वात् न ब्राह्मणतर्पणकाले प्रयाजादिसाहित्यं स्वरूपेण सम्भवति तथापि तत्तदङ्गजन्यापूर्वाणि तावत् तदानी सन्त्येवेत्यपूर्वद्वारा साहित्यं सम्भवत्येव। एवञ्च तदवान्तरापूर्वाणां अन्तिमप्रधानो-

यत्र चैकमेव प्रधानं तत्र तदेवान्तिममिति तदुत्पत्त्यैव नाशः। आवश्यकं चेदमन्तिमत्वदानमवघातनियमादृष्टार्थं, प्रयाजाद्यपूर्वस्य परमापूर्वोपयोगित्वेन तत्रान्तिमत्वादेरविवक्षितत्वेऽपि क्षतिविरहात् ॥

---

(९)—व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६७ ॥ भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधिः प्रधानकालत्वात् ॥ ६८ ॥ तथा चान्यार्थदर्शनम् ॥ ६९ ॥ विधिरिति चेत् न वर्तमानापदेशात् ॥ ७० ॥

'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः' इति श्रुतम्। अत्रालभेतपदानुषङ्गेण वाक्यत्रयेण यागत्रयोत्पत्तिं विधाय चतुर्थे तानालभेतेत्यध्याहारानुषङ्गाभ्यां साहित्येन सर्वेषां फलसम्बन्धः। न तु स्पर्धमानपदानुषङ्गेण वाक्यत्रयमेवाङ्गीकृत्य प्रत्येकं फलसम्बन्धः। तथात्वे द्वितीयाग्नेयवाक्यस्य वैयर्थ्यापत्तेः अतश्च त्रयाणां पशुयागानामेकप्रयोगतासिद्धौ किमाग्नेयद्वयस्य सम्प्रतिपन्नदेवताकत्वात् सान्नाय्यवत्तन्त्रेण प्रधानं उत पाठक्रमानुरोधेनावृत्त्येति चिन्तायां—

एकप्रयोगविधिना साङ्गानां प्रधानानां यौगपद्यावगतौ यत्र विभिन्नदेवताकस्थले तदसम्भवः तत्र क्रमापेक्षायां पाठादिना क्रमनियमेऽपि यत्र सम्प्रतिपन्नदेवताकस्थले

---

त्पत्त्यपूर्वनिष्ठयोग्यताधानानन्तरं नाश इत्यर्थः। तदुत्पत्त्यैवेति। तदपूर्वोपकारोत्पत्त्यैवेत्यर्थः।

---

व्याख्यातं तुल्यानाम्।

वैयर्थ्यापत्तेरिति। अत्र उत्पत्तिविधित्रयाङ्गीकारे यथा न द्वितीयाग्नेयवाक्यवैयर्थ्यं यागान्तरविधायकतया सार्थक्यात्, तथैव फलपदानुषङ्गेपि यागान्तरस्यैवोत्पत्तिविनियोगकरणात न वैयर्थ्यप्रसक्तिरिति प्रयोगान्तरविधिकल्पनानुषङ्गत्रयकल्पनाकृतगौरवापत्तिरेवात्र युक्तं दूषणम्। यदि कदाचित् तत्तद्देवताकतत्तद्द्रव्यकैकयागविधिरुच्येत तदा द्वितीयाग्नेयवाक्यवैयर्थ्यापादनं कर्तुमुचितमिति ध्येयम्। अङ्गतन्त्रत्वस्य सिद्धान्तेपीष्टत्वात् प्रधानमात्रविषयिणीमेव चिन्तांदर्शयति —किमिति।

यौगपद्यसम्भवस्तत्र क्रमापेक्षाभावेन पाठादिना तन्नियमायोगात् साम्नाय्यवत्तन्त्रेणैवानुष्ठानम्। न च प्रयोगविधौ एकेन पदेनानेकेषामुपादानात् दण्डचक्रादिवत्समुच्चयरूपसाहित्यावगतावप्येकक्षणवृत्तित्वरूपयौगपद्ये प्रमाणाभावः। फलानि सन्तीत्यादौ लोके एकप्रयोजनकत्वस्येवैकदेशकालवृत्तित्वस्याप्युत्सर्गेण प्रतीतेरानुभाविकत्वात्। अत एव देशे वृत्तौ कालस्यावच्छेदकता काले वृत्तौ देशस्येति प्रामाणिकाः। अतश्च प्रयोगविधिना एकक्षणवृत्तित्वरूपयौगपद्यस्यापि बोधात् युक्तं तन्त्रेणानुष्ठानम्।

न चैवमप्याग्नेययोस्तन्त्रत्वसम्भवेऽपि सौम्येन तयोः क्रमावश्यंभावादाद्यस्य सौम्यप्राक्कालत्वं अन्त्यस्य तदुत्तरकालत्वं च तन्त्रानुष्ठाने बाध्येतेति वाच्यं, पूर्वपदार्थे उत्तरपदार्थप्राक्कालत्वस्याङ्गत्वे प्रमाणाभावात्। सौम्ये आद्याग्नेयोत्तरत्वरूपमङ्गं तु आद्याग्नेयेन सहोत्तरस्य तन्त्रत्वेऽपि सौम्यस्याद्याग्नेयोत्तरत्वाबाधात् न विरुध्यते। उत्तराग्नेये सौम्योत्तरत्वं तु पयोयागे दधियागोत्तरत्ववत् नैव प्रामाणिकम्। नचैवमाग्नेयाज्यभागेनापि प्रधानाग्नेयस्य तन्त्रतापत्तिः, तत्र याज्यानुवाक्याभेदेन भेदाङ्गीकारादिति प्राप्ते—

द्वितीयाग्नेये सौम्योत्तरत्वस्य द्वितीयाग्नेयोत्तरभाविपदार्थे च द्वितीयाग्नेयोत्तरत्वस्य च प्रामाणिकस्य बाधापेक्षया प्रयोगविध्यवगतस्यैकस्य यौगपद्यस्यैव त्यागौचित्यात् नाग्नेयद्वयस्य तन्त्रत्वम्। पयोयागोत्तरभाविस्विष्टकृदादौ पयोयागोत्तरत्वं तु पयोयागस्य दधियागेन तन्त्रत्वेऽपि न विरुध्यत इति विशेषः।

न चैवं प्रकृतेऽपि पयोयागे दधियागोत्तरत्वस्येव सौम्योत्तरत्वस्यापि द्वितीयाग्नेये प्रयोगविध्यवगतयौगपद्यानुरोधेन पाठेनाबोधनात् तदुत्तरभाविस्विष्टकृदादिपदार्थस्य

---

**अत एव देशे वृत्ताविति।** 'भूतले राजानः सन्ति' इति यत्र भूतलदेशवृत्तित्वं प्रतीयते तत्र एतद्विद्यमानकालस्यैवावच्छेदकत्वं, अन्यथा अतीतानागतकालवृत्तीनां राज्ञां तदानीं भूतलवृत्तित्वासम्भवात्। एवं 'अस्मिन् काले राजानः सन्ति' इत्यत्रापि देशस्यावच्छेदकत्वं ज्ञेयम्। अतः एकदेशकालकत्वरूपं यौगपद्यमनुभवसिद्धमित्यर्थः। सिद्धान्तसाधिकां युक्तिमनूद्य पूर्वपक्षे दूषयति—**न चैवमिति। अङ्गत्वे प्रमाणाभावादिति।** आद्यपदार्थस्यानुष्ठाने तावत् नैव क्रमाकाङ्क्षा, अपि तु उत्तरस्यैव तदनुष्ठाने इति, यदाकाङ्क्षया विधीयमानः प्रयोगविधिना क्रमः तदङ्गत्वेनैव विधीयते। अत उत्तरपदार्थप्राक्कालत्वस्य न क्रमत्वमित्यर्थस्य पञ्चमे निरूपितत्वादित्यर्थः। **नैव प्रामाणिकमिति।** सम्प्रतिपन्नदेवताकत्वेन सम्भवता प्रयोगविध्यवगतयौगपद्येन बाधात् न प्रामाणिकमित्यर्थः। **नचैवमिति।** उत्तरत्वस्य यौगपद्येन बाधे सतीति एवंशब्दार्थः। **याज्यानुवाक्याभेदेनेति।** मन्त्रान्ते

च द्वितीयाग्नेयेन सह पाठाभावात् कथं यौगपद्यबाध इति वाच्यं, प्रयोगविधिना यौगपद्याव-गमेऽपि सौम्यद्वितीयाग्नेययोः पाठस्यानन्यथासिद्धतयाऽपूर्वक्रमबोधकत्वात्। तेन याज्यानुवाक्याभेदादिनेव यौगपद्यबाधोपपत्तेः दधियागपयोयागयोः कश्चित्पाठो ह्यवर्ज-नीयतया अन्यथासिद्ध इति नासौ क्रमकल्पक इति न यौगपद्यं बाधते।

प्रकृते तु तन्त्रत्वं यदि विवक्षितं स्यादाग्नेयद्वयस्याव्यवधानेन पाठस्स्यात्, सौम्योत्तरं पाठात्तु अनन्यथासिद्धः पाठोऽपूर्वमपि क्रमं कल्पयतीति युक्तस्तेन यौगपद्यस्य बाधः। तस्मान्नाग्नेययोस्तन्त्रत्वम्।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
एकादशाध्यायस्य
प्रथमः
पादः

---

कर्मादिसन्निपातात् मन्त्रान्तररूपकालभेदे सति तन्त्रत्वासम्भव इत्यर्थः। सहपाठाभावादिति। स्विष्टकृदादिषु आग्नेयपाठे बाधिते सति सौम्योत्तरत्वमेव भविष्यतीति आग्नेयपाठावगतोत्तरत्वानु-रोधेन कथं यौगपद्यबाध इत्यर्थः। स्पष्टार्थमन्यत्।

इति श्रीशम्भुभट्टविरचितायां
भाट्टदीपिकाप्रभावल्यां
एकादशस्य
प्रथमः
पादः

---

# अथ एकादशाध्यायस्य द्वितीयः पादः

(१)—एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥ अविधिश्चेत् कर्मणामभिसम्बन्धः प्रतीयेत तल्लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावस्स्यात् ॥ २ ॥ अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥ यदि तु कर्मणो विधिसम्बन्धस्स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात् ॥ ६ ॥ कर्मणोऽश्रुतत्वाच्च ॥ ७ ॥ अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वम् ॥ ८ ॥ द्रव्यदेवतं तथेति चेत् ॥ ९ ॥ न चोदनाविधिशेषत्वात् नियमार्थो विशेषः ॥ १० ॥ तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ ११ ॥

**इह सिद्धं प्रयोगविधिमङ्गीकृत्य पूर्वं तस्योत्पत्तिविधिभेदेन न भेदः, अपि तु स्वातन्त्र्येण श्रवणाभावे विनियोगैक्येनैक्यमित्युक्तम्। इह स एवाक्षिप्य समाधीयते।**

---

**एकादशस्य द्वितीयः पादः**

**एकदेशकाल**

**पूर्वमिति।** प्रधानानामङ्गानां च उत्पत्तिविधिभेदेऽपि विनियोजकवाक्येन फले साहित्यावगमात् फलार्थं सह करणतयाऽनुष्ठीयमानेषु अङ्गविशिष्टप्रधानेषु सहैव कर्तव्यता उपारूढेति प्रयोगविधेरेकस्य कल्पनया प्रधानतन्त्रत्वमङ्गतन्त्रत्वं च प्रागुक्तं अतिरिक्तैकप्रयोगविधिकल्पनायां

न प्रयोगविधिर्नाम **कश्चिद्भिन्नो विधिः**, उत्पत्तिविधावेव **लिङादिवाच्यया प्रवर्तनया कृतिसाध्यत्वस्य स्वविषये आक्षेपेणानुष्ठानबोधोपपत्तेः ।** अत एव **देशकालकर्तारोऽपि ये उत्पत्तिवाक्ये** श्रुताः—**'बार्हस्पत्यश्चरुर्ब्राह्मणो गृहे, अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्, ब्राह्मणो बृहस्पतिसवेन यजेत' इत्यादिषु,** तत्र द्रव्यदेवतावैशिष्ट्यस्येव **कालादिवैशिष्ट्यस्यापि याग एवान्वयात् न साङ्गे प्रधाने कालाद्यन्वयः । न हि द्रव्यदेवतादिकं तदीयप्रयाजाद्यङ्गेषु निविशते, प्रधानमात्र एव वैशिष्ट्यावगमात्, एवं कालादयोऽपि । एवं च तदङ्गानि तद्भिन्नकालादावपि सुखेन कार्याणि ।** अनीकवत्यादेस्सत्यपि **प्रधानान्तरसाहित्येन फले विनियोगे तत्र कालाद्यप्राप्तिस्तु भवतोऽपीष्टैव ।**

---

मानाभावादाक्षिप्य समाधास्यतेऽत्रेत्यर्थः । अत्र प्राचीनैः देशकालकर्त्रादीनि आग्नेयाग्नीषोमीयादिप्रधानानामावृत्त्या, उत तन्त्रेणैव उपकरोतीति चिन्तासिद्ध्यर्थं देशादिविधीनामुत्पत्तिविधिशेषत्वं, अथवा फलविधिशेषत्वं इति चिन्तान्तरं कृतम् । तत्र यदि नोत्पत्तिवाक्येष्वेव प्रयोगविधानं तदा देशादिविधीनामपेक्षितविधित्वरूपं सिद्धान्त्यापादितं दूषण प्रसज्येतैव, फले विनियोगोत्तरमेव कर्तव्यतावगतौ तदानीमेव देशाद्यपेक्षणेन उत्पत्तौ तदपेक्षाऽभावात् । अतस्तेषामनपेक्षितविधित्वापत्तिपरिहाराय उत्पत्तिवाक्येषु प्रथमतः प्रयोगज्ञानं साधयति— **न प्रयोगविधिर्नामेति ।** फले विनियोगोत्तरं कर्तव्यतोपस्थित्या प्रयोगविधिर्विशिष्टविषयकः कल्प्यः सिद्धान्ते न निरर्थक इत्यर्थः । यथैवोत्पत्तिवाक्येषु एतद्देवताकैतद्द्रव्यकयागविषयिणी प्रवृत्तिः प्रवर्तनाप्रयोज्येति बोधानन्तरं प्रवर्तनाप्रयोज्यत्वं तस्यामनुपपन्नं सत् प्रवृत्तिविषययागादेः इष्टसामान्यसाधनत्वमाक्षिप्य समाधेयमिति तदानीमेवेष्टसाधनत्वबोधः, तथैव कृत्यंसाध्यविषयाया अपि तस्यास्तदनुपपन्नमिति कृतिसाध्यत्वाक्षेपेणैवोपपादनीयम् । अतः पुरुषकृतिसाध्यत्वस्यापि तदानीमेव बोधे सति कस्मिन् काले कस्मिंश्चिद्देशे किं सहायेनेत्यपेक्षया युक्त एव तेषां विधिरित्युपपन्नं ममापि तद्विधीनामपेक्षितविधित्वमित्यभिप्रेत्याह—**उत्पत्तिविधावेवेति ।** यद्युत्पत्तिवाक्येषु न प्रयोगज्ञानं तदा तवानपेक्षितविधानं प्रसज्येतेति सूचयितुं उत्पत्तिविधिष्वपि प्रयोगापेक्षया कालाद्यन्वयं दर्शयति—**अत एवेति । द्रव्यदेवतावैशिष्ट्यस्येवेति ।** यथा यागघटकतयाऽपेक्षितत्वात् द्रव्यदेवतावैशिष्ट्यं याग एव, एवं तद्गतानुष्ठानापेक्षया तद्वैशिष्ट्यमपि याग एवेत्यर्थः । विनियोगोत्तरं साहित्येन कालाद्यन्वयेऽनिष्टापत्तिं सूचयितुमाह— **अनीकवत्यादेरिति । तत्र,** प्रधानान्तरे । आध्वर्यवादिसमाख्यानामेव दर्शपूर्णमासयोः कर्तृविनियोजकत्वात् "दर्शपूर्णमासयोश्चत्वार ऋत्विज" इत्यस्य, "सौम्यस्य यज्ञक्रतोः सप्तदश ऋत्विज' इति विध्यर्थवादत्वस्य तृतीये उक्तत्वात् प्राचीनैरुक्तमपि तस्य कर्तृविनियोजकत्वमुपेक्ष्य

यत्र तूत्पन्नस्य कर्मणो वाक्यन्तरेण कालादिश्रवणं, यथा—'पौर्णमास्यां पौर्णमास्या यजेत, समे दर्शपूर्णमासाभ्यां यजेत, यदि ब्राह्मणो यजेत' इत्यादौ। तत्रापि 'व्रीहिभिर्यजेत' इत्यादिवत् पौर्णमास्यादिशब्दवाच्यप्रधानमात्रोद्देशेन विहितानां कालादीनां प्रधानमात्र एवाङ्गता न त्वङ्गेषु। तत्राङ्गवाचकपदाश्रवणात्। अत एव पौर्णमास्यादिपदवाच्यप्रधानानामुद्देश्यतया न तत्साहित्यविवक्षा, अतश्चाग्नेयत्रये प्रत्यकं व्रीह्यादिवत् प्रत्येकमेव पौर्णमास्यादिकालः।

न च व्रीह्यादिवाक्ये यागानां करणत्वानुपादानात् कर्मत्वेनैवोद्देश्यत्वात् युक्ता तत्साहित्याविवक्षा, अङ्गानुपादानाच्च नाङ्गेषु व्रीह्यादिप्राप्तिः। प्रकृते तु करणत्वश्रवणात्सेतिकर्तव्यताकस्यैव च करणत्वादङ्गेष्वपि कालादिप्राप्तिः। कालदावनुपादेये कर्मण एव करणीभूतस्योपादेयत्वात् तद्विशेषणीभूतसाहित्यस्य विवक्षितत्वेन सहितेष्वेव प्रधानेषु तत्प्राप्तिरिति वाच्यं, वस्तुतस्सेतिकर्तव्यताकस्यैव करणत्वेऽपि प्रकृते इतिकर्तव्यतावाचकपदाश्रवणेन तत्र कालादिप्राप्त्यनुपपत्तेः उत्पत्तिवाक्ये यागस्य करणत्वेन तत्रत्यद्रव्यदेवतादेस्साङ्गवृत्तित्वापत्तेश्च। करणीभूतस्यापि कर्मणोऽनुवाद्यत्वेन तद्विशेषणस्य साहित्यस्य सेतिकर्तव्यत्वादेश्चाविवक्षापत्तेश्च, कर्तुरुपादेयत्वेन तत्र कर्मण एवोद्देश्यतया तद्विशेषणविवक्षाया दुरुपपादत्वाच्च। 'सायं जुहोति' इत्यादौ करणत्वश्रवणाभावेन तत्र विवक्षितफललाभस्य दुरुपपादत्वापत्तेश्च।

न च देशादिवाक्ये सर्वत्र देशादिविशिष्टकर्मप्रयोगस्यैव विधेयत्वात् तद्विशेषणस्य साहित्यादेर्विवक्षोपपत्तिः। 'य इष्ट्या पशुना' इत्यादावपि प्रयोगविध्यापत्तौ सर्वेषामिष्टिपशुसोमानामेकप्रयोगतापत्तेः। अतो न क्वापि प्रयोगविधिर्नामातिरिक्तः कश्चिदस्ति। अपि तु तत्रतत्रोत्पत्तिवाक्य एव प्रवर्तनाक्षिप्ततत्तद्विषयककृतिसाध्यत्वमादायैव सर्वत्र देशकालादिविधिरिति नाङ्गेषु प्रधानान्तरसाहित्येन च कालादिप्राप्तिरिति प्राप्ते—

सर्वत्र लिङाद्यभिहितप्रवर्तनाविषयस्य त्रिविधा विधेयता, एका स्वरूपेण यागत्वादिना। अपरा इष्टसाधनत्वेन। अन्या कृतिसाध्यत्वेन। अत एव तद्भेदेनैवोत्पत्ति-

---

उदाहरणान्तरे कर्तृविधिं दर्शयन् उत्पत्तिवाक्ये कालादिविधानाभावेपि पूर्वपक्षं साधयति—यत्र त्विति। प्राचीनैः तृतीयावगतकरणत्वबलात् सिद्धान्ते साधितमङ्गेष्वपि कालादिसम्बन्धं उपादेयत्वेन च साहित्यविवक्षां पूर्वपक्षेऽनूद्य दूषयति—न चेति। तद्विशेषणस्येति। प्रयोगविशेषणतया विधेयकर्मविशेषणस्येत्यर्थः। नाङ्गेषु प्रधानान्तरेति। न चैवं प्रधानान्तरसाहित्येनानुष्ठानाभावे विनियोगवाक्यावगतेतरेतरयोगबाधः; भेदेनानुष्ठानेपि फलजननेऽपूर्वद्वारा समुच्चयेन तदुपपत्तौ बाधकाभावात्। त्रिविधा इति। अधिकारस्य फलस्य पुरुषगामित्वरूपस्य विध्याक्षिप्तेष्टसाधनत्वसमानाधिकरणस्वकृतिसाध्यत्वबललभ्यत्वेन अन्यलभ्यत्वादेः

विधिः विनियोगविधि प्रयोगविधिरिति च त्रिविधो विधिरिति भण्यते। न हि धर्मि-ज्ञानं विना इष्टसाधनत्वं कृतिसाध्यत्वं ज्ञातुं वा शक्यते विना वा प्रवर्तनामिति त्रितय-मप्यावश्यकम्।

अत एव धर्मिस्वरूपज्ञापको विधिरुत्पत्तिविधिः, इष्टसाधनत्वबोधको विधिर्विनियोग-विधिः, कृतिसाध्यत्वबोधको विधिः प्रयोगविधिरिति तल्लक्षणानि। तत्र द्रव्यदेवताद्य-ज्ञानां यागवृत्तिस्वकृतिसाध्यताज्ञानमन्तरेणापि यागस्वरूपस्य द्रव्यदेवताघटितत्वात् विशेषणज्ञानविधया तत्स्वरूपपरिचिय एवोपयोगादुत्पत्त्यन्वयित्वम्। एवं तत्पृष्ठभावेन तत्संस्काराणामवघातादीनामपि। दर्शपूर्णमासादिवाक्ये तन्त्राभिधानावगतसाहित्यादेस्तु विनियोगान्वयित्वम्। देशकालकर्तृस्वरादेस्तु यागगतकृतिसाध्यत्वज्ञानं विनाऽनपेक्षितत्वात् प्रयोगान्वयित्वमेव। अन्येषां तु प्रयाजादीनां प्रथमातिक्रमे कारणाभावादुत्पत्तावेव।

अत एवोत्पत्त्यन्वयिनस्सर्वस्याङ्गस्य प्रत्येकमेव सर्वप्रधानाङ्गता। विनियोगान्वयिनः साहित्यादेस्तु व्यासज्य सर्वप्रधानाङ्गता। प्रयोगान्वयिनस्तु साङ्गसहितसर्वप्रधानाङ्गता। अङ्गप्रयोगस्यापि प्रधानप्रयोगविधिविधेयत्वस्यैव स्थापितत्वात्। तद्यत्रैकमेव वाक्यं निर्गुणं सगुणं वा, तत्रोत्पत्तिविनियोगप्रयोगा एकेनैव विधिना पूर्वपूर्वस्योत्तरोत्तरं प्रति वैशिष्ट्यमङ्गीकृत्य विधीयन्ते, गुणाश्च तत्तत्यारस्वयोग्यतानुसारात् तत्र तत्रान्वीयन्ते। यत्र तु वाक्यद्वयं वाक्यत्रयं श्रुतं, तत्र वाक्यवैयर्थ्यपरिहारार्थं विधिलाघवाय चैकेनैको विधिरपरेणापरः, तत्र च तत्तदन्वयिगुणान्वय एव नियामक इति ध्येयम्।

तदिह दर्शपूर्णमासयोराग्नेयादिवाक्येषु सत्यपि कालश्रवणे तस्य फलसम्बन्ध-सिद्ध्यर्थत्वेन विधितात्पर्यविषयत्वाभावात् द्रव्यदेवताद्युत्पत्त्यन्वयिगुणश्रवणेन तत्रोत्पत्ति-विधिमात्रं, विनियोगप्रयोगांशे तस्यानुवादकत्वमेव। अन्यथा तत्रापि तात्पर्यकल्पने गौरवात्।

---

षष्ठाद्ये उपपादितत्वात् अन्यत्रातिरिक्तत्वेन स्वीकृतोऽपि अधिकारविधिः विनियोगविध्यन्तर्गत एवेत्यभिप्रेत्य त्रैविध्योक्तिः। अत एव धर्मिस्वरूपज्ञापक इति। यद्यप्युत्पत्तिविधौ 'कर्म कर्तव्यम्' इत्यर्थेन न कर्मणो भाव्यत्वं, क्लेशात्मके कर्मणि स्वतः प्रेरणानुपपत्तेः। नापि स्वरूपसत्ता बोध्या; तथात्वे अभूत् भवति भविष्यतीत्यापत्त्या कालस्यानवबोधपरविध्यनुपपत्तेः। तथाचोत्पत्तिवाक्ये 'अनेन कर्मणा इष्टं भावयेत्' इत्यर्थात् न कर्मस्वरूपपरत्व सम्भवति; तथापि अधिकारविधिसिद्धविनियोगांशेऽनुवादरूपस्सन् इष्टसाधनत्वरूपधर्मत्वेन रूपेण कर्मस्वरूप-ज्ञापनमात्रप्रयोजनो भवतीत्यर्थः। स्वरादेस्त्विति। यागानुष्ठाने कर्तव्ये मन्त्रप्रयोगस्य विधानात् तद्गतस्वराणां प्रयोगान्वयित्वम्। आदिपदेन स्तोभानां ग्रहणम्। उत्तरो-त्तरं प्रतीति। उत्पत्त्यन्वयितत्तद्गुणविशिष्ट-विनियोगान्वयिगुणविशिष्टविनियोगविशिष्टप्रयोगान्वयि

एवं फलवाक्ये निमित्तवाक्ये च विनियोगविधिमात्रम्। तत्र प्रयोगविधिकल्पने गौरवात्। प्रयोगविधिस्तु देशादिविधावेव। तदन्वयिगुणस्यैव तत्र तद्विधिनियामकत्वात्। अत एव देशादिविधौ विनिगमनाविरहात्सर्वत्रैव तत्तद्विशिष्टप्रयोगविधिः। प्रयोगश्च भावनाया इतिकर्तव्यतान्वयस्वाभाव्यात् अङ्गविधीनां प्रत्येकमङ्गप्रयोगविधिकल्पने गौरवाच्च साङ्गस्यैव देशादिविधौ विधीयते। स्वरूपेण प्राप्तानामपि च प्रधानानां प्रयोगविषयत्वेन विधेयत्वात्तद्विशेषणस्य साहित्यसाङ्गत्वादेर्विवक्षितत्वेन देशकालकर्त्रादिस्सर्वोऽपि सहितसर्वसाङ्गप्रधानेष्वेव सम्बध्यते।

---

गुणविशिष्टप्रयोगविधौ प्रथमतः कृते उत्पत्तिविनियोगयोरार्थिकविशेषणविधिभ्यां विधानमित्यर्थः। **देशादिविधाविति**। आदिपदोपात्तकालविधिमादाय विनिगमनाविरह इत्यर्थः।

**इतिकर्तव्यतान्वयस्वाभाव्यादिति**। व्यापारसामान्यस्य भावनात्वे स्पष्टमेव प्रथमतः तद्विशेषाकाङ्क्षा उत्पद्यमाना प्रयाजाद्यन्वयेनैव शाम्यति; कृतेर्भावनात्वे मम करणानुग्राहकं किम्'? इत्याकाङ्क्षापि तदन्वयेनैव शाम्यतीति प्रथमतः अङ्गविशिष्टा यागकरणिका भावना उत्पत्तिविधितोऽवगता। तदानीं पार्ष्ठिकान्वयेन अङ्गविशिष्टयागानामुत्पन्नानां स्वरसतः प्रथममुत्पद्यमानया फलविशेषाकाङ्क्षया फलसम्बन्धित्वेन विधानम्; तथैवावगतानामपि तद्वदेव प्रयोगविषयतया पुनर्विधानमिति तत्तत्प्रधानगतसाहित्यस्याङ्गत्वादेः विधेयविशेषणत्वाद्विवक्षेत्यर्थः। अत्र च **प्राचां** ग्रन्थेषु यद्यप्युत्पत्तिवाक्येषु प्रत्येकं करणत्वमवगतं देशादिवाक्येषु चोद्देश्यविशेषणत्वात् साहित्यमविवक्षितं; **तथापि** अनिवृत्तायां फलविशेषाकाङ्क्षायां अनिर्धारितप्रतियोगिककरणत्वस्य देशादिवाक्येऽनुवादायोग्यत्वात् फलवाक्यगतमेव तदनूद्यते। **तच्च** परस्परसहितानामेवेति तादृशेष्वेव देशकालाद्यन्वय इत्युपपादितम्। तद्विनियोगवाक्ये फलसम्बन्धित्वेनेव तत्तद्देशादिसम्बन्ध्यनुष्ठानविषयतया प्राप्तानामपि पुनर्विधानोपपत्तेः देशादिवाक्येषु तेषामनुवाद्यत्वेनान्वयकल्पने प्रयोजनाभावात् नैयत्येन विनियोगवाक्यप्रवृत्त्यनन्तरमेव समादिवाक्यानां प्रवृत्तौ प्रमाणाभावात्, अङ्गेषु विनियोगभेदपक्षे तदव्यापकत्वाच्चोपेक्षितं **पूज्यपादैः**।

नन्वस्तु प्रयोगविषयतयैव यागानां साङ्गानां सहितानां प्रथमतो विशिष्टविधिः, तथापि विशेषणविधिवेलायामुद्देश्यतया साहित्याविवक्षापत्त्या अङ्गानां प्रधानानां भिन्नदेशकालता दुर्निवारा। यदा तु उद्देश्यविशेषणस्य साहित्यस्याविवक्षायामपि विवक्षितसाहित्यानामुद्देश्यत्वस्यैवाङ्गीकारात् सा

न चैवमेकप्रधानविकृतौ कतिपयाङ्गयुक्तायां देशाद्यतिदेशानापत्तिः, प्रकृतौ प्रधानान्तरसहितसमस्ताङ्गयुक्तस्यैवोद्देश्यत्वादिति वाच्यं, प्रकृतौ देशादिवाक्ये देशवदङ्गप्रधानसाहित्यस्याप्येकत्र द्वयमिति न्यायेन प्रधानप्रयोगे वैशिष्ट्याङ्गीकारेण सकलविशेषणविशिष्टप्रयोगविधानादार्थिकेन च विशेषणविधिनाऽङ्गप्रधानोद्देशेन प्रत्येकमेव देशादिविधानात् प्रकृतौ साहित्यसम्पत्तये देशादितन्त्रत्वसिद्धिः, विकृतौ च प्रधानान्तराद्यभावेन तत्साहित्यबाधेप्यङ्गान्तरयुक्तैकप्रधान एव देशादिप्राप्त्युपपत्तिरिति फलद्वयसिद्ध्युपपत्तेः। अतश्च 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यनेन षण्णां यागानामेको दैशिकः प्रयोगः। 'दर्शपूर्णमासयोः चत्वार ऋत्विजः' इत्यनेन कर्तृसम्बन्ध्यपरः विनिगमनाविरहात्, तयोश्च युगपदनुष्ठानमविरोधात्। अत एव षट्स्वपि यागेषु साङ्गेषु एको देश. एकः कर्ता इति सिद्ध्यति।

'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादौ 'सायं जुहोति प्रातर्जुहोति' इत्यादौ च कालिकोऽप्यपरः। विरुद्धकालभेदाद्विशेष्यभूतप्रधानभेदाच्च। तत्परं प्रयोगद्वयं, व्याप्यव्यापकभावेन च दैशिकादिप्रयोगेणाविरोधः॥

न चैवं सर्वत्र कालादिविधौ एकप्रयोगत्वे 'य इष्ट्या पशुना' इत्यत्रापि कालविशिष्टैकप्रयोगविध्यापत्तेस्सर्वेषामिष्टिपशुसोमयागानामेकप्रयोगतापत्तिः, तत्र यच्छब्दसमभिव्याहारात् तत्तद्विकृतिप्रयोगानुवादेन कालमात्रविधानावगतेस्तत्तद्विकृतिवाक्येष्वेव प्रयोग-

---

निवार्येत तदाऽनिष्टापत्तिमाशङ्कते---न चैवमिति। प्रकृताविति। समाधानग्रन्थः स्पष्टार्थः। चत्वार ऋत्विज इति। यद्यप्ययमनुवादो न विधिः, तथापि कल्प्यमानकर्तृप्रयोगविधिगमकत्वात् एतदेवोपन्यस्तम्। अविरोधादिति। सकृत्साङ्गप्रधानानुष्ठानेनापि द्वयोः प्रयोगविध्योः तन्त्रत्वोपपत्त्याऽविरोध इत्यर्थः। एकः कर्तेति। अध्वर्य्वादिचतुष्टयरूपः एकः कर्तेत्यर्थः। व्याप्यव्यापकेति। दैशिकप्रयोगस्य कालद्वयसाधारण्यात् व्यापकत्वम्। कालिकप्रयोगद्वयस्य च तद्व्याप्यत्वं, तथा च प्रधानानुष्ठाने द्वयोरपि निवेशोपपत्तौ अविरोध इत्यर्थः। यच्छब्दसमभिव्याहारादिति। एतच्च लाघवमात्रस्योपलक्षणम्। यच्छब्दाभावेपि एकपदोपादानावगतसाहित्यानां यज्ञदानादीनां एकविविदिषारूपफले विनियोगः; तत्र प्रयोगान्तरकल्पने गौरवात् क्लृप्ततत्तद्भिन्नभिन्नप्रयोगकाणामेव विनियोगः, तद्वदिहापि एकप्रयोगकत्वापादनस्य परिहर्तुं शक्यत्वात्। अत एवैकफलार्थत्वेन विनियोगात् प्रयोगभेदेनैव सम्भवत्समुच्चयः तादृशस्थले उपपादनीयः। प्रकृते तु फलभेदे सति समुच्चयस्यैवासम्भवात् सुतरां नैकप्रयो-

**विधिकल्पनाया अभ्यनुज्ञानात्,** तत्तद्विलक्षणफलसाधनानां **तेषामेकप्रयोगविधिविषयत्वा-नुपपत्तेश्च।** अत एव **तत्तद्वाक्यगतं विकृतिप्रयोगसाहित्यमप्यनुवाद्यगतत्वादविवक्षितम्॥**

**यत्र तु नैवंविधं किञ्चित्प्रयोगानुवादज्ञापकं तत्र** प्रयोगस्यैव विधेयत्वात् **साहित्य-**

---

गता सिद्ध्यतीत्याह—**तत्तद्विलक्षणेति।** **अत एवेति।** यत एतादृशस्थले तत्तद्विधिभिरेव प्रयोगस्यापि प्राप्ततया प्रयोगविषयतयापि पुनर्विधानासम्भवात् विधेयविशेषणताभावः अत एवेत्यर्थः। अतश्च विकृतीष्टीनां युगपत् फलद्वयकामनया यदा सह चिकीर्षा तदापि एकस्यामेव पौर्णमास्यां नैव तन्त्रेण प्रयोगः विधानकाले विनियोगकाले प्रयोगे कालविधौ वा साहित्यानवगमात्। अतस्तत्रैकेन विधिना यावत् अङ्गसहितं प्रधानं विहितं तदनुष्ठाने यावान् कालो व्याप्यते तावति काले विहितमनुष्ठानं अन्येन सहानुष्ठाने बाध्येतेति विध्यर्थबाधापत्त्या न तन्त्रम्,तदा किमु वक्तव्यं यदा फलभेदे सति भिन्नायां कामनायां सत्यां भिन्नकाल एवानुष्ठान-प्रसक्तौ एकप्रयोगकत्वसम्भावनया तन्त्रप्रसक्तिरिति भावः। अत एव यत्र कर्मणोः साहित्यं कस्मिन्नपि विधौ नावगतं, यथा दर्शश्राद्धव्यतीपातश्राद्धयोः तत्र यद्यप्यनेन न्यायेन एककालपाते प्रयोगैक्येन तन्त्रानुष्ठानप्राप्तिर्दुर्घटा तथापि दर्शव्यतीपातकालयोः शास्त्रविहितयोः प्रयोजकत्वे-नैकस्मिन्नहनि सम्प्राप्तौ सत्यां यद्येकतरस्य विध्यवगतकालपरिमाणबाधार्थं न साहित्येनानुष्ठानं क्रियेत, किन्तु पौर्वापर्येण, तदा काले कर्तव्यताविधिरेव बाध्येत। अतस्तदबाधार्थं गुणभूत-कालपरिमाणमपि बाधित्वा सहैव प्रयोग आवश्यकः, भिन्नभिन्नफलकविकृतिद्वये तु एक-पौर्णमासीव्यक्तिरूपकालत्वेन विध्यभावात् अन्यस्यामपि पौर्णमास्यां भेदेनानुष्ठाने बाधकाभावात् न स्वेच्छापेक्षितसाहित्यवशेन कालपरिमाणबाध इति वैषम्यम्। एतादृशेपि विषये यदि कालभेदेन एकस्मिन्नहनि सुकरं श्राद्धद्वयं तदा तु नैव कालैक्यमेवानुगृह्य कालपरिमाणस्य बाधः, कालैक्यस्यार्थसमाजग्रस्तत्वादित्यापि ध्येयम्। एवं च यत्र देशकालकर्त्रैक्येनानुष्ठान-मेकत्र शास्त्रतः प्राप्त, तत्रैव देशकालकर्त्रैक्ये सति कर्मणोस्तन्त्रत्वमिति वादः। यत्र वा साहित्यावच्छिन्नेष्वेव कालाद्यन्वयः तत्र साहित्यानुरोधेनैव देशादीनामङ्गानां प्रधानानां च तन्त्र-त्वमेवेति विवेकः। **प्रयोगस्यैव विधेयत्वादिति। एतेन**

नोपादेयत्वमेवैकं विवक्षाकारणं मतम्।
विशेषणविवक्षायां कारणं हि महद्विधिः॥

**विवक्षोपपत्तेर्युक्तैव प्रयोगविषयीभूतयावत्प्रधानानामङ्गानां च एकदेशकालकर्तृता । पौर्णमास्यादिकालिकप्रयोगभेदे** चाङ्गावृत्तिः ॥

---

(२)—इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावस्स्यात् ॥ १२ ॥ कालभेदान्नेति चेत् ॥ १३ ॥ नैकदेशत्वात्पशुवत् ॥ १४ ॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात् साङ्गानामुपदेशस्स्यात् ॥ १५ ॥ तथा तदवयवेषु स्यात् ॥ १७ ॥ पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षस्स्यात् ॥ १८ ॥

---

इति नव्यटीकामनुसृत्य कालाद्यनुपादेयं प्रति कर्मणामुपादेयत्वात् तद्विशेषणस्य साङ्गत्व-साहित्यादेः विवक्षेति **तन्त्ररत्नोक्तौ** विधेयत्वाभावे केवलोपादेयविशेषणत्वेन विवक्षानुपपत्तेरिति **यत् प्रकाशकाराणामुत्तराधिकरणे** दूषणं **तदपास्तम्**। तदीयोपादेयतोक्तेः पूर्वोक्तरीत्या विधेयतायामेव तात्पर्यात् । अतो न विधेयविशेषणतयैव तद्विवक्षा सूपपादेत्यर्थः । एवकारो भिन्नक्रमः । तेन विधेयत्वादेवेत्यर्थः । **एतेन** न फलनिरूपितसकलसामग्र्या एव दर्श-पूर्णमासाभ्यामिति तृतीयान्तपदेन देशादिवाक्ये करणत्वेनानुवादात् , साङ्गसहितप्रधानेष्वेव देशाद्यन्वय इति **तन्त्ररत्नोपपादितयुक्तेः** सायं जुहोतीत्यादौ यत्र न करणत्वेन श्रवणं तत्रा-व्यापनात् उपादेयविशेषणत्वेन तद्विवक्षेत्यपि पूर्वोक्तरीत्या विधेयत्वाभावे असाधकत्वात् न मुख्ययुक्तित्वम् । अपि तु द्रव्यत्यागप्रक्षेपात्मनः प्रधानस्य सूक्ष्मकालसाध्यत्वात् न स्थूलपौर्णमास्यमावास्यावसन्तादिरूपकालापेक्षा । किन्तु नानाकर्मसमूहात्मनः प्रयोगस्यैवेति प्रधानमात्रार्थत्वे अदृष्टार्थत्वमनपेक्षितविधित्वं च स्यात् । अतः प्रयोगान्वयित्वे दृष्टार्थत्वस्या-पेक्षितविधित्वस्य तस्यैव तदित्युत्तराधिकरणे **यत्प्रकाशकारैरुक्तं** तदुपेक्ष्यमिति सूचितम् । प्रधानस्य सूक्ष्मकालसाध्यत्वेपि तस्य महाकालोपाधिं विना ज्ञातुमशक्यतया सुतरां तदपेक्षायाः सत्त्वेन तन्मात्रार्थत्वेन विधानेपि दृष्टार्थत्वापेक्षितविधित्वयोरुपपत्तेः । अतो न त्रितयस्याप्यत्र सिद्धान्तसाधकत्वेन मूलयुक्तित्वम् , अपि तु विधेयत्वेन तद्विशेषणत्वेन तद्विवक्षाया एवेति भावः । **अङ्गावृत्तिरिति** । एतच्चोत्तराधिकरणे व्यक्तीकरिष्यते ।

---

**इह व्यापकप्रयोगविधिसत्त्वे व्याप्यप्रयोगविधिराक्षिप्य समाधीयते। देशादिवाक्ये षण्णामपि यागानामेकप्रयोगावगतेस्तदनुवादेन पौर्णमास्यादिवाक्येषु तत्तत्प्रधानमात्रे कालमात्रविधानान्न तेषु व्याप्यप्रयोगविधिः। अतश्च यथैव 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इत्यनेनैव सवनीयस्योत्पन्नवत् प्रयोगस्याप्याश्विनोत्तरकालश्रवणेन प्राप्तत्वाद्व्यापकप्रयोगसत्त्वेन 'वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने' इत्यनेन न व्याप्यप्रयोगविधानम्, तथात्वे तत्रापि प्रयाजाद्यङ्गावृत्तिप्रसङ्गात्। अपि तु तत्तत्प्रचारमात्रे कालविधानेन पूर्वाङ्गानि प्रयाजादीनि वपाप्रचारात्पूर्वं सकृदेव, उत्तराङ्गानि चानूयाजादीनि हृदयादियागोत्तरं सकृदेवेति नाङ्गावृत्तिः।**

**तथा व्यापकप्रयोगविधिसत्त्वे व्याप्यप्रयोगस्याविधानात् पौर्णमास्यादिवाक्येषु प्रचारविप्रकर्षमात्रम्। तेनाज्यभागान्तं अङ्गजातं पौर्णमास्यां प्रधानत्रयं च कार्यं, ततोऽमावास्यायां प्रधानत्रयं कृत्वा अनूयाजादिप्रयोगसमाप्तिरिति नोभयत्राङ्गावृत्तिरिति प्राप्ते—**

**विनिगमनाविरहात्पौर्णमास्यादिवाक्ययोः सायंकालादिवाक्ययोश्चावान्तरप्रयोगविधिः, अतश्च तत्तद्यागाङ्गानामग्निहोत्रहोमाङ्गानां च तत्तत्प्रयोगविधिना विधानादावृत्तिरवश्यंभाविन्येव। वपादिवाक्ये तु सत्यपि कालश्रवणाद्व्याप्यप्रयोगविधौ यावदङ्गानां वपाभ्यासापूर्वप्रयुक्तत्वं तावदङ्गानां तद्विधिविधेयत्वं यावदङ्गानां च हृदयाद्यभ्यासापूर्वप्रयुक्तत्वं तावतां तदभ्यासप्रयोगविधिप्रयुक्तत्वमिष्टमेव।**

---

**इष्टिराजसूयचातुर्मास्येषु।**

एकप्रयोगावगतेरिति। षण्णामेकफलजनकत्वेन एकः प्रयोगो यावदाक्षिप्यते, तावत् देशवाक्येन प्रयोगैक्ये विहिते एकस्मिन् देशे साङ्गानां सहितानामनुष्ठानं कालैक्य विना न घटत इत्यर्थात् तदुत्पत्तिवाक्यावगतपौर्णमास्यमावास्याकालयोरनुष्ठानं लभ्यत एवेति पौर्णमास्याममावास्यायामिति वाक्यद्वयेन किं क्रियत इत्यपेक्षायामाह—**तत्तत्प्रधानमात्रे इति।** षण्णां यागानां सप्तदशदिनात्मको महाप्रयोग एक एव। अनेन तु वाक्यद्वयेन तत्रैव तु प्रचारे कालमात्रव्यवस्था क्रियते इति न वैयर्थ्यमित्यर्थः। तदेव दृष्टान्तेनोपपादयति—

प्रयाजादीनां तु **सवनीयपरमापूर्वप्रयुक्तानामुत्पत्त्यपूर्वोपयोगिनां च साधारणानां वपाप्रचारादिवाक्यैरपरिगृहीतानां सवनीयमहाप्रयोगविधिपरिग्रहात् नावृत्तिरिति वैष-म्यम्।** पौर्णमास्यादिभेदेना**वृत्तप्रयाजाद्यङ्गानां च समुदायापूर्वे उपयोगान्न वैयर्थ्यम्।**

---

**ततश्चेति। प्रयाजादीनां त्विति।** पौर्णमासीवाक्येन यथा यागत्रयस्य पौर्णमासीकाले प्रयोगो विहितः तथैवामावास्यायामित्यनेन अमावास्यायामपि साङ्गामावास्यानुष्ठानानुरोधेन प्रयाजादि आवर्तनीयमेव; पशौ तु सवनीयपरमापूर्वस्य एकस्यैव प्रयोजकस्य यावदुत्पत्तिस्तावत् प्रयाजजन्या-पूर्वाणां सत्त्वात्, मध्ये पतितानां वपायागादीनामपि प्रसङ्गेनोपकारलाभात् वपाप्रचारस्य स्वातन्त्र्येण प्रयोजकत्वाभावाच्च न वपायागप्रयोगविधिना तेषामनुष्ठानं प्रयुज्यत इति नावृत्तिरिति वैषम्यमित्यर्थः। नन्विहापि षड्यागजन्योत्पत्त्यपूर्वैः अन्त एव परमापूर्वजननात् तावत्पर्यन्तं पौर्णमास्यामनुष्ठिताङ्गजन्योपकारसत्त्वात् तन्मध्यपतितामावास्यायागेषु उपकारलाभात् व्यर्थं पुनः प्रयाजाद्यङ्गानुष्ठानमित्यत आह— **पौर्णमास्यादिभेदेनेति।** तत्तत्समुदायापूर्वोत्पत्त्या पूर्वेषामङ्गा-पूर्वाणां नाशात् अमावास्यासमुदायापूर्वोत्पत्त्यर्थं पुनः तदपेक्षणात् न वैयर्थ्यमित्यर्थः। यथा च समुदायापूर्वद्वयसिद्धिः, तदर्थत्वेऽपि प्रत्येकविकृतावतिदेशसिद्धिः, तथा अपूर्वाधिकरणे कौस्तुभे द्रष्टव्यम्। एवं राजसूयचातुर्मास्यान्तर्गतेष्टीनां तत्तत्पर्वसम्बद्धानामपि पृथक् प्रयोगत्वं कालदेश-कर्तृभेदात् द्रष्टव्यम्[1]।

---

[1] 'राजसूयेन स्वाराज्यकामो यजेत' इत्येककालत्वेन चोदितानामपि 'बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे' 'ऐन्द्रमेकादशकपालं राजन्यस्य गृहे' इत्यादिदेशभेदात् 'षडेव पूर्वेद्युर्निरुप्याणि' 'षडुत्तरेद्युः' इत्यादि-कालभेदाच्चाङ्गानामावृत्तिः।

तथा चातुर्मास्यैः स्वर्गकामो यजेतेत्येकफलार्थतया विनियुक्तानामपि वैश्वदेवादीनां चतुर्णां पर्वणां वसन्ते वैश्वदेवेन यजेत वर्षासु वरुणप्रघासैः हेमन्ते साकमेधैः इत्यादिवचनैः कालभेदविधानात् पर्वानुष्ठान-कालेऽङ्गानामावृत्तिरित्यर्थः।

(३)—तथा स्यादध्वरकल्पेष्टौ विशेषस्यैककालत्वात् ॥ १९ ॥ इष्टिरिति चैकवच्छ्रुतिः ॥ २० ॥ अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात् साङ्गानामुपदेशस्स्यात् ॥ २१ ॥ प्रथमस्य वा कालवचनम् ॥२२॥ फलैकत्वादिष्टिशब्दो यथाऽन्यत्र ॥ २३ ॥

[1] अध्वरकल्पायां 'आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत् सारस्वतं चरुं बार्हस्पत्यं चरुं आग्नावैष्णवमेकादशकपालं माध्यन्दिने सारस्वतं चरुं बार्हस्पत्य चरुं आग्नावैष्णवं द्वादशकपालमपराह्णे सारस्वतं चरुं बार्हस्पत्यं चरुं यस्य भ्रातृव्यस्सोऽनेन यजेत' इति श्रुतम्। अत्र च यस्य भ्रातृव्यस्सोऽनेन इति वाक्येन नवानामपि यागानां फले विनियोगादाख्यातभेदाच्च तत्तावत्पृथग्वाक्यम्। पूर्वं च यद्येकमेव वाक्यं स्यात् तदा नवभिः द्रव्यदेवतासम्बन्धैर्नवसु यागेषु कल्पितेषु तत्तद्द्रव्यदेवताविशिष्टतावद्यागविधाने कृते पार्ष्ठिकान्वयवेळायां द्रव्यान्तरे देवतान्तरसम्बन्धस्याप्यापत्तेर्भिन्नान्येवैतान्युत्पत्ति-वाक्यानि नव। प्रातरादिकालत्रयसम्बन्धाच्च त्रयः प्रयोगविधयः। तत्तत्कालीन-प्रयोगविधिश्च नाग्नावैष्णवमात्रस्य, तथात्वे सारस्वतबार्हस्पत्ययोस्त्रिः पाठवैयर्थ्यापत्तेः। अपि तु त्रिहविष्क एकैकः।

---

**तथा स्यादध्वरकल्पायाम्।**

यद्यपि पञ्चमे द्वादशे च सरस्वतीमाज्यस्य [सरस्वत्याज्यभागा इत्येवोक्तं न तु सारस्वतं चरुमिति] तथापि पुस्तकाशुद्धया भाष्य एव प्रमादपतितपाठेन; अथवा, शाखान्तरीयत्वेन विरोधः परिहर्तव्य इति ध्येयम्। अत्र यजेतेति वाक्य धृतम्; तथाप्यत्र यथाभाष्यमेव वाक्यान्युदाहरति—अध्वरकल्पायामिति। नवानामपि प्रकरणात् निर्वापापकर्ष इति पूर्वपक्षसिद्ध्यर्थं नवयागात्मिकाया अध्वरकल्पेष्टेः प्रकरणसिद्ध्यर्थं फलसम्बन्धबोधकं विनियोग-विधिमुदाहरति—**अत्र चेति**। भ्रातृव्यः सपत्नः 'भ्रातुर्व्यच् सपत्ने इति (पा. ४-१-१४५) सूत्रविहितव्यन्प्रत्ययान्तत्वात्। फले इति। भ्रातृव्यस्य सदाऽनिष्टरूपत्वात् तत्परिहाररूपे फले

---

1. सोमाद्यध्वरवत् सवनत्रयव्यापित्वादध्वरकल्पात्वम्।

**न च प्रातरादिपदानां त्रिष्वप्यनुषङ्गादेकैकस्मिन् काले एकैकहविष्कप्रयोगत्रयशङ्का, उत्पत्तिविधेरेव प्रयोगविधितात्पर्यस्यानुषङ्गस्य च कल्पनापेक्षया निर्वपेदिति पदानुषङ्गेण प्रातर्निर्वपेदित्यस्य** वाक्यान्तरत्वकल्पनाया **एवोचितत्वात्।** अत एव **तेनानन्तर्यात् त्रिहविष्क एव प्रयोगो विधीयते।**

**तदेवं स्थिते 'पुरा वाचः प्रवदितोर्निर्वपेत्[1]' इत्यतिदेशप्राप्ते निर्वापे काल-विशेषश्श्रुतः। स किं प्रातःकालीनहविषामेव उत सर्वेषामिति[2] चिन्तायां**

---

इत्यर्थः। **वाक्यान्तरत्वकल्पनयेति।** आद्योत्पत्तिवाक्यत्रयानन्तरं 'एतानि प्रातर्निर्वपेत्' इत्येकस्यैव वाक्यान्तरस्य कल्पनया प्रातः कालीनैकावान्तरप्रयोगकत्वम्। एवमुत्तरयोरपि। एवञ्च यद्यप्येकफलसम्बन्धात् आग्नेयं कृष्णग्रीवमालभेतेत्यत्रेव एकमहाप्रयोगविधिकल्पन, तथाप्यत्र प्रातरादिकालानां प्रयोगान्वयिनां पृथगाम्नानात् दर्शादिष्विवावान्तरप्रयोगविधिकल्पन, अन्यथा अङ्गतन्त्रतावृत्तिविचारानुपपत्तेरिति भावः।

वस्तुतस्तु प्रातर्मध्याह्नापराह्णकालभेदे सत्यपि यथा तदन्तापकर्षन्यायेन निर्वापापकर्षे तदन्ताङ्गानां तन्त्रता पूर्वपक्षे उपपाद्यते तथैव प्रातरादिषु प्रयोगभेदेन त्रिष्वपि अनुष्ठीयमानेष्वपि तेन न्यायेन तन्त्रता शक्यत एव पूर्वपक्षयितुमिति सुहृद्भूत्वोपदेशमात्रमेतदिति ध्येयम्। यद्यपि पूर्वाह्णपदघटितं वाक्यं **पार्थसारथिना** लिखितं[3] तथापि शाखान्तरानुसारात् प्रातः कालपरमेव पूर्वाह्णपदं व्याख्याय प्रातः कालीनत्रिहविष्कप्रयोगैक्यविधानपरमेव ज्ञेयम्। अस्तु वा पूर्वाह्णपरमेव; तथापि तत्कालीनस्यैवैकप्रयोगस्य विधौ न विरोधः। तस्य च प्रयोजनमेकस्मिन् प्रातःकाले सिद्धान्ते तन्त्रेणानुष्ठानसिद्धिः। तदेव दर्शयति—**अत एवेति। आनन्तर्यादिति।**

---

1. प्रवदितोः इति तोसुन् प्रत्ययान्त। सुप्ताः जनाः यावदुत्थाय वाचं न वदन्ति ततः पूर्वमेव निर्वपेदित्यर्थः।

2. अतश्च तदन्तापकर्षन्यायात् निर्वापान्तस्य अग्न्यन्वाधानादेरङ्गकाण्डस्यापकर्षः। तच्चाङ्ग-काण्डं वचनादन्यकालमेव प्रधानानामुपकारकं तच्चागृह्यमाणविशेषत्वात्तन्त्रमित्यर्थः।

3. तेन हि "आग्नावैष्णवमष्टाकपालं निर्वपेत् पूर्वाह्णे सरस्वतीमाज्यस्य यजेत" इति वाक्यं धृतम्। (शा. दी.)

**अविशेषात्सर्वेषामेव। न च प्रातःकालीनहविषां पक्षे तत्कालीननिर्वापप्राप्ते नियममात्रकरणे लाघवान्माध्याह्निकापराह्णिकहविर्निर्वापस्य च पक्षेऽप्येतत्कालप्रसक्त्यभावेन तत्र तद्विधाने अपूर्वविधित्वापत्तेर्लाघवानुरोधेन प्रातःकालीनहविर्निर्वापस्यैवायं कालविशेषविधिरिति वाच्यम्**[1]। **प्रातः कालस्यो**दयोत्तरकालीनत्वेन **तत्कालीनहविर्निर्वापस्यापि वाक्यप्रवदनात्पूर्वमप्रसक्तत्वात्।** अत्रत्य**यागानां चतुरक्षरदेवताकत्वेन पौर्णमासीविकारतया उदयोत्तरमेव सर्वनिर्वापस्यातिदेशप्राप्तत्वाच्च।**

अतश्च **सर्वनिर्वापापकर्षे तदन्तापकर्षन्यायेन निर्वापान्तपदार्थानां सर्वप्रयोगीयाणां तन्त्रेण करणं,** 'यथोपक्रम **च समापनम्' इति नियमाङ्गीकारे चोत्तराङ्गानामपीति प्राप्ते—**

**देवतागतैकत्वसङ्ख्यापेक्षया तदक्षरगतचतुष्ट्वसङ्ख्याया अन्तरङ्गत्वाभावात् सारस्वतबार्हस्पत्ययोस्तावदाग्नेयविकारत्वमेव। आग्नावैष्णवेऽपि अष्टाकपालत्वस्य त्यागगत**[2] **द्रव्य-**

---

तेनोत्तरत्रिकद्वयव्यावृत्तिः। सिद्धान्तसाधिकां युक्तिमनूद्य निरस्यति—**नचेति**। **उदयोत्तरकालीनेति**। प्रातःकालादिविभागानां मुहूर्तत्रयकृतानां सूर्योदयोत्तरमेव प्रवृत्तेः स्मृतिषूक्तत्वात्; अन्यथा "उदिते पौर्णमास्यास्तन्त्रं प्रक्रामति, प्रागुदयादमावास्याया" इत्यादिव्यवस्थाविध्यानर्थक्यापत्तेरिति भावः। यद्यपि चैतद्वाक्यद्वय नियमार्थं भवेत, तथापि नेह पौर्णमासीविकारेषु सूर्योदयप्राक्कालस्य पक्षेपि प्राप्तिरित्याह—**अत्रत्येति**। ऐन्द्राग्नविकारत्वशङ्कानिराकरणाय चतुरक्षरेत्युक्तम्। अतो नियमविधित्वासम्भवात् अपूर्वविधित्वमेव निर्वापापकर्षविधेर्वक्तव्यमिति सिद्धः पूर्वपक्ष इत्याह—**अतश्चेति**। **यथोपक्रमं चेति**। **वस्तुतस्तु** प्रातःकालक्रियमाणप्रधानानां प्रयोजकानां सत्त्वात् तदानीमकरणे मानाभावात् उत्तरकाले क्रियमाणानामुत्तराङ्गानां

---

1. प्रातः कालकर्तव्यप्रधानार्थनिर्वापस्य प्रधानकाले कर्तव्यत्वात् प्रात. कालत्वं प्राप्तं तद्विशेष एव विधेय इति तद्विषयत्वे विधिलाघवं; अन्यथा माध्यन्दिनकालीनप्रधानार्थनिर्वापस्य अत्यन्ताप्राप्त प्रात. कालो विधेय इति सर्वनिर्वापविषयत्वे प्रातः कालिकनिर्वापांशे नियमविधि इतरत्रापूर्वविधिः इति विधिवैरूप्यमित्यर्थ।

2 त्यागाङ्गभूतेत्यर्थः। उद्देशतेद्देवतेति उद्देशाङ्गभूतदेवतेत्यर्थः।

तत्कपालतत्सङ्ख्यारूपस्य त्यागाङ्गभूतोद्देशतद्देवनातदाश्रयाक्षरतत्सङ्ख्यारूपाक्षरचतुष्ट्‌या-पेक्षया अन्तरङ्गत्वादाग्नेयविकारत्वमेव।

अतश्च प्रातःकालीनयागत्रयस्याग्नेयविकारत्वात् तस्य च पौर्णमास्यमावास्या-साधारणत्वेन 'उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रामति प्रागुदयादमावास्यायाः' इति वचनविहितस्योदयप्राक्कालीनत्वस्यापि निर्वापे पक्षप्राप्तत्वात् तत्रैव वाक्प्रवदनपूर्वकालीन-त्वनियमोपपत्तेरपूर्वविधिनियमविधित्वकृतवैरूप्यपरिहारार्थं[1] प्रातःकालीनस्यैव निर्वा-पस्यापकर्षः। न चातिदेशिकस्योदयप्राक्कालीनत्वस्यौपदेशिकेन प्रातःकालेन बाधात् तत्रापि पक्षप्राप्त्यभाव.। 'एवं प्रातरुपोदयं व्युषित[2] उदिते वा' इति आश्वलायनसूत्रकार-व्यवहारेणोदयात्पूर्वमपि प्रातः कालसत्त्वात्। अतश्च माध्याह्निकापराह्णिकयोर्निर्वापापकर्षा-

---

भिन्नकालतया नैव तन्त्रत्वं युक्तमित्यङ्गीकारे चेत्यनेनेन सूचितम्। आग्नेयविकारत्वमेवेति। यद्यपि मुख्यं वा पूर्वचोदनाल्लोकवदिति द्वादशाधिकरणे द्वन्द्वतासिद्ध्यर्थं स्वयमेवाग्नीषोमीय-विकारत्वमाग्नावैष्णवे साधितम्; तथापि तदेकादशकपालस्य माध्याह्निकस्यैव न तु प्रातःकाली-नाष्टाकपालस्येति न विरोधः। यदपि पञ्चमे आग्नावैष्णवस्य ऐन्द्राग्नाग्नीषोमीयान्यतरविकारत्व-मुक्तं तदपि एकादशकपालस्यैवेति ज्ञेयम्।

एवं प्रातरिति। अत्र च एवं प्रातरित्यनेन सायंकालीनाग्निहोत्रप्रयोगातिदेशे कृते 'उपोदयं' इत्यनेन प्रातःकालस्य त्रेधा स्वरूपमुक्तं आश्वलायनसूत्रे, ततश्च सूर्योदयात् प्रागपि प्रातःकालव्यवहारात् नातिदेशिकौपदेशिकयोर्विरोध इत्यर्थः। अत एव यत्र मध्यन्दिनस्य नाविरोधः तत्र सत्यप्याग्नावैष्णवैकादशकपालस्य ऐन्द्राग्नविकारत्वे प्रागुदयादित्ययं कालो बाध्यत एवेति न तत्र निर्वापापकर्षनियमविधिप्रवृत्तिः। अत एव येषां पूर्वाह्ण इति पाठः तेषां मध्यन्दिन-कालेनेव पूर्वाह्णकालेन उदयप्राक्कालस्यातिदेशप्राप्तस्य सर्वथा बाधस्यैव प्राप्तौ नियमविधिविषयत्वं तदीयहविर्निर्वापाणां दुर्घटमेव। यत्तु प्रकाशकारैः पूर्वाह्णकालीनयागानां पौर्णमासीविकृति-त्वमङ्गीकृत्यातिदेशत एव उदयानन्तरमेव तदीयतन्त्रप्राप्तेः पूर्वाह्णविधायकं वाक्यं व्यर्थमेव

---

[1] प्रातः कालीननिर्वापे नियमविधित्वं इतरयोरपूर्वविधित्वमिति वैरूप्यं ज्ञेयम्।

[2] व्युषिते उदयकाले। एतत्त्रयं प्रातः पदार्थविवरणम्।

**भावात् न तन्त्रेणाङ्गानि**। यदाऽपि **'सरस्वत्याज्यभागा**[1] **इति शाखान्तरवचनात् मध्य-**

---

स्यादित्यतः पूर्वाह्णपदेन तदुत्तरकालस्य कर्मान्तरावरुद्धत्वेन लक्षयितुमशक्यत्वात् अगत्या तत्पूर्वतनापररात्रलक्षणात् नैव 'पुरा वाच' इत्यनेन नियमविशेषविधिरित्युपपादितम्। **तदयुक्तम्**। पूर्वाह्णादिविभागत्रयस्य एकदिनीयत्वेनैव प्रसिद्धेः मध्यन्दिनादिसमभिव्याहारबाधापत्तेः, पूर्वदिनापररात्रे निषिद्धलक्षणायां मानाभावात्। प्रत्युत सङ्गवरूपकालविधायकत्वेन सार्थक्यसम्भवे लक्षणायामेव कारणाभावाच्च। न हि यथा स्मृतिषु सूर्योदयात्पूर्वमपि प्रातरादिव्यवहारः, तथाऽपररात्रादौ पूर्वाह्ण इति व्यवहारः क्वचिदपि दृष्टः। अतः पौर्णमासीविकारत्वपक्षे पूर्वाह्णकालविधानं त्रयाणामेकप्रयोगतासिद्ध्यर्थमिति वैयर्थ्याभावात् नापररात्रलक्षणोचितेति।

**वस्तुतस्तु** अमावास्याविकारत्वपक्षेपि प्रातर्मध्यन्दिनादिविभागस्यापि एकदिनीयत्वेनैव प्रसिद्धस्यात्र विधानात् तस्य च सूर्योदयोत्तरमेव प्रवृत्तेरौपदेशिकेन प्रातः कालेनातिदेशिकस्य बाध एव प्राप्नोति। न ह्यनीकवत्यादीष्टिषु विहितः प्रातः कालः सूर्योदयप्राक्कालीनोऽपि याज्ञिकैः गृह्यते। **आश्वलायनेन** तु तावत्पर्यन्तं प्रातः कालानुवृत्तिज्ञापनार्थं त्रेधास्वरूपं वर्णितं होमविषयकमेवेति नात्रोपयुक्तम्। अस्तुवाऽन्यत्राप्युपयुक्तम् तथापि सूर्योदयप्राक्कालस्यातिदेशप्राप्तत्वेन विधिवैयर्थ्यात् सूर्योदयोत्तरप्रवृत्तिमत्त्वविधानेनैव सार्थकमित्यत्र सिद्धान्तोपपत्तिः दुर्घटेव भाति, तथापि प्रातःपदस्योभयसाधारणस्य सूर्योदयोत्तरकालमात्रपरत्वे सङ्कोचापत्त्या आतिदेशिककालबाधे प्रमाणाभावात् तदीयहविर्निर्वापस्य पक्षे प्राप्तिः कथञ्चिदुपपादनीया। अत एवानीकवतीष्टावपि 'साकं सूर्येणोद्यता' इति निर्वापे कालनियमविधिरुपपद्यते। **दृष्टश्च** प्रातरनुवाकपाठादौ सूर्योदयप्राक्तनकालस्यापि तत्कालत्वम्। अतो न काचनानुपपत्तिरिति। यदा तु साधारणकालस्यातिदेशत एव प्राप्तेः विधिवैयर्थ्यमुच्येत, तदा निर्वापकालविशेषविधेः सन्निहितयागत्रयनिर्वापकालबाधेनाप्युपपत्तिसम्भवेन इतरत्रिकद्वयनिर्वापकालबाधकत्वमपि कल्पनीय, गौरवापत्तेरित्येवमत्र सिद्धान्तः साधनीयः। अत एव **'प्रथमस्य वा कालवचनम्'** इति सिद्धान्तसूत्रे तद्भाष्ये च प्राथम्यमेव सिद्धान्ते हेतूकृतमिति दिक्। **यदापीति**। यदा

---

[1] आज्यद्रव्येत्यर्थः।

मस्योपांशुयाजविकारत्वं तदाऽपि उपांशुयाजस्य बह्वृचब्राह्मणे अमावास्यायामपि विधानेन साधारण्यमुपपाद्य सिद्धान्तस्समर्थनीयः।

---

## (४)—वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २४ ॥

दैक्षे पशुयागे 'याज्यार्धर्चान्ते वसाहोमं जुहोति' इति श्रुतो वसाहोमश्चोदकपरम्परया[1] प्राजापत्याद्येकदेवताकपशुगणे प्राप्तो याज्यार्धर्चान्तस्यैकत्वादेकदेवताकत्वेन च सहप्रदानात् सहश्रपणेन वसाया एकत्वाच्च[2] तन्त्रेणैव भवतीति शिष्यहितार्थमुक्तम्।

---

## (५)—कालभेदात्त्वावृत्तिर्देवताभेदे ॥ २५ ॥

यत्र तु भिन्नदेवताकत्वं तत्रापि सजातीयपशुस्थले चिह्नकरणेन सहश्रपणस्य वक्ष्यमाणत्वाद्वसायाः संसृष्टत्वेऽपि तत्तद्याज्यार्धर्चान्तकालस्य भेदाद्भेदेनैव वसाहोमः[3]।

---

आज्यद्रव्यकस्य उपांशुयाजविकारत्वं तदा सूर्योदयोत्तरमेव तन्त्रप्रवृत्तेः ततः पूर्वपक्षेप्यप्रसक्तस्य नियमविधिविषयत्वासम्भवात् प्रातः कालीनानां सर्वेषामेव हविषां निर्वापापकर्ष इति सिद्धान्तो न घटत इत्याशङ्काभिप्रायः।

---

वसाहोमस्तन्त्रम्। कालतन्त्रताविचारं परिसमाप्य अतः परं देशतन्त्रताविचारार्थेष्वधिकरणेषु प्रथममधिकरणद्वय स्पष्टार्थत्वान्न व्याख्यायते।

---

1 अग्नीषोमीयात् सवनीयं तत पश्वेकादशिनी ततः गणत्वसादृश्यात् पशुगणं प्राप्त इत्यर्थः। प्रदानस्यैककालत्वात् प्रधानयाज्याया एकत्वात् अर्धर्चस्याप्येकत्वम्।

2 मासपाककाले ततो निस्सृतं हि द्रव्यं वसा सा च कुंभ्यास्तन्त्रत्वेन सहश्रपणे सति संसर्गिद्रव्यत्वादनेकपशूनामप्येकीभवतीति भावः।

3 न च संसृष्टत्वादेतदीयेयं वसेति निर्धारणासंभवः; तथापि संसृष्टत्वादेव तदीयवसाद्रव्यस्य तत्तदाहुतौ संभवमात्रेण प्रतिपत्तिसंभव इति भाव.।

प्रकृतौ हि याज्याया यागार्थत्वेन कृतार्थत्वात् वसाहोमार्थत्वाभावेन परप्रयुक्तयाज्यार्धर्चान्तकालस्यैव पश्वनुनिष्पन्नवसाप्रतिपत्त्यर्थवसाहोमाङ्गतायगतेस्तत्तद्याज्यार्धर्चान्ते एव तत्तद्यागाङ्गपश्वनुनिष्पन्नवसाहोमः कार्यः।

न च वसायास्संसृष्टत्वात् सकृत्कृतेनैव सर्वप्रतिपत्तिसिद्धेः कालभेदेन गृह्यमाणविशेषत्वेऽपि तज्जन्योपकारस्य सत्त्वेनेतरेषु प्रसङ्गेन कार्यसिद्ध्युपपत्तेर्नावृत्तिर्युक्तेति वाच्यं, संसृष्टत्वेऽपि सकृद्धोमेन शेषस्यानपायात् क्षीरनीरविवेकिन्या देवतया तत्तद्यागीयवसाया एव तत्तद्याज्यार्धर्चान्ते ग्रहणेन यागान्तरीयवसायास्सकृद्धोमेनाहुतत्वादवर्जनीयतया यागान्तरीयवसाप्रक्षेपेऽपि तद्यागसमानकालीनतत्प्रक्षेपस्यैव तत्प्रतिपत्तितया पुनस्तदावृत्त्युपपत्तेः।

अतः प्रतिपत्तिरूपप्रयोजकजन्योपकारस्य दृष्टरूपस्य शेषान्तरसत्त्वेनोपपत्तेर्नियमादृष्टरूपोपकारस्यापि च भावितत्तद्यागोत्पत्त्यपूर्वेणैव नाशात् प्रतिपत्तिकार्यरूपप्रयोजकसत्त्वेनावृत्त्यैव करणं, यत्र तु पाकवैषम्यात् विजातीयपशुगणस्थले भेदेन श्रपणं तत्र वसाया असंसृष्टत्वादावृत्तिर्देवताभेदे स्पष्टैव।

---

## (६)—अन्ते यूपाहुतिस्तद्वत् ॥ २६ ॥ इतरप्रतिषेधो वा ॥ २७ ॥ अशास्त्रवत्त्वाद्देशानाम् ॥ २८ ॥

दैक्षे पशौ सन्ति यूपाहुतिपक्षाः। एकस्तावत् 'यूपमच्छेष्यता होतव्यम्' इत्यनेन यूपप्राप्तिसाधनगमनोद्देशेन ततः पूर्वमेव गृहे आहवनीये होतव्यमिति। अपरस्तु 'न हि दीक्षितस्याग्नौ जुह्वति' इति तत्र दोषोपन्यासपूर्वकं 'वैष्णवीमृचमनूच्याच्छेष्यति' इति होमाभावपक्ष उक्तः। अच्छेष्यति यूपं प्राप्तुं गच्छतीत्यर्थः। तृतीयस्तु गमनोत्तरं यूपदेशे यूपस्यान्तिके अग्निं मथित्वा जुहोति' इति होमपक्ष उक्तः। तत्र यूपैकादशिन्यामाद्ययोः पक्षयोस्तन्त्रेणैव होमऋक्पाठौ। तृतीये तु अन्तिकरूपदेशभेदात् यूपाहुतिभेद इति प्राप्ते—

---

अन्ते यूपाहुतिस्तद्वत्। अच्छेष्यतेति लृटः क्रियार्थायां क्रियायामुपपदे विधानात् गमनार्थत्वमभिप्रेत्याह—यूपप्राप्तिसाधनेति। एतेन होमस्य छेदनाङ्गत्वं प्रकाशकारोक्तमपास्तम्। तन्त्रेणैव होमर्क्पाठाविति। गमनस्य तन्त्रत्वात् तदर्थहोमस्य ऋक्पाठस्य च तन्त्रत्वं युक्तमेवेत्यर्थः। स्पष्टार्थमन्यत्।

नात्रान्तिकदेशविधिः प्राप्तकर्मानुवादेन देशस्य मथनोत्तरकालस्य च विधाने वाक्यभेदात्, यूपाहुतेर्यूपप्राप्त्यर्थत्वेन अङ्गप्रधानयोरेकदेशत्वेनैवान्तिकदेशस्य प्राप्तत्वाच्च।

वस्तुतस्तु—अन्तिकदेशविध्यभावे मथनस्याहवनीयेन सह विकल्पेन गृह्य एव होमापत्तेर्गमनोत्तरत्वसिद्ध्यर्थमन्तिकदेशस्याप्यवश्यविधेयत्वात् देशकालविशिष्टप्रयोगविधानेन च वाक्यभेदाभावादन्तिकविधानेऽपि परमान्तिकस्य दाहप्रसङ्गेनासम्भवात् यावता सामीप्येन यूपदेशमहं प्राप्तोऽस्मीति व्यवहारस्तावत एव सामीप्यस्यान्तिकपदेन विवक्षितत्वात् तस्य चैकत्वे तन्त्रत्वमेव। भेदे तु भेद इति ज्ञेयम्।

---

## (७)—अवभृथे प्रधानेऽग्निविकारस्स्यान्न हि तद्धेतुरग्निसंयोगः ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥ शब्दविभागाच्च देवतानयः ॥ ३२ ॥

'अप्स्ववभृथेन चरन्ति' इत्यनेन विहितोऽब्देशोऽवभृथशब्दवाच्यप्रधानमात्रोद्देशेन विहितत्वात्तत्रैव न तु साङ्गे। न च समादिवदस्य प्रयोगविधित्वात् सर्वविषयत्वं, प्राकृतानां प्रयाजादीनां क्लृप्तदेशत्वेन अङ्गविषये कल्प्येनानेन देशान्तरविध्यनुपपत्तेः। अत एव प्रयोगविध्याश्रितस्य दौर्बल्यं तत्र तत्र निरूपितम्। श्रपणबर्हिस्तरणहविरासादनादाचब्विधानानुपपत्तेश्च। अतो 'यज्ञाथर्वणं वै काम्या इष्टयस्ताः' इत्यत्र प्रधानमात्र एवोपांशुत्वविधिवत् प्रधानमात्र एवाब्विधिः।

---

### अवभृथे प्रधाने।

गतार्थतां परिहरन् समदेशप्रयोगविधिवैषम्यं दर्शयति—**न चेति**। **कल्प्येनेति**। साङ्गदर्शपूर्णमासयोः देशसम्बन्धे विहिते विशेषणविधिकल्पनेनाङ्गेषु तत्सम्बन्धः कल्प्यः। स च प्रकृतावाकाङ्क्षित इति अङ्गेषु कल्प्यते। इहतु अङ्गानामतिदेशप्राप्तानां क्लृप्तदेशत्वात् आकाङ्क्षाऽभावेन तत्कल्पनम्। न चातिदेशिकस्यानेन बाधः; प्रयोगविधेरतिदेशप्राप्ताङ्गसम्बन्धोपजीवित्वेन पूर्वप्रवृत्तत्वक्लृप्तत्वाभ्यां अतिदेशस्य प्राबल्यस्य बाधायोगात्। अतः प्रधानमात्र एव विहितोऽतिदेशः, आनर्थक्यतदङ्गन्यायेन तदङ्गप्रक्षेप एव सम्बध्येत, न त्वङ्गेष्वन्वयाभावे तदङ्गप्रक्षेपेष्वपीत्यर्थः। कतिपयाङ्गेषु अब्देशासम्भवोऽपीत्याह—**श्रपणेति**। स्पष्टार्थमन्यत्।

---

न चेह करणत्वनिर्देशात् साङ्गविषयत्वं, तन्निर्देशेऽप्यङ्गवाचकपदाश्रवणस्य तुल्यत्वात्। इतरथा उत्पत्तिवाक्येऽपि करणत्वसत्त्वेन द्रव्यदेवतयोरपि वरुणैककपालयोः साङ्गविषयत्वापत्तेरिति प्राप्ते—

देशकालस्वरकर्त्रादिकं प्रयोगान्वयि, प्रयोगश्चाङ्गप्रधानसाधारण इत्युक्तम्। तदिह देशविधिरयं प्रयोगविधिरेव, तस्य चाङ्गप्रधानविषयत्वात् आर्थिके विशेषणविधौ अङ्गप्रधानोद्देशेनैवाब्देशो विधीयते इत्यौपदेशिकेन तेनातिदेशिकाप्रत्यादेर्बाधायुक्तमेवातन्त्रत्वम्। न ह्यत्र श्येनीयप्राकृताङ्गानामुद्गातृकर्तृकत्वस्येव अपां कल्प्यत्वं, तत्र हि श्येनमात्रनिष्ठाया औद्गात्रमिति समाख्यायाः प्राकृताङ्गानामुद्गातृवेदे समाम्नानाभावेन तद्विषयेऽङ्गप्रधानयोरेकदेशकालकर्तृकत्वमौत्सर्गिकमिति न्यायमात्रेण कल्प्यत्वात् प्राकृतवत्तनानाकर्तृकत्वेन युक्त उद्गातृकर्तृकत्वस्य बाधः। विस्तरेण चैतदुपपादितं कौस्तुभे स्वरचर्चायाम्। प्रकृते तु साङ्गप्रधानभावनोद्देशेनैव अब्देशविधानात्सर्वार्थत्वम्।

एवं सत्यपि यदि द्वितीया सप्तमी वा श्रूयेत ततः 'ता उपांशु कर्तव्या' 'मन्द्रं प्रायणीयायाम्' इत्यादिवत् प्रधानमात्रकर्मकभावनाया उपादानात् तस्यां च प्रयाजादीनां फलोपकार्यङ्गानामनन्वयात् न तेषूपांशुत्वादिप्रसक्तिर्भवेत्। तृतीयाश्रवणात्तु अवभृथकरणकफलकर्मकभावनोपादानात् तस्यां च प्रयाजादीनां प्रयोगविधानार्थमन्वयावश्यंभावात् युक्तमेव साङ्गप्रधानोद्देशेनापां विधानम्। द्रव्यदेवतादीनां तु उत्पत्त्यन्वयित्वात् प्रधानमात्रगामित्वमिति विशेषः।

अत एव यत्र प्रधानकर्मकभावनान्वयित्वं देशादेः प्रामाणिकं तत्र प्रधान एवान्वयः, अन्यत्र तु तृतीयासत्त्वे असत्त्वे वा सर्वत्र प्रधानकरणकसाङ्गभावनाप्रयोग एव देशाद्यन्वयात् साङ्गे एव तन्निवेश इति ध्येयम्।

---

(८)—दक्षिणेऽग्नौ वरुणघासेषु देशभेदात् सर्वं क्रियते ॥ ३३ ॥ अचोदनेति चेत् ॥ ३४ ॥ स्यात्पौर्णमासीवत् ॥ ३५ ॥ प्रयोगचोदनेति चेत् ॥ ३६ ॥ इहापि मारुत्याः प्रयोगश्चोद्यते ॥ ३७ ॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ अवाच्यत्वात् आम्नायवचनं तद्वत् ॥ ४१ ॥

चातुर्मास्येषु वरुणप्रघासपर्वणि विहारद्वये आहवनीयद्वयं श्रुतं, तत्र नव हवींषि विहितानि। तत्रेदं वचनं—'अष्टावध्वर्युरुत्तरे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति। तत्र किं नवानामपि हविषां देशैक्यात् तन्त्रेणाङ्गानि? उत तद्भेदात् भेदेन? इति चिन्तायां—

आसादनमात्रे देशभेदश्रवणेऽपि यागेषु तद्भेदश्रवणाभावात् 'प्रावृषि वरुणप्रघासैर्यजेत' इत्येकप्रयोगविधिपरिगृहीतानां नवानामपि यागानां विकल्पेनैकस्मिन्नेव कस्मिंश्चिद्विहारे अनुष्ठानाद्देशभेदाभावेन तन्त्रेणाङ्गानि।

न चात्र प्राकृत एवासादने देशभेदश्रवणात्तस्य होमार्थाहवनीयप्रत्यासत्त्यर्थत्वेन दृष्टार्थत्वाद्धोमेऽपि देशभेदप्रतीतेस्तात्पर्यगत्या तत्तद्यागानां तत्तद्देशीयप्रयोगविधित्वस्यैवावगमात् तद्भेदेनाङ्गभेद इति वाच्यं, प्राप्तासादनानुवादेन देशकर्त्राद्यनेकगुणविधाने वाक्यभेदात्। सङ्ख्याविशिष्टहविषामासादनविशेषणे विशिष्टोद्देशेन वाक्यभेदाच्च। अतश्च तत्र देशकर्तृविशिष्टासादनान्तरमेव मारुत्युद्देशेनोत्तरवाक्ये विधीयते पूर्ववाक्ये च तद्भिन्नहविषां लक्षणयोद्देश्यत्वमङ्गीकृत्य देशमात्रविशिष्टासादनान्तरं, अध्वर्योस्समाख्याबलेनैव प्राप्त्युपपत्तेः। अतश्चाप्राकृतकार्ययोरेव आसदनयोर्देशभेदेन विधानात् नानयोर्यागप्रयोगविधित्वम्।

---

**दक्षिणेऽग्नौ वरुणप्रघासेषु।** **नव हवींषीति।** आग्नेयसौम्यसावित्रसारस्वतपौष्णैन्द्राग्नैकादशकपालमारुतिवारुण्यामिक्षकायैककपालाख्यानि नवेत्यर्थः। **तत्र चेति।** वरुणप्रघासं पर्व तच्छब्दार्थः। पौर्णमास्यमावास्याकालभेदे अङ्गावृत्तिवत् इहापि देशभेदादावृत्तिमाशङ्क्य निरस्यति—**न चेति।** **तत्र देशकर्तृविशिष्टेति।** दक्षिणविहारो देशः कर्ता च प्रतिप्रस्थाता। यद्यत्र न कर्त्रन्तरविधानं तदा प्राकृते अप्राकृते वाऽऽसादने कालभेदेनाध्वर्युरेव समाख्यया प्राप्येत। अतः तद्विधानमपि[1] देशस्येवावश्यकमिति भावः। एवं च प्रथमवाक्ये यदध्वर्युरासादयति तत् अष्टावेवेति परिसङ्ख्याश्रयणे चोदकस्य क्लृप्तत्वात् फलतः परिसङ्ख्यात्वानुपपत्त्या त्रैदोष्यापत्तेः अतिदेशप्राप्ताध्वर्युकर्तृकासादनस्यानेनोपसंहारमङ्गीकृत्य अष्टसु अध्वर्यूत्तरविहारोपादानात् अष्टव्यतिरिक्ते मारुत्यासादने 'इतरमन्य' इति न्यायेन प्रस्थाता दक्षिणविहारश्च अर्थात्प्राप्त एवेति 'यत्प्रतिप्रस्थातासादयति तन्मारुतीमेव' इति मारुत्युद्देशेन प्राकृतासादनस्य विनियोगमात्रं क्रियते इति यत्प्रकाशकाराणां सिद्धान्तकरणं तदपास्तम्। एककाले आसादनप्राप्तौ अध्वर्योः व्याप्तत्वे न्यायतः तत्प्राप्तावपि इह कालभेदेनैवाध्वर्युप्राप्त्यापत्त्या प्रति-

---

1. A. देशस्यैव

अस्तु वा प्राकृतकार्य एवासादनान्तरविधानं, प्राकृतासादनस्यैव वा अतिदेशातः पूर्वप्रवृत्त्या विधानं, तथाऽपि न यागप्रयोगविधित्वम्। आसादनमात्र एव देशविधानोपपत्तौ यागलक्षणायां प्रमाणाभावात्। अस्तु वा याग एव देशविधानं तथाऽपि 'ता उपांशु कर्तव्या' इतिवद्द्वितीयानिर्देशात् प्रधानमात्र एवायं देशादिविधिः न तु साङ्ग इति नाङ्गावृत्तौ प्रमाणमस्तीति प्राप्ते—

सत्यमत्र वाक्यद्वयेऽपि त्वदुक्तरीत्यैव विशिष्टासादनविधानं, तस्य च त्वदुक्तरीत्यैव प्राकृतकार्यापन्नत्वं प्राकृतत्वमेव वा तथाऽपि प्रकृतौ तदासादनस्य तद्वृत्तियागसिद्ध्यर्थत्वात् तस्य विहारान्तरे करणे अप्राकृतकार्यत्वापत्तेस्तात्पर्यगत्या अस्य यागप्रयोगविधायित्वमेव। आसादयतिश्च निर्वपतिवत् तत्तद्यागोपलक्षणम्। एवं च नवानामपि विहारद्वयविकल्पोऽग्न्यन्तरवैयर्थ्यं च नाश्रितं भवति, अव्यवस्थया प्राप्तानां व्यवस्थामात्रकरणात् लाघवं च। 'अष्टौ हवींषि' 'मारुतीम्' इति च शक्यार्थकर्मीभूतानुवादस्सन् तत्तद्यागलक्षणातात्पर्यग्राहकः।

अतश्च 'आसादयति' इत्यत्र द्वितीयाश्रवणाभावात् 'सायं जुहोति' इतिवत् तत्तद्यागकरणकसाङ्गभावनाप्रयोगस्यैव देशादिविशिष्टस्य विधेयत्वावगतेर्युक्तैवाङ्गावृत्तिः। अङ्गप्रधानयोर्वैदेश्यापत्त्याऽपि चात्र साङ्गप्रयोगविध्यवश्यंभावः।

न चैवमपि सकृत्कृतैरेवाङ्गैरुपकारस्य सिद्धेस्तेनैव प्रसङ्गात् यागान्तरस्योपकारोपपत्तेरावृत्तौ प्रमाणाभावः, उपकारलाभे च तदर्थमङ्गानाक्षेपात् विहितदेशाद्यभावेऽपि प्रसङ्गस्य वक्ष्यमाणत्वादिति वाच्यं, तन्त्रमध्यपाठाद्यभावेन कस्य तन्त्रित्वं कुत्र प्रसङ्ग इत्यत्र नियामकाभावेन प्रसङ्गानुपपत्तेः।

---

प्रस्थातुरप्राप्तौ अध्वर्युबाधकत्वेन प्रतिप्रस्थातृविधेरावश्यकत्वात्, चोदकस्य कॢप्तत्वेपि गृहमेधीयाज्यभागन्यायेन फलतः परिसङ्ख्योपपत्तेश्च प्रतिप्रस्थातृकर्तृकस्यासादनस्य मारुतियागाङ्गत्वेन विनियोगस्य अतिदेशादेव सिद्धेः विनियोगविधिवैयर्थ्याच्च। प्रतिप्रस्थातृकर्तृकासादनस्य मारुत्यतिरिक्तेषु प्राप्त्यभावादेव परिसङ्ख्यानुपपत्तेश्च। अतोऽत्र विशिष्टासादनान्तरविधिरेव युक्त इत्यर्थः। **पूर्वप्रवृत्त्येति**। तत्फलं च तत्तद्देशकर्तृव्यवस्थासिद्धिः। **वैदेश्यापत्त्यापि चेति**। प्राकृतस्याप्यासादनस्याङ्गभूतस्य दक्षिणविहारेऽनुष्ठानं तदासादनं यस्य मारुतीयागस्याङ्गं तस्योत्तरविहारस्थाहवनीयेऽनुष्ठानमिति वैदेश्यापत्तिरित्यर्थः। देशभेदेन तन्त्रत्वासम्भवेपि प्रकारान्तरेणावृत्तिप्रयोजनमाक्षिप्य परिहरति—**न चैवमपीति**। **विहितदेशाद्यभावेपीति**। यथैव पशुपुरोडाशे आसन्नेषु हविष्षु प्रयाजाः पशौ च जीवति, एवं कालभेदे विद्यमानेऽपि अन्यत उपकारलाभात् न पशुपुरोडाशप्रयोगविधिः तदंशेऽनुष्ठापक इति प्रसङ्गे वक्ष्यते ; तद्वदि-

न च 'बहूनां स्यात्सधर्मत्वं' इति न्यायेनानेकेषु देशाद्यबाध एव अष्टानां तन्त्रित्वतात्पर्यग्राहक इति वाच्यम्। तथात्वेऽपि यत्र साम्यं यथा सर्वतोमुखादौ चतुर्दिक्षु चतुर्षु विहारेषु चतुर्भिरध्वर्य्वादिभिः क्रियमाणे तत्र विनिगमनाविरहेण तन्त्रित्वनियमाभावे प्रसङ्गासंभवेन देशकर्त्रादिभेदेनाङ्गावृत्तेरावश्यकत्वात्।

प्रकृते तु यद्यपि बह्वनुरोधेन मारुत्यां प्रसङ्गः प्राप्नोति। तथापि 'यदेवाध्वर्युः करोति तदेव प्रतिप्रस्थाता करोति' इति वचनेन प्रसङ्गाभावप्रतीतेर्देशकर्तृविशिष्टमारुतीप्रयोगविधेः मारुतीप्रक्षेपाद्यङ्गमात्रे सङ्कोचापत्तेश्चावृत्तिरिति ध्येयम्।

---

## (९)—कर्तृभेदस्तथेति चेत् ॥ ४२ ॥ न समवायात् ॥ ४३ ॥ लिङ्गदर्शनाच्च ॥ ४४ ॥ वेदिसंयोगादिति चेत ॥ ४५ ॥ न देशमात्रत्वात् ॥ ४६ ॥ एकवाक्यत्वात् ॥ ४७ ॥

---

ह्यपि दक्षिणविहारप्रतिप्रस्थातृकर्त्रोः भेदेपि प्रसङ्गोऽस्तु इत्याशङ्काशयः। नवानां यागानां अन्योन्यनिरपेक्षतयाऽनुष्ठाने प्राप्ते कस्याङ्गैः कस्योपकारो लभ्यत इत्यर्थे प्रमाणाभाव इति प्राचीनैरुक्ते नियामकमाशङ्क्य निराकरोति—**न च बहूनामिति**। यदि मारुतियागस्यैवाङ्गानि क्रियन्ते तैरेव चेतरेषु प्रसङ्ग उच्यते, तदा अष्टयागाङ्गानां उत्तरविहारदेश अध्वर्युकर्तृकत्वबाधः बहूनामङ्गानामापद्येत इति तदनुरोधेन अष्टानामेव यागानां उपक्रमेणाङ्गानुष्ठानेऽवश्यकर्तव्ये तेषामष्टानां तन्त्रित्वे नियमो भविष्यतीत्यर्थः। **तथात्वेपीति**। यद्यपि बह्वनुरोधेन तेषामर्थ एवाङ्गानुष्ठान, तथापि तत्तन्त्रमध्यपाती मरुतीयागस्य नैव सम्भवति तत्तन्त्रमध्ये मारुतीयागस्यानुष्ठानाप्रसक्तेः। न हि यदा आग्नेयाद्यनुष्ठान तदैव न मारुतीयागस्यानुष्ठानमिति नियमे मानमस्तीति **तथात्वेपीत्य**पिनोक्तम्। तावतापि यत्र नैतादृशं नियामकं तदर्थमेतदधिकरणारम्भोपपत्तेः न विचारवैयर्थ्यमित्याह—**यत्र साम्यमिति**। प्रकृते तर्हि प्रसङ्गः कथं वारणीयः इत्यत आह—**प्रकृतेत्विति**। बह्वनुरोधेनेत्येतदुपलक्षणम्। वस्तुतः तन्त्रमध्यपातस्य उपलक्षणताया द्वादशाध्यायाद्याधिकरणे स्वयं वक्ष्यमाणत्वात्, तदभावेपि मारुतीयागे प्रसङ्गः स्यादेव। अतः कस्याङ्गैः कस्य प्रसङ्ग इति ज्ञापनार्थं बह्वनुरोधोपन्यास इति ध्येयम्। **वस्तुतस्तु** एतद्वचनस्य यथा प्रसङ्गनिवारकत्वं तथा अङ्गतन्त्रतानिवारकत्वस्यापि स्पष्टत्वात् सति वचने एतदधिकरणपूर्वपक्षस्यानुत्थानमेव द्रष्टव्यम्।

---

तत्रैवाध्वर्युप्रतिप्रस्थातारौ वचनाद्व्यवस्थितौ। ब्रह्मा होता आग्नीध्रश्च किं भेदेनोत तन्त्रेणेति चिन्तायां देशभेदात् तत्तद्देशकर्तव्यपदार्थप्रयोगभेदावगतेः प्रयोगाङ्गकर्तॄणां भेद इति प्राप्ते—

सत्यपि प्रयोगभेदे तैरेव कर्तृभिः प्रसङ्गात्कार्यसिद्धेः तत्कर्तव्यपदार्थानामावृत्तौ प्रमाणाभावान्न भेदेन ब्रह्मादयः। न ह्यत्र यदेवाध्वर्युरितिवद्वचनमस्ति, अतश्च बह्वनुरोधेन अग्नीनां तन्त्रित्वावगतेस्सत्यपि विरोधे तैरुत्तरविहार एव पदार्थाः कर्तव्याः। अत एवोभयत्रोत्करदेशसत्त्वेऽपि नाग्नीध्रकर्तृकप्रत्याश्रावणादीनां भेदेनानुष्ठान न वा तदर्थमाग्नीध्रभेदः, बह्वनुरोधेनोत्तरविहारसम्बन्ध्युत्कर एव तेनैवाग्नीध्रेण कृतैरेव प्रत्याश्रावणादिभिरुपकारसिद्धेः।

आवश्यकी चेयं रीतिः अन्तर्वेदिकर्तव्ययाजमानपदार्थेषु। न हि तेषां देशभेदादावृत्तिरिष्टा, देशसंस्कारकत्वाभावेनावृत्तौ प्रमाणाभावात्। सकृत्कृतैरेव कार्यसिद्धेश्च। अत एव यत्राग्निसम्मार्गादौ प्रसङ्गासंभवस्तत्रावृत्तिरिष्टैव। न च तदर्थमाग्नीध्रभेदश्शङ्क्यः। 'चातुर्मास्याना पञ्चर्त्विजः' इति वचनेन तद्बाधात्। ब्रह्मकर्तव्यपदार्थेषु तु नैव कश्चि-

---

कर्तृभेदस्तथेति चेत्। ननु 'मारुतीमेव प्रतिप्रस्थाता' इति वाक्यस्य साङ्गप्रयोगविधायित्वे साङ्गेऽपि मारुतीयागे प्रतिप्रस्थातुरेव कर्तृत्वेन प्राप्तेराग्नीध्रादीनां बाधस्यैव प्राप्तौ कुतस्तेषां भेदाभेदचिन्तेत्यत आह—तत्रैवेति। 'यदेवाध्वर्युः, इति वचनेन तदेवेति तच्छब्देनाध्वर्युकर्तव्यपदार्थानामुपादानात् तदुद्देशेनैव प्रतिप्रस्थातुः आवृत्त्या कर्तृत्वेन विधानात् आग्नीध्रादिकर्तव्यपदार्थेषु तस्याप्रसक्तेर्युक्तो विचारः। अन्यथा अस्य वचनस्य वैयर्थ्यापत्तेरित्यर्थः। नह्यत्रेति। यथाऽध्वर्युकर्तृकपदार्थानां प्रसङ्गनिवारकं वचनमासीत् तद्वदिह तत्प्रसङ्गनिवारकं वचन नास्तीत्यर्थः। उत्करदेशेति। वेदिखननेन ये जाताः पांसवः तेषां वेदेरुत्तरतः स्थापनदेशः उत्करदेशः। तत्पश्चिमदेशो आग्नीध्रस्यावस्थानम्। तत्र स्थितः आग्नीध्रः उभयविहारस्थयोरपि आश्रावणप्रत्याश्रावणादि शक्नोत्येव कर्तुमिति न भेदेनानुष्ठानमित्यर्थः। प्रसङ्गासम्भव इति। आहवनीयस्य भेदात् प्रतिसंस्कार्यं संस्कारावृत्तिरिष्टैवेत्यर्थः। चातुर्मास्यानामिति। एतेनास्य न्यायप्राप्तानुवादकत्वमङ्गीकृत्य "सोमस्य यज्ञक्रतोः सप्तदश ऋत्विजः" इति विधिस्तावकत्वमिति प्रकाशकारोक्तमपास्तम्। अग्निसम्मार्गार्थं प्राप्ताग्नीध्रादिभेदनिवारणस्य न्यायेनासम्भवात्। तन्निवारणार्थं नियमसिद्ध्यर्थं तस्य विधित्वावश्यकत्वात्। न च तेनैवैकेनाग्नीध्रेण सम्मार्गसिद्धेः न तस्य भेद आवश्यक इति वाच्यम्। प्रतिप्रस्थातृककर्तृकसम्मार्गपूर्वपदार्थाव्यवहितानन्तर्यरूपक्रमबाधे प्रमाणाभावेन तदव्यवधानेन

द्विरोधः। विहारद्वयदक्षिणभागस्थितेनैकेनैव ब्रह्मणा तन्त्रेणोभयोपकारकपदार्थकरणोपपत्तेः। एवं होतृपदार्थेष्वपि।

न च तस्य 'अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः' इति वचनेन वेदिदेशस्याङ्गत्वावगतेः कथं तत्राविरोध इति वाच्यं 'अर्धमन्तर्वेदि मिनोति' इतिवत् देशविशेषलक्षणया गार्हपत्यपुरोभागस्यैव तत्र विधेयत्वात्। अस्तु वा कथञ्चित्तत्र विरोधस्तथाऽपि प्रसङ्गादेव कार्यसिद्धेर्न पदार्थावृत्तिः कर्तृभेदो वा॥

---

## (१०)—एकाग्नित्वादपरेषु तन्त्रं स्यात्॥ ४८॥ नाना वा कर्तृभेदात्॥ ४९॥

तत्रैवापराग्निकाः पत्नीसंयाजादयो देशाभेदात्तन्त्रमिति प्राप्ते—

---

तत्सिद्ध्यर्थं तद्भेदस्यावश्यकत्वात्। न च प्रत्येकविहाराभिप्रायेणैतद्वचस्समर्थयितुं शक्यम्। अन्यतरविहारयोरध्वर्युप्रतिप्रस्थात्रन्यतराभावेन पञ्चर्त्विक्त्वासम्भवात्। एवञ्च एतादृशस्य प्रसङ्गज्ञापकस्य प्रत्यक्षस्य वचनस्य सत्त्वे पूर्वाधिकरणवदेव पूर्वपक्षानुत्थानं द्रष्टव्यम्; कृत्वा चिन्तया वा विचार इति ध्येयम्। **उभयोपकारकपदार्थेति।** कृताकृतप्रत्यवेक्षणानुज्ञानादिपदार्थकरणोपपत्तेरित्यर्थः। एव होतृकर्तृकाः पदार्थाः सामिधेनीयाज्यापाठादयो ज्ञेयाः। यदा तु तार्तीयरीत्या वेदेरपरित्यागेनैव देशविशेषलक्षणा तदा वेदेर्भिन्नतया देशभेदे सति स्वात्मसम्बन्धिवेदिस्थितहोतृकर्तृकपाठाभावे मारुतीयागापूर्वोत्पत्तौ प्रमाणाभावात् तदर्थं तद्भेद इत्यङ्गीकारेणापि पक्षान्तरेण सिद्धान्तमाह—**अस्तुवेति।** **अयमर्थः** यथा सोमे महावेद्यां कृतायां प्रवृत्तान्यैष्टिकानि हवींषि तस्यामेवासादनीयानि, न प्राकृतवेद्यां स्वार्थायां परार्थायां वेत्यश्रवणादिति द्वादशे वक्ष्यते। तेनैव न्यायेनेहपि वेदिदेशस्थितत्वस्य होतुः सम्भवात् प्रसङ्गेन कार्यसिद्धेः न कर्तृभेद इत्यर्थः।

---

**एकाग्नित्वादपरेषु।** **देशाभेदादिति।** ये आहवनीये क्रियमाणा आज्यभागप्रयाजादयः तेषामाहवनीयसाध्यानां आहवनीयदेशभेदादावृत्तावपि पत्नीसयाजानां गार्हपत्याग्निसाध्यानां गार्हपत्यभेदाभावेन आवृत्तौ प्रमाणाभावेन अध्वर्युकृतानामेव तन्त्रेणोपकारकत्वो-

देशभेदवत्कर्तृभेदस्यापि प्रयोगभेदप्रयोजकत्वात् तदनुरोधेन तत्राप्यावृत्तिः। न च देशभेदादेवाङ्गावृत्तौ सिद्धायां तत्र कर्त्रन्तरापेक्षणे प्रतिप्रस्थातृमात्रविधानान्न कर्तृभेदस्य स्वातन्त्र्येण प्रयोगभेदाक्षेपकत्वमिति वाच्यं, वैपरीत्यस्यापि वक्तुं शक्यत्वेन विनिगमनाविरहेणोभाभ्यामपि कर्तृदेशाभ्यां स्वस्वविशिष्टप्रयोगविधिबलेन प्रयोगभेदाक्षेपोपपत्तेः। अतश्च पत्नीसयाजादिषु देशभेदाभावेऽपि कर्तृभेदादेवावृत्तिः॥

वस्तुतस्तु—देशकर्तृविशिष्टैकप्रयोगविधानेऽपि पार्ष्ठिकपरस्परान्वयवशेन तत्तद्देशीयतत्तत्कर्तृकपदार्थानामेव प्रयोगविध्यापत्तेर्होत्रादिकर्तृकपदार्थानां तत्तद्देशाप्राप्तिवत् अतद्देशीयानामप्यापराग्निकानां प्रतिप्रस्थातृकर्तृकत्वानापत्तेर्नानेन पत्नीसंयाजादिषु प्रतिप्रस्थातृकर्तृकत्वम्। न हि मारुतीयागे प्रतिप्रस्थातृकर्तृकत्वं येनाङ्गप्रधानयोरेककर्तृकत्वात् पत्नीसंयाजेष्वपि तत्प्राप्तिराशङ्क्येत मारुतीयागस्य यजमानकर्तृकत्वेन प्रतिप्रस्थातृकर्तृकत्वाभावात् किन्तु 'यदेवाध्वर्युः करोति' इत्यनेन पत्नीसंयाजेषु तत्प्राप्तिः। अत्र हि

---

पपत्तेरित्यर्थः। **देशभेदवदिति**। यदा दक्षिणविहाररूपदेशभेदात् साङ्गस्य मारुतीयागस्य प्रयोगविधिरिति तस्मिन् देशे साङ्गानुष्ठानार्थमङ्गानामावृत्तिः तद्वदेव प्रतिप्रस्थातुः प्रयोगान्वयिनो गुणस्यापि भेदात् तेनापि साङ्गस्य प्रयोगविधिरिति मारुतीयागानुष्ठानार्थं पत्नीसयाजानामावृत्तिरावश्यिकीत्यर्थः। **वैपरीत्यस्यापीति**। दक्षिणविहारे मारुतीप्रयोगे विहिते तत्र कर्त्रपेक्षया प्रतिप्रस्थातृविधिवत् तत्कर्तृकप्रयोगे विहिते तत्र देशापेक्षया तद्देशविधिरित्येवं वैपरीत्यस्यापि वक्तु शक्यत्वेनेत्यर्थः। न चेष्टापत्तिः, तथात्वे आपराग्निदेशबाधस्यैवापत्तेः। अतः स्वस्वविशिष्टप्रयोगभेदकत्वमेव तत्र, यत्र प्रयोगद्वयस्यापि अविरोधेनानुष्ठानं तत्र तदर्थं प्रयोगावृत्तिरित्यस्तु नाम, न त्वेतावता कर्तृभेदस्य न प्रयोगभेदकत्वमित्यर्थः। एवं प्राचां रीत्योपपादितं सिद्धान्तमाक्षिप्य समाधत्ते—**वस्तुतस्त्विति**। **तद्देशाप्राप्तिवदिति**। दक्षिणविहारदेशाप्राप्तिवदित्यर्थः। तथा च येषां प्रतिप्रस्थातृकर्तृकत्वं तेषामेव पदार्थानां दक्षिणविहारदेशेऽनुष्ठाननियमः। तथैव परस्परनियमात्। येषामेव दक्षिणविहारेऽनुष्ठानप्रसक्तिः तत्रैव प्रतिप्रस्थातृकर्तृकत्वनियम इत्यर्थात् न पत्नीसयाजेषु प्रतिप्रस्थातृकर्तृकत्वप्राप्तिः येन तदनुरोधेनावृत्तिसिद्धान्तः सिद्ध्येदित्यर्थः। **अत्र हीति**। इदं हि वचनं मारुतीयागप्रयोगस्य दक्षिणविहारे प्रतिप्रस्थातृकर्तृकस्य विधानेपि प्रधानयागस्य यजमानकर्तृकत्वेन तत्र देशस्य कर्तुश्च विधानाऽसम्भवात् आनर्थक्यतदङ्गन्यायेन अब्देशस्येव प्रधानाङ्गप्रक्षेप एव तत्पर्यवसानवत् अङ्गेष्वपि तथैव प्राप्ते पार्ष्ठिकान्वये च पूर्वोक्तरीत्या देशकर्त्रोः नियमस्यापि प्राप्तेः

यत्पदार्थे यागाष्टकाङ्गभूते अध्वर्युः कर्ता तत्पदार्थस्य मारुतीयागाङ्गत्वे प्रतिप्रस्थातृकर्तृकत्वं विधीयते। अतश्चापराग्निकानामप्यावृत्तिः॥

---

(११)—पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्या-दारण्यवत् तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ५० ॥ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५१ ॥ वाक्यैकत्वे क्रतुसामान्यात् ॥ ५२ ॥ वपानां चानभिघारणस्य दर्शनात् ॥ ५३ ॥

---

सदा आपराग्निकानां भिन्नदेशानामावृत्तिविधानार्थत्वमेव। **मारुतीयागाङ्गत्वे इति।** यद्यपि यथाश्रुतवाक्यात् अष्टयागगताध्वर्युकर्तृकपदार्थानामेव प्रतिप्रस्थातृकर्तृकत्वविधिः आवृत्तिफलको भाति, न तु तेषां मारुतीयागाङ्गत्वे प्रतिप्रस्थातृकर्तृकत्वविधिः; तथाप्ययमभिप्रायः—नात्रा-पूर्वतया प्रतिप्रस्थातृकर्तृत्वविधिः, गौरवात्। किन्तु यदेव मारुतीमेवेतिवाक्येन मारुती-प्रयोगे विहितं तत्कर्तृत्व तस्यैवोपसहारविधया तत्पदोपात्ताध्वर्युकर्तृकपदार्थरूपोद्देशेन विनियोगमात्रं, तथाचाष्टयागाङ्गत्वेन ये उत्तरविहारेऽध्वर्युणा पदार्थाः क्रियन्ते ते मारुतीयागाङ्गत्वेन प्रतिप्रस्थात्रा कर्तव्या इत्यर्थावगमात् सर्वेषामेवाङ्गानामावृत्तिः सिद्ध्यतीति। अतोऽयमपि विचारः कृत्वा-चिन्तयैव द्रष्टव्य इति भावः।

---

**पर्यग्निकृतानामुत्सर्गे।** नवमे "पर्यग्निकृतानारण्यानुत्सृजन्ति" इत्यत्र देवताऽभावाद्याग-विधिं निरस्य पर्यग्निकरणान्ताङ्गमात्रमेव 'ईशानाय परस्वत आलभेत' इति पूर्ववाक्यविहिते यागे विधीयत इति प्रसाध्य तत्तुल्यवाक्येन पर्यग्निकृतं पात्नीवतमुत्सृजन्तीत्यनेनापि त्वाष्ट्रं पात्नीवतमालभेतेति पूर्ववाक्यविहिते यागेपि पर्यग्निकरणान्ताङ्गरीतिमात्रं विधीयते। यत्तु आज्येन शेषं संस्थापयतीति वचनं तदग्रे श्रूयते तत्र पात्नीवतपदानुषङ्गेण कर्मान्तरविधिरित्युक्तम्।

वाजपेये प्राजापत्यान् पशून् प्रकम्य 'तान् पर्यग्निकृतानुत्सृजति ब्रह्मसाम्न्यालभते' इति श्रुतम्। तत्र पूर्ववाक्येन पर्यग्निकृतानारण्यानुत्सृजन्ति, पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इतिवत् पर्यग्निकरणान्ताङ्गरीतिविधानात् गृहमेधीयाज्यभागन्यायेनापूर्वत्वापत्तौ उत्तराङ्गानामकर्तव्यत्वावगतेः 'ब्रह्मसाम्न्यालभते' इति 'आज्येन शेषं संस्थापयति' इतिवत् कर्मान्तरविधिः। तत्र च तद्वदेव 'सप्तदश प्राजापत्यान् पशून्' इत्यस्यानुषङ्गेण द्रव्यदेवतालाभ इति प्राप्ते—

आश्विनग्रहग्रहणोत्तरं क्रतुपशुभिस्सहोपाकृतानां प्राजापत्यानां ब्रह्मसामकाले पर्यग्निकरणोत्तरक्रियमाणालम्भोत्कर्षमात्रविधाने 'ब्रह्मसाम्न्यालभते' इत्यनेन कृते अर्थात्पर्यग्निकरणान्तस्य क्रतुपशुभिस्सह करणावगतेः तदन्ते उत्सर्गस्य प्राप्तत्वात्पूर्ववाक्यस्यानुवादतयाऽर्थवादत्वविधयोत्तरविध्येकवाक्यत्वप्रतीतेः पूर्वोत्तरवाक्ययोर्वाक्यभेदमङ्गीकृत्य पूर्वस्मिन् परिसङ्ख्याफलकतृतीयविधिप्रकाराङ्गीकरणे उत्तरस्मिंश्च द्रव्यदेवताविशिष्टापूर्वकर्मविधिफलकषष्ठविधिप्रकाराङ्गीकरणे च गौरवापत्ते, अतोऽत्रालम्भोत्कर्षमात्रं विधीयते। तदा च तदुत्तराङ्गानामुत्कर्षः 'तदादि वाऽभिसम्बन्धात्' इति न्यायादेव लभ्यते। तेनात्रारण्यन्यायासम्भवात् न पर्यग्निकरणान्तानामङ्गानामावृत्तिः।

अत एव प्राजापत्यवपानां क्रतुपशुभिस्सह करणपक्षे 'सह पशूनालभते वपानामभिघृतत्वाय' इति वदन्नुत्कर्षपक्षे तन्मात्राभावं दर्शयति। पर्यग्निकरणान्ताङ्गरीतिविधाने

---

तेन न्यायेनेहापि पूर्वपक्षमाह—तत्रेति। तद्वदेवेति। आज्येन शेषमिति वाक्ये पात्नीवतमिति पदानुषङ्गेणेवेत्यर्थः। आरण्यन्यायासम्भवादिति। आरण्यपात्नीवतवाक्ययोस्तु पर्यग्निकरणोत्तराङ्गविषयकोत्कर्षविध्यभावेनोत्सर्गस्याप्राप्तेरनुवादायोगात् सर्वेष्वेवाङ्गेषु चोदकप्राप्तेषु यत्तन्मध्ये पर्यग्निकरणपुनःश्रवणं निर्गुणं तत् भवत्येवापूर्वतापादकम्। इह तु तदंशे विधेयत्वस्यैवाभावात् नापूर्वतापादकत्वमिति वैषम्यमित्यावृत्तिर्न, किन्तु क्रतुपशुभिस्सहैकदैव पर्यग्निकरणान्तान्यङ्गानि आलम्भप्रभृतीन्युत्तराणि ब्रह्मसामकाल एवेत्यर्थः। एतेन देशकालकर्तृतन्त्रतायां विचारितायां प्रसङ्गात् प्राजापत्यपशूनां पर्यग्निकरणान्तपदार्थानां कालतन्त्रताविचारात् सङ्गतिरुक्ता भवति। प्राजापत्यपशूनां द्वौ पक्षौ, क्रतुपशुभिस्सहारब्धानां पर्यग्निकरणं कृत्वा उत्सृज्य ब्रह्मसामकाले आलम्भ इत्येकः पक्षः, क्रतुपशुभिस्सह समाप्तिरित्यपरः, तत्रास्मिन् पक्षे क्रतुपशुवपानामिव प्राजापत्यवपानामपि सन्निहितत्वात् भवति प्रयाजशेषेणाभिघारणम्। प्रथमे तु प्रयाजावसरे तासामनुत्पन्नत्वात् न तदित्यभिप्रेत्याह—अतएवेति। सूत्रमिति। एतेन इदं लिङ्गमनुपपन्नं परमतत्वेन नेतव्यमिति तन्त्ररत्नोक्तं परिहृतं ज्ञेयम्। स्पष्टार्थमन्यत्।

तु वपानामेवाभावादभिघारमात्राभावदर्शनमसमञ्जसं स्यात्। एतदभिप्रायकमेव च वपानां चानभिघारणस्य दर्शनात्' इति सूत्रम्।

यत्तु भाष्यकारेण इदं 'सव्या वा एतर्हि वपा यदनभिघृता यद्ब्रह्मसाम्न्यालभते तेनाभिघृताः' इति लिङ्गं अकर्मान्तरत्वे प्रयाजशेषस्य क्रतुपशुवपाभिघारणेन रिक्तत्वादन-भिघृतत्वं युज्यते, कर्मान्तरत्वे तु तदर्थं पुनः प्रयाजकरणात्तेनैव तद्वपाभिघारणोपपत्ते-रनभिघृतत्वदर्शनं न युक्तमिति व्याख्यातं, तत् कर्मान्तरत्वपक्षेऽपि माध्यंदिनकालीन-पशुपुरोडाशसवनीयहविषामिव सवनीयतन्त्रमध्यपातित्वेन प्रसङ्गितया प्रयाजपुनः-करणानापत्तेरुपेक्षितम्।

---

## (१२)—पञ्चशारदीयास्तथेति चेत् ॥५४॥ न चोदनैकवाक्यत्वात् ॥५५॥ यातयामत्वाच्च ॥५६॥ संस्काराणां च तद्दर्शनात् ॥५७॥

पञ्चशारदीयो नामाहीनः पञ्चाहः 'यः कामयेत बहु स्यामिति, स एतेन यजेत' इति फले विनियुक्तः। तत्र वैशाख्याममावास्यायां सप्तदश मारुतीस्त्रिवत्सा अप्रवीता उपाकरोति, सप्तदश पृश्नीनुक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितान्, इतरा आलभन्ते, प्रत-रानुत्सृजन्ति, ततस्संवत्सरे राजीवा आनयन्ति, तांश्चैवोक्ष्णस्तान् पर्यग्निकृतान्' इत्यादि पूर्ववत् तृतीये चतुर्थे च संवत्सरे। स्त्रीलिङ्गनिर्देशात् स्त्रीपशूनां सामस्त्येनानुष्ठानं उक्ष्णां च पर्यग्निकृतानामुत्सर्जनमुक्त्वा पञ्चमे संवत्सरे दीक्षित एतान् 'उक्ष्णस्त्रींस्त्रीनन्वहमा-लभेत पञ्चोत्तमेऽहनि' इति श्रुतम्। त्रिवत्साः त्रिवत्सराः, अप्रवीताः अप्रसूताः, पृश्नीः

---

**पञ्चशारदीयास्तथेति चेत्।** **पञ्चाह इति।** त्रिवृदग्निष्टोमः, पञ्चदश उक्थ्यः, सप्तदशोक्थ्यः, सप्तदशोऽतिरात्र इति कॢप्त्या पञ्चाह इत्यर्थः। **प्रोक्षितानितरा आलभेत इति।** अत्र आ आलभेत इति मर्यादार्थक आप्रश्लेषेण प्रोक्षितान् मर्यादीकृत्य इतराः स्त्रिय आलभेत इत्यर्थः। अत एवाज्ये आङ्मर्यादावचन इति सूत्रात् कर्मप्रवचनीयसञ्ज्ञाकरणात् तद्योगे प्रोक्षितानिति द्वितीया। इतरान् इति पुलिङ्गोपादानात् पुंपशून् उक्ष्ण इत्यर्थः। प्रोपसर्गस्य उत्सृजतिनान्वयः। **राजीवा आनयन्तीति।** अत्रापि मारुतीरित्यनुषङ्गेण नयतौ यागलक्षणा। एवमग्रेपि द्रष्टव्यम्। **अन्वहमिति।** पञ्चमे वर्षे एकादशीमारभ्य चतुर्दश्यन्तं प्रतिसुत्यमित्यर्थः। **पञ्चोत्तमे इति।** अमावास्यासुत्यायामित्यर्थः। **अल्पशरीरा**

**अल्पशरीराः, राजीवाः राजीववर्णाः।** अत्र स्त्रियोऽपि **गाव एवेति केचित्। अत्रोक्षवाक्ये मारुतानिति विपरिणतस्य उपाकरोति इत्यस्य चानुषङ्गास्तदपि वाक्यान्तरम्।** अस्मिश्च वाक्ये **यथा कर्मभेदस्सङ्ख्यया तथा कौस्तुभे निरूपितम्।**

---

इति। वेदभाष्ये तु वैश्यसवप्रकरणे पृश्निशब्दस्य श्वेतगुणवाचित्वमुक्तम्। **प्रकाशकारैः** त्रिवत्सा गाव इति व्याख्यातम्। **आपस्तम्बसूत्रे** 'वत्सतर्यस्त्रिवत्सा' इत्याम्नानाद्युक्तमेवेत्याह— **अत्र स्त्रियोऽपीति।** अत्रोक्षवाक्ये मारुतीति विपरिणतानुषङ्गेपि न सप्तदशकर्मविधानं सिद्ध्यति प्राजापत्याधिकरणे सप्तदशप्राजापत्योदाहरणे उक्तस्य पूर्वपक्षन्यायस्याविकलस्य सत्त्वात्। सिद्धान्तन्यायस्य चाभावात्। अत्र पर्यग्निकरणान्ताङ्गरीतिविधानात् जीवतामेव पशूनां देवतामुद्दिश्य त्यागात् आलम्भविशसनाद्यभावात् न वपाहृदयादीनि। अत एकयागपक्षे एकचोदकापत्तेः तेन चैकस्यैव हृदयाद्येकादशावदानगणस्य प्राप्तेः सप्तदशानां यागसाधनत्वानुपपत्तिरिति सिद्धान्तन्यायस्याप्रवृत्तेः एकमेव सप्तदशोक्षसाधनकं सम्पद्येतेति **प्रकाशकारैराशङ्क्य** सप्तदशपृश्नीरित्यव्याख्याताश्रवणात् पूर्ववाक्यात् 'सप्तदश मारुतीस्त्रिवत्सा उपाकरोतीत्याख्यातमनुषज्यते। त्रिवत्सावाक्ये च नत् प्राजापत्यन्यायेन सप्तदशकर्मविधायकमवश्यमिति उक्षावाक्येपि तदनुषज्यमानं अवैरूप्यात् सप्तदशकर्मविधायकमेवाभ्युपेयमिति नात्रैककर्मत्वम्। अत एव च न प्राजापत्यसिद्धान्तन्यायः, नवाऽनेककर्मविधायकाख्यातानुषङ्गः तत्र चानेककर्मता। किन्तु प्राजापत्यपूर्वपक्षन्यायेनानेकद्रव्यक एक एव यागो यथा 'ईशानाय परस्वत आलभेत' इत्यत्र। अत एव **मिश्रैः** तत्र सिद्धान्ते द्रव्यदेवतासम्बन्धात् एको यागो विधीयत इत्येकयागत्वमेव व्यवहृतमिति समाहितम्। तत् परस्वद्वाक्ये यागैकत्वपक्षे प्रत्येकं करणीभूतानां परस्वतां समुच्चयस्वीकारे बहुत्वस्य करणतावच्छेदकत्वात् प्रत्येक द्रव्यभेदे सति तन्निरूपितदेवतासबन्धानामपि भेदापत्त्या यागभेदस्यैवापत्तेः। समुदितानां करणत्वेन तत्स्वीकारे प्रतिपरस्वतं अञ्जनोपाकरणादिसंस्कारानापत्तेः यागभेदस्यावश्यकत्वादयुक्तम्। अतः परस्वद्वाक्यसाधारण्येन कर्मभेदसाधकं यद्यागसाधनत्वयोग्यतावच्छेदकपशुत्वावच्छिन्नस्यैव बहुत्वावच्छिन्नस्य देवतासम्बन्धात्, तस्य च प्रतिसम्बन्धितापर्याप्त्यधिकरणभेदेन भिन्नत्वम्। तदेव प्राजापत्यवाक्येपि कर्मभेदसाधकम्, न तु एकपशुनिष्पन्नैकादशावदानगणैकताप्रापिचोदकानुग्रहमात्रम्। अत उक्षवाक्येपि तेन न्यायेनानायासेन सिद्ध्यत्येव कर्मभेद इति सर्वं **कौस्तुभे** सङ्ख्याधिकरणे निरूपितमित्याह—**अस्मिश्च वाक्ये**

अत्र च 'उपाकरोति' इत्यस्यैकस्यैव स्त्रीषु पुरुषेषु च सम्बन्धादेकमेवेदं वाक्यं चतुस्त्रिंशत्कर्मणां विधायकमिति भाष्यकारः। वाक्यान्तरत्वं तु युक्तमित्युत्पश्यामः।

तत्र किं उक्षसु य एव प्रथमे संवत्सरे पर्यग्निकृताः उक्षाणः तेषामेव द्वितीयादिसंवत्सरेषु पर्यग्निकरणादि कृत्वा पञ्चमे संवत्सरे तेषामेव चतसृषु सुत्यासु त्रयाणां त्रयाणामालम्भः पञ्चानां चोत्तमेऽहनीत्येवं प्राजापत्यानामिवालम्भोत्कर्षः? उत प्रथमादिवर्षेष्वन्येषामन्येषामुक्ष्णां पर्यग्निकरणान्ताङ्गरीतिविधानेनारण्यपालीवतादिवत्तत्रैव समाप्तिः, पञ्चमे वर्षे तत्तत्सुत्यास्वन्येषामेवालम्भः? इति चिन्तायां—

लाघवात्तेषामेवालम्भोत्कर्षः प्राजापत्यवत्। वचनाच्च पर्यग्निकृतानामपि पुनःपुनः पर्यग्निकरणादिः, तच्छब्दबलेन पूर्वोपाकृतानामेव परामर्शात्। उत्सृजतिस्तु आलम्भोत्कर्षादेव प्राप्तोऽनूद्यते इति प्राप्ते—

प्राप्तालम्भानुवादेन 'त्रींस्त्रीनन्वहं' इति चानेकार्थविधाने वाक्यभेदाद्गुणात्कर्मान्तराण्येवैतानि विधीयन्ते, न त्वत्रालम्भोत्कर्षः। एवं 'पञ्चोत्तमेऽहनि' इत्यत्राप्यनेकार्थविधिर्बोध्यः। अत एव 'पञ्चोत्तमेऽहनि' इत्यत्रोत्तमेऽहनि पञ्चत्वविधौ

---

इति। सम्बन्धादिति। उक्षा इत्येतत् साकाङ्क्षं यस्मिन्नेव क्षणे त्रिहायन्यः सबध्यन्ते तस्मिन्नेव क्षणे पूर्वतनोपाकरोतिना सबध्यते। अतश्चैकाख्यातसत्त्वादेकं वाक्यमित्यर्थः। उत्पश्याम इति। उक्षसु मारुतीरित्यस्य स्त्रीद्रव्यसबन्धिमरुद्देवताप्रतिपादकस्यान्वयासम्भवात्, एकस्मिन्नेव वाक्ये विपरिणामकल्पनायां सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वानुपपत्तेः अवश्यमनुषङ्ग एव युक्त इति भिन्नाख्यातसत्त्वात् वाक्यान्तरत्वमेव युक्तम्। अन्यथा अरुणैकहायन्यादिवत् पार्ष्ठिकान्वये सति सप्तदशसङ्ख्याया उभयत्राप्यन्वयोपपत्तेः उक्षवाक्ये सप्तदशपदोपादानवैयर्थ्यापत्तेः पृश्नित्वलिवत्सत्वादिगुणानामपि परस्परसाङ्कर्यापत्तेश्चेति भावः।

वस्तुतस्तु तैत्तिरीयशाखानुसारेणापस्तम्बसूत्रे ऐन्द्रामारुता उक्षाणो मारुत्यो वत्सतर्य इतीन्द्रमारुतदेवताम्नानात् नैव मारुतीरित्यस्य विपरिणामेनानुषङ्गकल्पना युक्ता। किन्तु उपाकरोतीत्यस्यैव सेति। एवं चोत्पत्तिवाक्ये देवतासम्बन्धाभावेपि उपाकरोतेर्यागलक्षकस्यैवानुषङ्गात् यागविधिरस्त्येवेति ध्येयम्। लाघवादिति। पूर्वपक्षेहि अन्वहवाक्ये पञ्चवाक्येच यागान्तरविध्यभावात् चतुर्षु वर्षेषु प्रतिवर्षं सप्तदश सप्तदश यागा इत्यष्टषष्टिर्यागा एव भवन्ति, न तु पञ्चमेप्यन्येसप्तदश यागाः, पर्यग्निकरणान्तानां न पञ्चम्यावृत्तिरिति लाघवमित्यर्थः।

अवशिष्टाना द्वादशानां 'समं स्यादश्रुतत्वात्' इतिन्यायेनैवान्वहं त्रयाणां त्रयाणां प्राप्तेः 'त्रींस्त्रीनन्वहं' इत्यनुवाद इत्यपास्तम्। 'पञ्चोत्तमे' इत्यत्रैव प्राप्तालम्भानुवादेन कालसङ्ख्योभयविधाने वाक्यभेदात्। उत्तमाहरुद्देशेन पञ्चत्वमात्रविधाने विशिष्टोद्देशात् आलम्भस्यैवाश्रयत्वे प्रमाणाभावाच्च।

अतः कालसङ्ख्योभयविशिष्टकर्मान्तराण्येवैतानि सप्तदश वाक्यद्वयेन विधीयन्ते। ततश्चोत्कर्षविध्यभावात् प्रथमादिवर्षेषु भिन्नभिन्नान्येवैतानि कर्माणि पर्यग्निकरणान्ताङ्गविशिष्टानि देवतापदानुषङ्गेण विधीयन्ते। अतश्च प्रतिवर्षं पशुभेदः। पञ्चमे च पर्यग्निकरणान्ताङ्गानामावृत्तिः। तच्छब्दश्च व्यक्तिभेदेऽपि तज्जातीयत्वार्थकस्सन् पृश्नित्वादिगुणप्राप्त्यर्थो न विरुध्यते॥

---

(१३)–दशपेये क्रयप्रतिकर्षात् प्रतिकर्षः ततः प्राचां तत्समानं तन्त्रं स्यात्॥५८॥ समानवचनं तद्वत्॥५९॥ अप्रतिकर्षो वाऽर्थहेतुत्वात्॥६०॥ पूर्वस्मिंश्चावभृथस्य दर्शनात्॥६१॥ समानः कालसामान्यात्॥६२॥

---

अवशिष्टानामिति। एतांस्त्रीनित्यत्र एतच्छब्देन सप्तदशसङ्ख्यायुक्तानां परामर्शेन पञ्चानामुत्तमेऽहनि विधाने सति अवशिष्टा द्वादशैवेत्यर्थः।

प्रमाणाभावाच्चेति। आलभत इति पदानुषङ्गेऽपि आलंभस्याश्रयत्वे पुनर्वाक्यभेद इत्यर्थः। एतानि सप्तदशेति। सवनीयपशुस्थानापन्नानि विधीयन्त इत्यर्थः। प्रतिवर्षं पशुभेद इति। एवं स्थिते प्रतिवर्षं पर्यग्निकृतास्सवनीया इत्येतत्प्रकरणगतमाश्वलायनवचनं मीमांसान्यायविरोधेऽप्रमाणम्। अथवा वचनत्वादेव प्रमाणमिति ध्येयम्। पृश्नित्वादीति। आदिपदेन 'पञ्चवर्षानानयन्ति' इत्यापस्तम्बोक्तपञ्चवर्षत्वसङ्ग्रहः। वत्सतरीणां तु राजीवा नवमी, नष्टश्रीररुणाः पिशङ्गास्सारङ्गा इति च क्रमेणोक्ता गुणा आपस्तम्बसूत्रे द्रष्टव्याः। अत्राधिकरणमालायां विशाखानक्षत्रयुक्तायाममावास्यायामारम्भ उक्तः किंमूल इति चिन्त्यम्।

---

राजसूये इष्टिपशुसोमयागास्सर्वे भिन्नतन्त्राः, कचित्कालभेदात् कचिद्देशभेदात् कचिद्दक्षिणाभेदात् इति वक्ष्यते। तत्राभिषेचनीयो नाम सोमयागः ततस्संसृपा हवींषि ततश्च पुनर्दशपेयस्सोमयागश्श्रुतः। ताविमौ अभिषेचनीयदशपेयौ समानतन्त्रौ भिन्नतन्त्रौ वेति चिन्तायां—

'सह सोमं क्रीणात्यभिषेचनीयस्य दशपेयस्य च' इति वचनेनाभिषेचनीयसोमक्रयकाले दशपेयसोमक्रयः प्रतिकृष्यते। स च प्रतिकृष्यमाणस्तदन्तापकर्षन्यायात् ततः प्राचोऽपि पदार्थानपकर्षतीति आरम्भस्तावत्समानतन्त्रः। यथोपक्रमं च समापने तदुत्तराङ्गानामपि तन्त्रता। यदि त्वभिषेचनीये 'यदभिषेचनीयस्यावभृथमभ्यवयन्ति' इत्यवभृथदर्शनात् नोत्तराङ्गानां तन्त्रता, तदाऽस्तु पूर्वाङ्गानामेव सा।

न च दशपेये 'सद्यो दीक्षयन्ति सद्यस्सोमं क्रीणन्ति' इति पुनस्सोमक्रयदर्शनादुपसंवादमात्रे 'सह सोमं क्रीणाति' इत्यनेन साहित्यं विधीयते उपसंवादश्च मौल्यप्रतिश्रावणार्थस्तस्य क्रतोः पूर्वप्रकरणे कदाचित्सोमविक्रय्यलाभेन क्रतुकरणानुपपत्त्या आवश्यकत्वादिति वाच्यं, तथात्वे क्रीणातेरुपसंपादे लक्षणापत्तेः, तद्वरं सद्यःपदस्यैवैककर्तुकालीनत्वे लक्षणा, अभिषेचनीयदशपेयौ हि एकक्रतुकालीनौ सोमयागान्तराणि तु संवत्सरादूर्ध्वं क्रत्वन्तर इति तदभिप्रायेण सद्यःपदमिति प्राप्ते -

---

## दशपेये क्रयप्रतिकर्षात्।

**वक्ष्यत इति।** इहैव चतुर्थपादाद्याधिकरण इति शेषः। **संसृपां हवींषीति।** सम्यक् सृप्यन्ते प्राप्यन्ते वीर्यमाभिः कृत्वा यजमानेन इति वक्ष्यमाणा अग्न्यादिदेवताः संसृपापदेनोच्यन्ते, तद्देवताकानि हवींषि। यथा 'आग्नेयमष्टाकपाल निर्वपति हिरण्यं दक्षिणा, सारस्वतं चरुं वत्सतरी दक्षिणा, सावित्रं द्वादशकपालं उपध्वस्तो दक्षिणा, सौम्यं चरुं बभ्रुर्दक्षिणा, त्वाष्ट्रमष्टाकपालं शुण्ठो दक्षिणा, वैष्णवं त्रिकपालं वामनो दक्षिणा'' इत्येवं तैत्तिरीयविहितानि दश हवींषीत्यर्थः। एतच्च प्रधानतन्त्रतानिरासार्थमुक्तम्। ततश्चाग्नेयकृष्णग्रीवयोः सौम्येन व्यवधानात् नैकदेवत्यत्वेपि साान्नाय्यवत् तन्त्रता, तथेहापि अभिषेचनीयदशपेययोः न तन्त्रत्वं संसृपाहविर्भिर्व्यवधानात्। अतोऽङ्गतन्त्रत्वमेव विचार्यत इति भावः। **यथोपक्रमं चेति।** यद्युत्तराङ्गानि नैव तन्त्रेण क्रियेरन् तदा मध्ये क्रियमाणैरभिषेचनीयोत्तराङ्गैः व्यवधाने सति पूर्वकृतदशपेयाङ्गानां करिष्यमाणतदीयोत्तराङ्गानां च प्रत्यासत्तिर्बाध्येत। अतः प्रवृत्तिक्रमाश्रयणे यथोपक्रमं समापनेन उत्तराङ्गानामपि तन्त्रत्वमित्यर्थः। **लक्षणापत्तेरिति।** मूल्यं दत्वा परकीयस्य स्वीयत्वकरणं क्रयः; उपसंपादनस्य ताद्रूप्याभावात् लक्षणापत्तिरित्यर्थः।

तथात्वे 'सद्यो दीक्षयन्ति' इत्यादिवाक्ययोर्वैयर्थ्यापत्तेः सहसोमं क्रीणाति' इत्यत्रोपसंवादे लक्षणामप्यङ्गीकृत्य सहत्वमात्रविधिः। अतो भिन्नतन्त्रावेतौ।

यत्तु 'समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्च' इति समानत्ववचनं, तदेककर्तृकालत्वाभिप्रायेणेति न कश्चिद्विरोधः॥

---

## (१४)—निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत्प्रदानविप्रकर्षस्स्यात् ॥ ६३ ॥ अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६४ ॥ प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ६५ ॥

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति श्रुतम्। तत्र वरुणदेवत्यस्यामिक्षायागस्य प्रधानान्तरसमये पूर्वमेकवारं कृतस्यापि पुनः प्रचारविप्रकर्षमात्रं समिष्टयजुरूर्ध्वं विधीयते, 'वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यंदिनेऽङ्गैस्तृतीयसवने' इत्यनेनेव सवनीयपशोः। अवभृथशब्दस्तु वरुणदेवताकत्वसादृश्यात् गौणोऽनु-

---

वाक्ययोर्वैयर्थ्यापत्तेरिति। वाक्यान्तरेणैवैकक्रतुकालीनत्वप्राप्तेः वाक्यद्वयवैयर्थ्यम्; अथवा अन्यतरवाक्येनैव तत्प्राप्तेः अन्यतरवाक्यवैयर्थ्यमित्यर्थः। ननु प्रधानतन्त्रत्वस्येवाङ्गतन्त्रत्वस्याप्यसम्भवे समानाविति वचनावगतसमानत्वानुपपत्तिमाशङ्क्य परिहरति-यत्त्विति।

---

निष्कासस्यावभृथे।

**निष्कासेनेति**। उखालग्नामिक्षाशेषो निष्कासपदार्थः। **प्रधानान्तरेति**। आग्नेयादियागरूपं प्रधानान्तरम्। **पुनःप्रचारविप्रकर्षेति**। वरुणप्रघासेषु नव हवींषि, तेष्वष्टमं वारुण्यामिक्षा, नवमं काय एककपालः; वारुण्यामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति। तत आमिक्षायुक्तं मेषं सर्वमवदाय हुत्वा एककपालेन प्रचर्य भाण्डलिप्तेन वारुण्यामिक्षानिष्कासेन यवतुषैश्चावभृथं यन्ति इति तत्रामिक्षाया एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चात् एककापालप्रचारादूर्ध्वं निष्कासरूपांशान्तरेण तुषैश्च वरुणदेवतायै पुनः प्रचरितव्यमित्येव पुनः प्रचारविप्रकर्ष इत्यर्थः। प्रकृतौ समिष्टयजुरूर्ध्वमेवैष्टिकोऽवभृथ इत्यभिप्रेत्य एककपालप्रचारादनन्तरं "देवा गातुविद" इति मन्त्रेण ध्रौवाज्यकरणको होमः समिष्टयजुश्शब्दार्थः तादृशसमिष्टयजुरूर्ध्वमित्युक्तम्। **गौणोऽनुवाद इति**। अवभृथस्य वरुणदेवत्यत्वात् अस्य

वादः। यन्तीति च यागकल्पकं, तेन नावभृथयागे पुन प्रयाजादिकरणमिति प्रथमः पक्षः।

द्वितीयस्तु—नात्र प्रचारविप्रकर्षः तथात्वे अवभृथशब्दवैयर्थ्यापत्तेः समिष्टयजुरूर्ध्व-कालवाचकपदश्रवणाभावाच्च, प्राप्तकर्मानुवादेन कालनिष्कासतुषाद्यनेकगुणविधाने वाक्य-भेदापत्तेश्च। अतोऽवभृथपदेनाप्रूपं तद्देशं लक्षयित्वा अवभृथगमनं तुषविशिष्टं वारुणी-निष्कासप्रतिपत्त्यर्थं विधीयते प्रयाजशेषाभिघारणवदिति।

सिद्धान्तस्तु—अवभृथशब्दस्य लक्षणावश्यंभावे शास्त्रस्य महाविषयत्वसिद्ध्यर्थं तद्धर्मककर्मान्तरस्यैव लक्षणा। अत एव नायुर्दान् जुहोति न साम गायति न गमनमन्त्रं

---

वाऽवभृथदेशेऽनुष्ठानाद्वा अवभृथशब्देन गौण्या वृत्त्या वारुण्यामिक्षायाग एवोच्यते। तथाच 'निष्कासेन तुषैश्चावभृथयागमामिक्षायाग कुर्यात्' इत्यर्थेन अवभृथस्य कर्मान्तरस्याभावात् पूर्वोक्तप्रयाजाद्यङ्गोपकारस्य आन्तं सत्त्वात् नाऽऽवृत्तिरिति प्रयोजनकथनव्याजेन सङ्गतिं सूचयति —तेनेति। तथात्व इति। यद्यप्यवभृथशब्दस्य गौणत्वं सिद्धान्तेपि समानं प्रत्युत तद्विधौ, मम तु अनुवादे, तथापि तस्य कर्मान्तरपरिच्छेदकतया प्रवृत्तिविशेषकरत्वं, तव तु निर्ज्ञात-स्वरूपस्य तेन प्रयोजनाभावाद्वैयर्थ्यम्, यद्यपि वा तवापि धर्मातिदेशकोऽवभृथशब्दः स्यात्, तथापि उभयविधानाद्वाक्यभेद इत्यर्थः। एवं सत्यपि यदि 'तृतीयसवन' इतिवत् प्रयोग-विप्रकर्षज्ञापककालपरं किञ्चिद्भवेत् तदा स्वीक्रियेतैव सः, न त्वेवमस्तीत्याह—समिष्टेति। दूषणान्तरमाह—प्राप्तेति। वारुणीनिष्कासप्रतिपत्त्यर्थमिति। निष्कासशब्दस्यैव ससम्बन्धि-कत्वेन तत्रैव 'वारुण्या' इत्यस्यान्वयात् तस्यैव परप्रयुक्तत्वेन प्रतीयमानस्य प्रतिपत्त्यपेक्षया युक्त प्रतिपत्तित्वं न तुषांशे, तेषां शेषतया अप्रतीयमानत्वादित्यभिप्रेत्य तुषविशिष्टमित्युक्तम्। एतेन तुषांशेपि प्रतिपाद्यत्वमापाद्य सस्कार्यद्वयनिमित्तवाक्यभेदापत्त्या यत् प्रकाशकाराणां प्रति-पत्तिकर्मत्वखण्डन तदपास्त वेदितव्यम्। अत एव तद्गततृतीयाया न प्राधान्यलक्षणा; अपि तु प्रयाजशेषवाक्य इव निष्कासपदोत्तरतृतीयाया एव। अत एव भाष्ये शास्त्रदीपिकायां च तन्मात्रांश एव प्रतिपत्तित्वमाशङ्कितम्। एतावान् विशेषः। तत्र यन्तिपदेपि यागलक्षणा-मङ्गीकृत्यावभृथसज्ञककर्मान्तरस्यैव तदंशे प्रतिपत्तित्वमाशङ्क्य निराकृतम्। पूज्यपादैस्तु परम-सिद्धान्तेपि स्वय प्रतिपत्तिकर्मत्वाङ्गीकारात गमनस्यैव यथाभाष्यं प्रतिपत्तित्वाशङ्कोत्तरपरतया 'प्रतिपत्तिरितिचेन्न कर्मसयोगात्' इति सूत्रं योजितम्। तुषाः परं प्रकृता लौकिका वेत्यन्यदेतत्। नायुर्दा जुहोतीति। सौमिकावभृथेहि अवभृथगमनमध्ये आयुर्दाहोमत्रयं विहितम्। तथा

जपति' इत्यादिसौमिकप्रसिद्धावभृथधर्मपर्युदासोऽपि सङ्गच्छते। अतश्च कर्मान्तरमेवेदं, तुषांशे अर्थकर्म, निष्कासांशे च प्रतिपत्तिरित्युक्तं कौस्तुभे प्रकरणान्तराधिकरणे। एतदधिकरणसूत्रे तु तुषांशेऽप्देशगमनस्यैव वा प्रतिपत्तित्वमाशङ्क्य निरस्तमिति वेदितव्यम्॥

---

## (१५)—उदयनीये च तद्वत्॥ ६६॥ प्रतिपत्तिर्वाऽकर्मसंयोगात्॥ ६७॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तादर्थ्येन विधानात्॥ ६८॥

ज्योतिष्टोमे प्रायणीयेष्टिरुदयनीयेष्टिश्च दर्शपूर्णमासविकारौ द्वितीयान्त्यदिनयोराम्नातौ। तत्रोदयनीयप्रकरणे प्रायणीयस्य निष्कास उदयनीयमनुनिर्वपति' इति श्रुतम्। तत्र पूर्ववदेवोदनीयधर्मकं कर्मान्तरमेव प्रायणीयनिष्कासद्रव्यकं तत्संस्कारकतया आश्रयिकर्म विधीयते सप्तमी च द्वितीयाद्यर्थे। ततश्चोदयनीयधर्माणां द्विवारमावृत्तिरिति सङ्गतिलोभेनाशङ्क्य निराक्रियते—

नात्र कर्मान्तरं सन्निधिसत्वेन प्रकरणान्तरन्यायाभावात्। अतः प्रायणीयनिष्कासस्य कृतार्थस्येयमौपदेशिकी प्रतिपत्तिरुदयनीयनिर्वाप इति प्राप्ते—

---

ऽऽगमने "उरुं हि राजा इति मन्त्रः"। सामानि अवभृथसामानि प्रसिद्धानि। तदेतत् त्रयनिषेधः सौमिकावभृथधर्माणां प्राप्तिद्योतकः। अतोऽवभृतनामकं कर्मान्तरमेवेदं प्रतिपत्तिकर्म निष्कासांशे, तुषांशेतु अर्थकर्मेति यत्प्राचीनोपपादितावभृथशब्दानुपपत्तिपरिहारेण कौस्तुभे प्रकरणान्तराधिकरणे उक्तं, तत् मया सप्तमे निरूपितं तत्रैव द्रष्टव्यम्।

---

उदयनीये च तद्वत्। प्रायणीयस्य निष्कासे इति। 'आदित्यः प्रायणीयः पयसि चरुः' इति विहितप्रायणीयचरोः उखालग्नः शेषः प्रायणीयस्य निष्कासः। स्पष्टार्थमधिकरणम्।

इति श्रीशम्भुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां
एकादशस्य द्वितीयः
पादः

---

निर्वापस्यापि प्रकृतौ निरुप्यमाणद्रव्यसंस्कारार्थत्वेनावगतस्य निष्कासार्थत्वे अप्राकृतकार्यकारितापत्तिः। निर्वापेण निष्कासस्य दृष्टप्रतिपत्तिरूपसंस्काराजननेन च प्राचीनप्रयाजशेषन्यायाभावात् उभयथाऽप्यदृष्टार्थत्वावश्यकत्वे निषादस्थपत्यधिकरणन्यायेन सप्तमीश्रुत्या प्रकरणाच्च तदीयनिर्वापानुवादेन पुरोडाशकपालवत् प्रायणीयनिष्कासो विधीयते। अर्थाच्च प्राकृतप्रतिपत्तिबाधः।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
एकादशाध्यायस्य द्वितीयः पादः

# अथ एकादशाध्यायस्य तृतीयः पादः

## (१)—अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥

अङ्गानां प्रधानानां चैकप्रयोगविधिपरिगृहीतानामेकदेशकालकर्तृकत्वमित्युक्तम्। क्वचिद्वचने सत्यन्यकालदेशकर्तृकत्वमपि। यथा 'पूर्वेद्युरमावास्यायां वेदिं करोति' 'अप्स्ववभृथेन चरन्ति' 'बडवा दक्षिणा' इति। अत्र च कालाद्यन्यत्वं द्वेधा क्वचित् महाप्रयोगान्तःपातेऽपि प्रचारविप्रकर्षमात्रेण, क्वचित्प्रयोगबहिर्भावेनैव यथाप्रमाणं, अन्नयज्ञसौत्रामण्यादौ च दक्षिणाभेदात्कर्तृभेदो वक्ष्यते। इदं च सिद्धमेव सुहृद्भूत्वोत्तरविवक्षार्थं स्मार्यते।

---

## (२)—द्रव्यस्य कर्मकालनिष्पत्तेः प्रयोगस्सर्वार्थस्स्यात् स्वकालत्वात् ॥ २ ॥

आधानस्याग्निमात्राङ्गभूतस्य स्वतन्त्रप्रयोगविधिपरिगृहीतस्योत्तरक्रत्वनङ्गत्वाद्वस्तुतस्तत्तत्क्रतुभेदेनानावृत्तिरेव। अङ्गत्वं तु क्रत्वाचिन्तायामपि न प्रयाजादिवत् प्रतिक्रत्वावृत्तिः तद्वत्प्रयोगान्त पाताभावात् स्वतन्त्रकालकत्वाच्च। स्वतन्त्रकालकृतस्य ह्याधानस्यागृह्यमाणविशेषत्वात् सर्वार्थत्वम्। न चानन्तर्याद्विशेषः, निमित्तादिवशेन अनेकेषु क्रियमाणेषु कस्यचिदानन्तर्यस्य चावर्जनीयत्वात्। आधानसमये कस्यापि कर्मविशेषस्य नियतत्वाभावेनानुद्देशादेव सर्वोद्देशावगतेश्च। अतस्स्वतन्त्रकालकत्वादेव तन्त्रत्वम्। अत एव प्रयोगबहिर्भावेऽपि बृहस्पतिसवस्य तत्तद्वाजपेयव्यक्त्युत्तरकालत्वरूपगृह्यमाणविशेषतया प्रतिवाजपेयमावृत्तिरेव।

न चैवं षण्णां यागानां प्रत्येकं दर्शपूर्णमासपदवाच्यत्वात् पूर्णमासारम्भे दर्शारम्भे च ततः पूर्वकालक्रियमाणान्वारम्भणीयाया आवृत्तिप्रसङ्गः, कालभेदेन पृथक्प्रयोगेऽपि एक-

---

### अथ तृतीयः पादः

अङ्गानां मुख्यकालत्वात्। स्पष्टार्थम्। द्रव्यस्य कर्मकालनिष्पत्तेः। तत्तद्वाजपेयेति। बृहस्पतिसवस्य प्रकरणात् वाजपेयाङ्गत्वे सति यद्वाजपेयव्यक्त्युद्देशेन तदनुष्ठान तस्यैवोपस्थितस्य लाघवादुत्तरकालप्रतियोगित्वेनान्वयात् तदुत्तरकालविहितस्य तद्व्यक्त्यङ्गत्वेन गृह्यमाणविशेषत्वमित्यर्थः। न चैवमिति। यद्व्यक्तिकप्रयोगस्यारम्भः तदङ्गत्वात् तस्य च

**फलसाधनानां षण्णां सहैव महासङ्कल्पादारम्भैक्योपपत्तेः। स्वतन्त्रकालत्वेऽपि च** यत्र प्रमाणान्तरेण **व्यक्तिविशेषस्यैवोद्देश्यतावगमस्तत्रापि गृह्यमाणविशेषत्वादावृत्तिरित्यपि** ध्येयम्।

---

## (३)—यूपश्चाकर्मकालत्वात् ॥ ३ ॥ एकयूपं च दर्शयति ॥ ४ ॥

**ज्योतिष्टोमेऽग्नीषोमीये उपदिष्टो यूपः, सवनीयानुबन्ध्ययोस्त्वतिदिष्ट। स किं त्रयाणामपि तन्त्रं उत भेदेनेति चिन्तायां—**

**'दीक्षासु यूपं छिनत्ति' इत्यनेन विहितस्य दीक्षाकालस्य यूपच्छेदनोद्देशेन विधानादुद्देश्यस्य च प्रकृतिविकृतिसाधारण्येन ग्रहणे उपदेशातिदेशयोः क्रमिकत्वेन जुहूवत् प्राप्तिकालवैषम्यापत्तेरग्नीषोमीययूपच्छेदनस्यैव दीक्षाकालविधिः विशेषतश्चाध्वर-**कल्पान्यायेन **तस्यैवोपस्थितत्वात् तस्यैव दीक्षाकाले अपकर्ष इति तस्याग्नीषोमीयान्ते अपवर्गात् सवनीयादौ यूपान्तरकरणमिति प्राप्ते—**

दीक्षाकालत्वं **न दैक्षापूर्वप्रयुक्तं तदुपस्थापकानुष्ठानसादेश्याभावात्, अपि तु प्रकरणाज्ज्योतिष्टोमापूर्वप्रयुक्तं सत्तस्मिन् साक्षान्निवेशायोगात् तदीययूपे निविशते। तदीयत्वं च सर्वेषामविशिष्टमिति सर्वार्थत्वसिद्धिः। वस्तुतस्तु—यूपोद्देशेन विहितस्य कालस्य द्विरुक्तत्वन्यायसहकृताव्यभिचरितक्रतुसम्बन्धादेव दैक्षार्थत्वसम्भवे** वारणादि-

---

कालिकप्रयोगभेदात् बृहस्पतिसववत् अन्वारम्भणीयाया आवृत्तिप्रसङ्ग इत्याशङ्कार्थः। **यत्र प्रमाणान्तरेति।** यथा अमावास्याङ्गवेदिकरणे पूर्वेद्युः कालकत्वेपि तत्तदमावास्यापूर्वसाधनोद्देश्यत्वस्यैव विधेयपूर्वेद्युःपदार्थसामर्थ्यादवगतेः गृह्यमाणविशेषत्वात् न पूर्वेद्युः कृतवेदिकरणस्य तन्त्रत्व, अपि तु आवृत्तिरित्यर्थः।

**यूपश्चाकर्म। अध्वरकल्पान्यायेनेति। यद्यपि** अग्नीषोमीययूपस्यापि इतरयूपयोरिव दीक्षाकालत्वाप्राप्तेः अपूर्वविधित्वमेव। प्रधानकालबाधश्च त्रयाणामपि तुल्य इति **नाध्वरकल्पान्यायसम्भावनाप्यत्र तथापि** पशुधर्माणामिव यूपधर्माणामपि अग्नीषोमीयदेश एवाम्नानात् तदङ्गत्वेन अनुष्ठानसादेश्यात् निश्चित एव यूपच्छेदनादौ दीक्षाकालत्वविधानात् विशेषत उपस्थितिरिति साध्यमात्रांश एव न्यायोपन्यास इति ध्येयम्। अत एवैतदधिकरणे भाष्यकृता उक्तम्—"किं कारणं अग्नीषोमीये तावत् प्रयोगवचनेनैव गृह्यते स च उत्तरयोरपि चोदकेनैव प्राप्यत" इति। अथवा यथाऽध्वरकल्पायां प्रथमतः प्रातःकालीनहविषामेवोपस्थितिः तेन न्यायेनेत्यर्थः। **प्रकाशकारोक्तं** दूषयितुं तद्रीत्यैवादौ **सिद्धान्तमाह —दीक्षाकालत्वं हीति। वारणादिवदिति। यथा यज्ञमात्रोद्देशेनैव**

वज्ज्योतिष्टोमार्थत्वानुपपत्तेर्दैक्ष एवोपदेशेऽपि सवनीयादावतिदेशेन तत्प्राप्तिसम्भवात् काल-तन्त्रत्वादेव यूपतन्त्रत्वम्।

अवश्यं हि सर्वत्रोपदेशवादिनाऽपि कालतन्त्रत्वादेव यूपतन्त्रत्वं वाच्यं, अन्यथा एकस्मिन्नपि काले यूपत्रयापत्तेः। वायव्यादिपशौ तु परप्रयुक्तदीक्षाभावादेव काललोपः यूपच्छेदनादिकं तु 'गुणलोपेऽपि मुख्यस्य, इति न्यायात् कार्यमेव।

---

(४)----संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥ तत्कालस्तु यूपकर्मत्वात्तस्य धर्मविधानात् सर्वार्थानां च वचनादन्यकालत्वम् ॥ ६ ॥ सकृन्मानं च दर्शयति ॥ ७ ॥

यूपतन्त्रत्वे तत्संस्काराणां तक्षणजोषणप्रोक्षणादीनामपि तन्त्रत्वम्। न च दीक्षासु यूपं छिनत्ति' इत्यनेन छेदनमात्रस्यैवापकर्षविधानात् तक्षणादीनामग्नीषोमीय-काल एव करणेनानुष्ठानसादेश्यात् तन्मात्रार्थत्वप्रतीतेः गृह्यमाणविशेषत्वेन तदपवर्गे

---

विहिते वारणादौ नाधानापूर्वार्थत्वमिति नानर्थक्यतदङ्गन्यायावतारो वार्तिकमते, तथैव यूपार्थत्वेन विहितस्य दीक्षाकालस्य न ज्योतिष्टोमार्थत्वमित्यर्थः। ननु यूपस्याप्रसिद्धत्वादत्रैव यूपोत्पत्तिविधानात् कथं यूपमात्रस्योद्देश्यत्वं? अत एवोत्तराधिकरणे शास्त्रदीपिकायामुक्तम्-नायमर्थः यूपं सन्तं च्छिनत्तीति यूपस्य प्रागसिद्धत्वात्। किं तर्हि च्छेदनेन यूप कुर्यादिति, अतः तस्यैवोद्देश्यत्वाभावे कथं दैक्षयूपार्थमिति चेत्, अयमभिप्रायः--"यूपे पशुं नियुञ्जीत" इति वाक्येन यूपाधिकरणत्वविधानबलात् यो यूपोऽवगतः तस्यैवादृष्टविशेषावच्छिन्नस्योत्पत्त्यपेक्षया 'यूपं च्छिनत्ति' इति च्छेदनविधिप्रतीतेः तस्यैव च्छेदनस्याय प्रयोगविधिः प्रवर्तते। तेन यो यूपः पशुनियोजनद्वारा अपूर्वसाधनं तं दीक्षाकाले च्छेदनेन कुर्यात् इत्यर्थात् पशुनियोजनस्य दैक्षापूर्वसाधनत्वस्यैव द्वारत्वात् दैक्षापूर्वार्थत्वसिद्धरविकलेति। नन्वतिदिष्टयूपयोरपि दीक्षा-कालत्वेन तन्त्रत्वे वायव्यादिविकृतिष्वपि अतिदिष्टस्य तन्त्रत्वापत्तिरित्याशङ्कापरिहारायाह—**वायव्यपशौ त्विति। न्यायादिति।** दीक्षाकालरूपगुणलोपेपि मुख्यस्य च्छेदनादेर्नैव लोपो युक्त इति तत् तत्र भवत्येवेत्यर्थः।

---

**अपवर्गादावृत्तिरिति वाच्यं, यूपच्छेदनोद्देशे** विशिष्टोद्देशापत्तेः। **छेदनमात्रोद्देशे अतिप्रसङ्गात् यूपोद्देशेनैव कालविधिः। छिनत्तिस्तु तदुत्पादकसंस्कारमात्रोपलक्षणं,** तदुत्पादकाश्च **संस्काराः बोधायनादिकल्पपर्यालोचनया याज्ञिकप्रसिद्ध्या च यूपाहुत्याद्यङ्गकच्छेदनाद्यष्टाश्रीकरणान्ता एवाग्नेरिवाधानादय, न तु प्रोक्षणाञ्जनादयोऽपि। ते तु सम्मार्गादिवदुत्पन्ने यूपे संस्काराधायकाः।**

**तदेवंव्यवस्थायामपि ये तावदुत्पादकास्तेषां भिन्नकालत्वेनागृह्यमाणविशेषत्वादेव तन्त्रत्वं यूपवत्। ये तु प्रोक्षणादयः उत्पन्नयूपसंस्कारकास्तेषामपकर्षकवचनाभावेन दैक्षकाल एवानुष्ठेयत्वेन गृह्यमाणविशेषत्वेऽपि आतिथ्याबर्हिःप्रोक्षणन्यायेन यूपव्यक्तेरेकत्वात्तत्र कृतानां प्रोक्षणादीनां** प्रसङ्गेनोपकारकत्वोपपत्ते **तेषामपि नावृत्तिः।**

---

**संस्कारास्त्वावर्तेरन्।**

**विशिष्टोद्देशापत्तेरिति।** यद्यपि च्छेदनमात्रस्य विशिष्टोद्देशानुपपत्तेः च्छेदनस्य साकाङ्क्षस्य यूपेनान्वयस्य 'न ब्राह्मण हन्यात्' इत्यत्रेवोपपत्तेः न वाक्यभेद इति **प्रकाशकारैः** परिहृतो वाक्यभेदः, तथापि साकाङ्क्षत्वेपि कारकाणां भावनयैव सबन्धात् च्छेदनेन धात्वर्थेन सह यूपमित्यस्यानन्वयात् हविरार्त्तिन्यायेन लक्षणयैव विशिष्टोद्देश्यकत्वं वक्तव्यम्। तदपेक्षया श्रुतस्य यूपमात्रस्यैव तत्कल्पनं युक्तमित्याशयः। तथा च 'दीक्षाकाले यूपं कुर्यात्' इत्युक्ते तदुत्पादकव्यापारं विना तदनुपपत्तेः अर्थात् यूपोत्पादकव्यापारकर्तव्यता प्राप्ता दीक्षाकाले तादृशसमस्तव्यापारोपलक्षणे च्छिनत्तीत्ययमनुवाद इति सर्वेषां सस्काराणां भिन्नकालक्रियमाणानां अगृह्यमाणयूपविशेषार्थतया तन्त्रत्वमित्यर्थः। अत्र **प्रकाशकारैः** तक्षणप्रभृतीनामग्नीषोमकाल एवानुष्ठानं, तत्पूर्वतनच्छेदनमात्रस्यैव दीक्षाकालेऽपकर्षः, तेषां च्छेदनेतिकर्तव्यतात्वाभावेन तेन सहापकर्षानुपपत्तेरित्युक्तं, तद्दूषयितुमाह—**तदुत्पादकाश्चेति।** यद्यपि तक्षणादीनां न छेदनेतिकर्तव्यतात्व तथापि च्छेदनवत् यूपोत्पादकत्वादेव पूर्वमपकर्षः। अत एव भाष्ये तन्त्ररत्ने च प्रोक्षणादिसस्काराणामेव पशुतन्त्रमध्यानुष्ठानमुक्त्वा तेषामेवेह तन्त्रावृत्तिचिन्ता कृता। एतेन तक्षणादिसर्वसस्कारोपलक्षणत्वे यूपं च्छिनत्तीति च्छेदनविधौ न तावत् च्छित्तीति पदं तक्षणादिलक्षणार्थं वक्तु शक्यम्; अथ तत्र यूपं कर्तुं खदिरं च्छिनत्तीति वाक्यार्थः ततोऽपकर्षविधावपि तदनुवादके तथैवार्थः स्यात् "यद्यूपं कर्तुं च्छेदनं तद्दीक्षाकाल" इति इति किं लक्षणयेति तन्त्ररत्नकारोक्तं चोद्यमपास्तम्। यूपं च्छिनत्तीत्यत्रैव यूपं कर्तुमिति पदद्वयाध्याहारं विनैव यूपोद्देशेनैव च्छेदनविधानोपपत्त्या विहितस्य च्छेदनस्येव तक्षणादीनामपि तदुत्पादकत्वाविशेषेण तत्साधारण्येन सर्वेषामेव यूपार्थत्वेन समुच्चयेन प्राप्तानां दीक्षाकालत्वोपपत्तेः। **प्रसङ्गेनोपकारकत्वोपपत्तेरिति। अत्र प्रकाशकारैः**

पार्थसारथ्यादेस्तु **सर्वेषामेव संस्काराणां यूपपदवाच्यत्वं वदतो दीक्षाकालत्वस्याप्याप्त्तेर्याज्ञिकाचारविरोधस्स्वलेखनविरोधश्च। अथैतदस्वरसेनैव लक्षणानभ्युपगमेन**

---

आतिथ्याबर्हिःप्रोक्षणन्यायेन संस्काराणां न पुनरनुष्ठानमिति **तन्त्ररत्नोक्तौ** प्रसङ्गसिद्धिभ्रमनिराकरणाय पतितेनानेनातिथ्याबर्हिःसंस्कारदृष्टान्तेनेहापि प्रसङ्ग उक्तस्तन्त्ररत्ने, तथात्वे तन्त्राधिकारसगत्यनापत्तेः। तत्राग्नीषोमीयकालकृता एव संस्काराः तन्त्रेण सर्वेषामुपकुर्वन्तीति **तन्त्ररत्न** ग्रन्थस्य प्रोक्षणादिविषयतन्त्रावापचिन्तापरैतदधिकरणभाष्यग्रन्थस्य च विरोधापत्तेश्च। अतो दीक्षाकाललक्षणेन यूपकर्मकभावनाया उपक्रममात्रमुक्तं न तक्षणानुष्ठानमात्रं यथोपक्रमं च समापनं तत्र तत्रोक्तम्। अन्यथोपक्रमेऽन्यथा समापने त्वध्वरकल्पायामपि पूर्वपक्षे प्रातरादिकालत्रयगतानां कर्मणां तन्त्रत्वं न सिद्ध्येत्, त्रयाणामपि निर्वापान्तस्यापकर्षेऽपि। आतिथ्यादिषु तु बर्हिस्साधारण्ये वाचनिकेऽपि न तन्त्रेणोपक्रमो वाचनिकः इति विशेषः। तस्मात्तन्त्ररत्ने आतिथ्याबर्हिः संस्कारस्य दृष्टान्तत्वेनोपादानेऽपि नात्र प्रसङ्गः किं तु तन्त्रमेवेति; तदयुक्तं, यथोपक्रमं च समापमिति न्यायमात्रेणान्तिमस्य यजमानकर्तृकयूपोपस्थानानुमंत्रणस्य तन्त्रत्वसिद्धावपि मध्यतनेषु गृह्यमाणविशेषतयाऽनुष्ठीयमानेषु तन्त्रत्वे प्रमाणाभावात्। अन्यथा द्वादशाहे अग्नीषोमीयादीनां तन्त्रेणोपक्रमात् सुत्याकालीनानामपि सवनीयानां तन्त्रत्वापत्तेः। अत एवाध्वरकल्पायामपि पूर्वपक्षे न प्रयाजादीनां तन्त्रता, अपि तु निर्वापान्तमात्रस्यैव। किञ्च यद्यातिथ्याबर्हिषः साधारण्यं यूपवदवगतं तदा तदीयसंस्काराणां तदवगतमेवेति किं वाचनिकत्वाभावमात्रेण स्यात्। अन्यथा प्राकृतावप्युपक्रमस्य वाचनिकत्वाभावात् तन्त्रत्वानापत्तेः। अतो येषां न्यायेनापि तन्त्रत्वं प्रसक्तं तस्यापि प्रयोगविधितात्पर्यविषयत्वात् वाचनिकत्वमेवेति आतिथ्याबर्हिः संस्कारेष्वपि प्रसक्तं तन्त्रत्वं गृह्यमाणविशेषतयैव परिहर्तव्यमिति **इहापि** न प्रोक्षणादिषु तन्त्रत्वमपि तु प्रसङ्ग एव; भाष्यतन्त्ररत्नादिषु तन्त्रत्वव्यवहारस्त्वावृत्त्यभावफलतया नेय इति भावः। अत एव **शास्त्रदीपिकायामेक**यूपद्वारकत्वमेवाग्नीषोमीयकालानुष्ठेयसंस्काराणामनावृत्तौ हेतूकृतम्, **तन्त्ररत्ने**ऽपि द्वादशे आतिथ्याबर्हिः संस्काराणां प्रसङ्गोपपादनान्ते अय च न्यायः कथित एव, एकादशे यूपधर्माणामग्नीषोमीयकालकृतानामपि सवनीयानूबन्ध्ययोरप्युपकारकत्वाभिधानात्। किमर्थं तर्हीदमधिकरणं? यो नाम दीक्षाकालत्वाद्यूपधर्माणामगृह्यमाणविशेषत्वात्तन्त्रतां मन्यते तस्य बुद्धिं व्यावर्तयितुं इदमुच्यते, एकप्रयोगावसरेऽपि क्रियमाणास्साधारणा द्रव्यविषयास्संस्कारास्सर्वेषामप्युपकुर्वन्तीति ग्रन्थेन स्पष्टं प्रसङ्ग एवोपपादितः। एव सत्यपि यथा पक्षान्तरेण तन्त्रत्वसिद्धिस्तथा तत्रैव पूज्यपादैर्वक्ष्यते। एवमुत्पादक-

छेदनमात्रापकर्ष इति पक्षान्तराभ्युपगमः, ततो विशिष्टोद्देशाद्यापत्तिर्दुरुद्धरैव। न च तत्परिहारार्थं 'यूपं कर्तुं खदिरं छिनत्ति, इति पदद्वयाध्याहारः, तदपेक्षया लक्षणाया लघुत्वात् ॥

---

## (५)–स्वरुस्तन्त्रापवर्गस्स्यादस्वकालत्वात् ॥ साधारणे वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥ न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥ ११ ॥

यूपवत्स्वरुरपि सर्वपशूनामर्थे तन्त्रेणैव। न च तदुपादाने दीक्षाकालस्यानुक्तत्वा-दैक्षानुष्ठानकाले उपात्तस्य च गृह्यमणाविशेषत्वेन तदपवर्गे अपवर्गाद्भेद इति वाच्यं, उपादानकालानुक्तावपि 'यः प्रथमश्शकलः परापतेत् स स्वरुः, इति वचनेन प्रथमशकल-स्यैव स्वरुत्वात् तस्य चैकत्वेन भेदानुपपत्ते। न चैकस्मिन् प्रहरणे यः प्रथमः इति व्याख्यानेन प्रथमशकलानामपि नानात्वोपपत्तिरिति वाच्यं, प्रहरणस्यानुपात्तत्वेन शकलान्तरापेक्षयैव प्राथम्यप्रतीतेस्तदेकत्वेनैकत्वोपपत्तेः ॥

किञ्च—यूपच्छेदनकाल एव व्यामोहनिवृत्त्यर्थं नाशापहारनिवृत्त्यर्थं च स्वरोरुपादानं कर्तव्यमित्यगृह्यमाणविशेषत्वादपि तन्त्रं स्वरुः। अत एव 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुं च' इति अन्ते प्रतिपत्तिविधानमपि सङ्गच्छते। न चायमनुबन्ध्याङ्गभूतस्य कालविधिः न्यायेन स्वरुतन्त्रत्वावगतौ सङ्कोचे प्रमाणाभावात्। अत एव यत्र न्यायेनैव भेदावगतिः यथा प्रस्तरे तत्र संङ्कोच इष्ट एव।

---

सस्कारमात्राणामपकर्षेण तन्त्रत्वं तदुत्तरभाविनामग्नीषोमीयकालानुष्ठेयानां च प्रसङ्गं स्वमते उप-पाद्य पार्थसारथिमते अनिष्टापत्तिं दर्शयति—**पार्थसारथेरिति**—**स्वलिखनेति**—**एतदधिकरणान्ते** स्वयमेव कतिपयसस्काराणामग्नीषोमीयकालानुष्ठेयत्वमुक्तं तेन विरोध इत्यर्थः—**विशिष्टोद्देशाद्या-पत्तिरिति**—आदिपदेन विशिष्टोद्देश्यतानुपपत्तिपरिहारार्थं यो लक्षणाभ्युपगमः स संगृह्यते। व्याख्यातपूर्वमन्यत्।

---

**स्वरुस्तंत्रापवर्गः स्यात्।**

निगदव्याख्यातमधिकरणं।

---

(६)—अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्ते प्रथमे वाऽहनि विकल्पस्स्यात् ॥ १२ ॥ पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमस्स्यात् प्रातस्सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १३ ॥ शिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥

ज्योतिष्टोमे कण्डूयने विनियुक्तायाः कृष्णविषाणायाः नीतासु दक्षिणासु चात्वालप्रासनरूपा प्रतिपत्तिश्श्रुता। सा अहर्गणे प्राप्ता अहीने दक्षिणादानस्य प्रात्यहिकत्वात सत्रेऽपि तदुपलक्षितकालस्य तथात्वात् प्रत्यहं प्राप्ताऽपि कृष्णविषाणाया एकत्वात् यस्मिन् कस्मिंश्चिद्दिने कार्येति प्राप्ते—

अन्त्येऽहन्येव स्यात्, अन्यथा तदुत्तराहर्वर्तिदक्षिणादानकालप्राग्वर्तिपदार्थानां कृष्णविषाणाकण्डूयनरूपधर्मबाधापत्तेः। न च तत्रापि पूर्वाहर्वर्तिदक्षिणादानोत्तरभाविपदार्थेषु

---

**अहर्गणे।**

**प्रात्यहिकत्वादिति।** "अन्वहं द्वादशशतानि ददाति" इति दक्षिणादानस्याहीने प्रत्यहं विधानादित्यर्थः। न केवलमयं विचारो दक्षिणादानस्य प्रात्यहिकत्वादहीनेष्वेव, किन्तु तदभावे सत्रेऽपीत्याह—**सत्रेऽपीति। तथात्वादिति।** सत्रे यजमानानामेवार्त्विज्यविधानात् दक्षिणाऽभावेपि तदुपलक्षितकालस्य प्रात्यहिकत्वादित्यर्थः। **कृष्णविषाणाया एकत्वादिति।** यद्यपि "कृष्णविषाणया कण्डूयत" इत्यत्र कृष्णविषाणायास्तृतीयया गुणत्वावगतेः कण्डूयनप्रयोजकत्वात् द्वितीयाद्यहःसु प्रयोजकसत्वे तदाक्षेपावश्यम्भावे कथं कृष्णविषाणाया एकत्वं सभवति येन प्रासनाऽऽवृत्तिर्न स्यात्, तथापि "कृष्णविषाणया दीक्षयति" इति वाक्यान्तरेणैव दीक्षार्थत्वेनोक्ता कृष्णविषाणा, तयैव दीक्षाप्रयुक्तया यजमानधृतया कण्डूयनसंभवे कण्डूयनस्यातिरिक्तप्रयोजकत्वकल्पने मानाभावात्। तस्याश्च प्रथमेहनि प्रासने कृते कण्डूयनार्थं तस्या अभावेन एकत्वे नानुपपत्तिः। न च कण्डूयनप्रयुक्ताया एव दीक्षार्थत्वमिति विपरीतमिति वाच्यम्; तथात्वेऽध्वर्युकर्तृककृष्णविषाणादानस्यादृष्टान्तरकल्पकत्वापत्तेः। मम तु क्लृप्त एव दण्डादिसाधारणादृष्टे कृष्णविषाणामात्रजन्यत्वकल्पनालाघवमिति भावः। **यस्मिन् कस्मिंश्चिदिति।** कृष्णविषाणाया एकत्वादेकस्मिन्नहनि कर्तव्या चेत् विकल्पेन यस्मिन् कस्मिंश्चिद्दिने कार्येत्यर्थः। **अन्यथोत्तराहर्वृत्तीति।** यस्मिन् दिने प्रतिपत्तिः कृता तदुत्तरमहः उत्तराहश्शब्देनोच्यते। **कण्डूयनरूपधर्मबाधापत्तेरिति-**

**पाणिकण्डूयनरूपधर्मबाधापत्तिः, कृष्णाविषाणासत्त्वे पाणिकण्डूयने** तस्या **अदृष्टार्थत्वापत्तेरिति वाच्यं,** कण्डूयनस्य **तत्र पाणेर्वा रागत. प्राप्तत्वेन तत्र विध्यभावात्।**

**वस्तुतस्तु-अवयवशः प्रत्यहं दानेऽपि क्रतुदक्षिणाया अन्त एव समाप्तेस्तदुत्तरकालीनस्य प्रासनस्य प्राप्तेर्नानियमप्रसक्तिः।** द्वितीयादिदिनेषु **कृष्णाविषाणाकण्डूयनस्यावृत्तेरध्यायोपयोगिता।**

---

(७)—वाग्विसर्गे हविष्कृता बीजभेदे तथा स्यात् ॥ १५ ॥ यथाऽऽह्वानमपीति चेत् ॥ १६ ॥

---

यद्यपि कण्डूयनं रागतः प्राप्तमत्र न विधेयं तथापि तस्मिन्नेव कृष्णविषाणानियमविधानात् विशिष्टकण्डूयनस्य कर्तृसंस्कारकत्वात् कृष्णविषाणाकृतकण्डूयनसंस्कृतयजमानकर्तृकत्वरूपधर्मबाधापत्तेरित्यर्थः। न च तवापि कृष्णविषाणासत्वे पाणिकण्डूयनबाधापत्तिरित्यत आह-**तस्या इति**-कृष्णविषाणासत्वे यदि पाणिनैव कण्डूयनं तदा कृष्णविषाणायाः अदृष्टद्वारा करणत्वापत्तेः, तत्सत्वे पाणिकण्डूयनस्यानङ्गत्वात् बाधेऽपि न क्षतिः। तदभावे तु तस्याङ्गत्वात्तद्बाधे क्षतिरेव स्यादित्यर्थः। कृष्णविषाणाया असत्वेपि न पाणिकण्डूयनस्याङ्गत्वमित्याह— **कण्डूयनस्येति**। अत्र च पूर्वपक्षे आवृत्तिप्रसक्तेः सिद्धान्ते च प्रासनतन्त्रत्वस्य कृष्णविषाणैकत्वादेव सिद्धेः आवृत्तिनिराकरणपूर्वकतन्त्रत्वसाधनात् कथमध्यायसङ्गतिरित्याशङ्कां निराकर्तुमाह—**द्वितीयादिदिनेष्विति**। यद्यपि पूर्वपक्षेऽपि तन्त्रत्वं समानं, तथापि पूर्वपक्षे यस्मिन् दिने शंसनं तदुत्तरदिनेषु न पुनः कृष्णविषाणाकण्डूयनं प्राप्नोति सिद्धान्ते त्वन्ते प्रासनात्तेषु तदावर्तत इति आवृत्तिरूपप्रयोजनलाभात् तन्त्रावापसङ्गतिः। नहि साक्षादेव यत् सिद्धान्तकोटिविरुद्धं तदेव पूर्वपक्षे अपेक्षितमिति नियमोऽस्ति, फलभेदेनापि तद्विरोधोपन्यासस्सम्भवात्। तथात्वेऽपि वा पूर्वपक्षे प्रथमेऽहनि प्रासनपक्षे तन्त्रम्, सिद्धान्ते तु नियतं तन्त्रमिति पाक्षिकतन्त्राभावनियततन्त्रतयाऽपि विरोधसम्भवोऽस्त्येवेति नानुपपत्तिरिति भावः।

---

**दर्शपूर्णमासयोः प्रणीताप्रणयनोत्तरं विहितस्य वाग्यमस्य 'हविष्कृता वाचं विसृजति' इति वचनेन** हविष्कृदाह्वानकाले **विसर्गः श्रुतः। नानाबीजेषु च** व्रीहिश्यामाकादिरूपेषु **एकप्रयोगवर्तिनानायागसाधनेषु** कृष्णाजिनास्तरणादिफलीकरणान्तानामनुसमयस्य **स्थापितत्वात् हविष्कृदाह्वानकालप्राग्भाविकृष्णाजिनास्तरणादीनां वाग्यमाङ्गत्वात्तदनुरोधेनान्त्यप्राप्त्यन्त** एव वाग्विसर्गः। न चेह **वाग्विसर्गस्य विहितत्वात् हविष्कृदाह्वानोत्तरभाविपूर्वबीजसम्बन्धिपदार्थानां वाग्विसर्गाङ्गकत्वप्रतीतेरन्ते तत्करणे तत्र तद्बाधापत्तिः, वाग्विसर्गस्य विहितत्वेऽप्यारादुपकारकत्वेन विधेयत्वापत्तेस्तस्योत्तरपदार्थाङ्गत्वे प्रमाणाभावात्।**

---

## वाग्विसर्गो हविष्कृता।

**हविष्कृदाह्वानकाल इति।** स चाध्वर्युकर्तृकमुसलादानोत्तरकालः। **व्रीहिश्यामाकादिरूपेष्विति।** यथा राजसूये अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति सोमाय वनस्पतये श्यामाकं चरुं इत्यादिना नानाद्रव्यसाधनकेष्टौ नाना बीजानि व्रीहिश्यामाकादिरूपाणि विहितानि तेष्वित्यर्थः। तत्र पूर्वाधिकरणवदेव सिद्धान्तमाह— **अन्त एवेति।** यदि प्रकृतौ कृष्णाजिनास्तरणोलूखलाधिवर्तनबीजावापावघातपरावपनविवेचनफलीकरणन्तानां पृथक् पदार्थत्वं भवेत् तदा नानाबीजेषु तत्तदवघातरूपपदार्थसिद्ध्यर्थं पृथगेवोलूखलमापद्येत तदा नानोलूखलेषु सर्वेषु सर्वबीजावपनेषु कृतेषु सकृन्मुसलादानं ततो हविष्कृदाह्वानम्। तथा चाध्वर्युणा मुसलमादाय क्रमेण हविषामवघाताः कर्तव्याः, तत्रान्त्ये बीजे पृथङ्मुसलादानाभावात्, मुसलादानोत्तरकालस्य वाग्विसर्गेऽसम्भवात्, अन्ते वाग्विसर्ग इति सिद्धान्तकोटिर्न सम्भवेत्। अत उक्तं **फलीकरणान्तानुसमयस्य स्थापितत्वादिति।** फलीकरणान्तस्यैकपदार्थत्वे त्वेकस्मिन् बीजे फलीकरणन्तेऽनुष्ठिते, द्वितीयबीजावघातार्थे तस्यैवोलूखलस्य ग्रहणोपपत्तेः, तदेकत्वे सति एकबीजावपने कृते मुसलादाने चाहूतया हविष्कृताऽध्वर्युर्मुसलमादाय पूर्वैकबीजावघाते फलीकरणपर्यन्ते कृते पुनरध्वर्योर्मुसलादानमस्तीत्यन्त्येऽपि बीजे तत्सत्वात् तदूर्ध्वकाले वाग्विसर्ग इति सिद्धान्तकोटिरपरा सिद्ध्यति। अतः कृष्णाजिनास्तरणादिफलीकरणान्तानुसमयस्य पंचमे साधितस्य यत् फलमुलूखलैकत्वं तेनात्रत्यविचारः सम्भवतीति भावः। यद्यपि हविष्कृदाह्वानपूर्वभाविनौ द्वावेव कृष्णाजिनास्तरणबीजावापरूपौ पदार्थौ, तथापि मुसलादानमादाय कृष्णाजिनास्तरणादीनामित्युक्तम्। विशेषाशङ्कामनूद्य परिहरति—**न चेति।** पूर्वं पाणिकण्डूयनस्याविहितत्वात् दक्षिणादानोर्ध्वकालीनपदार्थेषु तद्बाधेऽपि क्षतिर्नासीदिहतु वाग्विसर्गस्य विहितत्वात् तदन्तबाधानुरोधेनाद्यहविष्कृदाह्वानकाल एव वाग्विसर्गोऽस्त्विति अधिकाशङ्कया अधिकरणा-

वस्तुतस्तु—नात्र वाग्विसर्गविधिः रागतः प्राप्तत्वात्, अपि तु वाग्यमापेक्षितकालविधिसमर्पणमेवेत्युक्तम् ॥

न च तथाऽपि सकृदाहूताया एव तस्या आ पत्नीसंयाजान्तं हविष्करणार्थमवस्थानेन सर्वावघातकरणोपपत्तेराद्यबीजावघातसमय एव हविष्कृदाह्वानात् तदैव वाग्विसर्गापत्तिरिति वाच्यं, आह्वानस्य सकृत्करणेऽपि तदुपलक्षितस्य मुसलादानकालस्यान्त्यबीजावघातसमयेऽपि सत्त्वात् तदवधिकवाग्यमोपपत्तेः। आ पत्नीसंयाजान्तं जघनेन गार्हपत्यमवस्थिताया अपि तस्या उत्करदेशे अवघातार्थं पुनः पुनराह्वानोपपत्तेश्च। वक्ष्यते चात एवाग्रे प्रतिसवनं सवनीयेषु हविष्कृदाह्वानभेदः। अतो वाग्यमानुकूलप्रयत्नावृत्तिरिति सिद्धम् ॥

---

न्तरारंभ इति भावः। इत्युक्तमिति। नवम इति शेषः। वक्ष्यते चेति। इहैवाध्यायान्त्याधिकरण इति शेषः। अत्र प्रकाशकारैः पूर्वपक्षे वाग्विसर्गस्याङ्गत्वेऽपि अतन्त्रत्वात् सिद्धान्ते त्वङ्गत्वस्यैवाभावात् तत्तन्त्रत्वानुपपत्तेः असङ्गतिशङ्कापरिहारायोक्तं वाग्यमस्वीकाररूपमङ्गं द्वितीयादिहविरावपनादिस्वप्रधानभिन्नकालं तन्त्रं सिद्धान्ते, पूर्वपक्षे तु नेत्येवं पादसंगतिरिति, तद्यद्धविष्कृदाह्वान तत् पूर्वकालीनपदार्थाङ्गमेव वाग्यम इति गृह्यमाणविशेषतया प्रसङ्गेनोपकारकत्वेऽपि तन्त्रत्वस्यैवमप्यनुपपत्तेरयुक्तमित्यभिप्रेत्य स्वयमन्यथा सगतिं सूचयितुमाह—अत इति। प्रसङ्गेनोपकारकत्वेनाध्यायसङ्गत्यसंभवेऽपि वाग्यमानुकूलप्रयत्नावृत्तेस्सिद्धान्ते वाग्यमसंरक्षणार्थमावश्यकत्वात् आवृत्तिफलकत्वात सङ्गत्युपपत्तिरिति भावः। एतावान् विशेषः—पूर्वपक्षे एकबीजावापे वाग्विसर्गे सति पुनः द्वितीयबीजावापादिकालेनैव प्रणीताप्रणयनकालाभावात् वाग्यमः, सिद्धान्ते तु मध्ये नैव वाग्विसर्गः किन्त्वन्त इति पूर्वकृतस्यैव तस्यांते सत्वे तत्संरक्षणानुकूलव्यापारावृत्तिरिति। वस्तुतस्तु प्रथमे वाग्विसर्गे कृतेऽपि द्वितीयबीजावापादिपदार्थाङ्गत्वेन वायव्ये पशौ दीक्षाकालाभावेऽपि यूपछेदनादीनामिव प्रणीताप्रणयनपूर्वकालाभावेऽपि वाग्यमस्याऽऽवृत्तिः प्रसज्यत एव। अत एव तेषां वाग्यमाङ्गकत्वानुरोधेनान्ते वाग्विसर्ग इति सिद्धान्तकरणमप्यनुपपन्नम्। एवं च पूर्वपक्षे वाग्यमावृत्तेः सिद्धान्ते च तदभावमात्रेणापि सुलभैव सङ्गतिरिति वाग्यमानुकूलप्रयत्नावृत्तिपर्यन्तानुधावनं व्यर्थमेव। उपपादयिष्यते चैतदुत्तराधिकरणे।

---

## (८)—पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १७ ॥

पशावग्नीषोमीये पशुपुरोडाशश्श्रुतः। पशौ च प्रणीताप्रणयनहविष्कृदाह्वानयोरभावेऽपि तदुपलक्षितकालावधिकत्वस्य च सम्भवेन कथञ्चिदसम्भवेऽपि वा वाग्यमस्य प्रकृतौ विशिष्य तत्तत्पदार्थधर्मत्वात् कतिपयतद्धर्माणां च पशौ सत्त्वेन तद्धर्मवाग्यमोपपत्तिः। अस्ति च पृष्ठ्यास्तरणादिवत् यज्ञयोगादिपदार्थजातं प्रणीताप्रणयनहविष्कृदाह्वानमध्यपाति साान्नाय्याङ्गमपि प्रकृतौ। अतश्च तस्य पशावप्यतिदेशात् युक्त एव तदङ्गवाग्यमातिदेशः। न हि प्रकृतौ तस्य हविष्कृदाह्वानमध्यवर्तित्वेनोद्देश्यता, येन पशौ हविष्कृदाह्वानाभावाद्वाग्यमातिदेशो न भवेत्। तत्त्वेनैव तूद्देश्यत्वात् तदतिदेशो निर्बाधः। तेन पशौ हविष्कृदाह्वानकृत्वाचिन्तोक्तिर्मूले मुधैव।

अतश्च पाशुकवाग्यमेनैव प्रयाजादिवत्कार्यसिद्धे पशुपुरोडाशे न पृथक् वाग्यमानुष्ठानम्। यदि तु प्रसङ्गविधया पूर्वपक्षकरणे अध्यायासङ्गतिरित्याशङ्क्येत, ततोऽस्तु पशुपुरोडाशे तन्त्रित्वकृत्वाचिन्तयाऽयं विचारः। सर्वथा न वाग्यमस्य पृथगनुष्ठानमिति प्राप्ते—

---

### पशौ च पुरोडाशेसमानतन्त्रं भवेत्।

पशाविति। प्रकृतौ प्रणीताप्रणयनस्य संयवनार्थत्वात् हविष्कृदाह्वानस्य चावघातार्थत्वात् पशौ तदभावे प्रणीताप्रणयनार्थस्य वाग्यमस्य प्राप्तिरेव नास्तीति कथं पाशुकेनैव वाग्यमेन सिद्धेः न पशुपुरोडाशार्थं पृथग्वाग्यमानुष्ठानमिति पूर्वपक्ष इत्यर्थः। तदुपलक्षितकालेति "प्रणीताः प्रणेष्यन्" इत्यादिवाक्यैः न प्रणीताप्रणयनार्थत्वं बोध्यते, किन्तु वाग्यमस्य पूर्वोत्तरकालावधिसमर्पणमात्रम्। तथाच प्रणीताप्रणयनोपलक्षितपवित्रकरणोर्ध्वकालो वाग्यमस्य पूर्वावधिः हविष्कृदाह्वानोपलक्षितो मुसलादानोर्ध्वकाल उत्तरावधिरिति सिद्धे उपलक्षणापायेपि तदुपलक्षितकालसत्वात् पशावपि सम्भवत्येव वाग्यम इति युक्तः पूर्वपक्ष इति भावः। ननु कालमात्रसत्त्वेऽपि प्रणीताप्रणयन हविष्कृदाह्वानमध्यवर्तिपदार्थाङ्गत्वात् वाग्यमस्य पशौ तदभावे कथं प्राप्तिसंभावनेत्यत आह—**कथञ्चिदिति**। **पृष्ठ्यास्तरणादीति**। पृष्ठ्यास्तरणमुलपराजिस्तरणं, आदिपदेन च पात्राभिमर्शननिर्वापोपसादनप्रोक्षणादयो गृह्यन्ते। पृष्ठ्यास्तरणस्य प्रणीताप्रणयनपूर्वभावित्वात् पृष्ठ्यास्तरणादीत्यतद्गुणसंविज्ञानो बहुव्रीहिः। **मूले इति**। भाष्यादावित्यर्थः। **यदि त्विति**। पूर्वपक्षे प्रसङ्गतः सिद्धान्ते च तदभावात् प्रसङ्गतदभावचिन्तया तन्त्रावापयोरचिन्तनात् पादाध्यायासङ्गतिरित्यर्थः। **तन्त्रित्वमिति**। तदा च पशुपुरोडाशस्यापि तन्त्रित्वात् पूर्वपशौ कृतस्य वाग्यमस्य तन्त्रेणैवानुष्ठानात् न पुनः पशुपुरोडाशीय-

मनःप्रणिधानद्वारा वाग्यमस्य दृष्टोपकारकत्वे सम्भवति प्रयाजादिवदारादुपकारकत्वस्यान्याय्यत्वात् पूर्वसङ्गातमनः प्रणिधानस्य च वाग्विसर्गोत्तरक्रियमाणपौरोडाशिकतत्पदार्थेष्वनुपयोगात् न तन्त्रं प्रसङ्गो वा।

---

(९)—अङ्गप्रधानार्थो योगस्सर्वापवर्गे च विमोकस्स्यात् ॥ १८ ॥ प्रधानापवर्गे वा तदर्थत्वात् ॥ १९ ॥ अवभृथे च तद्वत्

---

पदार्थाङ्गत्वेन तस्यावृत्तिरिति पूर्वपक्षः। सिद्धान्ते तु तन्त्रासभवात् आवृत्तिरिति तन्त्रावापचिन्तया अध्यायसङ्गतिरुपपन्नेति भावः। वस्तुतस्त्वस्मिन् पक्षे पशुसबन्धिहविष्कृदाह्वानकाले विसर्गेण नष्टस्य वाग्यमस्य पूर्वपक्षेऽप्यावृत्तिः प्रसज्येतैव। अत एव सर्वथा न वाग्यमस्य पृथगनुष्ठानमिति पूर्वपक्षोपसहारग्रन्थोप्ययुक्तः प्रसङ्गपक्षेपि पुनरावृत्तेः पूर्वोक्तरीत्या अनिवारणात्। अतोऽत्र वाग्यमस्यारादुपकारकत्वेनैव तन्त्रं प्रसज्येनैवेति पूर्वपक्षः। तथाच सति सकृत्कृतेनैव वाग्यमेन पशुपुरोडाशीयपदार्थेषूपकारसिद्धेर्मध्ये विसर्गेपि तदुपकारस्यान्तं सत्वात् पूर्वपक्षे तदनावृत्तिः सिद्धान्ते तु न सेति द्रष्टव्यम्। तदेतत्पूर्वक्षे प्रयाजादिवदिति दृष्टान्तोपादानात् सिद्धान्ते चारादुपकारकत्वखण्डनात् स्पष्टम्। सिद्धान्तग्रन्थः स्पष्टार्थः। परन्त्वेतत्सिद्धान्तरीत्या पूर्वाधिकरणपूर्वपक्षेपि द्वितीयबीजावापकाले वाग्यमस्यावृत्तिः प्राप्नोत्येवेति तदीयवाग्यमाङ्गकत्वरूपधर्मबाधापादन पूर्वपक्षे प्राचां पूज्यपादानां च कथमिव युक्तमिति न प्रतीमः। यदि तु पूर्वाधिकरणपूर्वपक्षेऽपि आरादुपकारकत्वाङ्गीकारेणैव कर्तव्यस्तदाच प्रणीताप्रणयनकाले सर्वबीजार्थे तन्त्रेणानुष्ठितस्यादृष्टविधयोपकारकत्वात् न मध्ये आवृत्तिः। अत एव पूर्वाधिकरणे आरादुपकारकत्वं न खण्डितमिति। अत एव एतदधिकरणपूर्वपक्षोत्थाने सति तत्त्वखण्डनेन सिद्धान्तकरणमत्रेति सर्वं समञ्जसमित्युच्येत, तथापि द्वितीयबीजसबन्धिना प्रणीताप्रणयन—हविष्कृदाह्वानमध्यवर्तिनां पदार्थानां वाग्यमरूपधर्मबाधापादनमसङ्गतमेव तस्यादृष्टविधयोपकारकत्वेन बाध्यस्य पूर्वपक्षे अप्रसक्तेः। अतस्सिद्धान्त्यापादितधर्मबाधान्यथानुपपत्त्या पूर्वपक्षेऽपीष्टं दृष्टविधयैव तस्य तत्तत्पदार्थाङ्गत्वमिति तद्बाधापादनं युक्त, नह्येतदापादनं सभवति वाग्यमावृत्तेः पूर्वपक्षेऽपि सूपपादत्वात्। अत एव याज्ञिकाः प्रतिबीज वाग्यमवाग्विसर्गावनुतिष्ठन्त्येवेति दिक्।

---

प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ २० ॥ अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् ॥ २१ ॥

अग्नौ—अग्निं युनज्मि शवसा घृतेनेति जुहोति, अग्निमेवैतेन युनक्ति' इत्यग्नियोगश्श्रुतः। स चायं होमो नारादुपकारकतया चयनमात्राङ्गं, अग्निमिति द्वितीयया तत्संस्कारकत्वावगमात्। अत एव चयनमात्राङ्गतानिषेधानुवाद एवकारः। अग्नेश्चोपयोगापेक्षायां ज्योतिष्टोमाङ्गत्वेन विनियोगात् तदर्थत्वमपि तस्येत्यविवादं, अग्नेस्साङ्गप्रधानार्थत्वात् तदर्थं वं प्रधानमात्रार्थत्वं वेति परं चिन्तायां—

भाष्यकारेण तावदग्नेस्सर्वार्थत्वात् साङ्गप्रधानार्थोऽग्नियोगो वेदिबर्हिर्धर्मन्यायेन। अतश्च 'इमं स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णां स्रुचं जुहोत्येष वा अग्नेर्विमोकः' इति विहितोऽग्निविमोकस्सर्वान्त एव कार्यः। अत्र अग्निनिष्ठस्य योगजन्यस्यादृष्टस्य स्वान्तिमकार्यनाश्यत्वेन प्रसक्तस्यैवैतद्धोमनाश्यत्वमर्थवादवशादवगम्यते। अतस्स्वान्तिमकार्यान्त एवाग्नेर्विमोक इति पूर्वपक्षिते—

'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः' इति वाक्यशेषेण यज्ञार्थत्वावगमात् 'दक्षिणा सोमस्य' इतिवत्सर्वार्थत्वबाधेन प्रधानमात्रार्थत्वावगमात् प्रधानान्त एव विमोक इति सिद्धान्तितम्। एवञ्च सौमिकमपि वरणं 'यद्वृतो वषट्कुर्यात् भ्रातृव्यमेव यज्ञस्याशीर्गच्छेत्' इति यज्ञसंयोगादग्नियोगतुल्यन्यायतया केवलप्रधानार्थं भवति, ततश्च सोमाङ्गभूतेऽवभृथेऽतिदेशप्राप्तं होतृवरणं 'न होतारं वृणीते' इत्यनेन पर्युदस्यते। सौमिकस्य वरणस्याङ्गप्रधानार्थत्वे तु औपदेशिकेनातिदेशिकस्य बाधेनैवाप्राप्तत्वात्पर्युदासानुपपत्तिः। यद्यपि चावभृथोऽपूर्वः, तथाऽप्याज्यभागाद्यर्थतया प्रसक्तस्य होतृवरणस्य पर्युदासो नैवानुपपन्नः।

---

**अङ्गप्रधानार्थो योगः।** प्रायः स्पष्टार्थं क्वचिदेव व्याख्यायते। **अग्निसंयोगश्श्रुत इति।** यद्यपि शाखान्तरे अग्निसयोगनामकं अग्निं युनज्मीति त्रिभिर्यज्ञायज्ञीयस्तोत्रीयर्ग्द्वयेनेत्येव पंचभिर्मन्त्रैः प्रातः सवने क्रियमाणमग्नेरभिमर्शनं श्रुतं, तथापि तु जुहोतीति भाष्यकारलिखनात् तन्नामको होमः श्रुत इत्यर्थः। यावदग्निसंस्कारकत्वमस्य होमस्य न साधितं, तावदग्नेः साङ्गप्रधानार्थत्वात् तद्द्वारा साङ्गप्रधानार्थत्वमिति पूर्वपक्षस्सिद्धान्तो वा नोत्तिष्ठतीत्यतोऽग्निसंस्कारार्थत्वं साधयति—**सचायमिति। स्वान्तिमकार्यान्त इति।** स्वान्तिमकार्यान्ते वचनात् अनूबन्ध्यावपाहोमान्ते उत्तमेहनि योगाख्यपूर्वाहुतिजन्यसंस्कारापवर्गार्थत्वात् विमोकाख्योऽयं नाशको होमः कार्य इत्यर्थः पंचभिर्मन्त्रैः। **अपूर्वोऽवभृथ इति।** अपूर्वत्वं चाज्यभागपुनः-

तथा द्वादशाहे—'अहरहर्युनक्ति अहरहर्विमुञ्चति' इति प्रात्यहिकयोगदर्शनं प्रधानमात्रार्थत्वे न ह्येदेन भेदोपपत्तेरुपपन्नं, इतरथा सर्वाग्न्तयोस्सकृदेवाग्नियोगविमोकयोः प्राप्तयापत्तेरिति सिद्धान्तितम्।

वार्तिककारेण तु भाष्यकारोक्तयुक्त्यैव प्रधानमात्रार्थत्वमग्नियोगस्य पूर्वपक्षीकृत्य साङ्गप्रधानार्थत्वसिद्धान्त एव सूत्राणि व्याख्यातानि। तस्यायमभिप्रायः—योगस्योत्पत्तिवाक्य एव द्वितीयामन्त्रवर्णाभ्यामग्निसंस्कारार्थत्वावगतेर्न गुणवाक्यस्थार्थवादगतयज्ञपदश्रवणमात्रेण यज्ञार्थत्वं कल्पयितुं युक्तम्। न हि 'दक्षिणा सोमस्य' इतिवदस्यानन्यशेषता, येन बलात्प्रधानमात्रार्थता कल्प्येत। अस्तु वा यज्ञमात्रार्थत्वं, तथाऽपि यज्ञशब्दस्य 'सर्वस्मै वा एतद्यज्ञाय गृह्यते' इत्यादौ आज्यभागयोरपि प्रयोगात् प्रधानमात्रार्थता दुर्घटैव।

एतेन—'स एष यज्ञः पञ्चविधः' इत्यादौ यज्ञशब्दस्य प्रधानमात्रे प्रयोगात् प्रधानमात्रार्थत्वमिति न्यायसुधोक्तमपास्तम्। तथात्वे येयजामहस्यानूयाजार्थत्वाप्रसक्तौ पर्युदासानुपपत्तेश्च। अतस्साङ्गप्रधानार्थोऽग्नियोगो, वरणं च, तत्रापि द्वितीयया ऋत्विक्संस्कारार्थत्वस्यावगतेरार्थवादिकयज्ञार्थत्वस्याकल्पनात्।

न चैवमवभृथे तत्प्रसक्त्यभावः, प्रधानार्थत्वपक्षेऽपि दक्षिणावत्प्रधानार्थेनैव वरणेन प्रसङ्गसिद्धेरवभृथे तत्प्रसक्त्यभावस्य तुल्यत्वात्। अतश्चोभाभ्यामप्येवं प्रसक्तिर्वाच्या, दृष्टार्थस्य सौमिकवरणस्य सर्वार्थत्वेऽपि दार्शपूर्णमासिकस्य प्रवृत्ते होतरि क्रियमाणस्य वरणस्यादृष्टार्थतया सोमाङ्गभूतेष्टिपश्वादौ करणस्य द्वादशे वक्ष्यमाणत्वेन प्रसक्तस्य तस्यावभृथे पर्युदासोपपत्तिः। न हीदं प्रकृतावारादुपकारकं,

---

श्रवणात् दशमे साधितं ततश्चाज्यभागयाज्यापाठार्थमेव प्रसक्तस्येत्यर्थः। सूत्राणीति। तद्व्याख्यानं तु तन्त्ररत्न एव द्रष्टव्यम्। अनन्यशेषतेति। यज्ञगतपांक्ततापादनद्वारा मन्त्रगतपञ्चत्वसंख्यास्तुत्यर्थतयोपपत्तेः नानन्यशेषत्वमित्यर्थः। पञ्चविध इत्यादाविति। आदिपदेनाग्निहोत्र दर्शपूर्णमासौ चातुर्मास्यानि पशुस्सोम इत्यानुपूर्वीसंग्रहः। न्यायसुधोक्तमिति। गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादित्यधिकरण इति पूर्वं शेषः। अत्र प्रकाशकारैः एतद्वाक्य एवाग्नीषोमीयपशुयागेऽङ्गभूतेऽपि प्रयोगाद्यज्ञशब्दस्याङ्गप्रधानसाधारण्येन यज्ञमात्रवाचित्व साधित, तदत्रत्यपशुशब्दस्याग्निहोत्रादिसाहचर्यात् नित्यस्य निरूढपशोरेव ग्रहणं तस्याङ्गत्वाभावादसाधक, न वा न्यायसुधोक्त खण्डनायाल इत्यत उक्तं— एतेनेति। भावघञन्तयज्ञशब्देन यजिधात्वर्थमात्रस्यैवोक्तेः तस्य यजिधातोर्यदि प्रधानमात्रवाचित्वमुच्यते तदा दूषणान्तरमप्याह—तथात्वे इति। द्वादशे वक्ष्यमाणत्वेनेति। प्रवृत्तवरणत्वादित्यधि-

येन तस्याज्यभागाद्यनङ्गत्वेनावभृथे प्रसक्त्यभावश्शङ्क्येत, द्वितीयया प्रोक्षणादिवत् होतृसंस्कारार्थत्वावगतेः। अतस्तस्य कर्तृत्वेन आज्यभागाङ्गत्वाद्वरणस्यापि तद्द्वारा आज्यभागाद्यङ्गत्वोपपत्तेः प्रसक्त्युपपत्तिः।

न चैवमप्यातिथ्याबर्हिः प्रोक्षणन्यायेन होतृव्यक्तेरेकतया दीक्षणीयायामेव कृतस्य होतृवरणस्यान्तं प्रसङ्गेनोपकारसिद्धेर्नावभृथे प्रसक्त्युपपत्तिः आतिथ्याबर्हिःप्रोक्षण-यूपपरिव्याणादौ हि यत्कार्यकूटोद्देशेन यद्व्यक्तेरुत्पत्तिस्तत्कार्यकूटाङ्गतद्व्यक्तिगतसंस्कार-जन्यादृष्टं प्रति तत्कार्यान्तिमकार्यत्वेन नाशकत्वस्य व्रीहिप्रोक्षणाद्यर्थं कल्पितस्य सत्त्वेन तज्जन्योपकारस्यानष्टतया प्रसङ्गोपपत्तावपि प्रकृतेऽग्निपात्रसम्मार्गादिवत् सत्यपि व्यक्तेरेकत्वे निरुक्तकार्यकारणभावविषयत्वानुपपत्तेः।

न हि होतृव्यक्तेर्यत्कार्यकूटोद्देशेनोत्पत्तिस्तत्कार्यकूटाङ्गं संस्कारः, दार्शिकहोतृ-वरणस्य ज्योतिष्टोमाद्यनङ्गत्वात्। अतस्तत्र तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रति तत्फलोप-हितान्तिमकार्यत्वेन नाशकतेति विशिष्य कार्यकारणभावेनैव तत्प्रयोगवृत्त्यन्तिमफलेन नाश इति प्रतिप्रयोगमावृत्तेर्युक्तमेवावभृथे तद्दर्शनम्। द्वादशाहे प्रत्यहं योगविमोकदर्शनं च प्रधानमात्रार्थत्वपक्षेऽपि भिन्नकालत्वात्तन्त्रेणैव सर्वसुत्यार्थकरणापत्तेस्सर्वान्त एव विमोक इति प्राप्तौ प्रात्यहिकत्वविधानार्थमेवेति साङ्गप्रधानार्थत्वेऽपि तुल्यम्।

अस्तु वा प्रधानमात्रार्थत्वपक्षे कथञ्चिद्भेदप्रसक्तिः। तथाऽप्यनुवादत्वस्य वैयर्थ्यापत्तेः प्रात्यहिकत्वविधानार्थमेवेदम्। तस्मात्साङ्गप्रधानापवर्गे विमोकः। एतत्तुल्य-

---

करणे प्रथमपादे इतिशेषः। तत्कार्यकूटाङ्गकेति। इदं च संस्कारविशेषणं ततश्च तत्कार्यकूटाङ्गभूतस्तद्व्यक्तिगतसंस्कार इत्यर्थः। स्वार्थे कन् द्रष्टव्यः। अस्तु वेति। प्रात्यहिकत्व-विधिद्वाराऽग्नियोगस्य साङ्गप्रधानार्थत्व एव ज्ञापकमित्यर्थः। एतच्च प्रात्यहिकत्वमग्नियोगस्य द्वादशाहे केषांचिदेव शाखिनामाम्नानात् उक्तं; तथा चापस्तम्बसूत्रं–द्वादशाहे तन्त्रमग्नेर्योगविमोकौ प्रथमेऽहनि युनक्ति उत्तमेऽहनि विमुञ्चति, अन्वहमेके योगविमोकौ समामनन्तीति। साङ्गप्रधानापवर्ग इति। याज्ञिकास्त्वस्मिन् पक्षे तत्तदहनि हारियोजनं हुत्वा अग्न्यादिभ्य उपस्थाने कृते अग्निविमोकं वचनादनुतिष्ठन्ति। पूर्वपक्षे प्रधानमात्रान्तेऽग्निविमोकः, सिद्धान्ते तु सर्वान्त इत्यधिकरणपूर्वोत्तरपक्षयोः प्रयोजनभेदेऽपि तन्त्रावापचिन्तात्वाभावात् अध्यायसङ्गति-शङ्कां परिहरति—एतत्तुल्येति। अहर्गणे पूर्वपक्षे प्रधानसमकालीनाग्नियोगस्यावृत्तौ प्राप्तायामपि सिद्धान्ते साङ्गप्रधानार्थत्वात् सर्वाद्ये तन्त्रेणैव प्राप्तस्याप्यग्नियोगस्याहरहर्युनक्तीति पूर्वलिखित-

न्याये उदाहरणान्तरे **चाहर्गणे पूर्वपक्षे प्रधानसमकालीनाङ्गस्यावृत्तिः, सिद्धान्ते तन्त्रमित्य-ध्यायोपयोगिता।**

---

## (१०)—सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २२ ॥

**ज्योतिष्टोमे उपसत्काले सुब्रह्मण्याह्वानं, तदहर्गणेऽतिदिष्टं सुत्याभिन्नकालीनदीक्षा-द्यङ्गवत् तन्त्रेणैव सर्वोपकारकं अगृह्यमाणविशेषत्वात्। न च 'चतुरहे सुत्यामागच्छ' इत्यतिदिष्टपदवशेनावृत्तिः।** तस्य तन्त्रतयाऽप्युपपत्तेर्वक्ष्यमाणत्वात्। इदं च **सम्प्रतिपन्न-देवताकसुब्रह्मण्यास्थले द्वादशाहादौ। यत्र तु केषुचिदहस्सु आग्नेयी सुब्रह्मण्या, केषुचिदैन्द्री इति विभिन्नदेवताकत्वं तत्र भेद एवेति वक्ष्यते ॥**

---

वाक्यविहितया आवृत्त्या बाधान्नेह पूर्वपक्षवैपरीत्येन तन्त्रत्वं सिद्ध्यतीत्यत उक्तं--**उदाहरणान्तर इति।** ततश्च सौमिकं वरणमहर्गणे प्रत्यहमावर्तते पूर्वपक्षे, सिद्धान्ते सर्वाद्येहनि वरणं तदपवर्गश्चान्त्य इति तन्त्रत्वात् पक्षद्वयेप्यध्यायोपयोगितास्य विचारस्य नानुपपन्नेति भावः।

---

**सुब्रह्मण्या तु तन्त्रम्।**

**वक्ष्यमाणत्वादिति।** यद्यपि प्रकृतौ 'चतुरह' इत्याम्नातं तथापि द्वादशाहे उपसदां द्वादशत्वात्तत्र चतुरह इत्यसमवेतार्थमिति प्रथमोपसत्काले त्रयोदशाह इत्यूहनीयं तत्र सुत्या-संबन्धिदेवतामात्रसंस्कारकत्वस्य विवक्षितत्वात् त्रयोदशाहश्शब्दावर्थसिद्धत्वादविवक्षितनिर्देश-मात्रार्थौ। अतस्त्रयोदशाह इत्येवोहितं तन्त्रेण प्रयोक्तव्यमित्यर्थस्य चतुर्थपादे सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयात् आह्वानवदित्यधिकरणे वक्ष्यमाणत्वादित्यर्थः। अनेनैव न्यायेन सुत्यामागच्छेति सुत्यापदोत्तरमेकवचनमपि अविवक्षितार्थमेव प्रयोजनाभावात् इत्यपि द्रष्टव्यम्। अन्यथा एकसुत्यागमनप्रकाशनार्थं प्रकृतौ पठितस्य तस्याहरन्तरतत्प्रकाशनार्थ-मावृत्तेरनिवारणात्। यद्यपि प्रकृतावेव द्विबहुपत्नीकप्रयोगसंभवात् पत्नीमन्त्रे 'पत्नीम्' इत्येक-वचनमदृष्टार्थं साधुत्वार्थमाश्रितं, न त्विह बहुसुत्याकप्राकृतप्रयोगस्यासम्भवात् आश्रयितुं शक्यत इति समवेतार्थमेवैकत्वं, तथापि तस्य प्रकाशने प्रयोजनाऽभावात् सुत्याया एकत्वादेकवचनयोगस्य साधुत्वमात्रार्थत्वं नायुक्तमिति ध्येयम्। सूत्रे 'सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात्' इति सुब्रह्मण्यामात्रस्य तन्त्रत्वमुक्तं तथापि तत्र विशेषं दर्शयति—**इदं चेति।** द्वादशे द्वितीयपादे 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् स्वधर्मत्वम्' इत्यधिकरणे भाष्यकारेण पञ्च-दशरात्रेऽग्निष्टुत् प्रथममहः तत्रैकाहादग्निष्टुद्यागात नाम्ना धर्मातिदेशः तदुत्तरं ज्योतिर्गौरायुरिति

(११)—तत्कालत्वादावर्तेत प्रयोगतो विशेषसंयोगात् ॥ २३ ॥
अप्रयोगाङ्गमिति चेत् ॥ २४ ॥ प्रयोगानिर्देशात्कर्तृभेदवत् ॥
तद्भूतस्थानादग्निवदिति चेत् तदपवर्गस्तदर्थत्वात् ॥ २६ ॥
अग्निवदिति चेत् ॥ २७ ॥ न प्रयोगसाधारण्यात् ॥ २८ ॥
लिङ्गदर्शनाच्च ॥ २९ ॥ तद्धि तथेति चेत् ॥ ३० ॥ नाशि-
ष्टत्वादितरन्यायत्वात् ॥ ३१ ॥ विध्येकत्वादिति चेत् ॥ ३२ ॥
न कृत्स्नस्य पुनः प्रयोगात् प्रधानवत् ॥ ३३ ॥

**सुत्याकालीनसुब्रह्मण्याह्वानं तु अहर्गणे गृह्यमाणविशेषत्वात् प्रतिसुत्यमावर्तते सवनीयादिसुत्याकालीनाङ्गान्तरवत्, विशिष्य च अद्येत्यादिपदप्रयोगादप्ययमर्थो निर्णीयते।** न च प्रकृतौ **सुत्याया** एकत्वात् **अद्येत्यस्याविवक्षितार्थत्वं, 'सुत्यामागच्छ' इत्यनेनैव सुत्याकाले आगमनप्रकाशनोपपत्तेरद्येति पदस्य वैयर्थ्यभियैव** सुत्यादिनीयत्व-**प्रकाशनस्यैवाभ्युदयशिरस्कत्वकल्पनात्। अतश्च सुत्याभेदेन तद्दिनभेदादवश्य-**

---

त्रीण्यहानि तेष्वपि ज्योतिराद्येकाहधर्माणां नामातिदेशः तदुत्तरमेकादशस्वहःसु द्वादशाहातिदेशः एकाहाग्निष्टुति चाग्नेया ग्रहा भवन्तीति वचनात् ग्रहेषु आग्नेयत्वात् तदतिदेशेनेह आग्नेयीसुब्रह्मण्या प्रथमेऽहनि प्राप्ता। उत्तरेषु तु सर्वेष्वैन्द्री तत्र बहूनामनुरोधेनैन्द्र्येव सा कार्या, तथैव प्रथमेऽहनि प्रसङ्ग इति भाष्ये सिद्धान्तितं, तस्यैन्द्रया अग्निदेवतासंस्कारासंभावात् प्रसङ्गानुपपत्तेरिति खण्डनप्रतिपादकन्यायेन गतार्थतयाप्युत्तराधिकरणे सुत्याकालीनसुब्रह्मण्यावृत्तेर्वक्ष्यमाणाया व्यतिरेकप्रदर्शनमात्रार्थं शिष्यहितार्थं कृतमिति ध्येयम्।

---

**तत्कालात्वावर्तेत ।**

अद्येति पदस्याविवक्षितार्थत्वमङ्गीकृत्य **तन्त्ररत्नादौ** सुत्याकालभेदमात्रेण कृतं सिद्धान्त-मनूद्य दूषयति—**न चेति। सुत्यादिनीयेति।** न केवलमत्र सुत्यासबन्धित्वेनेन्द्रागमनं प्रकाश्यं, तथात्वे अद्यपदवैयर्थ्यापत्तेः; अपि तु सुत्यादिनसबन्धिसुत्यागमनं ततश्चाहीनानां प्रकाश्यानां

**पठनीयाद्यपदेन सुत्यान्तरदिनानां प्रकाशनानुपपत्त्या आवृत्तिरावश्यिक्येव।** एतद्युक्ति-**कथनायैव च सूत्रान्तराणि। इतरथा वक्ष्यमाणसवनीयादिन्यायेनैव सुब्रह्मण्यावृत्ति-सिद्धेः पृथगधिकरणवैयर्थ्यम्।**

न च **सवनीयाद्यपूर्वाणां तत्तत्सुत्यापूर्वोपयोगितया तदुत्पत्तावपवर्गेण प्रसङ्गसिद्ध्य-नुपपत्तेरावृत्त्युपपत्तावपि प्रकृते देवताया एकत्वात् सकृदाह्वानसंस्कृताया एव प्रसङ्गेन सर्वोपकारकत्वोपपत्तेः कथमावृत्तिरिति वाच्यं, आह्वानस्य स्वरूपेणाविद्यमानतया देवता-स्मरणमात्ररूपस्य दृष्टोपकारस्य तत्कालमेव नाशात्तदाहितसंस्कारस्यापि प्रधानकालीन-देवतास्मरणेन नाशात् प्रसङ्गानुपपत्तेः, अत एव** यत्र पाशुकदेवतावाहनप्रकाशनजन्यसंस्कार-**स्यानाशः हृदयादियागीयदेवतास्मरणस्य भावित्वात् तत्र भवत्येव पशुपुरोडाशे प्रसङ्गः।**

**न चोत्तरस्मरणस्यैव पूर्वज्ञानजनितसंस्कारनाशकत्वस्य लोकक्लृप्ततया वपा-यागीयदेवतास्मरणेनैव तस्य नाशात्कथं प्रसङ्ग इति वाच्यं, तथात्वे उत्तमप्रयाजीयदेवता-स्मरणेनैव तस्य नाशे आवाहनस्य प्रधानोपकारकत्वानुपपत्तेः। अतोऽवश्यं तज्जन्य-संस्कारत्वावच्छिन्नं प्रति प्रधानत्वावच्छिन्नीयदेवतास्मरणस्यैव नाशकत्वम्। अव-**

---

भेदात् आवृत्तिरित्यर्थः। एतद्युक्तीति। यदाऽत्र सुत्याकालभेदमात्रेणाऽऽवृत्तिरिष्येत, तदा भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात तेषां प्रधानशब्दत्वादित्यत्रत्यचतुर्थपादगताधिकरण-न्यायेन सवनीयादिवत् भेदसिद्धेरेतदधिकरणारंभो व्यर्थ एवस्यात्; अतः "तत्काला त्वावर्तेत प्रयोगतो विशेषसयोगात्" इत्याद्यं सिद्धान्तसूत्रं यथाभाष्यं तत्कालशब्देनाद्यपदोपात्तदिन-रूपकाल एवोच्यते, तथाच तद्दिनरूपकाला सुब्रह्मण्याऽवर्तेतेत्यधिकरणेन युक्त्यन्तरप्रतिपादकत्वेनैव नेयम्। यत्त्वप्रयोगाङ्गमितिचेदिति सूत्रमद्यपदस्याविवक्षितार्थपरतया भाष्ये योजितं तदा-शङ्कामात्रपरत्वादप्युपपन्नम्। यदप्येतदुत्तरसूत्रं 'स्यात् प्रयोगनिर्देशात् कर्तृभेदवत्' इति तत् भाष्ये तुष्यतु दुर्जन इति न्यायेनाविवक्षितार्थत्वमद्यशब्दस्याङ्गीकृत्यापि सुत्याकालभेदहेतुका-वृत्तिपरतया योजितमप्यद्यशब्दस्य विवक्षितार्थत्वस्वीकारे नैवानावश्यकताद्योतकम्। अत एवैतद्व्याख्याने यद्यपि अद्यशब्दस्यार्थो न विवक्षितः, तथापि यस्मिन्नहनि प्रयुज्यते तत्कालस्य प्रधानस्योपकरोतीति ग्रन्थे 'यद्यपि' 'तथापि' इति पदप्रयोगात् तस्यैव मुख्ययुक्तित्वं स्पष्टमेव भाष्य-कृतोक्तम्। एवं चाद्यपदस्याविवक्षितार्थतां पारमार्थिकीमङ्गीकृत्य सुत्याकालभेदमात्रेणात्र सिद्धान्तकरणमयुक्तमित्याशयः। तन्त्रत्वानुपपत्तावप्यातिथ्याबर्हिः प्रोक्षणन्यायेन प्रसङ्गमाशङ्क्य निराकरोति—**न चेति। यत्र पाशुकेति।** उत्तमप्रयाजकाले तदीयमन्त्रेण यक्ष्यमाणदेवता-वाहनप्रकाशनं प्रकृतौ कृतमिहापि पशौ तदीयदेवतावाहनस्य कृतत्वात् तज्जन्यसंस्कारस्यान्तं

**प्रच्छन्नत्वं च** पर्याप्तिसम्बन्धेनेति **न वपायागीयदेवतास्मरणमात्रेण तन्नाश इति युक्तः प्रसङ्गः। चिकृते तु प्रकृतिक्लृप्तनाशकसामग्रीसत्त्वान्न तथात्वम्।** अत एव '**ससंस्थिते संस्थितेऽहनि** आग्नीध्रीयागारं **प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति सम्प्रेष्यति' इति लिङ्गमप्युपपद्यते।**

---

## (१२)—लौकिके तु यथाकामी संस्कारानर्थलोपात्॥ ३४॥

**समादिदेशानामध्वर्य्वादिऋत्विजां सुवादिपात्राणां च प्रतिकर्म** प्रतिप्रयोगं **च भेद एव। इतरथा** निरिष्ठकोपादाने **शिष्टाचारविरोधादिति प्राप्ते**—

---

हृदयादियागीयप्रधानदेवतास्मरणार्थमनुवृत्तेरावश्यकत्वात् तन्मध्यपतितपशुपुरोडाशेपि भवति प्रसङ्ग इत्यर्थः। **पर्याप्तिसंबन्धेनेति।** यथा द्वित्वं पर्याप्तिसबन्धेनोभयत्र वर्तते तथा अग्नीषोमीययागत्वं वपाभ्यासे हृदयाभ्यासे च प्रत्येकं पर्याप्तिसबन्धेन वर्तते एकतरनिष्पत्तावपि अग्नीषोमीयप्रधानं निर्वृत्तमिति व्यवहाराभावात्। अतः पुरोडाशात् पूर्वकृतवपायागीयदेवतास्मरणमात्रेण प्रधानत्वावच्छिन्नदेवतावाहनजन्यसंस्कारस्य नाशे सामग्र्यभावात् युक्तैव हृदयादियागीयदेवतास्मरणं यावदनुवृत्तिः तत्संस्कारस्येति युक्तः प्रसङ्गः। प्रकृते तु ज्योतिष्टोमे एकसोमयागाभ्यासनिष्पत्त्या सोमयागो निष्पन्न इत्यनुभवाभावात् हारियोजनाभ्यासपर्यन्तप्रधानदेवतास्मरणस्यैव नाशकत्वस्य क्लृप्तत्वात् तथैव द्वादशाहान्तर्गतिकसुत्याया नाशकत्वावश्यकत्वात् तदुपकारस्य द्वितीयादिसुत्यासु अननुवृत्तेर्न प्रसङ्गसंभव इत्यर्थः। **आग्नीध्रागारमिति।** आग्नीध्रमण्टप प्रविश्याग्नीध्रः संप्रेष्यतीत्यर्थः। तथाच सुत्याकालीनसुब्रह्मण्याह्वानार्थेऽस्मिन् प्रैषे संस्थिते संस्थित इति वीप्सया भेदः प्रतीयमानः तत्कालीनसुब्रह्मण्याह्वानभेदे लिङ्गमित्यर्थः। अत्र चास्याग्नीध्रप्रैषस्योत्तरदिनक्रियमाणसुत्यापूर्वदिनक्रियमाणसुत्यासम्बन्धिहारियोजनहोमान्ते आम्नानात्तदुत्तरं क्रियमाणस्य सुब्रह्मण्याह्वानस्य उत्तरसुत्याङ्गस्यापि तत्सुत्याकालीनत्व कल्प्यमिति चिन्त्यम्। युक्तं तु प्रातरनुवाककालीनस्याध्वर्युप्रैषानंतरं क्रियमाणस्य तस्य सुत्याकालीनोदाहरणत्वमिति ध्येयम्।

---

**लौकिकेतु यथा कामी।**

**निरिष्ठकोपादाने इति।** इष्टान्निर्गता निरिष्टा कुत्सिता निरिष्टा निरिष्टिकेति कुत्सिताधिकारविहितकप्रत्ययान्तो निरिष्ठिकाशब्दः; लोके यस्मिन्नुपभुक्तं पर्णादौ तस्य नोपादानं पुनः

कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः ।
न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ।

इतिवचनेनात्र विनियुक्तविनियोगेऽपि शिष्टाचारविरोधाभावादनियमः । न च 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति वचनेनातिचारनिषेधात्त एवेति नियमश्शङ्क्यः । अस्याप्रकरणस्थतया पुरुषार्थरूपस्य क्रत्वर्थत्वे प्रमाणाभावेनान्यकरणे क्रतुवैगुण्यानापत्तेः । तस्यान्यत्र व्यासक्तत्वे क्रोधोत्पादकव्यापाररूपातिचारासम्भवेन पुरुषार्थनिषेधस्याप्यनापत्तेश्च । न चैवमेकत्वपक्षे व्यक्तेरेकत्वेनातिथ्याबर्हिःप्रोक्षणन्यायेन सकृत्कृतैरेव वरणसम्मार्जनादिसंस्कारैस्सर्वकर्मसु कार्यसिद्धेः प्रतिप्रयोगं वरणाद्यनुष्ठानानापत्तिः, व्यक्त्येकत्वस्य नैयत्याभावेनातिथ्याबर्हिःप्रोक्षणन्यायाभावात् । अग्निसम्मार्गवत् व्यक्त्येकत्वनैयत्येऽपि वरणादेः प्रयोगान्तरे प्रसङ्गसिद्ध्यनापत्तेश्च । अवसितमृत्विक्षु देशे च । पात्रेषु तु चिन्त्यते ॥

---

(१३)—यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३५ ॥ यजमानसंस्कारो वा तदर्थश्श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ मुख्यधारणं वा मरणस्यानियतत्वात् यो वा यजनीये म्रियेत सोऽधिकृतस्स्यादुपवेषवत् ॥ ३८ ॥ न शास्त्रलक्षणत्वात् ॥ ३९ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ४० ॥ शब्दासामञ्जस्यमिति

---

क्रियते, उपभुक्तवस्त्रादीनां तु क्रियत इत्येवं द्विविधस्याप्याचारस्य सामान्यतो दर्शनात् प्रकृते सन्देहे उपयुक्तस्यैव ग्रहणे कृतेपि न शिष्टाचारो विरुद्ध्यते एतदाचारमूलस्मृतिदर्शनादित्यभिप्रेत्य सिद्धान्तमाह—**कुशा इति** । **अग्निसंमार्गवदिति** । यथा अग्निसंमार्गजन्यादृष्टस्यान्तिमापूर्वेण नाशस्तथैव वरणसंमार्जनादिसंस्कारजन्यादृष्टस्य तत्प्रधानापूर्वेण नाशात् द्वितीयप्रयोगेऽनुवृत्त्यभावेन प्रसङ्गानुपपत्तेः, इतरथा प्रयाजादीनामप्यावृत्त्यभावप्रसङ्गादित्यर्थः । अत्रच लौकिकेषु यथाकामी संस्कारार्थलोपात् स्यात् इति सूत्रं देशर्त्विजोरनियमप्रतिपादकं न तथा पात्रेषु किंतु पूर्वपक्षपरमेव । उत्तरसूत्रे तन्नियमसिद्धान्तकरणात् । ततश्चैकमेव सूत्रमंशे सिद्धान्तपरमंशे च पूर्वपक्षपरं ज्ञेयम् । स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वात् इत्यभिप्रेत्याह—**अवसितमिति** । ऋत्विक्षु देशे चानियमसिद्धान्तकरणमवसितमित्यर्थः ।

---

चेत् ॥ ४१ ॥ तथाऽऽशिरेऽपि ॥ ४२ ॥ शास्त्रत्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवत् भूतोपदेशः ॥ ४३ ॥ प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन् ॥ ४४ ॥ अग्न्याधेये वा विप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ४५ ॥ प्रतिपत्तिर्वा यथाऽन्येषाम् ॥ ४६ ॥

**पात्रेषु तु नियम एव। 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति वचनेन तैर्दाहविधानात्। यद्यपि ह्यत्राहिताग्निशरीरप्रतिपत्त्यर्थदाहे विधीयमाने पात्राणामग्नीनां च गुणत्वमेव, तृतीयाश्रवणात् दाहस्य शरीरप्रतिपत्त्यर्थतया दृष्टार्थत्वेन** प्राचीन**प्रयाजशेषन्यायस्याप्यभावाच्च।**

**अत एव शरीरमपि सत्यप्याहिताग्निमरणे नाधानोपयुक्तं संस्क्रियते, तथात्वे तत्प्रतिपत्तिरूपसंस्काराभावात् आधानमात्रेणाग्न्युत्पत्तेरसम्भवेनोत्तरकर्मस्वनधिकारप्रसङ्गात्। किन्तु अव्यभिचरितक्रतुसम्बन्धात् आहिताग्निसाध्यक्रतूपयुक्तमेव। एवं चाधानोत्तरं क्रतुकरणात्प्राक् यजमानमरणे दाहकरणं, दाहस्य संस्कारेषु पाठेन पुरुषार्थत्वस्यापि संयोगपृथक्त्वन्यायेन सत्त्वाद्बोध्यम्। अतश्च दाहस्याग्निपात्रप्रति-**

---

**यज्ञायुधानि धारयेरन्।**

कुशादर्व्यादय इत्यस्य न ते निर्माल्यता यान्तीत्यनेन निर्माल्यग्रहणजनितदोषाभावप्रतीत्या अभ्यनुज्ञाविधित्वमात्रप्रतीतेः नियमविधित्वाभावादनियमे प्राप्ते पात्रेषु नियममाह— **पात्रेषु त्विति—प्राचीनेति।** प्रयाजशेषवाक्ये हविः संस्कारकत्वेऽदृष्टार्थत्वापत्तेः प्रयाजशेषप्रतिपत्त्यर्थत्वेन दृष्टार्थतालाभाय लक्षणाद्वयमाश्रित प्राचीनैः, न त्विहाहिताग्न्यर्थत्वेऽदृष्टार्थत्वप्रसक्तिरस्ति तस्यापि प्रतिपत्त्यर्हत्वात्। अतः शरीरप्रतिपत्त्यर्थत्वेन दृष्टार्थताहानेर्न लक्षणाश्रयणेनाग्निपात्रप्रतिपत्त्यर्थत्वं बलात् स्वीकर्तुमुचितमित्येवं प्राचीनप्रयाजशेषन्यायस्याप्यभाव इत्यर्थः। **संस्कारेषु पठितेति।**

आधानपुंससीमंतजातनामान्नचौलकाः।
मौञ्जीव्रतानि गोदानसमावर्तविवाहकाः।
अन्त्यश्चैतानि कर्माणि द्विजानां षोडशैव तु।

पत्त्यर्थत्वाभावात् न तदनुरोधेनान्तं धारणनियमः। तथाऽपि क्रतुकरणोत्तरकालं तत्परित्यागे मरणस्यानियतकालत्वात्कदाचित् पूर्वप्रयोगोपयुक्तेषु परित्यक्तेषूत्तरप्रयोगकालात्पूर्वं यजमानमरणे यज्ञपात्राभावेन दाहवैगुण्यापत्तेः धारणमावश्यकं, ततश्च तैरेवोपादनलाघवानुरोधेनोत्तरप्रयोगसिद्धेर्न पात्रान्तराक्षेपः।

एवं पात्रधारणं न दर्शपूर्णमासप्रभृत्येव। सत्यपि तत्र पात्राणामुपदेशे ततः पूर्वं पवमानेष्ट्यनन्तरं यजमानमरणे दाहवैगुण्यापत्तेः, पवमानेष्टिषु पात्राणामतिदेशेन सत्त्वाच्च, तत एव धारणम्। यज्ञपात्रपदेन प्रमाणसिद्धो येषां यज्ञत्वावच्छिन्नसम्बन्धस्तान्युच्यन्ते, न त्वौपदेशिक एव, प्रकृतिमात्रसम्बन्धो वा, सङ्कोचे प्रामाणाभावात्। एवं च पवमानेष्टितः पूर्वमाधानमात्रोत्तरं यजमानमरणे यज्ञपात्राभावेऽपि यैः कैश्चित्काष्ठैर्दाहः। अग्निषु तु परमापूर्वविशिष्टाग्न्युत्पत्तेर्जातत्वेन तैरेव दाहः। अग्निशब्दस्य गार्हपत्यादिशब्दानां च तत्रापि निरूढलक्षणया प्रयोगाविशेषात् सति सम्भवे मुख्याग्न्यसम्भवे लौकिकाग्न्यपेक्षया तस्यैव ग्रहणौचित्याच्च।

आधानोत्तरं ह्याहिताग्निव्रतवदाहिताग्निशरीरदाहे पुरुषार्थतया प्राप्ते तत्र मुख्याग्नेः परमापूर्वविशिष्टस्याभावेन करणत्वासम्भवेऽपि सति सम्भवे आधानप्रयुक्तापूर्वविशिष्टस्याग्नेरर्थात्कारणत्वेनावगतस्य त्यागे प्रमाणाभाव.।

वस्तुतस्तु—तदा पात्रैरपि दाह इति शक्यते वक्तुं, आधानसमय एव पात्रोत्पत्तेर्वक्ष्यमाणत्वात्। तदा यज्ञकरणाभावेऽपि यज्ञार्थमुपादानमात्रेण पुरोडाशकपालवद्यज्ञ-

---

इति गोविन्दार्णवधृतजातूकर्णिवचने संस्कारेषूदाहस्यापि अन्त्यपदेनोपादानात् अन्यसंस्काराणामिव पुरुषार्थत्वादनाहिताग्निशरीरवदेव सामान्यतः प्राप्तेः दाहकरणमित्यर्थः। प्रतिपत्त्यर्थधारणाप्रसक्तावपि प्रकारान्तरेण धारणमात्र कार्यमिति सिद्धान्त्येकदेशिमतमुपपादयति—**तथापीति**। **निरूढलक्षणयेति**। अन्यथा पवमानेष्टिहविःश्रपणादीनां गार्हपत्यादिषु करणानापत्तेः। अतः परमापूर्वविशिष्टेषु आहवनीयादिपदानां शक्तिः उत्पत्त्यपूर्वविशिष्टेषु निरूढलक्षणा एवचाहवनीयादिपदैरन्यत्र यथोभयान्यतरापूर्वविशिष्टस्य ग्रहणमेवमिहापीति भावः। ननु यजमानस्य पवमानेष्ट्यनंतरमेवाहिताग्नित्वेनाहिताग्निपदवाच्यत्वात् आधानमात्रेणाहिताग्नि—पदवाच्यत्वे प्रमाणाभावात् तदुद्देशेन दाहस्यैवाप्राप्तौ व्यर्थमेवेदमग्निपात्रकरणत्वस्य दाहे प्रसाधनमित्यत आह—**आधानोत्तरमिति**। यथैवाधानमात्रोत्तरमाहिताग्निर्न क्लिन्नं दार्वभ्यादध्यात् इत्यादिव्रतानां पुरुषार्थानां प्राप्तिरिति पञ्चमे साधितं तद्वदाहिताग्निदाहस्यापि प्राप्तिर्नामुलभेत्यर्थः। **पुरोडाशकपालवदिति**। तुषोपवापकाले पुरोडाशसंबन्धस्य भूतत्वाभावे तदर्थोपादानमात्रेण

पात्रत्वोपपत्तेः। अतो दाहावैगुण्यार्थं पात्राणि धारणीयानीति न पात्रेऽनियम इति सिद्धान्तैकदेशिनः।

सिद्धान्ती तु—यद्यपि मरणस्यानियतकालत्वात्पात्राणां धारणं भवेत्। तथाऽपि यो नाम प्रयोगान्तरकाले रमणीयानि नवानि पात्राणि लभेत तस्येच्छावशेन पूर्वत्यागेनान्योपादानेऽपि न कश्चिद्दोषस्स्यात् दाहस्य पुरोडाशकपालन्यायेन यैः कैश्चिदपि यज्ञपात्रैरुपपत्तेः। अतो दाहं प्रति पात्राग्न्योर्गुणभावेऽपि 'दक्षिणे हस्ते जुहूमासादयति दक्षिणपूर्वे आहवनीयम्' इत्यासादनं प्रति पात्राग्न्योस्संस्कार्यत्वावगमादासादनस्य प्रतिपत्तित्वावगतेः तदनुरोधेनान्तं धारणम्।

वस्तुतस्तु—तदनुरोधेनान्तधारणेऽपि इच्छावशेनान्यैरपि क्रत्वन्तरकरणे वैगुण्यानानापत्तेः सर्वेषामेव चासादनाख्यप्रतिपत्त्युपपत्तेरस्मिन्नपि पक्षे सर्वकर्मसु पात्रैक्ये प्रमाणाभावः।

अत एवं वर्णनीयं—यज्ञार्थानामपि पात्राणामाधानप्रकरणे उत्पन्नानामाधानाङ्गभूतारण्याहरणकाल एव 'यज्ञियैः केतुभिस्सह' इति मन्त्रलिङ्गेनाहरणप्रतीतेः यूपवद्भिन्नकालत्वात् सर्वयज्ञार्थं तन्त्रेणैवोपादानं, आसादनं तु तेषामेव प्रतिपत्तिः। न चैवमाधानोत्तरं प्राक्पवमानेष्टिभ्यो यजमानमरणे पात्राग्न्योरनुपयुक्तत्वादासादनाख्यप्रतिपत्त्यनापत्तिः। अनुपयुक्तत्वेऽप्याकीर्णकरवद्यज्ञार्थमुपात्तस्य यज्ञाभावेऽपि प्रतिपत्तिसापेक्षत्वात्।

वस्तुतस्तु—ईदृशप्रतिपत्तेरनुपयुक्तत्वादासादनं दाहोपयोगिपात्राग्निसंस्कारकतयोपयोक्ष्यमाणसंस्कारकमपीति तादृशविषयेऽप्यासादनोपपत्तिः। अत एव प्रतिपत्तिरपीयमामुष्मिकफल एवोपयुज्यते न त्वैहिके इत्यपि ध्येयम्। अतश्चेयं प्रतिपत्तिरैहिकातिरिक्तस्यैवाङ्गम्।

---

पुरोडाशकपालव्यपदेशः, एवं भूतयज्ञसंबन्धाभावेऽपि तदर्थोपादानमात्रेण यज्ञपात्रत्वोपपत्तेः युक्त एव तैर्दाह इत्यर्थः। आन्तं धारणमिति। तमिमं प्राचां मतेनोक्तं परमसिद्धान्तमप्याक्षिपति—वस्तुतस्त्विति। अनुपयुक्तत्वादिति। आधानमात्रोत्तरं यजमानमरणे तदीयपात्राणां यदि यज्ञेषु भूतो भावी वोपयोगः स्यात्, तदा तदुपयुक्ततत्पात्रप्रतिपत्तेस्तत्पात्रसाध्ययागापूर्वेषूपयोगः संभवेत्। न त्वेतदस्ति पूर्वमग्न्यभावादेव यज्ञकरणाप्रसक्तेः, तदुत्तरं मृतत्वाच्च तदप्रसक्तेः, अतोऽनुपयुक्तत्वमित्यर्थः। इत्यपि ध्येयमिति। अन्यथा पवमानेष्टिषु तादृशप्रतिपत्तिरूपाङ्गभावेन पवमानेष्टिभ्य आहवनीयाद्युत्पत्तिरेव न सिद्ध्येदत उपयुक्तप्रतिपत्तित्वाङ्गीकारेप्यैहिकफलातिरिक्तकर्माङ्गत्वस्यैव फलबलात् कल्प्यत्वे आवश्यके ममापि आमुष्मिकदाहफल

**अत एव पवमानेष्ट्यङ्गत्वेऽपि तदुत्तरमाधानोत्तरं वा मरणे** पारलौकिकफलक**दाहोपयोगितयैवासादनमिति ध्येयम्। न ह्यस्य प्रतिपत्तिमात्रकर्मत्वं, उभयत्र दृष्टार्थत्वाविशेषेणोपयोक्ष्यमाणसंस्कारकत्वस्याप्यङ्गीकारात्। प्रतिपत्तिकर्मत्वादेव चाधानकालोत्पन्नप्राकृतपात्राणामिव तत्तद्विकृतिविशेषकालोत्पन्नवारुणप्रघासिकपात्राणामप्यासादनम्। तेषां परं** प्रयोगभेदे **अनियमो भिन्नकालत्वाभावात्।**

**यत्तु वैकृतपात्राणां विकृतिप्रयोगमध्य एव यजमानमरणे आसादनम्, न तु प्रयोगबहिर्भूतमरणेपीति** नारायणवृत्तिकारेणोक्तं **तत्** प्रमाणाभावादुपेक्ष्यम्॥

---

एवोपयोगकल्पनं समानमेवेत्यर्थः। **पारलौकिक फलकेति।** एतेनाहिताग्निशरीरप्रतिपत्त्यर्थत्वमपि दाहस्य प्राचीनोक्तमपास्तम्। पुरुषार्थ एव प्राप्ते दाहेऽग्निपात्राणां गुणत्वेन विधानेन दाहान्तरत्वे मानाभावात् अग्निपात्ररूपविधेयसामर्थ्यादेव दाहे आहिताग्निकर्मत्वलाभेन विशिष्टोद्देशाप्रसक्तेश्च। अत एव प्रतिकृतिदाहेपि पात्राणां गुणत्वमुपपद्यते। अतः अर्थकर्मैव स्वतन्त्रफलार्थ इति षष्ठ एवोपपादितं तत्रैव द्रष्टव्यम्। **प्रयोगभेदे इति।** वरुणप्रघासप्रयोगान्तरे पूर्वं वरुणप्रघासार्थे यानि संपादितानि तेषामेव नियमो नेत्यर्थः तत्काल एव पूर्वोपात्तानां तदर्थमेवोपादानेन गृह्यमाणविशेषत्वेन तन्त्रत्वानुपपत्तेः। प्राकृतपात्राणां तु भिन्नकालेऽगृह्यमाणविशेषतया तन्त्रेणोपादानात्तेषामेव सर्वक्रत्वर्थं धारणनियमः प्रतिपत्त्यर्थंचाऽऽन्तमिति विशेष इत्यर्थः। **नारायणवृत्तिकृतेति।** एतच्चाश्वलायनसूत्रस्य चतुर्थाध्यायगततृतीयखण्डव्याख्याने तेनोक्तम्। **उपेक्ष्यमिति।** प्रतिपत्तेरप्यन्यत्र धारणप्रयोजकत्वाङ्गीकारात् इहापि प्रतिपत्त्यनुरोधेन वैकृतानामपि आन्तं धारणोपपत्तेः प्रयोगबहिर्भूतमरणेपि तैर्दाहसंभवात् प्रमाणाभाव इत्यर्थः। यदि त्वन्यप्रतिपत्तिषु धारणप्रयोजकत्वकल्पनेप्यस्याः प्रतिपत्तेः कर्मशेषत्वेनैवान्तधारितानामुपपत्तौ न तत्प्रयोजकत्वमपि कल्पनीयं, गौरवात्। अतः परार्थं धारितानामेव प्राकृतानां पात्राणां प्रतिपत्तिरियं, वैकृतानां तु विकृतिमध्य एव धारणात्तन्मध्यमरणे परमुपयुक्तधारितपात्रसत्वात् भवति प्रतिपत्तिः ऊर्ध्वं तु तेषां धारणे प्रमाणाभावेन विकृत्यन्त एव त्यागात् न प्रयोगबहिर्भूतमरणे तत्प्रतिपत्तिरिति तद्वृत्तिस्वारस्यमालोच्यते तदा तद्युक्तमेवेति मम प्रतिभाति।

---

(१४)—उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति ॥ ४६ ॥ अङ्गविपर्यासो विना वचनादिति चेत् ॥ ४८ ॥ उत्कर्षस्संयोगात् कालमात्रमितरत् ॥ ४९ ॥ प्रकृतिकालासत्तेश्शस्त्रवतामिति चेत् ॥ ५० ॥ न श्रुतिप्रतिषेधात् ॥ ५१ ॥ विकारस्थाने इति चेत् ॥ ५२ ॥ न चोदनापृथक्त्वात् ॥ ५३ ॥

**वाजपेये प्राजापत्यान्विधाय 'उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति' इति श्रुतम्।** तत्रापि **सामान्यतः प्रकृतिवच्छन्दप्रापितार्भवकालस्याबाधाय तस्मिन्नेव काले प्राजापत्याङ्गहविषां करणम्। उपदेशस्य** कतिपयसोमोत्तरत्वेनाप्युपपत्तेः। **न चैवमुपदेशवैयर्थ्यं,** अपूर्वतापरत्वेन **चरितार्थत्वात्, प्रकृतिप्राप्तप्रचारविप्रकर्षबाधेन प्राप्तस्य 'ब्रह्मसाम्न्यालभते' इत्यनेन ब्रह्मसामकाले सकलप्राजापत्यप्रचारस्य बाधपूर्वकं पुनः प्रचारविप्रकर्षप्रतिप्रसवफलकत्वेन सार्थक्याच्च। एवं च ब्रह्मसामकालः प्राजापत्यवपायाग एव पर्यवस्यति। अतश्चार्भवकाल एव तद्धृदयादिप्रचारः। एवं च 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इति 'प्रहृत्य परिधीन् हारियोजनं जुहोति' इति च प्रकृतिप्राप्तः क्रमः कालो वा यथाश्रुत एव संपद्यते। इति प्रथमः कल्पः।**

**द्वितीयस्तु चोदकेनैव तत्प्राप्तिसम्भवे उपरिष्टात्सोमानामित्यस्य वैयर्थ्यापत्तिः। न चापूर्वतार्थत्वं, सोमोत्तरकालतारूपगुणविधानार्थत्वेनोपपत्तौ तत्कल्पनायोगात्। न**

---

उपरिष्टात्सोमानां।

अयमत्र प्रकृतौ प्रयोगक्रमः सवनीयवपाप्रचारः प्रातस्सवने, पुरोडाशो माध्यन्दिनसवने, तृतीयसवने प्रथममार्भवपवमानस्तोत्रं तदानीमेव सवनीयहृदयाद्यङ्गयागः तदनन्तरमशस्त्रः सवनमुखीयश्चमसगणः, ततश्शस्त्रवतां वैश्वदेवग्रहान्तानां सोमाभ्यासानां प्रचारः, तदनन्तरमाग्नीमारुतशस्त्र, ततः पाशुकानूयाजाः परिधिप्रहृणं हारियोजनप्रचारः, ततोऽग्निष्टोमस्तोत्रं, तदनन्तरमुक्थ्यादयः सोमविकारा इति। प्रकृते उपरिष्टात्सोमानामिति अविशेषेण यद्यप्युक्तं तथापि प्राकृतार्भवपवमानकालाबाधाय तस्मिन्नेव काले प्राजापत्यहृदयाद्यङ्गप्रचारः कर्तव्य इत्याद्यपूर्वपक्षमाह—**तत्रापीति। कतिपयसोमोत्तरत्वेनापीति।** प्रकृतौ ह्यार्भवसामकालः केषांचिन्मरुत्वतीयान्तानां सोमानामुपर्येव भवतीति उपपद्यत एव सोमानामुपरिष्टादित्युपदेश इत्यर्थः। **अपूर्वतापरत्वेनेति।** उपरिष्टात्कालस्य प्राप्तत्वादनुवादत्वेन प्रचारमात्रस्यैवापूर्वतया विधानादि-

च प्रचारविप्रकर्षप्रतिप्रसवार्थत्वं, प्रातस्सवनिकस्यालम्भादिवपाप्रचारान्तस्यैव ब्रह्मसामकाले आलम्भोत्कर्षेणोत्कृष्टतयाङ्गहविषां तदानीमप्राप्तेः। अतः प्राकृतार्भवकालबाधेन सोमोत्तरताविधिः। तत्रापि शस्त्रवतां सोमानामुपरिग्रहात्, प्राकृतकालप्रत्यासत्तेः।

तृतीयस्तु—न प्रत्यासत्तिमात्रेण चोदकानुग्रह। तेनाग्निष्टोमप्रचारादूर्ध्वं, तस्यागन्तुकस्थानत्वात्।

सिद्धान्तस्तु—तदुक्थ्यादीनां सोमविकाराणां स्थानं, न तु पशुविकाराणां, अतो विशेषात्सर्वसोमान्ते प्राजापत्याङ्गप्रचारः। यत्तु—आग्निमारुतादूर्ध्वत्वं अनूयाजादीनां, तत्प्राजापत्योत्कर्षेणानूयाजोत्कर्षेऽप्याग्निमारुतोत्तरत्वस्यानपायादकिञ्चित्करम्। न ह्ययं क्रमविधिः, येनाव्यवहितोत्तरत्वं लभ्येत, भिन्नप्रयोगविधिपरिगृहीतत्वात्तु कालविधिरेवायम्। एवं हारियोजने परिधिप्रहरणात्पूर्वं क्रियमाणेऽपि तदुपलक्षितकालस्य सत्त्वान्न कश्चिद्विरोधः। अत परिधिप्रहरणमप्यनूयाजोत्कर्षेणोत्कृष्यत एव। अत्र च पूर्वपक्षे क्रतुपशुभिस्सह प्राजापत्यहविषा प्रचारात् 'शृतं हविश्शमितः' इत्यादीनां तन्त्रता। सिद्धान्तेत्वावृत्तिरित्यध्यायसङ्गतिः।

पार्थसारथिस्तु—मनोतामन्त्रस्य पूर्वपक्षे तन्त्रतेत्याह। तत्तु विभिन्नदेवताकस्थले एकस्य पशोर्दैवतसौविष्टकृतैडावदानत्रयपूर्वकं होमं कृत्वाऽपरस्यापि कार्यमिति स्वयमेव पञ्चमे व्यवस्थापितत्वात् कालभेदेनावदानकालीनमनोतामन्त्रस्यावृत्तेः पूर्वपक्षेऽपि समानत्वादुपेक्षितम्॥

---

त्यर्थः। प्राकृतकालप्रत्यासत्तेरिति। प्रकृतौ हि अङ्गयागानन्तरं शस्त्रवतां सोमानामनुष्ठानमिति इहापि औपदेशिककालानुरोधेन शस्त्रवतामुपर्यनुष्ठानेऽपि प्राकृताङ्गप्रचारकालः स्वल्पेनापि व्यवधानेन प्रत्यासन्नो भवतीत्यर्थः। तस्यागन्तुकस्थानत्वादिति। उक्थ्यादिस्तोत्राणामागन्तूनामग्निष्टोमस्तोत्रादूर्ध्वं स्थानं क्लृप्तं इति तस्मिन्नेव स्थाने आगान्तुकस्य प्राजापत्यहृदयाद्यङ्गप्रचारस्य निवेश इत्यर्थः। सर्वसोमान्ते इति। उक्थ्यषोडशिग्रहाभ्यासान्त इत्यर्थः। ननु अङ्गयागानन्तरमुत्तराङ्गत्वेनानूयाजानां तदुत्तरं परिधिप्रहरणस्य चानुष्ठाने आग्निमारुतोत्तरत्वस्यानूयाजे प्रहरणोत्तरत्वस्य च हारियोजने बाधापत्तिरित्यत आह--यत्त्विति। अत्र च पूर्वपक्षे इति। प्रथम इति शेषः। सिद्धान्ते त्वावृत्तिरिति। भिन्नकालत्वादित्यर्थः। कालभेदेनेति। क्रतुपशूनां भिन्नदेवत्यत्वात् तदर्थमेकदा मनोतामन्त्रेणाऽवदाने कृतेऽपि ऐडावदानान्तं तत्रानुसमयस्यावश्यकत्वात्, तदुत्तरकाले भिन्नदेवत्यत्वेन प्राजापत्यावदाने क्रिय-

**(१५)—उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्चनङ्गत्वाद्यथानिष्कर्षे नान्वयः ॥ ५४ ॥ वाक्यसंयोगाद्वोत्कर्षस्समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५५ ॥**

सवनीये पशौ **प्राकृतस्य सूक्तवाकस्य विकृतः पाठस्समाम्नात । स चानूयाजोत्कर्षादाग्निमारुतादूर्ध्वमुत्कृष्यत इति** स्थितम् । **तत्र च सवनीय**पुरोडाशदेवता **'भृज्जन्निन्द्राय हरिवते धानाः'** इत्यादिना **सङ्कीर्त्यते,** हरिवदादिपदैश्च **तद्यागदेवता इन्द्र एव लक्षणया**

---

माणे भिन्नकालत्वात् न मनोता तन्त्रेण प्राप्नोति, किन्त्वावृत्तिरेवेत्यर्थ. । प्रकाशकारैरय ग्रन्थः केनचित्प्रक्षिप्त इत्युपेक्षितः ।

---

**उत्कर्षे सूक्तवाकस्य ।**

दर्शपूर्णमासयोस्तावत् अयं क्रमः—प्रधानयागानन्तरं स्विष्टकृदिडाभक्षणचतुर्धाकरणान्वाहार्यदानानूयाजप्रस्तरप्रहरणपत्नीसंयाजपिष्टलेपहोमसमिष्टयजुर्होम इति । तत्र सूक्तवाकप्रैष इषिता दैव्या होतार इति ; इदं द्यावापृथिवीति सूक्तवाकमन्त्रः, स चेष्टदेवताप्रकाशनाद्यर्थः, दैक्षेपि तादृश एवाङ्गयागोत्तरं क्रमः, अग्निमद्यहोतारमवृणीतायं यजमानः इति प्रैष इति विशेषः । सवनीये तु अङ्गयागस्तृतीयसवने आग्निमारुतशस्त्रमन्ते तदूर्ध्वमनूयाजा उत्कृष्टाः, तत्र सवनीये दैक्षातिदेशेन सूक्तवाकस्य तत्तदिष्टदेवतावाचकपदप्रक्षेपेण विकृतः पाठो भवति । तत्र यथा प्रधानभूतसवनीयदेवता संकीर्त्यते, तथा सवनीयहविषामपि पूर्वमनुष्ठितानां देवतास्संकीर्तनीया भवन्तीति तद्वाचकपदघटिताः पठनीयाः, सूक्तवाकश्च प्रस्तरप्रहरणाङ्ग, प्रस्तरप्रहरण चानूयाजोत्कर्षेणोत्कृष्टं, तद्यदा अनूयाजोत्तरं कर्तव्य तदा सूक्तवाकोऽपि पठनीयश्चेत् स किं सवनीयहविर्देवतावाचकपदघटितः पठनीयो वा नवेति विचार इत्येतत्सर्वममिप्रेत्याह-**सवनीये पशाविति । स्थितमिति ।** तदाद्युत्कर्षन्यायेन पञ्चमे प्रस्तरप्रहरणोत्कर्षसिद्धेः स्थितमित्यर्थः । **पुरोडाशदेवता इति ।** पुरोडाशपदं सर्वत्र सवनीयहविर्मात्रोपलक्षणम् । **इत्यादिनेति ।** आदिपदेन "पूषण्वते करंभं सरस्वतीवते भारत्यै परीवापमिन्द्राय पुरोडाशं मित्रावरुणाभ्यां पयस्याम्' इत्यन्तानां संग्रहः । एवरूपेणायं यजमान इति पाठेन सङ्कीर्त्यन्त इत्यर्थः । ननु सवनीयहविष्षु इन्द्रस्यैव देवतात्वात् कथमेतैः पदैः सूक्तवाके सङ्कीर्तनमित्यत आह—**हरिवदादिपदैश्चेति ।** तथा चेन्द्रपदेनैव प्रकाशनं कर्तुं युक्तं, तथापि विधिषु लाक्षणिकहरिवदादिपदैरेवेन्द्रस्य देवतात्वेन

**प्रकाश्यते । यद्यप्यापस्तम्बाद्युक्तरीत्या निर्वापे हरिवदादीनामप्युद्देशः प्रतीयते । तथाऽपि त्यागवेळायामिन्द्रोद्देशस्यैव** वाचनिकत्वाल्लक्षणया **सूक्तवाके तत्प्रतिपादनं नायुक्तं, पाशुकं तन्त्र सवनीयेषु पुरोडाशेषु प्रसज्यत** इति वक्ष्यते । तत्रोत्कृष्यमाणे **सूक्तवाके पुरोडाशदेवता-पदानामप्युत्कर्षो न वेति चिन्तायां—पुरोडाशदेवतापदानां पश्वङ्गतया पाशुकानूयाजैर्बद्धक्रमत्वाभावेन** दाक्षिणाग्निकहोमवदनुत्कर्षात्तानि तावत् **सवनीयपुरोडाशेडाभक्षणोत्तरकालं पठनीयानि ; अतश्च तदेकवाक्यतापन्नानां** तन्त्रपदानामपि **तद्गुणत्वात्तत्र पाठा-**

---

विधानात् विधिगतशब्दस्यैव निगमेषूच्चारणनियमात् तेषामेव पदानां प्रक्षेपो युक्त इत्यर्थः । **वाचनिकत्वादिति** । "अथ कस्मादेतेषां हविषामिन्द्रमेव यजन्तीति, एताः ह्येनं देवता इति ब्रूयात्, एतैर्ह्येविर्भिरभिविज्यस्तस्मात्" इत्यादिना तैत्तिरीयब्राह्मणे प्रथमाष्टके इन्द्रोद्देशस्यैव विधानादित्यर्थः । एतच्च सूक्तवाके हरिवदादिपदप्रक्षेपकरण मीमांसाभाष्यकारोक्तमङ्गीकृत्योक्तम् । **वस्तुतस्तु** 'अग्निमद्य होतारमवृणीतायं सुन्वन्यजमानः पचन् पुरोडाशान् गृह्णन् ग्रहान् अग्नय आज्यं सोमायाज्यं बध्नन्नग्नये छागं सुन्वन्निन्द्राय सोम भर्जन् हरिभ्यां धानाः, सूपस्था अद्य देवो वनस्पति-रभवत् अग्नय आज्येन सोमायाज्येन अग्नयेछागेनेन्द्राय सोमेन हरिभ्यां धानाभिः" इत्याद्यानु—पूर्वीकस्यैव सूक्तवाकस्य पाठात् हरिवदादिपदघटितपाठो निर्मूल एवाधिकरणविचारस्य हरिभ्यां धाना इत्येतादृशपाठमादायाप्युपपत्तेरिति ध्येयम् । **इति वक्ष्यत इति** । पशुसवनीयेषु विकल्पस्स्यात् वैकृतश्चेदुभयोरश्रुतित्वादिति द्वादशद्वितीयपादगते अधिकरण इति शेषः । ततश्चोत्कृष्टानूयाजैरिव तदुत्तरक्रियमाणपश्वर्थप्रस्तरप्रहरणेनैव सवनीयहविरुपकारसिद्धेः सवनीय-हविषामर्थे पृथक् प्रस्तरप्रहरणानुष्ठानाभावात् यदा पाशुकं प्रस्तरप्रहरणमुत्कृष्ट तदानीमेव सूक्तवाकपाठ इत्यर्थः । **तत्रोत्कृष्यमाणे इति** । पूर्वोक्तरीत्या उत्कृष्यमाणे इत्यर्थः । **दाक्षिणाग्निकहोम-वदिति** । यथा पिष्टलेपफलीकरणहोमानां पश्वनङ्गतया भिन्नप्रयोगविधिपरिगृहीतत्वात् न पाशु-कानूयाजैर्बद्धक्रमकत्वमिति पाशुकानूयाजोत्कर्षेऽपि, तेषामुत्कर्षाप्रसक्तेः अनूयाजेभ्यः पूर्वमेव सवनीयहविरङ्गत्वात् पूर्वमेवानुष्ठानं 'प्रासङ्गिकं च नोत्कर्षेदसंयोगादितिपञ्चमप्रथमपादगतेऽधि-करणे सिद्धान्तात् तद्वदेवेत्यर्थः । एतावता च तदधिकरणापवादोऽयमिति सूचितं । एवं च सवनीयहविर्देवतावाचकपदानामुत्कर्षे प्रमाणभावात् लिङ्गेन पाशुकदेवतावाचकपदैकवाक्य-तारूपवाक्यबाधात् प्रधानप्रत्यासत्तिलाभाय सवनीयहविरिडाभक्षणोत्तरं पठनीयानीत्याह— **तानि तावदिति** । **तन्त्रपदानामपीति** । अयं यजमान इत्यादिपूर्वोत्तरपदानि यानि साधारण-त्वात् तन्त्रपदानि तत्तद्देवतावाचकपदैकवाक्यतया गुणत्वात्तान्यपि अपकर्षेण पूर्वं पठनीयानीत्यर्थः । अत्र च प्राजापत्यप्रचारस्योत्कर्षेऽभिहिते तत्प्रसङ्गात् सवनीयदेवतापदानामपि उत्कर्षः प्रतिपाद्यत

वश्यकता। ततश्च तेषां पशुदेवतापदं प्रत्यपि गुणत्वादावृत्तिरिति प्राप्ते—

तन्त्रपदापेक्षित्वादेषां न तावत्केवलानां प्रयोगाशङ्का। तदनुरोधेन तन्त्रपदावृत्ति-कल्पना तु पुरोडाशविधेस्तन्त्रपदांशे पशुप्रयुक्तानामेवोपकारलाभेन प्रयोजकशक्तिकल्प-नागौरवापत्तेरयुक्तैव: न हि प्रधानभूतपुरोडाशदेवतापदानामनूयाजोत्तरकालं प्रयोगे किञ्चिद्वैगुण्यम्। इडाभक्षणोत्तरकालत्वस्य प्रकृतिदृष्टस्येहाप्यबाधात्। अव्यवहित-तदानन्तर्यस्य च प्रकृतावप्यसत्त्वात्। प्रधानप्रत्यासत्तिस्तु बाध्यमानाऽपि प्रयोजकशक्ति-कल्पनागौरवभिया नैव दुष्यति। अतस्तेषामप्युत्कर्षः।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
एकादशाध्यायस्य तृतीयः पादः

---

इत्यस्य विचारस्य शास्त्रदीपिकायां प्रसङ्गसङ्गतिरित्युक्त, तत् साक्षादेवावृत्तितदभावफलकत्वेना-ध्यायसङ्गत्युपपत्तेः अगतिकप्रसङ्गसङ्गत्याश्रयणस्यायुक्तत्वादयुक्तमिति सूचयितुमावृत्तिप्रयोजनं पूर्वपक्षे दर्शयति—ततश्चेति। प्रकृतावप्यसत्त्वादिति। दर्शपूर्णमासयोरपि नेडाभक्षणाव्यवधानेन सूक्तवाकपाठः मध्ये चतुर्धाकरणान्वाहार्यदानानूयाजानन्तरं प्रस्तरप्रहरणादिपदार्थैः व्यवधानात् अतो व्यवधानमुपेक्ष्य यथा तदुत्तरत्वमात्र प्रकृतौ स्थितं तद्वदिहापि उपपन्नमेव। उत्कर्षेपि तेषां पदानां तत्तद्देवताप्रकाशकत्वहानेः न लिङ्गविरोधोऽपीत्यर्थः।

इति श्रीशम्भुभट्टीये एकादशस्य तृतीयः पादः।

---

## अथ एकादशाध्यायस्य चतुर्थः पादः

(१)—चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥ प्रतिदाक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्यां तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३ ॥

सर्वैरेकफलसाधनानामनेकेषां कर्मणां फले साहित्यावगमेऽपि देशकालकर्तृभेदे प्रयोगभेदादङ्गावृत्तिरित्युक्तम्। तदिह यत्र देशादिभेदो नाम्नात दक्षिणाभेदमात्रं श्रुतं यथा—राजसूये 'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा, सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणा' इत्यादौ। तत्र किं दक्षिणाभेदात्कर्तृभेदस्ततश्च प्रयोगभेदादावृत्तिः किं वा नेति चिन्तायां—

सत्यपि दक्षिणाभेदे कर्तृभेदे प्रमाणाभावः। न ह्यत्राधिष्ठानभेदस्तत्रापीष्टः तदैक्यस्योत्तराधिकरणे स्थापयिष्यमाणत्वात्। कर्तृस्वभेदस्तु न दक्षिणाभेदव्यापकः प्रमाणाभावात्, दर्शपूर्णमासे चान्वाहार्यदक्षिणावृत्तावपि कर्तृभेदाभावाच्च। 'दर्शपूर्णमासयोश्चत्वार ऋत्विज' इत्यनेन षण्णां सहितानामेको व्यापकः कर्तृप्रयोगः 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यत्र दैशिकप्रयोग इव विधीयते। अतश्च सत्यपि कालिकप्रयोगभेदे कर्तृप्रयोगस्यैकत्वात् कर्तृत्वैक्यावगमः।

वस्तुतस्तु—नात्र दक्षिणाभेदोऽपि, द्वादशाहवदेकफलसाधनत्वेनैकप्रयोगत्वावगमे वामनश्यामयोर्मिलितयोरेव दक्षिणात्वात्। अत एव 'अन्वहं द्वादशशतं ददाति' इत्यनेन प्रत्यहं विभज्य दानेऽपि न तत्र दक्षिणाभेद इत्युक्तम्।

---

**अथ चतुर्थः पादः**

**चोदनैकत्वाद्राजसूये**

**वामनो दक्षिणेति। वामनश्यामौ च गावौ।**

अतश्च तत्तत्प्रधानाङ्गत्वेन व्यवस्थितयोरपि वामनश्यामयोरेकप्रयोगत्वान्मिळित-योरेव दक्षिणात्वम्। आवश्यकश्चायं न्यायो ब्राह्मणकर्तृकावेष्टिप्रयोगे व्रीहिश्यामाकाग्रयण-योस्समानतन्त्रत्वे चेति प्राप्ते—

दक्षिणायाः कर्तृसंस्कारकतया तद्वदेव प्रयोगान्वयित्वाद्युक्तं तद्भेदाक्षेपकत्वम्। न ह्यन्यथा तत्तत्प्रधानानां व्यवस्थितदक्षिणाकत्वं कथमपि सङ्गच्छते। न चात्र द्वादशाह-वन्मिळितयोर्दक्षिणात्वं, प्रत्येकं दक्षिणापदश्रवणेन भेदावगतेः। द्वादशाहे तु प्रत्येक-दक्षिणापदाश्रवणात् तदैक्यमिति विशेषः। न च दर्शे पूर्णमासे च दक्षिणाभेदसत्वेऽपि कर्तृत्वभेदाभावः, आध्वर्यवादिसमाख्यया तेषां तेषां कर्तॄणां प्रतियागं भेदेनैव विहिततया 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इत्यस्य 'सोमे सप्तदशर्त्विजः' इत्येतद्भिर्ध्यन्तरैकवाक्य-तया तदर्थवादत्वेन कर्तृप्रयोगविधायकत्वाभावात्। अत एव दर्शे पूर्णमासे च पृथग्व-रणानुष्ठानं याज्ञिकानाम्।

एवं च—दक्षिणायाः कर्तृत्वभेदद्वारा प्रयोगभेदावश्यकत्वे राजसूयान्तर्गतावेष्ट्यादौ प्रयोगभेदसिद्धाया अपि तस्या अन्नाद्यफलकब्राह्मणादिकर्तृकावेष्ट्यादिप्रयोगे दक्षिणापेक्षाया सति सम्भवे तत्तत्प्रधानाङ्गत्वेनावगतायास्तस्या एवोपस्थितत्वात् आग्नेयीन्यायेन ग्रहणं न त्वन्तःक्रतुप्रयोगे बाधितायाः अन्वाहार्यदक्षिणाया इति वक्ष्यते। अस्तु वा तत्रापि सा। सर्वथा दक्षिणाभेदे प्रयोगभेद इति सिद्धम्॥

---

आवश्यकश्चायमिति। राजकर्तृके राजसूये आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा ऐन्द्र-मेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गीगी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा इति वाक्यैः प्रत्येकं दक्षिणाम्नानात् अवेष्टिसंज्ञकाः पृथक् प्रयोगाः पंचेष्टीर्विधाय तदवान्तरप्रकरणे "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभि-घारयेत्, यदि राजन्य ऐन्द्रं यदि वैश्योवैश्वदेवम्' इति श्रुतैर्वाक्यैः ब्राह्मणादिकर्तृकपंचहविष्कै-केष्टिप्रयोगान्तरं बहिः क्रत्वन्नाद्यरूपफलार्थं विधीयत इति साधित द्वितीये अवेष्ट्यधिकरणे। तत्र ब्राह्मणादिकर्तृकावेष्टिप्रयोगे एकस्मिन्नेव तत्तदिष्टिषु विहिततत्तद्दक्षिणाभेदे सत्यपि तस्यैव मिलितै-कदक्षिणात्वेन उपादानेनैव एकप्रयोगत्व निर्वाह्यम्। एवं व्रीह्याग्रयणे वत्सो दक्षिणा, श्यामकाग्रयणे वासस्तयोरपि मिलितदक्षिणात्वेनैव एकप्रयोगत्वमुपपादनीयमिति मिलितदक्षिणात्वान्न प्रयोगभेदः इत्यय न्याय आवश्यक इत्यर्थः। **इति विशेष इति**। मिलितदक्षिणात्वे दक्षिणाशब्दे अवयव-लक्षणापत्तिरित्यर्थः। स्वस्वभेद्यप्रयोगाङ्गभूता सा सा दक्षिणा तत्तत्प्रयोगभेदाभावे एकप्रयोगे। कथमपि नैव प्राप्नोतीत्यत आह—**अस्तु वेति**। **सा** अतिदेशप्राप्ता अन्वाहार्यदक्षिणेत्यर्थः

(२)—अनियमस्स्यादिति चेत् ॥ ४ ॥ नोपदिष्टत्वात् ॥ ५ ॥ प्रयोजनैकत्वात् ॥ ६ ॥ अविशेषार्था पुनश्श्रुति ॥ ७ ॥

तदेव दक्षिणाभेदात् कर्तृत्वभेदेन प्रयोगभेद इत्युक्तम्। इदानीं तदधिष्ठानभूता पुरुषा किं भिन्ना उत त एवेति चिन्त्यते—

तदिह यथैकफलसाधनानां प्रयोगैक्यमेव प्रमाणावगतं तत्र पुरुषैक्यं तावदविवादमेव। यत्रापि चातुर्मास्यराजसूयादौ तद्भेदप्रापकं प्रमाणं तत्रेतराङ्गभेदवत् पुरुषभेदोऽपि स्यादिति प्राप्ते—

कतिपयप्रधानप्रयोगे उपात्तानां तेषां त्यागे प्रयोगान्तरे अन्वेषणप्रसक्तौ कर्मविक्षेपापत्तेस्तेषामेव सर्वादौ लौकिकसंवित्करणेनोपादानं, न तु यथाश्रुतभाष्यस्वारस्यात् सर्वादौ तन्त्रेण वैदिकं वरणं प्रयाजादीनामिव वरणस्यापि तन्त्रत्वे प्रमाणाभावात्। अत एव यत्र न कर्मविक्षेपाशङ्का तत्रान्योपादाने न क्षतिः। न चैवं लौकिकसंवित्करणेनैव सर्वप्रयोगेषु तेषां कर्तृत्वनिश्चयापत्तौ तत्तत्प्रयोगारम्भे पुनर्वरणवैयर्थ्यं, संवित्करणेन कादाचित्काकरणशङ्काव्यावृत्त्यर्थत्वात्। अत एव लौकिकोपायसाध्यसंविद्भङ्गे स्मार्तं पुरुषार्थप्रायश्चित्तम्। वैदिकवरणसाध्यसंविद्भङ्गे क्रत्वर्थं तदित्यपि ध्येयम्। तस्मात्सति सम्भवे त एवेति सिद्धम्।

---

उभयथाप्यत्रोपात्तापि दक्षिणा पृथग्भूताऽपि मध्येनिधानान्यथानुपपत्त्यवगतप्रयोगैक्यत्वस्य न बाधिका भवति। एवं व्रीह्याग्रयणश्यामाकाग्रयणयो वाचनिके समानतन्त्रत्वे सति तस्या एव दक्षिणाया उपस्थितत्वेन ग्रहणेपि प्रयोगभेद इत्यर्थ ।

---

अनियम स्यादिति चेत्।

इतराङ्गभेदवदिति। एतेनानियमपूर्वपक्षो निरस्त अत भाष्यकारेण सर्वादौ तन्त्रेण वरणमिति सिद्धान्तितं वार्तिककृता दूषितं तदनुसन्धत्ते—न त्विति। स्मार्तमिति। लौकिकसंविद्भङ्गेऽनृतवदनापत्त्या स्मार्तपुरुषार्थनिषेधातिक्रमे स्मार्तप्रायश्चित्तमित्यर्थ ।

---

(३)—अवेष्टौ चैकतन्त्रयं स्याल्लिङ्गदर्शनात् वचनात्कामसंयोगेन ॥ ८ ॥
क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ ९ ॥

राजसूये अवेष्टिसंज्ञकानि पञ्च कर्माणि 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इत्येतैर्वचनैर्विहितानि। तत्राप्युत्पत्तिवाक्ये दक्षिणाभेदश्रवणात् कर्तृत्वभेदेन पूर्ववत्प्रयोगभेदः।

न च 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा अभिघारयेत्' इत्यादिवचनैर्मध्येनिधानादिरूपगुणसामर्थ्येन पञ्चहविष्कैकेष्टिप्रयोगावगतेरुत्पत्तिवाक्ये दक्षिणाशब्दो दक्षिणाद्रव्यपर इति वाच्यं, तस्य ब्राह्मणादिकर्तृकत्वेनाम्नायार्थं बहिःक्रतुप्रयोगत्वेन स्थापितत्वात् राजसूयमध्ये क्रियमाणानां तेषां पृथक्प्रयोगत्वोपपत्तेः।

न च राजसूयप्रकरणपठितानामप्येषां निरवकाशेन विशेषवचनेन ब्राह्मणादिकर्तृकत्वेनाम्नायार्थत्वावगमात् सामान्यविहितसावकाशस्वाराज्यसम्बन्धानुपपत्तेः अन्तःक्रतु-

---

अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात्।

**पिशङ्गीपष्ठौहीति।** पिशङ्गवर्णा पष्ठौही पञ्चहायना गौरित्यर्थः। **वशा**—वन्ध्येत्यर्थः। **शितिपृष्ठ इति।** शितिवर्णपृष्ठो गौः पुमानित्यर्थः। **मध्ये निधायेति।** आग्नेयादयः पञ्चपुरोडाशास्तेषां मध्ये पात्र्यां बार्हस्पत्य मध्येनिधाय आग्नेयादिप्रधानचतुष्टय क्रमेण कर्तव्य तत्र "हविषि हविषि इष्ट्वा बार्हस्पत्यमभिघारयति" इति शाखान्तरवचनात् क्रमेण एकैकप्रधानाङ्गेन बार्हस्पत्यहुतशेषेणोपस्तरणाभिघारणस्याभिघारणं कार्यं एवमग्रेपीत्यर्थः—**गुणसामर्थ्येनेति**—नहि पञ्चानां पृथक् प्रयोगे सति बार्हस्पत्यादीनां मध्येनिधानं सम्भवति, अतो मध्येनिधानरूपगुणसामर्थ्यात् पञ्चहविष्कैकेष्टिप्रयोगावगतिरित्यर्थः। आदिपदेनाहुतिमाहुतिमित्युपात्ता वीप्सापि गृह्यते, न च पृथक् प्रयोगे प्रत्याहुत्यभिघारणमुपपद्यत इति भावः। **स्थापितत्वादिति।** प्रयोगान्वयिनो ब्राह्मणकर्तृत्वादिरूपस्य गुणस्य राजकर्तृकराजसूयान्तर्गततत्प्रयोगेऽनिविशमानत्वेन राजसूयान्तर्गततत्तत्प्रयोगापेक्षया प्रयोगभेदकत्वस्यावेष्ट्यधिकरणे स्थापितत्वात् बहिः क्रतुप्रयोगे मध्येनिधानादिगुणनिवेशोपपत्तेः न तदनुरोधेनान्तः क्रतुप्रयोगेऽपि दक्षिणाभेदावगततत्तत्प्रयोगभेदबाधो युक्त इत्यङ्गानां न तन्त्र-

प्रयोग एव प्रमाणाभावः। स्वाराज्यार्थमन्त क्रतुप्रयोगस्यापि द्वितीये कौस्तुभे व्यवस्थापितत्वात्।

न चैवमपि बहिःप्रयोगानुरोधेन दक्षिणाशब्दस्यावयवपरत्वावश्यम्भावे अन्तःक्रतुप्रयोगेऽपि मिळिताया एव दक्षिणात्वात् कथं प्रयोगभेद इति वाच्यम्, दक्षिणाशब्दस्यावयवपरत्वे लक्षणापत्तेः प्रत्येकं दक्षिणात्वावगमेव प्रयोगभेदावश्यंभावात्। तस्य च मध्येनिधानादिरूपगुणानुरोधेन ब्राह्मणादिकर्तृकप्रयोगे निवेशासम्भवेऽपि अन्तःक्रतुप्रयोगनिवेशे बाधकाभावः।

न चैवं बहिःक्रतुप्रयोगे उपदिष्टदक्षिणानापत्तिः, दक्षिणायास्तत्तभेद्यप्रयोगद्वारकत्वेन पञ्चहविष्कैकेष्टिप्रयोगेऽङ्गत्वानुपपत्तेरिति वाच्यं, तत्प्रयोगस्य दक्षिणापेक्षायां सति सम्भवे तत्तत्प्रधानाङ्गत्वेनावगतायास्तस्या एवोपस्थितत्वादाग्नेयीन्यायेन ग्रहणोपपत्तेः। अस्तु वा तत्रातिदेशिक्येव दक्षिणा, सर्वथा अन्तःक्रतुप्रयोगभेदः।

---

(४)—पवमानहविष्ष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १० ॥ लिङ्गदर्शनाच्च ॥ ११ ॥ वर्तमानापदेशाद्वचनात्तु तन्त्रभेदस्स्यात् ॥ १२ ॥ सहत्वे नित्यानुवादस्स्यात् ॥ १३ ॥

अनेकप्रधानकाः पवमानेष्टयः 'संवत्सरे निर्वपेत् द्वादशाहे चतुरहे वा अह्नो निरुप्याणि' इत्यनेन तत्तत्कालविशिष्टैकप्रयोगविधानात् 'पौर्णमास्यां पौर्णमास्या यजेत'

---

त्वमित्यर्थः। व्यवस्थापितत्वादिति। अत्रान्नाद्यादिफलसबन्धस्यापि ब्राह्मणादिकर्तृकप्रयोगे सावकाशत्वेन राजसूयप्रकरणपाठबाधायोगात् तत्सार्थक्यायान्तः क्रतुप्रयोगस्यापि स्वाराज्यार्थे भिन्नतयोपपत्तेः। अत एव "ईश्वरो वा एष दिशोनून्मदितोः यद्दिशोनुव्यास्थापयति दिशामवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठन्त्यनुन्मादाय" इत्यर्थवादोऽपि राजसूये दिशो व्यवस्थापयन्तीति वचनविहितदिग्विजयप्रयुक्ताधिपत्यजनितोन्मादपरिहारार्थत्वज्ञापनद्वारा अवेष्टिस्तुत्योपपन्नो भवतीत्येवमन्तः प्रयोगभेदस्य व्यवस्थापितत्वादित्यर्थः। तस्य चेति। प्रयोगभेदस्येत्यर्थः। मध्येनिधानादीत्यादिपदेन एतयाऽन्नाद्यकाम याजयेदिति फलवाक्यगतैतच्छब्दात् प्रयुक्तैकवचनं संगृह्यते। नहि प्रयोगभेदे प्रयोगाभिप्रायमेकवचनं युज्यते। अतस्तत्र कामार्थमेकप्रयोगतैवेत्यर्थः। ग्रहणोपपत्तेरिति। एकप्रयोगताऽविरोधेन मिलितदक्षिणात्वेन ग्रहणोपपत्तेरित्यर्थः।

इत्यादिवदेकप्रयोगेणैव कर्तव्या इत्यविवादम्। अत एव 'अह्नो निरुप्याणि' इत्यत्र अह्नः सद्यः आधानसन्निकृष्टानीत्यर्थाङ्गीकारेण संवत्सरादिकालबाधमात्राङ्गीकारेऽपि संवत्सर-वाक्ये कालविधेरावश्यकत्वेन तत्रैकप्रयोगविधेरावश्यकत्वात् तस्यैव चाधानसन्निकर्ष-विधानेन सद्यःपक्षेऽप्येकप्रयोगतासिद्धिः। अत एव 'सह निरुप्याणि' इत्यनुवादोऽपि सङ्गच्छते।

तदेवं नित्यप्रयोगे सहत्वविधानेऽपि संयोगपृथक्त्वन्यायेन 'यो ब्रह्मवर्चसकाम-स्स्यात्तस्य सर्वाणि सह निरुप्याणि' इत्यनेन फलार्थं सहत्वं दध्यादिवद्विधीयते। तदेवं स्थिते पुनर्यः कामयेतोत्तरोत्तरं वसीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यां उत्तरे हविषी समानबर्हिषी निर्वपेत्' इति श्रुतम्। तत्र ल्यपा पवमान-प्रयोगोत्तरकालताविशिष्टपावकशुचिसमानतन्त्रैकप्रयोगस्यैव फलार्थं विधानात् न त्रयाणा-मेकप्रयोगता। न च नित्यप्रयोगे त्रयाणामपि सहत्वविधानात् अत्र ल्यपा प्रधानमात्र-क्रम एव दध्यादिवत् फलार्थं विधीयतामिति वाच्यं, तथात्वे उत्तरयोरेव समान-बर्हिष्कत्वानुवादानुपपत्तेः। न चैवं प्रयोगभेदे कर्तृभेदात् ल्यबुक्तसमानकर्तृकत्वानु-पपत्तिः, वरणभरणादिभेदेन ऋत्विङ्निष्ठकर्तृत्वभेदे तदधिष्ठानैक्यमात्रेण यजमानरूप-कर्त्रैक्येन वा तदुपपत्तेः।

वस्तुतस्तु—आधानदक्षिणानां पवमानेष्टिमध्य एव दानविधानात्तयैव प्रसङ्गेन कार्यसिद्धे न पवमानेष्टिषु पृथग्वरणभरणे। अतस्तत्र कालिकप्रयोगभेदेऽपि कर्तृत्वै-क्यात् ल्यबुपपत्तिरविकलैव॥

---

## पवमानहविष्वैकतंत्र्यम्।

अह्नो निरुप्याणीत्यत्राहः शब्दस्य यथाश्रुतार्थपरत्वे वैयर्थ्यात् सद्योरूपार्थत्वेनाधानसनि-कृष्टानीत्यर्थाङ्गीकारेऽपि प्रयोगभेदेनानुष्ठानेऽपि तत्सन्निकर्षानपायात् कथमेकप्रयोगता तत्पक्षे सिद्ध्यतीत्यत आह—अत एवेति। सह निरुप्याणीत्यनुवादो पीति। वक्ष्यमाणफल-सबन्धबोधकवाक्ये सह निरुप्याणीत्यस्यानुवादत्वेन प्राप्त्यपेक्षायां एकप्रयोगतयैव तत्प्राप्तिर्वक्त-व्येत्यनुवादबलादप्येकप्रयोगतेत्यर्थः। अत्र च "पवमानाय निरुप्याथपावकाय शुचये च" इति तन्त्ररत्ने वचनस्य लिखनात् वचनसत्वे काम्यप्रयोगे न समानतन्त्रत्वपूर्वपक्ष उदेतीति पूर्वपक्षा-नुक्त्या सूचितम्। स्पष्टार्थमन्यत्।

---

(५)—द्वादशाहे तु प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १४ ॥
अह्नां चाश्रुतिभूतत्वात् तत्र साङ्गं क्रियेत यथा माध्यंदिने ॥ १५ ॥
अपि वा फलकर्तृसम्बन्धात् सहप्रयोगस्स्यादाग्नेयाग्नीषोमीयवत् ॥
साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारस्स्यात् ॥ १७ ॥
दीक्षोपसदां च सङ्ख्या पृथक्पृथक्प्रत्यक्षसंयोगात् ॥ १८ ॥
वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् ॥ १९ ॥ तथा त्वान्यार्थदर्शनम् ॥
चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २१ ॥

द्वादशाहे द्वादशदीक्षाः द्वादशोपसदः द्वादशसुत्याश्च विहिताः। तत्र 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यनेन द्वादशानां सुत्यानां फलसम्बन्धेऽवगते प्रत्येकातिदेशप्राप्तदीक्षोपसदनुवादेन द्वादशत्वसङ्ख्याविधौ एकैका सुत्या प्रत्येकं द्वादशसङ्ख्याकदीक्षोपसद्युक्ता कर्तव्येति द्वादश पञ्चविंशतिरात्रास्सम्पद्यन्ते। न च द्वादशाहपदस्य द्वादशदिनात्मककालविधायित्वात् कथमेतावद्दिनसाध्यतेति वाच्यं, अहश्शब्दस्य सुत्यात्मकक्रतुवाचित्वेन द्वादशसङ्ख्याकसुत्यात्मकत्वस्य प्राप्तत्वेन तस्य नामधेयत्वादिति प्रथमः पक्षः।

---

द्वादशाहे तु प्रकृतित्वात्

प्रत्येकातिदेशेति। प्राकृतदीक्षोपसत्सङ्ख्यायाः इह प्रत्येकमह्नामतिदेशात् प्रत्येकमेवेति एकैकमहर्द्वादशदीक्षोपसद्युक्तं कर्तव्यमित्यर्थावगतेः चतुर्विंशतिदिनेषु दीक्षोपसदौ कृत्वा पञ्चविंशे दिने एका सुत्या कर्तव्येति क्रमेणैकैकस्मिन् पञ्चविंशतिरात्रे कर्तव्यत्वेन प्रतीतेः शतत्रयदिनसाध्यो द्वादशाहो भवतीत्यर्थः। द्वादशसंख्याकसुत्यात्मकत्वस्येति। प्रायणीयमारभ्य उदनीयान्तानामह्नां द्वादशानामेव क्रमेण पाठादेव सुत्यासु प्रचयशिष्टद्वादशत्वसङ्ख्याप्राप्तेः द्वादशसङ्ख्यसुत्यात्मकत्वस्य प्राप्तेस्तत्प्रख्यन्यायेन नामधेयं, ततश्च द्वादशसुत्याभ्यासपरिच्छिन्नक्रतुपरो द्वादशाहशब्दः यजिपदसामानाधिकरण्यादित्यर्थः। एतेन तत्र द्वादशाहशब्दो यजिपदसामानाधिकरण्यात् द्वादशानामह्नां समाहार इत्येवं नामधेयं न कालवाचीति प्रकाशकारोक्तमपास्तम्। द्वादशानामह्नां समाहारोक्तौ यजिसामानाधिकरण्यहेतोरसाधकत्वात्, प्रत्युत समाहारस्य यागाङ्गत्वा-

**नाहश्शब्दस्य क्रतौ रूढिः अपि तु दिन एव शक्तस्य क्रतुविशेषे निरूढलक्षणया प्रयोगात्। अतो लक्षणायां प्रमाणाभावात् द्वादशदिनात्मककालविधिरेवायम्। अतश्च** सान्तपनीयान्यायेन **आतिदेशिककालबाधात् साङ्गानां द्वादशसुत्यानां द्वादशदिनसमाप्यत्वावगतेः एकस्मिन्नहनि द्वादशसङ्ख्याकदीक्षोपसद्युक्तैकैका सुत्या समापनीयेति द्वादश** साद्यस्काः **कर्तव्या इति द्वितीयः।**

**साहित्येनैकफलसाधनानां द्वादशानामपि सुत्यानां प्रयाजवत्तन्त्रेणैव निरुक्तसंख्याकदीक्षोपसत्करणोपपत्तेः तदावृत्तौ प्रमाणाभावः। अतश्च औपदेशिककालानुरोधादाद्यदिन एव निरुक्तसंख्याकदीक्षोपसदादिकं ससुत्यं सर्वं समाप्य** द्वादश सुत्या **एकैकस्मिन् दिने कर्तव्या इति तृतीयः॥**

**यत्त्वस्मिन् पक्षे 'चतुरहे दीक्षा चतुरहे उपसदश्चतुरहे सुत्याः' इति मूलेऽनुष्ठानमुक्तं**

---

भावे नामधेयत्वासाधकत्वाच्च। **यत्तु प्रकाशकारैरस्मिन्** पक्षे सर्वसुत्यानां पर्वकालत्वबाधे प्रमाणाभावात् तदनुरोधेन दीक्षोपसदां उपक्रमतिथिवृद्धौ सप्तम्यांह्रासे पञ्चम्यामुभयाभावे षष्ठ्यां कर्तव्येति मध्ये प्रतिपदादिकतिचिद्दिनव्यवधानात् पृथक् प्रयोगत्वेन कर्तृभेद इत्युक्त तदस्मिन्पक्षे द्वादशाहपदस्य नामधेयत्वेन साहित्यप्रतीतेस्तदनुरोधेन सिद्धान्त इव पर्वकालबाधोपपत्तेः दीक्षोपसद्गतद्वादशत्वानुरोधेन चतुर्विंशतिदिनव्यवधानानुमतावपि तदधिकदिनव्यवधानकरणे प्रमाणाभावादयुक्तम्। अतः पञ्चविंशदिने प्रथमाहरनुष्ठानाव्यवधानेनैव उत्तराहर्दीक्षोपसदां षड्विंशदिने उपक्रमः कर्तव्य इति न कर्तृत्वभेदः, अतो द्वादशसुत्यापरिच्छिन्नक्रतुपरत्वमेव युक्तमिति सुत्यात्मकक्रतुवाचित्वेत्यनेन सूचितम्। समाहारसाध्यक्रतुपरत्वविवक्षापेक्षया तत्सङ्ख्यसुत्यापरिच्छिन्नत्वेनैव लाघवात् सामानाधिकरण्यस्य सूपपादत्वाच्च क्रतुगतैकत्वमादाय एकवचनप्रयोगोपपत्तेश्च। **कालविधिरेवायमिति**। द्वादशानामह्नां समाहार इत्यर्थेन दिनरूपकालविधिरित्यर्थः। **सान्तपनीयान्यायेनेति**। यथा मरुद्भ्यः सांतपनेभ्यो मध्यदिने चरुमिति विहितसान्तपनीयेष्टावौपदेशिकेनातिदेशिकस्य प्रातःकालस्य बाधस्तद्वदिहापि औपदेशिकेन द्वादशदिनत्वेनातिदेशिकपञ्चाहत्वादेर्बाध इत्यर्थः। **साद्यस्का इति**। यथा साद्यस्केषु पञ्चाहबाधेन सद्य एव साङ्गप्रधानं क्रियते तद्वदिहेति साद्यस्का इव कर्तव्या इत्यर्थः। **यत्त्वस्मिन् पक्षेऽनेनैव** दीक्षोपसत्सु द्वादशत्वप्राप्तेः तत्र द्वादशत्वविधिरनुवाद एवेति **प्रकाशकारैरुक्त** तदयुक्त; दीक्षोपसत्सु पृथक् द्वादशत्वविध्यभावे एकैकसुत्यायामेकैकदिनसाध्यायां प्रकृतिप्राप्तसंख्याकानामेव दीक्षोपसदां अनुष्ठानापत्तेः द्वादशद्वादशसङ्ख्यत्वेन तेषामनुष्ठानप्राप्त्यर्थं तद्विध्यावश्यकत्वादिति द्वादशद्वादशसङ्ख्याकदीक्षोपसद्युक्ता एकैका सुत्या समापनीयेत्यनेन सूचितम्— **द्वादशसुत्या इति**। क्रमेणेति शेषः। **चतुरहे इति**। अतिदेशप्राप्तदीक्षोपसद्गतसुत्या-

तत् प्रमाणाभावादुपेक्षितम्।

---

बहिर्भावाविरोधेनैवायमौपदेशिककालविधिरिति द्वादशादिनात्मकस्य कालस्य सम स्यादश्रुतत्वादिति-न्यायेन समविभागेन चतुरहे दीक्षा चतुरहे उपसदः चतुरहे सुत्या इत्येवमनुष्ठाने न्याय्ये तिस्रस्तिस्रो दीक्षा उपसदः सुत्याश्च एकैकस्मिन् दिने कर्तव्या इत्यर्थः फलतीति सुत्याकालात् बहिरनुष्ठानात् तन्त्रतादि सिद्धा भवतीत्यनुष्ठान युक्तमित्यर्थः। तत्तत्सुत्यासु एकैकदिनसाध्यत्वस्य उत्पत्ति-वाक्यैरेव प्राप्तेरर्थात् तद्द्वादशदिनसाध्यत्वस्य प्राप्तत्वेन एतद्वाक्येन फलतोऽङ्गेष्वेव तद्विधिसार्थक्या-वश्यकत्वात् अङ्गेष्वेव सुत्याबहिर्भावबाधेन एतत्कालनिवेशात् सुत्यासाधारण्येन समविभागाप्राप्तेः चतुरहे सुत्यानुष्ठाने प्रामाणाभाव इत्यभिप्रेत्याह—**प्रमाणाभावादिति**। अस्य कालविधेः साङ्ग-प्रधानप्रयोगान्वयित्वेन द्वादशदिनात्मककाले साङ्गप्रधानप्रयोगानुष्ठानावगतेः, समविभागन्यायस्य साङ्ग एव प्रधाने एकैकस्मिन् प्रवृत्तेश्चतुरहे दीक्षा चतुरहे उपसदः इत्यनुष्ठानावगतेः प्रसक्तेः उपेक्षित इत्यर्थः। वस्तुतस्तु तत्तदङ्गेषु सुत्याहदिनकालत्वावगतौ सवनीयवत् गृह्यमाण-विशेषत्वात् तन्त्राप्राप्तौ द्वितीयदिनकर्तव्यसुत्यार्थं कालभेदात् आवृत्तेरेव प्राप्तेः आवृत्तौ प्रमाणा-भाव इति **पूज्यपादोक्त**मपि न सम्यक्। अत एवाग्नीषोमीयादीनामपि नैव तन्त्रता। नहि कालिकप्रयोगभेदे प्रयाजादीनामपि तन्त्रतास्ति। न च साद्यस्कानुष्ठाने पूर्वपक्षे प्रधानमात्रांश एव कालविधिस्सम्मतोऽस्ति। एतेनावश्य च द्वादशस्वहस्सु साङ्गप्रधान कर्तव्यं तेन तन्त्रीभूत-द्वादशदीक्षोपसद्युक्ता द्वादशधावृत्तिः प्रसज्येतेति साद्यस्कपक्षे **तन्त्ररत्नोक्त** दूषणमप्यपास्तं, इष्टापत्त्या तत्परिहारात्। अतो यदौपदेशिककालमनुरुद्ध्याद्य एव दिने आवश्यक तावत्सङ्ख्यदीक्षोपसद्युक्तमेकैक-सुत्यानुष्ठान तदा तादृश द्वितीयेपि दिने तदनुरोधादेवावश्यकमिति न दीक्षोपसदां तन्त्रत्वमादाय तृतीय-पक्षोपपादन युक्तम्। अतस्तृतीयपक्षोपपादनं यत् प्राचीनैः कृत **तस्यायमभिप्रायः**-यद्यप्ययं काल-विधिः, तथापि न सर्वाङ्गोपेतैकैकसुत्यायां समविभागेनैकैकदिनविधायकता अशक्यत्वात्। नहीश्व-रेणापि द्वादशद्वादशादीक्षोपसद्युक्तमनेकाङ्गसवनत्रयभिन्नसुत्यानुष्ठानमेकदिने कर्तुं शक्यम्; अत एवाद्यदिनेऽपि पूज्यपादोक्तरीत्या तन्त्रानुष्ठानमप्यशक्यमेव। किञ्चानेकसुत्यापरिच्छिन्नयाग-प्रयोगस्य एकफले साहित्यावगमात् सहानुष्ठानं प्रतीतमेकस्य साङ्गस्य प्रत्यहमपवर्गे बाध्येत, तथा चायं कालस्तथा निवेशनीयः, यथा साहित्य न बाध्यते तच्च तदा भवेत् यदा पूर्वोत्तराङ्गतन्त्रता स्यात् तदा च प्रधानानां पत्नीसयाजान्तं भेदेनानुष्ठानेऽपि सहोपक्रमात् ताभ्यां साहित्यस्य शक्यानुष्ठान-त्वस्य च सम्भवात्। अतोऽङ्गविशिष्टप्रधाने अनिविशमानोऽय कालः अन्यथानुपपत्त्या केन चिदंशेनाबाध्यमानतया निवेशनीयः समविभागप्रायेणैव निविशत इति चतुरहे दीक्षेत्येवं पूर्वोक्त-रीत्यैव निवेश्यत इति न काचनाऽनुपपत्तिः। एवं च सति दीक्षोपसदाद्यङ्गानां सुत्याबहिर्भावः

**सिद्धान्तस्तु— अहःपदस्य कालपरत्वे** द्वदशाहमित्यापत्ते **यागसामानाधिकरण्येनाह-शब्दस्य** निरूढलक्षणया **यागपरत्वावश्यम्भावात्** तस्य च **सुत्यात्मकत्वेनाहस्साध्यत्वस्य प्रमाणान्तरेणैव प्राप्तेर्नानेन साङ्गे कालविधिः।** अपि तु **सर्वप्रधानानां द्वादशदिनात्मक-कालसाध्यत्वात् तत्प्रख्यन्यायेन नामधेयमेव द्वादशाहशब्दः। अतश्चातिदेशानुरोधात् सुत्यातो बहिरेव** द्वादशाहं दीक्षा **द्वादशाहं चोपसदः कृत्वा द्वादशाहं द्वादश सुत्याः कर्तव्याः। एवं च 'षट्त्रिंशदहो वा एषः यद्द्वादशाहः' इति लिङ्गमप्युपपद्यते।**

---

(६)—भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात् ॥ तथा चान्यार्थदर्शनम् ॥ २३ ॥ श्वासुत्यावचनं तद्वत् ॥ २४ ॥ पश्चतिरेकश्च ॥ २५ ॥

---

प्रकृतिदृष्टो न बाधितो भवति साहित्यं तन्त्रत्वं चोपपन्नतरं भवति । **द्वादशाहमित्यापत्तेरिति।** कालाध्वनोरत्यन्तसयोगे द्वितीयेत्यनुशासनात मासमास्त इतिवत् द्वितीयापत्तेरित्यर्थः । **निरूढ-लक्षणयेति।** यद्यपि दिवसे शक्तस्याहः पदस्य सुत्यायामेव निरूढलक्षणा तादृशाहः परिच्छिन्न-त्वाद्यागे.. . ..नाहःकालीनत्व विधेयं तस्य प्रातःसवनादि सवनत्रयसाध्यसुत्यात्मकत्वेन अहः साध्यत्वस्य यागेऽर्थतः प्राप्तत्वादित्याह—**तस्य चेति**—सुत्यात्मकत्वादेव द्वादशानां सुत्यानां आम्नानात् द्वादशत्वमपि प्राप्त न विधेयमित्याह—**अपित्विति। तत्प्रख्यन्यायेनेति।** एतेन कालविधित्वपक्षे उत्पन्नानां फलसबन्धे काले च विधीयमाने वाक्यभेदात् चित्रान्यायेन नामधेयत्व **तन्त्ररत्ने** सूचितमपास्तम् । राजा राजसूयेनेत्यत्रेव कालविशिष्टप्रयोगस्य फले विधानेन वाक्य-भेदाप्रसक्त्या चित्रान्यायासभवात्। अतस्तत्प्रख्यन्यायेनैव नामधेयमित्यर्थः। **द्वादशाहं दीक्षा इति।** द्वादशानां दीक्षोपसदां कथचित् अनुष्ठाने यावत्सभवं दीक्षणीयेष्टिद्वयमप्येकदिने शक्यानुष्ठान सभवतीति न नियमेन द्वादशाहमनुष्ठान लभ्यत इत्यतोऽतिदेशानुरोधादित्युक्तम् । एकदिन-साध्यत्वेन क्लृप्तदीक्षणीयाया इहातिदेशेन प्राप्ताया आवृत्त्या द्वादशत्वसपादनेऽपि प्रकृतावेक-स्मिन्नहनि एका दीक्षा एका चोपसत् कृता तथैवातिदेशादिहाप्यनुष्ठेयेति प्रत्येकमेकैकस्मिन्नहनि एकैकानुष्ठानात् द्वादशाहमित्यर्थः ।

---

तदेवं सुत्याबहिर्भूतानां दीक्षोपसदादीनामग्नीषोमीयान्तानां तन्त्रत्वात्पत्नीसंयाजोत्तरकालीनानां च तन्त्रत्वादेकोपक्रमावसानत्वेन द्वादशानामपि सुत्यानामेकप्रयोगत्वं तावदविवादम्। अहीनात्मके च तस्मिन् दक्षिणैकत्वस्य स्थापितत्वादपि तथा। अतश्च सुत्याकालीनानामप्यारादुपकारकाणामङ्गानां सवनीयपशुसवनीयहविरादीनामपि तन्त्रत्वमेव। न च गृह्यमाणविशेषत्वात्तेषामावृत्तिः, तज्जन्योपकारस्याग्नीषोमीयादिजन्योपकारस्येव द्वादशाहपरमापूर्वं यावदवस्थितेरावश्यकत्वेन पुनःपुनःकरणे प्रयोजनाभावात्।

यदि तु प्रकृतौ परमापूर्वस्यातिरिक्तस्याभावात् सर्वाभ्यासापूर्वजन्यसुत्यापूर्वं प्रत्येव सर्वेषामुपयोगात् द्वादशाहे तत्सुत्यापूर्वाणां भेदात्सुत्याकालीनाङ्गानामावृत्तिरित्युच्येत, ततस्तदकालीनाङ्गानामपि प्रकृतौ तदपूर्वप्रयुक्तत्वात् तद्भेदेन तद्भेदापत्तिः।

अथैतद्भेदेऽपि प्रयाजादावितिमापूर्वेणैवाग्नीषोमीयादिजन्योपकारनाशात् सकृदेव करणमित्युच्येत, ततस्सवनीयादिजन्योपकारस्यापि तेनैव नाशात्प्रतिसुत्यं करणे प्रमाणाभावः। न ह्यग्नीषोमीयादौ परमापूर्वप्रयुक्तत्वं सवनीयादौ च सुत्यापूर्वप्रयुक्तत्वमित्यत्र प्रमाणमस्ति, प्रकृतौ एकापूर्वं प्रत्येव सर्वेषामुपयोगात्। अभ्यासापूर्वाव्यवहितापूर्वत्वेनैव प्रकृतौ प्रयोजकत्वाच्चेति प्राप्ते—

---

भेदस्तुतद्भेदात्कर्मभेदः।

**स्थापितत्वादिति।** अहीने 'अन्वहं द्वादशशतं ददाति' इत्यनेन दक्षिणावयवत्वेनैवान्वहं द्वादशशतविधानस्याहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदात् स्यादिति दाशमिकषष्ठपादाधिकरणे स्थापितत्वात् प्रकृताविव दक्षिणाया एकत्वात् प्रयोगैक्यं, सत्रात्मके तु यजमानानामेव कर्तृत्वात् भेदाभावेन न प्रयोगभेदशङ्कापीत्यर्थः। प्राचां सिद्धान्तयुक्तिमाशङ्क्य निराकरोति—**न चेति।** ननु यदि प्रकृतौ एकापूर्वं प्रत्युपयोगस्सर्वेषां तदा प्रकृतौ परमापूर्वाभावे उत्पत्त्यपूर्वप्रयुक्तानां तेषां तदर्थत्वेनैव प्राप्तिः स्यादिति न परमापूर्वार्थत्वेनेह तन्त्रतापूर्वपक्षसिद्धिरित्यत आह—**अभ्यासापूर्वेति।** यदि प्रकृतावुत्पत्त्यपूर्वप्रयुक्तत्वमेवाङ्गानां स्वीक्रियते तदेह परमापूर्वार्थत्वेन प्राप्तेरग्नीषोमीयान्तानां तन्त्रता नैव स्यादित्यतः प्रकृतौ नोत्पत्त्यपूर्वत्वेन प्रयोजकता, किन्तु अभ्यासजन्यापूर्वाव्यवहितापूर्वत्वेनैव लाघवात् सा कल्प्यते। तच्चाव्यवहितमपूर्वं परमापूर्वाभावे प्रकृतावुत्पत्त्यपूर्वमेव, इहतु परमापूर्वसत्वे तदेवेत्यनुगतप्रयोजकसत्वात् यथाऽग्नीषोमीयादीनां प्राप्त्या तन्त्रत्वमवश्यमङ्गीकार्यं, तद्वत् सवनीयादीनामपि प्राप्त्या तत्सूपपादम्। वस्तुतस्त्विहापि परमापूर्वाङ्गीकारे प्रमाणाभावात् उत्पत्त्यपूर्वभेदात्ताग्नीषोमीयादीनामपि तन्त्रताप्राप्तिरिति भावः। एवं प्राचां सिद्धान्तयुक्तिखण्डनेन

'प्रायणीयं **प्रथममहः**' **इत्याद्युत्पत्तिवाक्येष्वहःपदेनाहस्साध्यसुत्याभिधानादहःकाल-विशिष्टसुत्याख्यकर्मविधिप्रतीतेः कालविधौ च सत्यपि महाप्रयोगैक्ये सुत्यामात्रकाली-नाङ्गविशिष्टसुत्याप्रयोगविधेरावश्यकत्वात् तावत्प्रयोगविधिभेदादेव तत्कालीनाङ्गानामा-वृत्तिः। अत एव सुत्याकालबहिर्भूताङ्गानामन्तिमसुत्यापूर्वेणैव नाशः। सुत्याकाली-नाङ्गानां तु तत्तत्सुत्यापूर्वेणेत्यपि प्रयोगभेदादवसीयते।** अत एव 'पत्नीसयाजान्तान्यहानि **सन्तिष्ठन्ते संस्थिते संस्थितेऽहन्याग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति' इत्यादिलिङ्गदर्शनान्यप्यारादुपकारकाङ्गावृत्तावुपपद्यन्ते। सन्निपत्योपकारकाङ्गा-वृत्तिस्तु अविवादैव।**

---

**(७)—सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहन-वत् ॥ २६ ॥ अपिवेन्द्राभिधानत्वात् सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् ॥ २७ ॥ अविभागाच्च ॥ २८ ॥**

---

पूर्वपक्षे प्रकारान्तरेणावान्तरप्रयोगभेदमुपपादयन् सिद्धान्तमाह—**प्रायणीयमिति**। **अत एव पत्नीसंयाजान्तानीति**। प्रतिसुत्य सवनीयपशोरावृत्त्या तदङ्गभूतपत्नीसयाजानामप्यावृत्तिसिद्धेः तेषामपि प्रत्यहमनुष्ठानात् अह्नां पत्नीसयाजान्तताविधिरुपपद्यते, तथा "सस्थिते सस्थिते" इति वीप्सोपादानात् प्रत्यहःसस्थं सुत्याकालीनसुब्रह्मण्याह्वानावृत्त्यनुवाद उपपद्यत इत्यर्थः।

यत्तु भाष्यकारेण पश्वतिरेकश्चेति सूत्रानुरोधात् य एकःपशुरतिरिच्यते स ऐन्द्राग्न इति लिङ्गं पश्वैकादशिन्याः तन्त्रेणानुष्ठाने प्रत्यहमेकैकपश्वनुष्ठानाप्रसक्तौ द्वादशेहन्यधिकस्यापेक्षा-भावात् अनुपपन्नमित्युक्तं, तदावृत्तावपि [illegible] विहारपक्षविधायकस्य 'अन्वहमेकैकमालभेत द्वादशे आद्यम्' इति वचनस्य, अथवा एकादशिनात् प्रायणीयोदयनीययोराल-भेरन्निति वचनस्यावश्यपर्यालोचनीयत्वात् तेनैव न्यायप्राततन्त्रबाधोपपत्तेः उपपन्नमित्युपेक्षितं **पूज्यपादैः**।

---

द्वादशाहादौ उपसत्कालीनं सुब्रह्मण्याह्वानं तन्त्रमित्युक्तम्। सुब्रह्मण्यामन्त्रे च 'इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयात्' इति विहितम्। इति करणेन च उपसद्दिनावधिका सुत्यागतदिनसङ्ख्योच्यते। तेन प्रथमोपसद्दिने 'चतुरहे सुत्यामागच्छ' इति। द्वितीयोपसद्दिने त्र्यहे सुत्यामिति। तृतीयोपसद्दिने द्व्यह इति प्रकृतौ प्रयोग द्वादशाहे चोपसदां द्वादशत्वादाद्योपसद्दिने त्रयोदशाहे इति प्रयोक्तव्यम्। द्वितीयाद्युपसद्दिने द्वादशाहे इत्यादि। तेन चाद्यसुत्याया एवोपलक्षणत्वापत्तेरसुत्यान्तरोपलक्षणार्थं एकैकस्मिन् दिने त्रयोदशाहे चतुर्दशाहे इत्यादिचतुर्विंशाहादिपर्यन्तमहश्शब्दावृत्त्या प्रयोक्तव्यम्।

न च सुत्यागमनसम्बन्धमात्रमिह विवक्षितं न तु सङ्ख्यासम्बन्धोऽपि वाक्यभेदापत्तेरिति भाष्यकारोक्तं युक्तं, विशिष्टस्य व्युत्पन्नत्वेन विशिष्टशाब्दबोधोपपत्तेरवाक्यभेदात्।

न च तथाऽपि सर्वसुत्यासु एकस्यैवेन्द्रस्य देवतात्वादेकसुत्यासम्बन्धित्वेनाप्याहूतस्य सर्वसुत्योपकारकत्वोपपत्तेर्नावृत्त्यापत्तिरिति वाच्यं, चतुरहे तिथौ निमन्त्रणसंस्कृतस्य देवदत्तस्य तदुत्तरदिनकर्तव्यश्राद्धभोजने निमन्त्रणसंस्कृतत्वाभाववदाद्यसुत्यायामाहूतस्येन्द्रस्य सुत्यान्तरे उपकारकत्वानुपपत्तेः।

न चैवमपि प्रकाशनीये सुत्योद्देश्यक्रावाहने चतुरहादिशब्दानां विशेषणत्वेनोपादानात् यज्ञपतिशब्दवत् परार्थत्वावगतेर्नाहश्शब्दस्याभ्यासात्मकोहसिद्धिरिति वार्तिकोक्तं युक्तमिति वाच्यं, 'अग्नये जुष्टं' इत्यादिवत् क्रियां प्रति विशेषणतामात्रेण परार्थत्वानुपपत्तेः। इतरथा चतुश्शब्दस्थानेऽपि त्रयोदशपदोहानुपपत्तिः। यज्ञपतिपदे तु

---

## सुत्याविवृद्धौ।

ज्योतिष्टोमेस्ति सुब्रह्मण्याह्वानद्वयं, एकमुपसत्कालीनमपरं सुत्याकालीनम्। तत्राद्य एव विचारं दर्शयितुमाह–द्वादशाहादाविति। तन्त्रमित्युक्तमिति। पूर्वपादे सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वादित्यधिकरण इति शेषः। एकैकस्मिन् दिने इति। तत्तदुपसत्संबन्धिनि क्रमेणैकैकस्मिन् दिन इत्यर्थः। अहश्शब्दावृत्त्येति। प्रकृताविति करणेन संख्यासामान्योक्तेः सामान्यस्य विशेषं विना प्रयोगानर्हत्वात्, विशेषापेक्षायामायुराशास्त इत्यत्र यजमाननाम्न इवाध्याहारादिना चतुरहे इति सङ्ख्यावाचकपदविशिष्टाहःपदप्रयोगेऽपि चतुरादिपदानामपठितत्वात्, तत्स्थाने क्रियमाणेऽपीह त्रयोदशादिसङ्ख्यावाचकपदानां प्रयोगे नोहः प्रकृतावन्यथा पठितस्यान्यथाभावाभावात्, इहाप्यध्याहारस्यैवोपपत्तेश्च। अपि तु अहःपदस्यैकस्यैव पठितस्याभ्यासात्मक एवोह

**यथा** परार्थत्वं **तथा तदधिकरणे स्पष्टम्।** अतःकर्तव्यैव **त्रयोदशाहे चतुर्दशाहे इत्येवमहः-पदावृत्तिरिति प्राप्ते—**

**इत्यह इत्यत्र इतिशब्दस्सङ्ख्यापरः। इत्यह इति च** समाहारोऽयं **तेन तावत्सङ्ख्याकेषु दिनेष्वित्यर्थः। तथा च अतीतेष्वित्यध्याहार्यं, तेन प्रथमोपसदि त्र्यहे सुत्यामिति द्वितीयायां द्व्यहे तृतीयायां**श्व **इति प्रयोक्तव्यम्। छन्दोगग्रन्थे धन्विप्रभृतिभिरप्येवमेव व्याख्यातम्। याज्ञिकाश्चैवमेवानुतिष्ठन्ति। ततश्च प्रकृतौ त्र्यहे अतीते सुत्यामागच्छे-त्यर्थावगतेर्द्वादशाहे च प्रथमोपसद्दिने त्र्यहपदस्थाने द्वादशाहपदोहेन द्वादशाहे अतीते सुत्यामागच्छेत्यर्थाङ्गीकारेण** सुत्यागतैकत्वस्या**विवक्षितत्वात् सर्वे**सुत्यो**द्देश्यकागमनप्रकाशनो-पपत्तेरनभ्यासेनैव प्रयोगः।**

यदि तु **चतुरहे सुत्यामागच्छ मघवन्निति ब्रूयादिति** भाष्यवार्तिकधृतवचनान्त**रानुसारात्**

---

इति सूचितम्। तेन सङ्ख्यापराणां चतुरादिपदानामूहनीयत्वम**धिकरणमालायाक्तमयुमुक्तं तन्त्ररत्न** विरोधाच्च। **परार्थत्वमिति।** परप्रकाशकपदैकवाक्यतया येषां पदानामदृष्टार्थं प्रयोगः तत्र परार्थत्व भवति, प्रकृते तु अध्याहृतसङ्ख्याविशेषवाचकपदैकवाक्यतापन्नस्याहः पदस्य सुत्यारूपसमवेतार्थप्रकाशकत्वसंभवेनादृष्टार्थत्वे मानाभावात् न परार्थत्वम्; यज्ञपतिपदे तु सर्वथा यथा दृष्टार्थत्वसंभवः तथा तदधिकरणे स्पष्टमित्यर्थः। **अत कर्तव्यैवेति।** प्रथमोपसद्दिने त्रयोदशाहे चतुर्दशाहे इत्यादि चतुर्विंशाहपर्यन्तं द्वितीयोपसद्दिने द्वादशाहे त्रयोदशाहे इत्यादि त्रयोविंशाहपर्यन्तं एवमुपरिष्टादपीत्यर्थः। एवञ्च सति त्रयोदशाह इत्याद्यावृत्त्या सुब्रह्मण्या-ह्वानस्यापि भेदापत्त्या न पूर्वोक्ता तन्त्रतेति भावः। **समाहारोऽयमिति।** इति शब्दस्य सङ्ख्यावाचित्वात् द्व्यहमितिवदित्याह्नां समाहार इत्यहमितिद्विगुसमास इत्यर्थः। यदि तु इति शब्दस्य प्रकारपरिमाणवाचित्वस्यैव तन्त्ररत्नादावुक्तेः सङ्ख्यावाचकत्वाभावात् न तद्वाचकपदप्रयुक्तसमासप्राप्तिरित्युच्येत, तदाऽहःपदे समाहारलक्षणया इतियान्युपसदहानि तत्समा-हारे इत्यर्थः। **श्व इति।** वस्तुतस्त्वत्रापि अहःपदलोपे प्रमाणाभावात् एकाहे इत्येव प्रयोगो युक्त इति ध्येयम्। **सुत्यागतैकत्वेति।** सुत्योद्देश्यकागमनमात्रस्यैव विवक्षितत्वात् तस्याश्च प्रकृतावेकत्वादेकवचनं नान्तरीयकतया साधुत्वमात्रार्थं प्रयुक्तमित्यर्थः। अनयैव रीत्या द्वितीयोप-सद्दिने एकादशाहे तृतीयोपसद्दिने दशमेहनीत्यादि प्रयोगस्त्विष्ट एव। **वस्तुतस्त्वनेन** न्यायेन एकवचनान्तपाशमन्त्रेपि पाशमित्येकत्वाविवक्षाया दुर्वारत्वात् द्विपाशायां विकृतौ ऊहानापत्तेस्तेन न्यायेनेहापि बहुवचनान्तेनोह एव युक्त इति ध्येयम्। उपपदविभक्त्यपेक्षया कारकविभक्ते-र्बलीयस्त्वादतीतपदाध्याहारापत्तेश्च पूर्वत्रापरितोषं मत्वाऽऽह—**यदि त्विति। भाष्यधृतवचनेति**

इत्यह इत्यादेः **पूरणार्थकत्वे** लक्षणामङ्गीकृत्य **चतुर्थेऽहनि सुत्यामागच्छेत्यर्थो**ऽङ्गीक्रियते **तदा भाष्यवार्तिकोक्तसमाधानस्य त्वयैव दूषितत्वात् कथञ्चिदेवं समाधेयम्।**

**नास्मन्मते देवताया आगमनं सम्भवति ते। देवस्य त्वादिपदार्थवत् चतुरहाधिकरणकसुत्योद्देश्यकागमनमन्यत्र प्रसिद्धमाहार्यमिन्द्रे प्रकाशनीयम्। तच्च न देवस्य त्वादिवददृष्टाद्यर्थं, अपि त्विन्द्रस्य प्रकृतसुत्यासम्बन्धार्थम्। अतो लाघवाद्व्यञ्जनादिना सुत्यासम्बन्ध एवात्र तात्पर्यं न तु चतुरहादिवृत्तिसुत्यासम्बन्धे। अतश्चानभ्यस्तप्रयोगेणैव प्रकृतसर्वसुत्यासम्बन्धप्रकाशनोपपत्तेर्नाहःपदावृत्तिः।**

**न चैवं द्वादशाहे आहार्यस्य चतुरहाधिकरणत्वस्यैव प्रकाशनोपपत्तेः न तत्स्थाने त्रयोदशाहपदोहापत्तिः। चतुरहाधिकरणकसुत्योद्देश्यकागमनप्रकाशनेनेन्द्रे द्वादशाहीयसुत्यासम्बन्धबोधानुपपत्तेः प्रयोजनानुरोधेन** तदूहाङ्गीकारात्।

---

भाष्यकारेण तु सिद्धान्तसूत्रे, ननु चतुरहेऽसौ संस्कृतः चतुरहे सुत्यामागच्छेति वचनादित्युक्तेः वचनान्तरमिदं प्रतीयते; अत एवाधिकरणारंभे उपसत्काल सुब्रह्मण्याह्वानं "चतुरहे सुत्यामागच्छमघवन्न"इति द्वादशाहे चोदकेन प्राप्यत इत्युक्तेः 'इत्यहे सुत्यामागच्छ'इति वचनं नैव लिखितम्। यद्यपीत्यहे सुत्यामागच्छेत्येतदेवार्थत इदं धृतं न वचनान्तरम्। अत एव वार्तिकतन्त्ररत्नयोः भाष्योदाहृतं निस्सन्दिग्धमपि चतुरहपदघटितवाक्यमनादृत्य "इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयात्" इत्येव वचनमुदाहृत्य इतिशब्दार्थनिर्णयकरणेनैवाध्याहारेण चतुरह इत्यादिप्रयोगश्चतुरह इत्यस्यापठितत्वात् अनूहश्च साधितः। तथाप्यस्य वाक्यशेषत्वेन तन्त्ररत्नादौ लिखनात्, अहे इत्यस्य कृतस्य भाष्यविरोधप्रतिपित्सामात्रेण वचनान्तरत्वोपन्यास इति भावः। **लक्षणामङ्गीकृत्येति।** इतिशब्दस्योपसद्दिनावधिकपरिमाणार्थस्य पूरके अजहत्स्वार्थलक्षणामङ्गीकृत्योपसद्दिनावधिकसङ्ख्यापूरकेऽहनीत्यर्थो ज्ञायत इति भावः। **इत्यर्थोऽङ्गीक्रियत इति।** न चैतावता इत्यहे इत्यस्य चतुरहे इत्येवार्थ इति भ्रमितव्यम्; तथात्वे द्वितीयाद्युपसद्दिनेषु त्र्यहे द्व्यहे इति प्रयोगापत्तेः। अतो यथाऽपेक्षितप्रयोगतात्पर्यकत्वमेवेति पूरणार्थकत्वोक्त्या सूचितम्। एवञ्च चतुरहे इत्ययं वाक्यशेषोऽप्यतीत इत्यध्याहारनिवृत्तितात्पर्यद्वारा चतुराद्यह्नां अधिकरणत्वं बोधयन्नपेक्षितचतुस्त्रिद्व्यादिपदाध्याहारमात्रोपलक्षणमेवेत्यपि ध्येयम्। **तदूहाङ्गीकारादिति।** प्रकृतावस्मिन् पक्षे चतुरादिपदानां समवेतार्थप्रकाशकत्वाभावात् इह पदेनाध्याहार एव विवक्षितः। तत्र च मुख्यत्वात् प्रथमाहरधिकरणत्वेनैव उपलक्षणीयं सुत्यागमनमिति त्रयोदशाहपदाध्याहारे सति तेनैव सर्वसुत्यासंबन्धितत्प्रकाशनोपपत्तेः नाऽऽवृत्तिरित्यर्थः।

(८)—पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावस्स्यात् ॥ २९ ॥

एकदेवत्येष्वेकजातीयेषु च प्राजापत्यादिपशुषु प्रयोगविध्यवगतश्रपणादियौगपद्यानुरोधेन कुम्भीशूलवपाश्रपणीनां महत्परिमाणाङ्गीकारेण तन्त्रमेव श्रपणादि। न हि तेषां प्रकृतौ कश्चित् परिमाणविशेष उपात्तः, येन तल्लिप्सया कुम्भ्यादिभेदोऽङ्गीक्रियेत।

---

(९)—भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ ३० ॥ अर्थाद्वा लिङ्गकर्म स्यात् ॥ ३१ ॥ प्रतिपाद्यत्वाद्रसानां भेदस्स्यात् स्वयाज्याप्रदानत्वात् ॥ ३२ ॥ अपि वा प्रतिपत्तित्वात् तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात् ॥ ३३ ॥ सकृदिति चेत् ॥ ३४ ॥ न कालभेदात् ॥ ३५ ॥ पक्तिभेदात् कुम्भीशूलवपाश्रपणीनां भेदस्स्यात् ॥ ३६ ॥

---

एतेनाधिकरणमालायां चतुरहे सुत्यामागच्छेत्येवाह्वानं यदुक्तं तत् तन्त्ररत्नादिविरोधादुपेक्ष्यं कथञ्चित्त्वं चास्य पूर्वापरपर्यालोचनया स्पष्टमेवेति न तन्वते।

---

**पशुगणे।**

**तन्त्रमेव श्रपणादीति।** हृदयाद्यतिरिक्तावयवश्रपणार्थं कुम्भी, हृदयश्रपणार्थं शूलं, वपाश्रपणार्थं वपाश्रपणी, एतच्च कुंभ्यादिकं तथा महत्कर्तव्य यथा सप्तदशानां पाको निष्पद्यते। एवं कुम्भ्यादितन्त्रतायाः फल यद्यपि हृदयशूलवपाश्रपण्योर्मन्त्राभावात् न्यायसाम्यमात्रेणोदाहरणत्वेऽपि कुम्भीतन्त्रत्वे "मातरिश्वनो घर्मोसि"इति अधिश्रयणमन्त्रस्यापि तन्त्रत्व, अन्यथाऽऽवृत्तिः स्यादिति प्रकाशकारैरुक्तं, तदव्यापकमिति सूचयितुं साधारणं सर्वत्र श्रयणतन्त्रत्व, अन्यथाऽऽवृत्तिरिति फलं तन्त्रमेव श्रयणादीत्युक्त्या दर्शितम्। ननु कुसूलकुम्भीधान्यो वेत्यादिस्मृतौ षडहपरिमितधान्याधारमात्रवाचित्वेन कुम्भीशब्दस्य दर्शनात् कथं तावत्परिमाणायां बहूनामङ्गानां श्रपणसभव,

यत्र तु भिन्नदेवताका एकजातीयाः पशवः तत्रापि चिह्नकरणेन विवेकसिद्धेः प्रयोगविध्यवगतसाहित्यलाभार्थं कुम्भ्याद्येकत्वमेव। न च वसानां चिह्नासम्भवात् सर्वासां स्वे स्वे याज्यार्धर्चान्ते होमसिद्ध्यर्थं भेदेनैव कुम्भी स्यादिति वाच्यं, संसर्गेऽपि क्षीरनीरविवेकिन्या देवतायास्तत्तत्काले तत्तद्वसाग्राहित्वोपपत्तेः। यथा च वसासंसर्गेऽपि तत्तद्याज्यार्धर्चान्ते वसाहोमभेदस्तथोक्तं पुरस्तात्। न च संसर्गभिया साहित्यबाधः, सान्नाय्येऽपि तदापत्तेः।

---

(१०)—जात्यन्तरेषु भेदस्स्यात् पक्तिवैषम्यात्॥ वृद्धिदर्शनाच्च॥ ३८॥

एकदेवत्येष्वपि यत्र पाकवैलक्षण्यापादकं जात्यन्तरं तत्र सहश्रपणे शीघ्रपाकिनां विलीनत्वापत्तेश्चिरपाकिनामपक्वत्वापत्तेः पृथगेव कुम्भी श्रपणं च। एवं हृदयशूलेऽपि। अत एव सौत्रामण्यां 'शूलैर्मासरेण चावभृथमभ्यवयन्ति' इति लिङ्गम्। वपाश्रपणी त्वेकैव। यस्या एव वपायाः पाको वृत्तस्तस्या एवोद्वासनोपपत्तेः। अस्तु वा तत्रापि भेदः तेन पृथक्पक्वानामेकदेवतेषु सहप्रदानं भिन्नदेवतेषु तु भेदेन।

---

इत्यत आह—नहीति। तत्र तथाविधपरिमाणायाःग्रहणेऽपीह सान्नाय्यातिदेशेन तस्याः प्राप्तौ सान्नाय्ये तत्परिमाणविशेषानाम्नानेन इह कार्यार्थं महत्परिमाणाया उपादाने बाधकाभावादित्यर्थः।

---

भेदस्तु संदेहाद्देवतान्तरे स्यात्।

तथोक्तमिति। अत्रैव द्वितीयपादे 'कालभेदात्त्वावृत्तिर्देवताभेद' इत्यधिकरण इति शेषः।

---

जात्यन्तरेषु भेदः स्यात्।

एकदेवत्येष्वपीति—एतच्च भिन्नदेवत्यानामप्युपलक्षणम्। शीघ्रपाकिनामिति। अनुद्वासने इति शेषः। एवं चिरपाकिनामित्यस्याग्रेपि। आविकाद्यङ्गानि शीघ्रपाकीनि। अजाद्यंगानि चिरपाकीनि। तत्र तेषामेकत्र पाको विरुद्ध इत्यर्थः। अत एव सौत्रामण्यामिति। सौत्रामण्यामाश्विनोऽजो धूम्रः सारस्वतो मेषः, ऐन्द्र ऋषभः इत्येवं विधाः पशव आम्नाताः। तेषां नानाजातीयानां हृदयपाकार्थं शूलभेदं सिद्धवत्कृत्य शूलैरित्युपात्तं बहुत्वमुपपद्यते, सुरानिर्माणार्थमीषदुपततयवपिष्टस्थापनाय दर्भैर्निर्मितं मासरमुच्यते। अस्तु वेति। पक्वाया एकस्य उद्वासनसंभवेऽपीतरवपानां श्रपणेऽन्तरायापत्त्या तत्रापि भेद इत्यर्थः।

---

(११)——कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥ ३९ ॥ प्रतिप्रधानं वा प्रकृतिवत् ॥ ४० ॥ सर्वेषां वाऽभिप्रथमं स्यात् ॥ ४१ ॥

'यावतोऽश्वान् प्रतिगृह्णीयात्' इत्यत्र द्वित्र्याद्यश्वदाने तन्त्रेण क्रियमाणप्रतिग्रहेष्टौ न तावत्पुरोडाशस्यैकत्वं, तावच्छब्दबलेन तद्भेदस्यापि विधेयत्वात्। चतुस्सङ्ख्याककपालानां तु प्रकृतौ कपालपरिमाणस्याश्रुतत्वेन दीर्घत्वादेरपि सम्भवात् हस्तद्वाराऽध्वर्य्वादेरिवावयवद्वाराऽवयविनोपि कपालस्य साधनत्वोपपत्तेर्न भेद इति प्राप्ते—

साक्षात्साधनत्वसम्भवे परम्पराश्रयणस्यान्याय्यत्वात् प्रकृतौ च साक्षात्साधनत्वस्यैव विवक्षितत्वेनेह परम्पराश्रयणानुपपत्तेर्यावत्कपालं च प्रथनस्य प्रकृतितः प्राप्तत्वात्, 'तावतो वारुणान्' इत्यनेन च विशेषणीभूतकपालेष्वप्युत्सर्गेण तावत्त्वस्य प्रतीतस्य बाधे प्रमाणाभावात् भेद एव कपालानाम्। अतश्च तावत्सङ्ख्याकचतुष्कपालपुरोडाशानां तन्त्रेण यागः।

---

(१२)——एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वात् ॥ ४२ ॥

दर्शपूर्णमासयोरवघातमन्त्रो 'अवरक्षो दिवः सपत्नं वध्यासम्' इत्ययं किं प्रतिप्रहारमावर्तते न वेति चिन्तायां—

सोमादिवत्प्रथमतो भावनान्वितस्यापि मन्त्रस्यावघाताङ्गत्वानपायात् प्रतिप्रधानं गुणावृत्तिन्यायेन तदावृत्तावावृत्तिः।

न चावघातस्वरूपे आनर्थक्यादपूर्वसाधनीभूततण्डुलीभावफलोपधायकत्वेनैव तस्योद्देश्यत्वात् तण्डुलीभावं प्रति चावृत्तावघातत्वेनैव फलोपधायकत्वात् तादृशरूपाव-

---

कपालानि च कुंभीवत्।

अधिकरणद्वयमेतत्स्पष्टार्थम्। तत्र द्वितीयाधिकरणे अवघातादिविधिवैयर्थ्यानुपपत्त्या उपायान्तरव्यावृत्तिफलकावघाताश्रितस्य नियमस्यादृष्टार्थं विधानम्। अथवा आक्षेपतः पूर्वप्रवृत्त्या शाब्दस्यावघातस्यैव नियमफलकत्वेन विधानात्, तस्य च वैयर्थ्यपरिहारार्थं व्रीहिनिष्ठादृष्टजनकत्वमात्रमेव कल्प्यत इति पक्षद्वय द्वितीये स्थापितमभिप्रेत्य नियमजन्यत्वपक्ष इत्युक्तम्। तथेतराङ्गवदिति पदं कृष्णाजिनास्तरणाद्यङ्गपरं ज्ञेयम्।

च्छिन्नस्यावृत्त्यभावेन न मन्त्रावृत्तिरिति वाच्यं, तण्डुलीभावं प्रति तेन रूपेण फलोपधायकत्वेऽप्यवघातत्वस्यैव साधनतावच्छेदकत्वेन लाघवात् तण्डुलीभावजनकत्वेनैवोद्देश्यत्वात्तदवच्छिन्नस्यावृत्त्याऽऽवृत्त्युपपत्तेः।

नियमादृष्टं प्रत्यवघातत्वेनैव कारणत्वान्नियमादृष्टजनकत्वेनैव वा लाघवादुद्देश्यत्वाङ्गीकारात्तस्य च प्रतिप्रहारं भेदादावृत्त्युपपत्तिः। न हि नियमादृष्टं प्रहारभेदेऽप्येकमिति शक्यं वक्तुं, तस्य नियमजन्यत्वपक्षे नियमस्यापि प्रतिप्रहारं भेदाच्चेति प्राप्ते—

नियमादृष्टस्य नियमजन्यत्वेनावघाताजन्यत्वादवघातजन्यत्वेऽपि वा तस्यावघातप्रयोजकत्वस्यैवाभावे सुतरां तद्धर्मप्रयोजकत्वानुपपत्तेरवश्यमाग्नेयाद्यपूर्वसाधनीभूततण्डुलीभावफलोपधायकत्वेनैवोद्देश्यत्वावसायात् तदावृत्त्यभावेनानावृत्तिर्मन्त्रस्य।

न च तण्डुलीभावसाधनतावच्छेदकरूपवत्त्वेनोद्देश्यता, तथात्वे सर्वौषधावघातादावपि तद्रूपसत्त्वेन मन्त्रादिप्राप्त्यापत्तेः। अस्तु वा तत्, तथाऽपि इतराङ्गवत्तन्त्रेणैव सकृत्पठितमन्त्रजन्यस्मृतेस्सर्वप्रहारोपकारकत्वोपपत्तेः न मन्त्रावृत्तिप्रसक्तिः॥

---

## (१३)—द्रव्यान्तरे कृतार्थत्वात् तस्य पुनःप्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनःप्रयोगस्स्यात्तदर्थेन विधानात्॥ ४३॥

एवं तर्हि नानाव्रीजेष्वपि सत्यपि तण्डुलीभावभेदे सकृत्पठितमन्त्रस्य स्मृतेस्सर्वावघातेषूपकारकत्वोपपत्तेः नावृत्तिरिति प्राप्ते—

---

### द्रव्यन्तरे कृतार्थत्वात्।

"अग्नये गृहपतये कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुम्" इत्यादिविधिविहितनानाबीजेष्टिद्रव्याण्युदाहरणत्वेन दर्शयति — **एवं तर्हीति। सर्वावघातेष्विति।** पूर्वपठितमन्त्रजन्या हि स्मृतिः मध्ये व्यवधायकपदार्थान्तरसत्वे नश्येत्, न चेह तदस्ति; उत्तरत्रापि बीजावापादिप्रभृत्यवघातस्यैव तण्डुलीभावपर्यन्तमनुष्ठेयत्वात्। अतस्तेन सर्वावघातोपकारसिद्धेर्नावृत्तिरित्यर्थः। यद्यवघाताव्यवधानेनैव उत्तरावघातः क्रियेत तदावघातस्मृतिर्न विच्छिद्येत, इह तु कृष्णाजिनास्तरणादिफलीकरणान्तस्य एकपदार्थत्वेनानुष्ठेयत्वात् न मध्ये द्वितीयबीजावघातः पूर्वावघाताव्यवधानेन संभवति। प्रत्युत यावदुत्तरावघातमवघातोत्तरक्रियमाणपरावपनादि-

कृष्णाजिनास्तरणादिफलीकरणान्तेनानुसमयस्योक्तत्वात् सकृन्मन्त्रपाठे त्वसम्बन्धिपरावपनादिपदार्थान्तरतन्मन्त्रादिनाऽवघातमन्त्रजन्यस्मृतेर्नाशादावृत्तिरेव तन्मन्त्रस्य ॥

---

(१४)—निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् ॥
द्रव्यान्तरवद्वा स्यात् तत्संस्कारात् ॥ ४५ ॥

दर्शपूर्णमासयोश्चतुर्मुष्टिपरिमितस्य विहितनिर्वापस्य 'देवस्य त्वा' इत्यादिर्मन्त्रः। तथा अयुञ्जान् युञ्जान् मुष्टीन् लुनोति' इति विहितस्य लवनस्य 'बर्हिर्देवसदनं दामि' इति। तथा 'त्रिधातु पञ्चधातु वा वेदिं स्तृणाति' इति विहितस्य स्तरणस्य 'ऊर्णाम्रदसं त्वा स्तृणामि' इति। 'चतुर्जुह्वां गृह्णाति' इति विहितस्याज्यग्रहणस्य 'शुक्रं त्वा शुक्रायाम्' इति मन्त्रस्समाम्नातः। ते किं प्रतिमुष्ट्यादि निर्वापाद्यावृत्तावावर्तन्ते न वेति चिन्तायां—

न तावदत्र निर्वापादिभेदः सङ्ख्याया मुष्ट्यादिवृत्तित्वेन प्रतीतेः, अभ्यासमात्रं तु निर्वापादेः। अतश्चावघातमन्त्रवदनावृत्तिरिति प्राप्ते—

---

पदार्थैस्तत्तन्मन्त्रैश्च व्यवधानमेवेति प्रतिबीजावघातपदार्थभेदेन स्मरणार्थं भवत्येव मन्त्रावृत्तिरिति सिद्धान्तमाह—कृष्णेति।

---

**निर्वपणलवनास्तरणाज्यग्रहणेषु चैकद्रव्यवत्।**

निर्वपणलवनास्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वादिति पूर्वपक्षसूत्रे निर्वपणादीनां चतुर्णामुपादानात् तान्येवोदाहरति—दर्शेति। अयुञ्जायुञ्ज इति। युञ्जास्समसङ्ख्या अयुञ्जा विषमसङ्ख्या इत्यर्थः। त्रिधातु पञ्चधातुवेति। मुष्टिपरिमितस्य बर्हिषो वेद्यामास्तरणं क्रियते, तत्र मध्ये विभागप्रदर्शको भागः धातुशब्दार्थः। तथाच ते त्रयः पञ्च वा यथास्तरणं कर्तव्यमित्यर्थः। त्रिधात्विति क्रियाविशेषणं; अथवा (धातु) प्राकृतेऽघातवत् भेदाभावात् न मन्त्रावृत्तिरिति पूर्वाधिकरणवैषम्यं दर्शयन् पूर्वपक्षमाह—न तावदिति। अत्र प्रकाशकारैरत्रत्यभाष्यादिग्रन्थस्वारस्यात् बर्हिस्संस्कारकत्वं स्तरणस्य प्रतीयमानमपि त्रिधातु पञ्चधातु वा वेदिं स्तृणातीत्यनन्यगतिके वाक्ये द्वितीयया वेदेस्संस्कार्यत्वात् प्रदूष्य बर्हिः स्तृणातीति वाक्ये बर्हिरिति द्वितीयाया अनीप्सितकर्मत्वार्थकत्वेन बर्हिषः करणत्वमिति सिद्धान्तितं तदाशङ्काव्या-

युक्तमवघाते संस्कार्यद्रव्यस्यैकत्वात्, त एव हि व्रीहयः प्रतिप्रहारमवहन्यन्ते अतस्तत्र सकृदेव युक्तो मन्त्रः। प्रकृते तु संस्कार्यद्रव्यभेदात् सत्यपि निर्वापादिकर्मैक्ये प्रत्यभ्यासं मन्त्रभेदः। न च निर्वपणलवनाज्यग्रहणादिषु संस्कार्यभेदेऽपि स्तरणस्य द्वितीयया वेदिसंस्कारार्थत्वात् बर्हिर्धातूनां च तत्र गुणभूतत्वेन कथं संस्कार्यभेदः। शतपथब्राह्मणे 'बर्हिः स्तृणाति' इति विधौ बर्हिषोऽपि स्तरणसंस्कार्यत्वावगतेः। बर्हिषो, 'बर्हिषि हवींष्यासादयति' इति वचनेन हविरासादने उपयुक्तत्वाच्च।

यत्तु 'वेद्यां हवींष्यासादयति' इति वचनं तत् वेदेरपि परम्परया हविराधारत्वान्नानुपपन्नम्। न च वेदिबर्हिषोर्विकल्पाशङ्का 'वेदिरसि बर्हिषे त्वा स्वाहा' इति मन्त्रवर्णेन वेदेर्बर्हिरर्थत्वस्यावगमेन विकल्पापादकसाक्षादाधारताविधायकत्वानुपपत्तेः। अत एव त्रिधातु पञ्चधातु वेत्यत्र बर्हिष एव संस्कार्यता। वेदिमिति सप्तम्यर्थे।

अस्तु वा संयोगपृथक्त्वात् स्तरणस्य बर्हिस्संस्कारकत्ववत् वेदिसंस्कारकत्वमपि, वेदिबर्हिषोश्च परस्परसंस्कारे परस्परगुणत्वस्यापि सत्त्वात् विकल्पासम्भवेन 'वेद्यां हवींष्यासादयति' इत्यस्य परम्परासम्बन्धानुवादकत्वम्। वेदेर्गुणत्वाच्च 'वेदिरसि' इति मन्त्रवर्णस्योपपत्तिः। संस्कार्यत्वाच्च 'योषा वै वेदिस्तामनग्नां करोति' इति स्तरणार्थवादस्याप्युपपत्तिः। सर्वथा बर्हिषोऽपि संस्कार्यत्वादस्ति स्तरणेऽपि संस्कार्यभेदः।

न च प्रत्यभ्यासं संस्कार्यभेदेऽपि सकृत्पठितमन्त्रजन्यस्मृतेरविच्छेदादवघातमन्त्रवदनावृत्त्यापत्तिः। उक्तमन्त्रेषु सर्वत्र युष्मच्छब्दसम्बुद्ध्यादिश्रवणेन लिङ्गात्तादृशप्रणाड्याऽपूर्वसाधनीभूतयुष्मदर्थविषयनिर्वापादिप्रकाशनार्थत्वेन मन्त्रविध्यवगतेस्तादृशस्मृत्या युष्मदर्थाविषयीभूतनिर्वापादिविषयसंस्काराजननात्। अतस्तत्र मन्त्रावृत्तिरेव। एवं च स्तरणे बर्हिषो गुणत्वेऽपि मन्त्रस्य विशेषणीभूतयुष्मदर्थभूतधातुप्रकाशनार्थत्वेन विनियोगान्मन्त्रावृत्तिरित्यपि शक्यं वक्तुम्।

---

जेनानूद्य दूषयति—**निर्वपणेति**। उत्तरग्रन्थः स्पष्टार्थः। **एवं च स्तरण इति**। ऊर्णाम्रदसमिति मन्त्रे त्वापदोपात्तमुष्टिविशेषणं ऊर्णाम्रदसमिति स्वासस्थमिति च, ऊर्णेव मृदु ते इत्यूर्णामृदाः असुप्रत्ययश्छान्दसः। तथाच तादृशविशेषणीभूतार्थविशिष्टत्वापदोपात्ताभिमुखमुष्टिप्रकाशनार्थस्यानभिमुखमुष्टिप्रकाशनार्थत्वायोगात् अपरस्यामुष्टेराभिमुख्येन प्रकाशनार्थं मन्त्रावृत्तिरित्यर्थः। तथाच स्तरणे बर्हिषो गुणत्वपक्षे यद्यपि न संस्कार्यभेदेनात्रत्यसिद्धान्तोपपत्तिर्भवति तथापि अनया रीत्या सिद्धान्त उपपादनीयः इति भावः।

---

(१५)—वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४६ ॥
एकस्य वा गुणविधिः द्रव्यैकत्वात् तस्मात्सकृत्प्रयोगस्स्यात् ॥

तत्रैव 'वेदिरसि बर्हिषे त्वेति त्रिर्वेदिं प्रोक्षति' इत्यत्र तु न मन्त्रावृत्तिः, न ह्यनेन मन्त्रे त्रित्वविधिः, त्रिरित्यस्य क्रियाभ्यावृत्तौ विहितसुच्प्रत्ययान्ततया प्रोक्षणाभ्यासगतत्रित्वप्रतिपादकतया मन्त्रगतत्रित्वप्रतिपादकत्वाभावात्। अत एव नात्र सङ्ख्यया 'तिस्र आहुतीर्जुहोति' इतिवत् कर्मभेदः, येन 'आमनमस्यामनस्य' इति मन्त्रवदिहाप्यावृत्तिः प्रसज्येत।

न च तत्रापि सकृत्पठितमन्त्रजन्यस्मृतेरविच्छेदादवघातमन्त्रन्यायेनावृत्त्यनापत्तिः। 'मन्त्रान्तेन कर्मादिस्सन्निपात्यः' इति वचनेन विहितकर्मादेः मन्त्रान्तकालविधानात् वसाहोमवच्छेदप्रतीतेः। इदं च मन्त्रजन्यस्मृतेः कर्मानुष्ठानं प्रति कारणत्वस्य न्यायप्राप्तत्वमात्रेण नानुवादकं, वैयर्थ्यापत्तेः, अपि त्वेतादृशविषये मन्त्रावृत्तिविधानार्थम्। प्रकृते तु विहितस्यैकस्यैव प्रोक्षणकर्मणस्त्रित्वरूपविशेषणानुरोधेनार्थादावृत्तिसिद्धावपि विहितकर्मादेस्सकृत्पठितमन्त्रान्तकालकत्वाविरोधान्मन्त्रजन्यस्मृत्यविच्छेदेन मन्त्रावृत्तौ प्रमाणाभावः।

---

(१६)—कण्डूयनं प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ४८ ॥ अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ४९ ॥

कृष्णविषाणाकण्डूयने 'कृष्यै त्वा सुसस्यायै' इति मन्त्रः। यदि कालभेदेन कण्डूयनं तदा स्मृतिविच्छेदान्मन्त्रावृत्तिरविवादैव। यदा तु एककाल एवानेकाङ्गविषयं कण्डूयनं तदास्मृत्यविच्छेदादनावृत्तिः। न च तदाऽपि त्वापदयुक्तत्वान्निर्वापमन्त्रन्यायेन तत्तदङ्गभेदेनावृत्तिः। अङ्गानामुपयुक्तत्वाभावेनासंस्कार्यत्वात् त्वापदेन तन्निर्देशानुपपत्तेः। अत एव तत्तदङ्गभेदेन तत्तत्कण्डूभेदात् तज्जन्यदुःखभेदेन तद्ध्वंसरूपकार्यभेदेऽपि न मन्त्रावृत्तिः। त्वापदनिर्देश्यस्यात्मन एव कण्डूजनितचित्तविक्षेपनिवृत्तिद्वारा संस्कार्यत्वात्तस्य चैकत्वेन निर्वापन्यायानुपपत्तेः।

---

वेदिप्रोक्षणे मंत्राभ्यासः कर्मणः पुनः प्रयोगात्

स्पष्टार्थमेतदधिकरणम्

---

कण्डूयने प्रत्यङ्गं कर्मभेदः स्यात्।

कण्डूयनेति। त्वापदनिर्देशस्येति। वस्तुतस्तु नायं मन्त्रः कण्डूयने विनियुक्तः, अपि

## (१७)—स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५० ॥

सोमे स्वापार्थो **मन्त्रः 'त्वमग्ने व्रतपा असि' इति सम्पूर्णां रात्रिं निद्रामुद्दिश्यैव मन्त्रपाठात् सकृत्पठितमन्त्रजन्यस्मृत्यविच्छेदाच्च मध्येमध्ये प्रतिबुध्य पुनःपुनस्स्वापेऽपि**

---

तु "कृष्यै त्वा सुसस्यायै" इति वेदिलोष्टमुद्धन्ति इत्यापस्तंबवचनात् वेदेर्लोष्टोद्धनने। अतश्च लोष्टोद्धननेन वेदेस्संस्कार्यत्वात् त्वापदेन वेदिरेवोच्यते। अत एवेषेत्वेत्यत्र यथा च्छिनद्मीत्यध्याहारस्तथाऽत्वाप्युद्धन्मीत्यध्याहारः। एवं च स्वभिन्नवाचित्वाशब्दोऽप्युपपद्यते। व्याख्यातं च वेदभाष्यकारैः वेदिपरत्वेन तदन्तर्गतपृथिवीपरत्वेन च त्वापदम् एतेन लोष्टोद्धननाङ्गमयं मन्त्रो लोष्टस्याविनियुक्तस्यासंस्कार्यत्वात् कृष्णविषाणासंस्कारोद्धननद्वारा कृष्णविषाणासाध्यकण्डूयनाङ्गं तेन त्वेति कृष्णविषाणोच्यते। तद्वारा च तत्साध्यं कण्डूयनं लक्षणयेति **प्रकाशकारोक्तमप्यपास्तम्।** कण्डूयनकाले एतन्मन्त्रप्रयोगस्य याज्ञिकादिभिरननुष्ठानात् उद्धननस्य कृष्णविषाणासंस्कारत्वेऽपि तावता उद्धनाङ्गत्वस्यैवापत्तौ तत्साध्यकण्डूयनाङ्गत्वे मानाभावाच्च। अतोऽस्य कण्डूयनमन्त्रत्वेन उदाहरणत्वमयुक्तमेव। अत **एवाधिकरणमालायां** सुपिप्पलाभ्यस्त्वौषधीभ्यः इत्यादिमन्त्रः **आपस्तंबसूत्रे** शिरः कण्डूयने विनियुक्तः याज्ञिकप्रयोगसिद्धः उताहृत इति स एवोदाहरणं। यदि त्वस्य मन्त्रस्य शिरः कण्डूयने विनियोगेन शिरस एकत्वात् नाङ्गभेदप्रयुक्तमन्त्रावृत्तिपूर्वपक्षोत्थानमिति विभाव्यते तदा विषाणे निध्यैतं घ्नन्तियादस्य गुल्भिदद्धं हृदि मनो यदस्य पुलभिदमित्ययमङ्गकण्डूयने विनियुक्तो मन्त्र उदाहर्तव्यः इति ध्येयम्।

---

**स्वपननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम्।**

सूत्रगतं स्वपनपदं स्वनिर्वृत्त्यर्थस्वापपरमभिप्रेत्याह—**सोमे स्वापार्थ इति-त्वमग्ने इति।** अयं च भाष्यकारलिखनात् कल्पसूत्रान्तरे स्वापे विनियुक्त इति लिखितः। **वस्तुतस्तु** "अग्नेत्वं सुजागृहीति सुप्यन्नाहवनीयमभिमन्त्रयते" इत्यापस्तंबवचनात् अग्ने त्वमित्ययं मन्त्रो लिखितुं युक्तः। प्रत्युत त्वमग्ने व्रतपा असीति प्रबुध्येतेति वचनान्तरे पूर्वतनस्याहवनीयमभिमन्त्रयत इत्यस्यानुकर्षयुक्तस्यास्य प्रबोधाङ्गत्वमेव प्रतीयते। अत एव "त्वमग्ने व्रतपा असि" इत्यस्य स्वापार्थत्वे "अग्ने त्वं सुजागृहीति सुप्यन्नाहवनीयमभिमन्त्रयते" इति आपस्तंबवचने सुप्यन्निति लट्श्रुतिप्रमाणोपन्यासोऽपि **प्रकाशकाराणामसंबद्ध एव,** तावता "त्वमग्नेव्रतपा असि" इत्यस्य स्वापार्थत्वासिद्धेः।

**सकृदेव मन्त्रः।** तथा 'देवीराप' **इति नदीतरणमन्त्रोऽपि स्रोतोभेदेऽपि सकृदेव। तथा** अभिवृष्टे 'उन्दतीः' इति मन्त्रः **वर्षधाराभेदेऽपि सकृदेव। तथा 'अबद्धं मनो दरिद्रं चक्षुः' इत्यमेध्यदर्शने प्रतिमन्त्रणमन्त्रोऽपि युगपदनेकामेध्यदर्शने न भिद्यते।**

---

## (१८)—प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५१ ॥

**तत्रैव दीक्षितस्य यज्ञदेशातः भृतिवननप्रयाणार्थो 'भद्रादभिश्रेयः प्रेहि' इति मन्त्रोऽपि मध्येमध्ये विश्रम्य पुनःपुनः प्रयाणेऽपि** नावर्तनीयः। **अधिकाशङ्का तु पूर्वं स्वापादिभेदनिश्चयाभावात् युक्तं तन्त्रत्वं, प्रकृते तु** तन्निश्चयसत्त्वे **भेदोऽस्त्विति।**

---

**यदपि** अनन्यथासिद्धया क्रियार्थायां क्रियायामुपपदे विहितया लृट्श्रुत्या स्वापार्थत्वे सत्याहवनीयमिति द्वितीया अनीप्सितकर्मत्वार्थेति प्रकाशकाराणामुपपादनं तन्मन्त्रकरणकाहवनीयाभिमन्त्रणस्य स्वार्थत्वेऽपि मन्त्रस्य स्वाङ्गत्वे प्रमाणाभावात् स्वापभेदेऽपि मन्त्रावृत्त्यप्रसक्तेरयुक्तम्। नह्ययं मन्त्रः इतिकरणेन स्वपन्नित्यनेन संबध्यते, अनाकाङ्क्षितत्वात्। अपि त्वभिमन्त्रयत इत्यनेन। अत एव मन्त्रे त्वंपदस्य मध्यमपुरुषस्य च प्रयोगः उपपद्यते। एवं चाहवनीयमिति द्वितीययाभिमन्त्रणस्याहवनीयार्थत्वेऽवगते स्वप्स्यन्निति लृट्श्रुतिः प्रणीताः प्रणेष्यन्नित्यत्रेव भविष्यत्कालसामान्यपरैव द्रष्टव्या। सर्वथापि तु "अग्ने त्वँ सुजागृहि' इत्ययं मन्त्रः कथंचिल्लिखितुं युक्त इति दिक्। **तथा देवीराप इति।** नद्यैक्ये सति स्रोतोभेदोऽपि तत्तरणैकत्वस्य सर्वजनप्रत्ययसिद्धत्वादित्यर्थः। **न भिद्यते इति।** अत्र तु कालैक्यात् स्पष्टमेव तन्त्रत्वमित्यर्थः। अत्र च "देवीराप इत्यपोतिगाहते तथा अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति उन्दतीर्बलंधत्त इत्यभिवृष्टे" इत्यापस्तंबवचनात् "देवीराप" इत्यस्य नदीतरणकरणमन्त्रत्वममेध्यमित्यस्य तु जपत्वमुदंतीर्बलमित्यस्य नैमित्तिकप्रायश्चित्तरूपत्वमिति प्रकाशकारा आहुः। **अधिकरणमालायां** तु सर्वेषामेवैतेषां नैमित्तिकजपत्वमुक्तम्।

---

### प्रयाणेत्वार्थनिवृत्तेः।

**सनिवननमिति।** द्वादशरात्रीर्दीक्षितो भृतिंवन्वीतेति विहितं दक्षिणार्थं भृतिवननं सनिवननशब्दार्थः। **नावर्तनीय इति।** प्रयोजनैक्येन प्रयाणैक्यावगतेरिति शेषः। **तन्निश्चयसत्वे इति।** यदैव यज्ञदेशतः प्रयाणं क्रियते, तदैवैतन्निश्चितं मध्ये विश्रम्यैव गमनात्

## (१९)—उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ५२ ॥ सन्निपातित्वादसन्निपाति कर्मणां विशेषग्रहणे कालैकत्वात् ॥ ५३ ॥

तत्रैव उपरवा नाम गर्तविशेषाश्चत्वारः, तेषां खनने 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति मन्त्रः प्रत्युपरवखननमावर्तते न वेति चिन्तायां—

बहुवचनान्तो मन्त्रस्सकृदेव सर्वोपरवखननं प्रकाशयति। अतश्च प्रतिप्रधानं गुणावृत्त्या यथैव मन्त्रावृत्तिपूर्वकपात्रप्रोक्षणावृत्तौ प्राप्तायां 'शुन्धध्वम्' इति बहुवचनानुरोधात् प्रोक्षणतन्त्रत्वापादनेन मन्त्रतन्त्रत्वं तथेहापि सत्यपि करणमन्त्रत्वे बहुवचनानुरोधात् मन्त्रतन्त्रत्वम्।

एतावांस्तु विशेषः—यदत्र सामर्थ्यात् प्रत्युपरवं खननस्यावृत्तिः न त्वेतावता मन्त्रस्यावृत्तिः, सकृत्पठितमन्त्रजन्यस्मृत्यैव सर्वोपरवखननप्रकाशनोपपत्तेः। न ह्यत्र प्रत्युपरवं खनने वैजात्यं येन 'मन्त्रान्ते कर्मादिस्सन्निपात्यः' इतिवचनविहितमन्त्रान्तकालभेदेनापि कथञ्चिद्भेदो भवेत्। 'उपरवान् खनति' इति विधिना एकजातीयस्यैव खननस्य प्रत्युपरवमर्थादावृत्तिबोधनादिति प्राप्ते—

विधेयतावच्छेदकीभूतविजातीयखननत्वस्यानैकत्वेऽपि एकैकोपरवखनने तस्य प्रत्येकवृत्तित्वं संस्कार्यखेयभेदात् प्रतिग्रहं संमार्गवत् प्रतिसंवत्सरं क्रियमाणज्योतिष्टोमत्वादिवच्च। अतश्च विधेयतावच्छेदकीभूतविजातीयखननत्वपर्याप्त्यधिकरणस्य कर्मपदार्थत्वात् तस्य च मन्त्रान्तकालकत्वविधानात् मन्त्रावृत्तेरावश्यकत्वम्।

वेदिप्रोक्षणे तु नैकैकावृत्तौ विजातीयप्रोक्षणत्वरूपविधेयतावच्छेदकं प्रत्येकवृत्ति। अपि तु त्रिरावृत्तिविशिष्टप्रोक्षणविधानात् सर्वाभ्यासेषु ज्योतिष्टोमत्ववत् व्यासज्यवृत्त्येव।

---

प्रयाणभेद इति। ततश्च प्रथमपठितो मन्त्रः आद्यप्रयाणस्यैवेति गृह्यमाणविशेषत्वात् न तन्त्रमपि त्वावृत्तिः स्यादिति विशेषाशङ्केत्यर्थः।

---

**उपरवममन्त्रस्तन्त्रं स्यात्।**

यदत्र सामर्थ्यादिति। प्रोक्षणक्रिया तन्त्रेणापि सर्वपात्रेषु सुकरेति क्रियाया अपि तन्त्रत्वम्। इह त्वेकैकोपरवखननं तन्त्रेणाशक्यमिति सामर्थ्यात् क्रियाऽऽवृत्तिरित्यर्थः। स्पष्टार्थमन्यत्।

---

अतश्च तत्र विधेयतावच्छेदकधर्मपर्याप्त्यधिकरणस्याभेदान्न मन्त्रावृत्तिरिति वैषम्यम्। अतश्च पाशाधिकरणन्यायेन बहुवचनातिरिक्तसकलमन्त्रस्य प्रत्येकावृत्तिप्रतीतेः बहुवचनस्यापि तदनुरोधेनावृत्तिमङ्गीकृत्य पूजाद्यर्थत्वेन व्याख्यानं द्रष्टव्यम्।

---

## (२०)—हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात्स्यात् ॥ ५४ ॥ अध्रिगोश्च विपर्यासात् ॥ ५५ ॥ करिष्यद्वचनात् ॥ ५६ ॥

**सोमे अनुसवनं सवनीयाः पुरोडाशादयः।** तेषु प्रतिसवनं **भेदेनैव चोदकप्राप्तं हविष्कृदाह्वानं, कालभेदेन गृह्यमाणविशेषतया तन्त्रत्वानुपपत्तेः।** यद्यपि **पत्नीसंयाजान्तं जघनेन गार्हपत्यमवस्थितैव पत्नी। तथाऽप्युत्करदेशमवघातार्थं भेदेनाह्वातव्यैव।** तथा **वाजपेये क्रतुपशूनां प्रातस्सवनकाले प्राजापत्यानां च ब्रह्मसामकाले पश्वालम्भे क्रियमाणे**

---

**हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात्।**

पूर्वाधिकरणेन सन्निपातित्वादसन्निपातिनां विशेषाग्रहेण कालैकत्वात् सकृद्वचनमिति सिद्धान्तसूत्रे कालैकत्वादुक्तस्य तन्त्रत्वस्य प्रत्युदाहरणमात्रस्य इह कालभेदे प्रदर्शनात् विशेषाशङ्काऽभावाच्च पूर्वपक्षमुपेक्ष्य सिद्धान्तेनैवोपक्रमते--**तेषु प्रतिसवनमिति।** प्रातस्सवनिकहविष्कृता आहूता पत्नी तार्तीयसवनिकहविरवघातपर्यन्तं तिष्ठेदित्यत उक्तं-**कालभेदेनेति।** "देशाद्दक्षिणत उदीच्यन्वास्त" इति तैत्तिरीयश्रुत्या गार्हपत्यदक्षिणदेशे पत्न्या उपवेशननियमात् ततः प्रातस्सवने हविष्कृताऽऽहूतायास्तस्याः तत्कालीनहविरवघातानन्तरं पुनस्स्वदेश एवावस्थानप्राप्तेः सवनान्तरे आह्वाने आवश्यके तदङ्गभूतस्य मन्त्रस्याऽऽवृत्तिप्राप्तेरित्यर्थः। न च गार्हपत्यसमीपावस्थानमात्रेणैव कार्यसिद्धेर्नाह्वानप्रयोजनमित्यत आह—**यद्यपीति। यत्त्वत्र प्रकाशकारैः** पत्न्या दक्षिणदेशे कर्मसाद्गुण्यार्थमवस्थानविधाकत्वेन ब्रह्मयजमानावासाते इति वचनं यजमानपदे विरूपैकशेषाङ्गीकारेणोपन्यस्तं, तदस्य वचनस्याहवनीयाद्दक्षिणतो ब्रह्मयजमानावस्थितिमात्रविधायकतयाप्युपपत्तेर्विरूपैकशेषस्य वचनान्तरेण गार्हपत्यदक्षिणदेशावस्थानविधाने सत्ययुक्तत्वादुपेक्ष्यम्। अत्र सूत्रे "हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात्" इति हविष्कृदादिमन्त्राणां क्रमेणोपात्तानां क्रमनुसरति—**तथेति।** वाजपेये क्रतुपशुभिसहैव प्राजपत्यानामप्यालम्भादिकं "तीर्थं वै प्रातस्सवनं यत् प्रातसवने पशव आलभ्यन्ते तीर्थ एवैतानालभत" इति बचनान्तरेणोत्कर्षविधिबाधितप्रतिप्रसवकरणात् तदानीमेव कर्तव्यमिति यदा

अग्निगुप्रैषोऽपि कालभेदादावर्तत एव। सत्यप्यकरणमन्त्रत्वे दृष्टार्थत्वेन तज्जन्यस्मृते-र्विच्छेदात्।

तथा 'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं' इत्यत्र भेदेन प्रदानात् याज्यायां समानजातीयायामेवोभयाङ्गभूतायां तावत् करणमन्त्रत्वादेवावृत्तिः। अनुवाक्यायामपि करणमन्त्रत्वाभावेऽपि दृष्टार्थत्वाविशेषात् पूर्ववदेवावृत्तिः। एवं मनोतामन्त्रेऽपि। इदं च प्रत्युदाहरणमात्रमिति नात्र विशेषाशङ्का। तदेवं निरूपितं तन्त्रत्वम्।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकाया-
मेकादशाध्यायस्य चतुर्थः पादः
अध्यायश्च समाप्तः

---

पक्षस्तदा एककालिकत्वादग्निगोस्तन्त्रत्वमेव भवतीत्यत्रत्यावृत्तिसिद्धान्तकोटेरसंभवात् न विचार-विषयत्वमिति सूचयितुं ब्रह्मसामकाल इत्युक्तम्। यदा ब्रह्मसामकाले सहोपक्रान्तानां सर्वपशूनां मध्ये प्राजापत्यानां पर्यग्निकरणान्तं कृत्वा आलम्भोत्कर्षस्तदा विचार इत्यर्थः। **सत्यप्यकरणमन्त्रत्व इति**। यद्ययं करणमन्त्रः स्यात् तदा "मन्त्रान्तेन कर्मादिः सन्निपात्यः" इति वचनात् भेदेन कर्मानुष्ठाने तत्करणत्वनिर्वाहय तस्यापि मन्त्रस्यावृत्तिःस्यात्। न त्वेतदस्ति, अतो यदापि पठनीयो मन्त्र इति पूर्वपक्षसिद्धिरेव यद्यप्यापद्यते तथापीत्यर्थः। अकरणमन्त्रत्वेपि मन्त्रस्य प्रयोजनजिज्ञासायां दृष्टार्थत्वात् प्रकाशनमेव तत्कल्प्यते। नहि कालान्तरीयं स्मरणं विच्छेदकव्यवधाने सति कालान्तरे उपयुज्यते अतस्तन्त्रेणोपकारकत्वासंभवात् कार्यानुरोधादावृत्तिरिति भावः। **भेदेन प्रदानादिति**। यद्यपि द्वयोः कृष्णग्रीवद्रव्यकयागयोः एकदैवत्यत्वेन तन्त्रेणानुष्ठानप्राप्तौ याज्यादीनामपि तन्त्रत्वं प्राप्नोति तथापि सौम्येन व्यवधानात् न तन्त्रेण प्रदानमित्यर्थस्य व्याख्यातं तुल्यकालानामित्यधिकरणे प्रथमपादे निर्णीतत्वात्, "याज्यया यजति" इति वचनेन याज्यायाः करणत्वेन विधानात् करणमन्त्रत्वादावृत्तिरित्यर्थः। तन्त्रन्यायाप्रवृत्तावर्थसिद्धाया एवावृत्तेः इहापवादत्वेन निरूपणान्नाध्यायार्थत्वमित्यभिप्रेत्य निरूपितमध्यायार्थमुपसंहरति—**तदेवमिति**।

इति श्रीपूर्वोत्तरमीमांसा—भाट्टदीपिकाप्रभावल्यां
एकादशस्य चतुर्थः पादः
अध्यायश्च समाप्तः

---

# अथ द्वादशाध्यायस्य प्रथमः पादः

(१)—तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदः स्स्यात विधिप्रक्रमतादर्थ्यात् श्रुतिकालनिर्देशात् ॥ १ ॥ गुणकालविकाराच्च तन्त्रभेदस्स्यात ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिस्स्यात्तन्त्रार्थस्याविशिष्टत्वात ॥ ३ ॥ विकाराच्च न भेदस्स्यादर्थस्य विकृतत्वात ॥ ४ ॥ एकेषां वा शक्यत्वात् ॥ ५ ॥ आहोपुरीषकं स्यात् ॥ ६ ॥ एकाग्निवच्च दर्शनम् ॥ ७ ॥

तदेवमनेकेषां प्रधानानामगृह्यमाणविशेषत्वेऽङ्गतन्त्रता, गृह्यमाणविशेषत्वे त्वावृत्तिरित्युक्तम्। इह तु गृह्यमाणविशेषत्वेऽप्यन्यत उपकारलाभे प्रसङ्गेन कार्यसिद्धेर्नाङ्गावृत्तिरिति प्रतिपादयितुं प्रसङ्गो निरूप्यते।

---

तन्त्रिसमवाये चोदनातः।

इह तन्त्ररत्नादौ तन्त्ररूपे प्रयोगपरिमाणे चिन्तितेऽधुना तत्परिमाणमेव प्रसङ्गरूपं चिन्त्यत इत्युक्त्वा एकदेशकालकर्तृकाणि अङ्गानि तादृशानामेव बहूनामपि प्रधानानां सकृत्कृतान्येवोपकर्तुं शक्नुवन्तीत्येतत् पूर्वाध्यायोक्तमुपजीव्य उद्देशविशेषात् पृथगनुष्ठानमाशङ्क्य सत्यपि तस्मिन् देशाद्यविशेषादेव सकृत्प्रयोगो लभ्यते उद्देशविशेषस्त्वतन्त्रमिति प्रतिपाद्यत इति हेतुहेतुमद्भावो लक्षणयोरित्युक्तं ; न चैतावता लक्षणार्थयोस्सङ्गतिरुक्ता भवतीत्यतस्तामुपेक्ष्य स्वयं पूर्वाध्यायार्थोत्तराध्यायार्थनिरूपणयोरापवादिकीं संगतिं दर्शयति-तदेवमिति—इह त्विति—गृह्यमाणविशेषत्वे सति यथाऽऽवृत्तेः प्रसंगेन कार्यसिद्धेः अपवादः तथाऽगृह्यमाणविशेषत्वादेवावृत्त्यपवादे देशकालकर्त्रैक्येन प्रसक्तस्य तन्त्रस्याप्यपवाद इत्येतन्निरूपणार्थमध्यायान्तरारंभः। अत एवास्य न दशमानन्तरमेवारंभ इति भावः। अत्र प्राचां ग्रन्थेषु यदन्यानुष्ठानकाले अन्यत् लुप्तधर्मकं कर्म पतति स प्रसंगस्य विषय इति प्रसंगविषयमुक्त्वा तन्त्ररत्ने सुब्रह्मण्याप्रसंगविचाराधिकरणे अन्यार्थेनाङ्गेना-

तत्र प्रसङ्गो नामान्यत **उपकारलाभप्रयुक्ताङ्गाननुष्ठानम्। अस्ति हीदं पशुपुरोडाशयागे, पशुयागार्थानुष्ठितप्रयाजादिजन्योपकारलाभप्रयुक्ताङ्गाननुष्ठानात्। अस्ति च प्रणयनादौ पश्वर्थानुष्ठितगोदोहनादिजन्योपकारलाभप्रयुक्तचमसाननुष्ठानात्। अस्ति चाग्नेयादौ व्रीहिजन्योपकारलाभप्रयुक्तयवाननुष्ठानात्। अत्राननुष्ठानमात्रस्य प्रसङ्गत्वे**

---

न्यस्योपकारकवत्त्वं प्रसङ्गलक्षणं कृतं ; तन्न, काम्येन नित्यप्रयोगस्य प्रसंगात् सिद्धौ कर्मभेदाभावेन अन्यानुष्ठानकालेऽन्यकर्मपातस्यासंभवात् गोदोहनेन चमसकार्यप्रणयनप्रसङ्गमध्यपातस्य सुतरामसंभवाच, दर्शपूर्णमासयोरङ्गत्वाभावेनान्यार्थेनाङ्गेनान्यस्योपकारकत्वरूपप्रसङ्गलक्षणाऽव्याप्तेश्च। अप्रयोज्ये पुरोडाशकपालेऽतिव्याप्तेश्च व्रीह्यनुष्ठानेन यवप्रसङ्गसिद्धौ आग्नेययागादेरेकत्वेनान्यार्थेनान्यस्योपकारकत्वासंभवाच। **एतेन** अङ्गपदहानेनान्यार्थेनान्यस्योपकारसिद्धिरिति लक्षणं सुब्रह्मण्याप्रसंगाधिकरणे **शास्त्रदीपिकायां** कृतमपास्तं; पश्वर्थानुष्ठेयानामनूयाजानां प्रसङ्गोपकारकत्वेऽव्याप्तेश्च। नहि भाविभिरनूयाजैः पशुपुरोडाशस्योपकारसिद्धिरस्ति। **एतेनैतदधिकरण**सिद्धान्तेऽनन्यार्थानुष्ठानजन्योपकारोपस्थापनकान्यदीयप्रयोगवचनमालोच्य लाघवात् अन्यदीयप्रयोगवचनैकदेशलोपः प्रसंगः। संभवति च पशुपुरोडाशप्रयोगवचने भिन्ने सत्यपि तदेकदेशस्याङ्गानां प्रधानसामीप्यकरत्वांशस्य लोपात् लक्षणमेतदिति **कृतं तन्त्ररत्ने** लक्षणमप्यपास्तं, राजन्यस्य फलचमसेन सोमप्रसङ्गसिद्धावव्याप्तेः, अन्यदीयप्रयोगविधिभेदाभावात्। **अथोच्येत** यत्किंचिद्विध्यनुष्ठापितजन्योपकारोपस्थापकविधिप्रवृत्तिमालोच्य तदुपकारजनकांशे विधेरनुष्ठापकत्वशक्तिलोप इति प्रसंगलक्षणम्। अस्ति च विकल्पस्थलेप्येकस्यापि प्रयोगविधेर्व्रीह्यादिजन्योपकारोपस्थापकांशालोचनया तदुपकारजनकयवाद्यनुष्ठापकशक्तिलोपात्तदिति, तदपि न, अप्रयोजके वाजिनादावतिव्याप्तेः। दध्यानयनानुष्ठापकशक्तिलोपस्य वाजिनविधौ सत्त्वात्। अयमेव हि प्रसङ्गादप्रयोजके विशेषः, यत् प्रसङ्गप्रयोगवचनेऽनुष्ठापकशक्तिसत्ता, अप्रयोजके तु सर्वथा तच्छक्तिलोप एवेति। अत एवैकादशाद्ये भाष्यकारेण "साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः। एवमेव प्रसंगःस्यात् विद्यमाने स्वके विधौ" इति प्रसंगलक्षणार्थं प्रदर्शिते प्राचां श्लोके प्रसङ्गलक्षणप्रदर्शनावसरे चतुर्थपादोपादानं कृतम्; अतः प्रयोगविध्यन्तरप्रयोज्येऽर्थे दध्यायने वाजिनमप्रयोजकं भवति स्वप्रयोगविधेः प्रयोजकत्वशक्तौ सत्यामप्यप्रयोजकत्वं प्रसंग इत्येवं भेदनिर्वाहाय अनुष्ठापकशक्तिलोपपर्यन्तं प्रसंगलक्षणं नैव कर्तुं शक्यमिति प्राचीनोक्तप्रसंगलक्षणमयुक्तमभिप्रेत्य तन्त्रमध्यपातादिकमुपलक्षणं वक्ष्यमाणमुररीकृत्याव्याप्त्यादिदोषपरिहारेण प्रसंगलक्षणमाह—**तत्र प्रसङ्गो नामेति।**

**बाधेऽपि तदापत्तिः, अतः प्रयुक्तत्वान्तमाद्यं विशेषणम्।** अप्रयोजके च वाजिनादौ **नोप-कारलाभप्रयुक्तं दध्यानयनाद्यननुष्ठानं, अपि तु वाजिनानुनिष्पन्नत्वादिप्रयुक्तमिति न तत्राप्यतिप्रसङ्गः।**

वस्तुतस्तु—**चतुर्थोक्तप्रयोजकत्वाभावोऽप्रयोजकत्वं तद्व्याप्य एव च प्रसङ्गः प्रसङ्गलक्षणानाक्रान्तश्चाप्रयोजकत्वविशेषो वाजिनादाविति तयोर्भेदः। तन्त्रे आग्नेयार्था-नुष्ठितप्रयाजादिजन्योपकारलाभेऽप्यगृह्यमाणविशेषतया तदनुष्ठानस्य सर्वसाधारणत्वा-दग्नीषोमीयार्थमुपकारलाभप्रयुक्तानुष्ठानाभावान्नातिप्रसङ्गः।**

---

नित्यकाम्यदर्शपूर्णमासयोर्भेदाभावात् पापक्षयरूपफलजनकापूर्वरूपोपकारस्य कामार्थदर्श-पूर्णमासानुष्ठानेनैव लाभेन प्रसंगसंभावनायामप्यन्यत उपकारलाभप्रयुक्ताननुष्ठानरूपप्रसंगलक्षणा-भावात् अव्याप्तिपरिहारार्थमङ्गाननुष्ठानमिति अङ्गपदोपादानम्। ततश्च पापक्षयार्थदर्श-पूर्णमासोपकारार्थं न प्रयाजाद्यङ्गानुष्ठानं काम्यार्थदर्शपूर्णमासोपकारेण प्रयाजादिजन्येन लाभ-संभवादिति तत्राप्यङ्गाननुष्ठानमादायैव प्रसङ्गव्यवहारान्नाव्याप्तिरिति भावः। अत एवैतादृशे विषये न प्रधानेन प्रधानस्य प्रसङ्गो भेदाभावात् अतस्तन्त्रमेव द्वयोरिति वक्ष्यते। न चैतावता अङ्गतन्त्रत्वमेव स्यात्, न प्रसङ्ग इति शङ्क्यं, कामार्थदर्शपूर्णमासव्यक्त्यर्थत्वेन गृह्यमाण-विशेषत्वात्। अस्तु वा अङ्गतन्त्रत्वेनैव प्रधानतन्त्रत्वमिति नाङ्गानां प्रसङ्गः। यदा तु काम्येन नित्यस्य प्रसङ्गसिद्धिरिति मीमांसकप्रवादानुरोधेन एतादृशविषये प्रसङ्ग एवेत्याग्रहः, तदा नित्यकाम्यप्रयोगभेदमादाय लक्षणसमन्वयः कामार्थकृतदर्शपूर्णमासप्रयोगमध्ये नित्यप्रयोगपाते सति काम्यप्रयोगेणैव पापक्षयजनकादृष्टरूपोपकारलाभप्रयुक्तनित्यप्रयोगाननुष्ठानादिति ध्येयम्। **अप्रयोजके वाजिनादाविति।** वाजिनार्थं दध्यानयनाननुष्ठानं वाजिनोत्पत्तिरूपोपकारः अन्यतो लभ्यत इत्येतत्प्रयुक्तं न वाजिनस्य दध्यानयनं विना अन्यत उत्पत्त्यसंभवात्, किन्त्वामिक्षार्थदध्यानयनानुनिष्पन्नत्वादेव न स्वातन्त्र्येण प्रयोजयतीत्यतो हेतोस्तदिति न तत्राप्यतिप्रसङ्ग इत्यर्थः। वाजिनस्यामिक्षानुनिष्पन्नत्वेपि आमिक्षाप्रयुक्तदध्यानयनेनैव वाजिनोत्पत्तिरूपोपकारलाभे तत्प्रयुक्तदध्यानयनाननुष्ठानस्यानिवार्यत्वात् प्रसङ्गलक्षणातिव्याप्ति-रस्त्येवेत्यभिप्रेत्याह—**वस्तुतस्त्विति। अयमर्थः—प्रसङ्गे** प्रसङ्गिनः प्रयोजकत्वशक्तौ विद्यमानायामपि न प्रसङ्गिना पशुपुरोडाशेन प्रयुज्यते प्रयाजादितज्जन्योपकारस्य पश्वर्थानुष्ठित-प्रयाजैरेव लाभात्। अतोऽप्रयोजकत्वमप्यस्तीति अप्रयोजकत्वव्याप्यं प्रसङ्गस्वरूपं व्यापकी-भूताप्रयोजकत्वात् स्पष्टमेव भिन्नं, अप्रयोजके वाजिनादौ सर्वथा नैव प्रयोजकत्वशक्तिरिति भेदः। तथा च प्रयोजकत्वशक्तौ विद्यमानायां अन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानमिति लक्षणकरणान्नाति-व्याप्तिरिति। एवं प्रसङ्गस्वरूपं प्रदर्श्य तद्विषयं दर्शयितुमुदाहरणपूर्वकमधिकरणविचारमारभते—

तदिह 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति श्रुतेऽग्नीषोमीयपशुयागाङ्गभूते दार्शिकाग्नीषोमीययागप्रकृतिके पशुपुरोडाशयागे किं पाशुकानि प्रयाजादीन्यङ्गानि प्रसज्यन्ते उत भेदेनानुष्ठीयन्त इति चिन्तायां—

न तावत्पौरोडाशिकं चोदकं प्रयोगविधिं च प्रयाजाद्यंशेऽप्यभ्युपगम्य केवलमनुष्ठानप्रसङ्ग एवाभ्युपगन्तुं शक्यः, प्रयोगविधिना वपाप्रचारोत्तरकालविशिष्टसाङ्गपुरोडाशयागप्रयोगविधौ ततः पूर्वकृतप्रयाजादीनामकालकृतत्वेनोपकारकत्वानुपपत्तेः। यदि तु नायं कालविधिः अपि तु पशुपुरोडाशसमाख्यासहकृतानुष्ठानसादेश्याद्वाक्यादेव वा पश्वङ्गत्वावगतौ तत्प्रयोगान्तःपातेनानुष्ठानसिद्धेरयं क्रमविधिरेवेत्युच्यते, तथाऽपि पुरोडाशयागार्थं प्रधानविधिनैवानुष्ठापितानां प्राकृतानामङ्गानामननुष्ठाकरणे वैगुण्यापत्तिरनिवार्यैव।

यत्र हि पश्वङ्गानां पुरोडाशाङ्गानां च न वैलक्षण्यं, तत्र सकृत्करणे वैगुण्याभावेऽपि तन्त्रत्वस्यैवापत्तेर्न प्रसङ्गापत्तिः। यत्र वैलक्षण्यं, यथा—पशावेकादश प्रयाजाः तिष्ठति च पशौ, पृषदाज्येनानूयाजा एकादश वैकृतयाज्यान्तरयुक्ताः, पुरोडाशे तु प्रयाजाः पञ्च, हविरासादनोत्तरकालीना अनूयाजाश्च शुद्धाज्येन त्रयः इत्यादि, तत्र त्वित्यादि-

---

तदिहेति। प्रसज्यन्त इति। पशुपुरोडाशोपकारकाणि सन्तिप्रसक्तानि भवन्ति, अथवा न प्रसक्तानि भवन्तीत्यतो भेदेनानुष्ठीयन्त इत्यर्थः। अत्र पशुपुरोडाशयागे चोदकप्राप्तानि प्रयाजाद्यङ्गानि पशुपुरोडाशप्रयोगविधिना यद्यपि प्रयुज्यन्ते तथापि प्रयोजनाभावात् नानुष्ठीयन्ते अन्यतस्तदुपकारलाभात्। अत एवाप्रयोजकात् प्रसङ्गे भेद इति प्राभाकरीयं प्रसङ्गोपपादनं निरस्य पूर्वपक्षमाह—न तावदिति। प्रयोगविधिनेति। पशुपुरोडाशप्रयोगविधिना यादृशं साङ्गानुष्ठानं विहितं तादृशादेव तत्तदुपकारोत्पत्तिः भवतीत्यग्नीषोमीयस्य वपया प्रचर्येति विधौ प्रचर्येति कालाम्नानात् प्रयोगविधित्वस्यावश्यकत्वात् वपाप्रचारोत्तरकालानुष्ठेयाङ्गसहितपशुपुरोडाशप्रयोगविधाने सति तत्पूर्वदृष्टप्रयाजानां पशुपुरोडाशोपकारकत्वानुपपत्तिरित्यर्थः। यदि त्विति। अयमर्थः—यद्ययं प्रयोगविधिः स्यात् तदा वपाप्रचारोत्तरकाले साङ्गानुष्ठानविधानान् पृथक् प्रयाजानुष्ठानमापद्येत न त्वेतदस्ति पशुपुरोडाशयागस्य पुरोडाशसमाख्ययानुष्ठानसादेश्येन, अथवाऽग्नीषोमीयमिति द्रव्यविशेषणतयोपात्तस्याग्नीषोमदेवतारूपार्थस्योपस्थितत्वात् वैमृधन्यायेन तद्वाचकपदान्तरकल्पनयाऽग्नीषोमदेवतासंस्कारद्वारा वाक्यादेवाग्नीषोमीयपशुयागाङ्गत्वावगतेः प्रधानप्रयोगविधिनैवानुष्ठेयतयावगतस्य पुरोडाशयागस्य क्वानुष्ठानमिति क्रमापेक्षायां अनेन प्रधानमात्रांशे क्रममात्रविधानात्

**सङ्ख्यायाश्चोदकेनाङ्गत्वप्राप्तौ प्रयोगविधिना चानुष्ठापने कथं** पुरुषालस्यवशेना**ननुष्ठाने वैगुण्यानापत्तिः। अतोऽवश्यं प्रसङ्गवादिना तदंशे शास्त्रस्यैव न व्यापार इत्यभ्युपगन्तव्यम्।**

अस्तु तर्हि **तदंशे चोदकसत्त्वेऽपि प्रयोगविधिलोपः.** तथात्वे **पुरोडाशोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वाभावेन पुरोडाशाङ्गत्वानापत्त्या चोदकवैयर्थ्यात् प्रयाजाद्यनुष्ठानस्य पशूद्देश्यकत्वेन पुरोडाशोद्देश्यकत्वाभावात्। अथ पुरोडाशयागानुकूलभावनायामेव प्रयाजादेः इतिकर्तव्यतात्वेनान्वयात् तदङ्गत्वमित्युच्यते, तथाऽप्यनुष्ठानाभावेऽप्यङ्गत्वबोधकातिदेशस्वीकारे कृष्णलेष्ववघातातिदेशापत्त्या** प्राभाकरमतप्रवेशापत्तेः।

---

वपाप्रचारानन्तरं प्रधानपशुपुरोडाशानुष्ठानेपि पूर्वकृतप्रयाजैरेव उपकारलाभात्, न पुनर्वपाप्रचारानन्तरं प्रयाजानुष्ठानापत्तिरित्यर्थः। **पुरुषालस्यवशेनेति**। न चोपकारस्यान्यतो लाभात् अनुष्ठानं, अतिदेशप्राप्तानां प्रयोगविधिनानुष्ठापितानां उपकारान्तरजनकत्वस्यैवापत्तौ अनुष्ठानानुपपत्तेः पञ्चसङ्ख्यैरासन्नेषु च हविष्षु कृतैः प्रयाजैः आज्यद्रव्यकैः त्रिभिरनूयाजैः जनितस्यैवोपकारस्य पशुपुरोडाशेऽपेक्षणात् तादृशस्यान्यतः प्राप्त्यसम्भवाच्च। अतःप्रयाजाद्यंशेऽतिदेशशास्त्रस्य नैव व्यापार इत्येव भट्टमतवदुक्तुमुचितं, न तु चोदकाङ्गीकारेण प्रसङ्गोपपादनं युक्तमिति भावः। प्रकारान्तरेण प्रसङ्गमाशङ्कते—**अस्तु तर्हीति**। **अयमर्थः**—पशुपुरोडाशयागेन पशूपकारं भावयेदित्युक्ते कथमिति यागगतव्यापाराकाङ्क्षायां उपमितिलक्षणप्रमाणेन पौर्णमासिकाग्नीषोमीययागगतो व्यापारः प्रयाजादिजन्यदृष्टादृष्टोपकारवत् तदा संपादनस्यः प्राप्नोति। तदेतत् अग्नीषोमीययागगतव्यापारविशेषनियमनं सादृश्यविशेषसिद्धं तत् प्रथमालोचनात् उत्पत्तिरिवोत्पत्तिरित्यभिधीयते। तस्य चोत्पन्नस्य पशुपुरोडाशयागेन सह यत् संबन्धकरणं स विनियोग उच्यते। तदेतद्व्यापारद्वयं चोदकस्य विषयः। तस्यैव विनियुक्तस्यानुष्ठानेन प्रधानसामीप्यकरणं उपसंग्रहापरपर्यायं पशुपुरोडाशप्रयोगविधेर्व्यापारः अस्यैव प्रयोगवचनव्यापारस्यात्र लोपः पाशुकप्रयोगविधिनैव प्रयाजादीनां मध्यपतितपुरोडाशयागसामीप्यस्य कृतत्वात्। अतश्चोदकेन प्राप्तानां पुरोडाशप्रयोगविधिनानुष्ठानस्यान्यतः प्राप्तेः पुनरनुष्ठानाबोधनात् नावृत्तिः किं तु प्रसङ्ग इति। **तथात्वे इति**। निराकरणग्रन्थः स्पष्टार्थः। **प्राभाकरमतप्रवेशापत्तेरिति**—ततश्च कृष्णले अवघातातिदेशसत्त्वे शास्त्रतः प्राप्तस्य वैतुष्यार्थं अनुष्ठानाभावेपि अदृष्टरूपोपकारान्तरार्थमनुष्ठानापत्तिर्दूषणं तन्मते, तथात्वापि अतिदेशप्राप्तानां प्रयाजादीनां प्राकृतोपकारार्थमनुष्ठानाभावेपि उपकारान्तरकल्पनया तदापत्तिः दूषणं समानमापद्येतेत्यर्थः। अथ पशुपुरोडाशयागे प्रयाजातिदेशमनङ्गीकृत्य सिद्धान्त्यापादितप्रसङ्गमाशङ्कते—**अथेति**। यदुद्देशेन यस्यानुष्ठानं तस्य तदुद्देश्यभूतफलजनकत्वमिति नियमाङ्गीकारेण निराकरोति—

अथ उपकारपृष्ठभावेन पदार्थानामतिदेशादुपकारलोप इवान्यत उपकारलाभेऽपि न पदार्थातिदेशः, उपकारस्य सिद्धत्वेन जनकापेक्षाभावे तदंशे अतिदेशकल्पने प्रमाणाभावात्। अत एव पुरोडाशातिदेशेन प्रयाजादिजन्यो विजातीयोपकार एवातिदिश्यते न तु तज्जनकप्रयाजादिकमपि। अतश्च पश्वर्थे क्रियमाणप्रयाजादिभिरेव तादृशविजातीयोपकारस्य लब्धत्वात्तेनैव पुरोडाशयागेऽपि योग्यताजननरूपफलोपपत्तेः प्रसङ्गाविरोधः। अत एव कालसङ्ख्याद्यभावकृतं न वैगुण्यमपि। प्रयाजादीनामेवानतिदेशेन तत्पृष्ठभावेन तेषां सुतरामनतिदेशादिति चेत् तथात्वेऽपि पशुयागोद्देशेनानुष्ठितप्रयाजादिजन्यादृष्टानां पशूपकारं प्रत्येव फलोपधायकतया पुरोडाशयागोपकारकत्वानुपपत्तेः। अन्यथा स्वर्गोद्देशेनानुष्ठितदर्शपूर्णमासादितः पुत्रवृष्ट्यादेरप्युत्पत्त्यापत्तेः। अतः पश्वर्थे क्रियमाणप्रयाजाद्यङ्गैः पुरोडाशोपकारकत्वानुपपत्तेः तदर्थे भेदेनानुष्ठेयानि प्रयाजादीनि।

नन्व 'एकादशप्रयाजान् यजति' इत्यादिनाऽङ्गप्रधानसाधारणप्रयाजाद्युद्देशेन एकादशत्वादिविधानात् सकृत्कृतैरेव तैस्तन्त्रेणोभयोपकारोपपत्तिः। 'एकादशप्रयाजान् यजति पशुमेव तत्प्रयजति, एकादशानूयाजान् यजति पशुमेव तदनुयजति' इत्यादिना एकादशत्वादीनां पश्वपूर्वसाधनीभूतप्रयाजार्थत्वावगमेन गृह्यमाणविशेषतया तन्त्रत्वानुपपत्तिरिति प्राप्ते—

सत्यमेकादशत्वादिगुणकं प्रयाजादिकं पश्वर्थमेव। तैरेव तु पशुप्रयोगमध्यवर्तिनः पुरोडाशयागस्य प्रसङ्गेनोपकारसिद्धेः न पृथक् तदर्थमनुष्ठानम्। अत एव प्रसङ्गस्थले अन्यतस्सिद्धोपकारलाभात् पुरोडाशप्रयोगविधिः लाघवेन नोपकारजनकीभूतं प्रयाजादिकमनुष्ठापयति, न वा तदीयचोदकस्तदतिदिशति प्रयोजनाभावात्। अत एवोपकारमात्रांश एवातिदेशः। न च तैःपश्वपूर्वानुकूलयोग्यतामात्रस्यैव जननं, पुरोडाशापूर्वानुकूलयोग्यताया अपि सामग्रीसत्त्वेनोत्पत्तौ बाधकाभावात्।

नह्येककारणं युगपत्क्रमेण वा एकमेव कार्यं जनयतीत्यत्र नियामकमस्ति, एकस्यैव घटस्य युगपत् क्रमेण वा रूपरससंयोगाद्युत्पादकत्वदर्शनात्। कामोद्देशेनानुष्ठितदर्श-

---

तथात्वेति इति। प्रयाजादिकमिति। न चैतावता पुरोडाश प्रयोगविधेरेव लोप इति भ्रमितव्यं, तथात्वे प्रयोगवचनाधीनकर्तव्यताकस्य प्रधानस्यैवानुष्ठानाभावप्रसङ्गात्। अतोऽतिदेशप्रापिताङ्गविशिष्टकर्तव्यताविधानद्वारा यः प्रधानसामीप्यकरत्वांशः तावन्मात्रं लुप्यते प्रधानरूपविशेष्यकर्तव्यताव्यापारस्त्वस्त्येवेति प्रयाजादिपदेन सूचितम्। नन्वेतस्मादपि कारणात् सामग्र्यन्तरभेदे सत्येव विजातीयानेकोत्पत्तिः, यथानेकरूपरसाद्युत्पत्तौ घटरूपसमवायिकारणापेक्षयाऽसमवायिकारणरूपसामग्र्यन्तरभेदः। प्रकृते तु नैवमित्याशङ्कां तुल्य-

**पूर्णमासजन्यापूर्वान्नित्यप्रयोगीयपापक्षयस्याप्युपपत्तेश्च।** सामग्रीभेदस्य **प्रकृतेऽपि समानत्वाच्च।** एकस्मात्कारणाद्युगपदेककार्यतावच्छेदकावच्छिन्नस्यैकस्यैवोत्पत्तिः, **इतरथा घटद्वयोत्पत्तिरपि युगपदापद्येत। अत एव 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादावर्थवादोपात्तकामशब्दानुरोधेन प्रवृत्तिप्रयोजककामनाविषयत्वस्यैवोद्देश्यतावच्छेदकत्वेन स्थापितत्वात् तदवच्छिन्नस्यैकस्यैव युगपदुत्पत्तिः नानेकस्य।**

**न च तर्हि क्रमेण तस्योत्पत्तिप्रसङ्गः, पूर्वोत्पन्नकार्येणापूर्वस्य नाशे उत्तरोत्पत्त्यापादकाभावात्। नचैवमिहापि प्राथमिकेन पुरोडाशपरमापूर्वेण प्रयाजादिजन्याद्दष्टानां नाशात्पाश्चात्यपशुपरमापूर्वोत्पत्त्यनुपपत्तिः, लाघवे**नोद्देश्यतावच्छेदकावच्छिन्नस्यै**वापूर्वनाशकत्वाङ्गीकारात्। अतोऽत्र कार्यान्तरोत्पत्तौ न किञ्चिद्बाधकमिति युक्त एव प्रसङ्गः। गुणकालादिकृतं वैगुण्यं** तु त्वयैव निरस्तम्।

---

तया परिहरति—**सामग्रीभेदस्येति।** प्रयाजादिव्यतिरिक्तस्य सन्निपत्योपकारकाङ्क्षरूपस्य सामग्र्यन्तरस्य इहापि सत्त्वेन तादृशसाम्ग्र्यन्तरसत्वे एकस्मादपि प्रयाजादेः कार्यद्वयो(इवो)त्पत्तौ नैव बाधकमित्यर्थः। **एकस्मादिति।** यत्र न सामग्रीभेदः तत्रेति पूर्वं शेषः। **उद्देश्यतावच्छेदकावच्छिन्नस्यैवेति।** नह्यपूर्वनाशस्स्वानन्तरजन्यमात्रोत्पत्त्या भवति, तथात्वे स्वर्गभोगयोग्यशरीरोत्पत्तिमात्रेणैव तन्नाशापत्तेः, अपि तूद्देश्यतावच्छेदकावच्छिन्नोत्पत्त्या। अत एव स्वर्गस्यैवोद्देश्यत्वात् तदुत्पत्त्यैव तन्नाशः प्रकृतेप्युद्देश्यतावच्छेदकावच्छिन्नस्य पशुपरमापूर्वस्यैवोत्पत्त्यैव तन्नाशात्, न पुरोडाशयागोपकारमालोत्पत्त्या। **त्वयैव निरस्तमिति।** अन्यत उपकारलाभे उपकाराकाङ्क्षाभावे तज्जनकपदार्थानामनतिदेशात् तत्पृष्ठभावेन सुतरां कालसंख्यादीनामपेक्षाभावादतिदेशेनाप्राप्तावनतिदिष्टपदार्थानुष्ठानाभावकृतवैगुण्याभावात् त्वयैव निरस्तं वैगुण्यमित्यर्थः। **यदुक्तं** पञ्चसङ्ख्यप्रयाजजन्यस्य शुद्धाज्यजन्यानूयाजजन्यस्योपकारस्यान्यतोऽलाभात् पुनरनुष्ठानमिति, **तन्न,** वैकृतसङ्ख्यया वैकृतगुणेन च प्राकृतसङ्ख्यागुणयोर्बाधेऽपि विकृतेः प्राकृतोकारापेक्षया उपकारन्तरजनने मानाभावात्। नहि वैकृतगुणैरुपकारान्तरं जन्यते। किन्तु स्थित एव प्राकृते उपकारे प्राकृतगुणादिबाधमात्रं; अतस्तस्यापेक्ष्यमाणस्यान्यतो लाभात् न तदर्थं पृथगनुष्ठानमिति।

---

## (२)—जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रः प्रतिषेधः स्यात् ॥ ८ ॥

यानि त्वङ्गानि आज्यभागावघातादीनि पशौ न विद्यन्ते तानि किं पुरोडाशे कर्तव्यानि न वेति चिन्तायां—

पुरोडाशभावनाया इतिकर्तव्यतापेक्षायां सन्निहितपाशुकचोदकप्रापिताङ्गजन्योपकाराणामेवोपस्थितत्वेन स्वापूर्वजननानुकूलयोग्यताजनकत्वमात्रकल्पनया इतिकर्तव्यताकाङ्क्षाशान्तेः न पुरोडाशविधिना स्वतन्त्रातिदेशकल्पनं, गौरवात्। अतश्च यथैव गृहमेधीये क्लृप्तोकाराज्यभागाभ्यामेव निराकाङ्क्षत्वान्नातिदेशकल्पनं तथा प्रकृतेऽपि क्लृप्तैरेवोपकारैर्निराकाङ्क्षत्वादतिदेशकल्पनानुपपत्तेर्नाज्यभागादीनामङ्गत्वे प्रमाणमस्ति। अत एव प्रयोज्यवर्गाभावात् पुरोडाशप्रयोगविधेरपि प्रधानमात्र एव व्यापारः न त्वङ्गांशे तज्जन्योपकारांशे वेत्यपि लाघवम्। नचैवमप्येकादशकपालसम्पादकसन्निपत्योपकारकाङ्क्षापेक्षयैवातिदेशकल्पनं, तथात्वे गृहमेधीयेऽपि तदापत्तेः।

वस्तुतस्तु—अनोवासोऽधिकरणन्यायेन लोकसिद्धैकादशकपालस्यैव ग्रहणात् न प्रयोगमध्ये तत्करणावश्यकता, गृहमेधीयचरोस्तु वाचनिकानामेव कतिपयानां सन्निपत्योपकारकाणां पाठात्प्रयोगमध्ये करणमिति विशेषः। अतश्च नाज्यभागादीनां पुरोडाशार्थं करणमिति प्राप्ते—

---

जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात्।

अत्र प्राचीनैः पुरोडाशप्रयोगविधिसत्वेऽपि पाशुकातिदेशेनैवाङ्गानां प्राप्तत्वात् न पुरोडाशयागे स्वतन्त्रातिदेशकल्पनमित्यतिदेशनिवृत्तिरूपं बाधमङ्गीकृत्य प्रापकप्रमाणाभावात् आज्यभागादेरकरणं पूर्वपक्षयित्वाङ्गानां प्रयोगविधिनाऽनुष्ठानविधानात् अङ्गत्वबोधस्य चातिदेशोपजीव्यत्वात् दुर्बलोप्यतिदेशः उपजीव्यत्वान्न बाध्यते। प्रयोगवचनस्यैव तु पाशुकप्रयोगवचनेनानुष्ठानलाभात् येषामनुष्ठानमन्यतो लब्धं तद्विषयेऽभावेपि येषामनुष्ठानं नान्यतो लब्धं तेषामाज्यभागादीनामनुष्ठानं बोधयत्येवेति कर्तव्यमाज्यभागादीति सिद्धान्तितम्। तत्र चोदकलोपे सति अङ्गांशे प्रयोगविधेरेवानुपपत्तेः प्रयोगविध्यङ्गीकारेण पूर्वपक्षकरणस्य निर्युक्तिकत्वं सिद्धान्तेपि प्रयोगवचनैकदेशलोपस्यैव प्रयाजाद्यंशे चोदकलोपस्य स्वीकारान्निष्प्रयोजनत्वं वक्ष्यतेऽधिकरणान्ते। अतश्चोदकलोपादङ्गांशे प्रयोगविधिलोपाङ्गीकारेण स्वयं पूर्वपक्षमारचयति—**पुरोडाशभावनाया इति।** **स्वापूर्वेति।** पुरोडाशयागस्स्वशब्दार्थः। **गृहमेधीयचरोस्त्विति।** सायं चरुमित्यन्ते पूर्वतननिर्वपतिपदस्यानुषङ्गात् वैधनिर्वापपूर्वकचरुकर्तव्यतापादकसन्निपत्योपकारकाङ्क्षानां पाठे सति प्रयोगमध्ये करणं न लोकसिद्धग्रहणमित्यर्थः। यद्यपि पुरोडाशयागोत्पत्तिवाक्ये निर्वपतिपदा-

पाशुकाङ्गोपकाराणां पुरोडाशापूर्वजननानुकूलयोग्यतां प्रति तत्तद्विजातीयापूर्वत्वेनैव वस्तुतो जनकत्वेऽपि तत्कार्यकारणभावबोधकपदकल्पनायां न तावत्पुरोडाशयागप्रधानीभूतपश्वपूर्वसम्बन्ध्यङ्गजन्योपकारैर्योग्यतां भावयेदित्येवंविधा कल्पना, तथात्वेऽपूर्वाणामप्युपयाजादिजन्यापूर्वाणामेतद्योग्यताजनकत्वापत्तेः। न चेष्टापत्तिः, ज्योतिष्टोमिकाङ्गजन्यापूर्वाणामपि सवनीयोपकारजनकत्वापत्त्या तत्रापि दैक्षातिदेशानापत्तेः। पश्वपूर्वसम्बन्ध्यङ्गजन्योपकारत्वस्य पुरोडाशजन्यापूर्वं बाधिततया यूपादिजन्योपकारे चातिप्रसक्तत्वेन तादृशपदस्य कल्पयितुमशक्यत्वाच्च।

अतोऽवश्यं स्वप्रधानीभूतपशुयागसादृश्योपस्थितसान्नाय्यसम्बन्ध्यङ्गजन्याबाधितोपकारैर्निरुक्तयोग्यतां भावयेत् इत्येव कल्पना वाच्या, तद्वरं स्वसादृश्योपस्थिताग्नीषोमीयपुरोडाशयागसम्बन्ध्यङ्गजन्योपकारैर्निरुक्तयोग्यतां भावयेत् इत्येव कल्पना। अतश्च युक्त एव पुरोडाशे ऐष्टिकधर्मातिदेशः। तेन च सर्वोपकारेषु प्राप्तेषु तत्पृष्ठभावेन पदार्थातिदेशवेलायां य एवोपकारो नान्यतो लभ्यते तदंशे पदार्थातिदेशस्य तत्प्रयोगविधेश्चावश्यकत्वात् शुक्रमेवाज्यभागादीनां करणम्।

ये तूपकारा अन्यतो लब्धास्तद्विषयेऽतिदेशप्रयोजनाभावात् नातिदेशः, पदार्थानामुपकारांशे त्वस्त्येव सः। यद्यपि च नोपकारस्य पृथगतिदेशो गौरवात् अतिदेशलक्षणस्याव्याप्तेश्च, तथाऽप्येकेनैवातिदेशेन प्राकृतोपकारद्वारा पदार्थानां विकृत्यङ्गत्वं बोधयता उपकार-

---

ज्ञानात् तदनुरोधेनेहाप्यतिदेशकल्पनं दुर्वारं तथापि तस्य वैधत्व एव प्रमाणाभावाल्लौकिकस्यैव ग्रहणोपपत्तिरिति ध्येयम्। **तथात्वेऽपूर्वाणामिति**। इयं च निर्धारणे षष्ठी। तथाच पश्वपूर्वसंबन्ध्यङ्गजन्योपकाराणां अपूर्वरूपाणां मध्ये "गुदेनोपयजन्ति" इति वाक्यविहितपश्वङ्गोपयाजजन्यापूर्वाणामपि सत्वात् पुरोडाशयागयोग्यताजनकत्वापत्तिरित्यर्थः। अन्याङ्गानामन्योपकारकत्वाङ्गीकारेऽनिष्टापत्तिमाह—**ज्यौतिष्टोमिकाङ्गेति**। **तद्वरमिति**। पुरोडाशयागस्य कथंभावाकाङ्क्षायां झटित्युपस्थितस्वसदृशाग्नीषोमीययागातिदेशस्यैव कल्पनात् अस्त्येवातिदेश इत्यर्थः। **अतिदेशलक्षणस्याव्याप्तेश्चेति**। यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनावधारितः तस्य पदार्थस्य तत्संबन्धित्वेन रूपेण तादृशोपकारद्वाराऽन्याङ्गताबोधकं प्रमाणमित्यतिदेशलक्षणस्य उपकारस्योपकाराभावात् परोद्देशप्रवृत्तकृतिकारकत्वरूपाङ्गत्वस्याप्यभावे यादृशोपकारद्वारा अन्याङ्गत्वेनावधारितत्वस्यासंभवात् उपकारांशे पृथगतिदेशकल्पनेऽव्याप्तिः स्फुटैव। यदा तु पदार्थविशिष्टोपकाराणां प्रकृतिवत्तत्तत्पदार्थजन्यांस्तत्तदुपकारान् विकृतौ कुर्यादित्येवमेक एवातिदेशः तदा पदार्थमादायातिदेशलक्षणोपपत्तावपि एकस्यैवातिदेशस्य पदार्थान् विहाय नोपकारमात्रांशे व्यापारस्संभवतीत्याशङ्कार्थः। **तथापीति**। प्रकृतियोग्यताजनकैः प्रकृतिवद्विकृतियोग्यतां जनयेदित्येकेनातिदेशेन

स्यापि विकृतिसम्बन्धावगमात् सिध्यति तस्याप्यतिदेशविषयत्वम्। एवंच प्रसङ्गस्थले अतिदेशेन प्राकृतोपकारद्वारा अन्यत उपकारालाभ एव पदार्थविधानात् तल्लाभे उपकार-सम्बन्धसिद्धावपि पदार्थविधायकाभावान्नातिदेशः पदार्थानामनुष्ठेयत्वाभावाच्च न प्रयोग-विधिरपि।

अत एव सर्वत्र प्रकृतौ विकृतौ वा अङ्गविधिष्वेवं वाक्यार्थः—अन्यत उपकारालाभे-ऽनेनाङ्गेन योग्यतां सम्पादयेदिति। अत एव प्रकृतेरपि दैवाद्वितततविकृतिप्रयोगमध्ये-ऽनुष्ठाने प्रसङ्गेनोपकारलाभात् न प्रयाजाद्यनुष्ठानम्। पशुपुरोडाशेऽपि च दैवे नित्यतया यथाशक्ति एकादशप्रयाजाद्यननुष्ठानेनापि क्रियमाणे पुरोडाशार्थमेव पञ्चप्रयाजाद्यनुष्ठानं तदा च पशोरपि प्रसङ्गित्वं, अन्यत उपकारलाभस्याविशिष्टत्वात्। अत एव तन्त्रमध्य-पातादिकमप्युपकारलाभोपलक्षणमेव। अतो यत्रान्यत उपकारलाभः तज्जनकपदार्थांशे न वाऽतिदेशः न वा प्रयोगविधिः इतरांशे तूभयमिति सिद्धम्। न चैवमप्रयोज्येऽपि प्रयोगविध्यभावात् प्रसङ्गे ततो विशेषानापत्तिः, अन्यत उपकारालाभे प्रसङ्गस्थले प्रयोग-विधिसत्त्वेन ततो भेदात्।

वस्तुतस्तु—चतुर्थोक्तप्रयोज्यत्वाभाव एवाप्रयोज्यत्वं तद्भिन्नमेवोक्तविधप्रसङ्गत्व-मिति नाभेदशङ्का। अप्रयोज्यत्वव्याप्यमेव तु प्रसङ्गत्वमिति ध्येयम्।

---

उपकाराणामपि विकृत्यङ्गत्वस्य पदार्थानामिव बोधनात् उपकारान्यथानुपपत्त्या पदार्थानामति-देशविषयत्वस्यान्यत्रोपकारालाभे कल्पनेपीह अन्यतस्तल्लाभे नैव तद्विषयत्वकल्पनं युक्तं गौरवात्। अतः स्वातन्त्र्येण प्रयाजादिपदार्थानामेतादृशविषये पुरोडाशाङ्गत्वस्यैवाबोधनात् नानुष्ठानमिति भावः। एतदेवोपपादयति—अत एव सर्वत्रेति। तथा च पशोरपि प्रसङ्गित्वमिति। वस्तु-तस्तु पुरोडाशार्थकृतप्रयाजाद्यङ्गजन्योपकाराणां पुरोडाशयागपरमापूर्वेणैव नाशान्न तदुत्तरक्रियमाणा-ङ्गयागोपकारकत्वं संभवतीति न प्रसङ्गोपपादनं युक्तम्। अत एव यदा पुरोडाशयागस्य पशु-तन्त्रमध्यपातः तदा पश्वर्थकृतकरिष्यमाणाङ्गजन्योपकारलाघवाय पत्नीसंयाजान्त एव पुरोडाश-यागपरमापूर्वोत्पत्तिरिष्यते। यदा त्वस्यैव पुरोडाशयागस्य तन्त्रित्वं तदा तदीयपरमापूर्वस्य विलम्बेनो-त्पत्तौ प्रमाणाभावात् तदानीमेवोत्पद्यमानपरमापूर्वजननानुकूलयोग्यताजननार्थं सर्वाङ्गानुष्ठानस्या-वश्यकत्वात् तत्तदङ्गजन्योपकाराणामवश्यं नाशान्न प्रसङ्गित्वं पशोस्संभवति। एतदभि-प्रायेणैव दर्शप्रयोगमध्यपतितनिशीष्ट्यर्थं कृतप्रयाजाद्यङ्गानामुत्तरदिनकरिष्यमाणदर्शयागेनैव प्रसङ्गो दर्शाद्यर्थकृतानां तु तेषां निशीष्टौ प्रसङ्गः तदनुरोधेन च दर्शाद्यर्थक्रियमाणब्राह्मणातर्पणान्ते निशीष्टिपरमापूर्वोत्पत्तिरिति च **निशियज्ञ** इत्यधिकरणे स्वयमेव वक्ष्यते। अत एव

यत्तु चोदकप्रयोगविध्योरुभयोस्सत्त्वेऽपि प्रयोजनाभावादननुष्ठानमिति प्राभाकरमतं, तत् विधिना विहितस्य गुणविशेषविशिष्टस्य प्रयाजादेरनुष्ठाने विहितगुणाभावेन प्रयोजनलाभानुपपत्तेरुपेक्षितम्। अस्मन्मते तु गुणविधानाभावादेव न वैगुण्यमिति विशेषः।

यत्तु अस्मिन्नधिकरणे मूले प्रयोगविधिमङ्गीकृत्य चोदकलोपेन पूर्वपक्षकरणं, चोदकाङ्गीकारेण प्रयोगविधिमात्रलोपेन च सिद्धान्तकरणं, तत् निर्युक्तिकत्वात् प्रयोजनाभावाच्चोपेक्षितम्।

---

(३)—नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ९ ॥
अकर्म वा कृतदृषा स्यात् ॥ १० ॥

सौमिकमहावेदिर्देशत्वेनाङ्गप्रधानार्थेत्युक्तं तृतीये। तदा 'इयति शक्ष्यामहे अस्यां कर्तुं' इति महावेदिस्तुत्यर्थोऽर्थवाद एव। तेन महावेदिकरणोत्तरं यानीष्टिपश्वादीनि दर्शपूर्णमासविकाराणि सोमाङ्गानि कर्माणि तेषु हविरासादनरूपस्याङ्गाङ्गस्य महावेदिधर्मकत्वोपदेशादातिदेशिकैष्टिकवेदेस्तद्वेदिकरणस्य च बाध इत्यविवादमेव। यदा त्वनेनार्थवादिकं गमनागमनादिरूपकर्तृप्रचारमात्रार्थत्वं महावेदेस्तदा कृत्वाचिन्तया किं तादृशकर्माणि हविरासादनार्थैष्टिकवेदिकरणस्य कार्यसिद्ध्यभावात् प्रसङ्गसिद्ध्यनुपपत्तेः ऐष्टिकवेदिकरणेन तां सम्पाद्य तद्धविरासादनीयम्। तेन हि ऐष्टिकसौमिकवेदी तद्वेदिकरणं च कर्तव्यं न वेति चिन्तायां—

---

तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात् तन्त्रार्थस्याविशिष्टत्वादिति। सिद्धान्तसूत्रे तन्त्रमध्ये विधानाद्वेति हेतूक्तेरुपलक्षणत्वम्। अत एवातिथ्यायां कृतैः बर्हिस्संस्कारैः अग्नीषोमीयान्तप्रसङ्गः तन्त्रमध्यपाताभावेपि उत्तरत्र वक्ष्यते, तथाप्यान्तमुपकारसत्वावबोधद्वाराप्रसङ्गसिद्धितात्पर्यकं सदेवोपलक्षणं ध्येयम्। अतः पश्वर्थं पृथगङ्गानुष्ठानापत्तेः लाघवाय पुरोडाशयागपरमापूर्वस्यैव पत्नीसंयाजाद्यन्त एवोत्पत्तिस्वीकार इत्यभिप्रायेणायं ग्रन्थः कथंचिद्व्याख्येयः इति; स्पष्टार्थमन्यत्। यत्त्वस्मिन्नधिकरण इत्ययं ग्रन्थस्तु प्रागेव व्याख्यातः।

---

नानार्थत्वात् सोमे।

महावेदिकरणोत्तरमिति। तच्च तृतीये चतुर्थेहनि वा विकल्पेनाम्नातमिति ततः प्राक्तनानां दीक्षणीयादीष्टीनामतिदेशप्राप्तप्राकृतवेद्यामेवानुष्ठानान्न विचारविषयत्वमित्यर्थः।

कर्तृप्रचारेण हविरासादनस्य महावेद्या वा ऐष्टिकवेदेः तद्वेदिकरणेन वा तद्वेदिकरणयोस्तद्वेद्योर्वा एकत्वप्रत्यभिज्ञापकाभावात् प्रकरणान्तराच्च वेदिकरणभेदप्रतीतेः, सत्यपि च वेदिशब्दमात्रस्यैकत्वे तद्वाच्यानां तत्तत्परिमाणविशिष्टदेशविशेषाणां भिन्नत्वेन तत्तद्वेदिभेदात् भेद इति प्राप्ते—

सत्यं न कर्तृप्रचारेण हविरासादनस्य प्रसङ्गसिद्धिस्तस्य पृथगनुष्ठानावश्यकत्वात्। तथाऽपि महावेदिलम्भकवेदिकरणेनैव ऐष्टिकवेदेरपि सिद्धतया नैष्टिकवेदिकरणस्य पृथगनुष्ठानम्। वेदिर्हि न परिमाणविशिष्टदेशविशेषः तस्य स्वतस्सिद्धत्वेन वेदिकरणजन्यत्वानुपपत्तेः वेदिकरणसमाख्यया तस्य वेद्युत्पादकत्वावगतेश्च। किन्त्वदृष्टविशेषावच्छिन्नदेशविशेषः अदृष्टमेव वा। तत्र च विशेष्यभूतस्य देशस्य वेदिकरणाजन्यत्वाददृष्टमेव तज्जन्यम्। तच्च वेदिशब्दस्य नानार्थकत्वपरिहाराय एकजातीयमेवेति सौमिकवेदिकरणेन तस्य जातत्वात् अदृष्टविशेषावच्छिन्नाहवनीयप्रत्यग्देशरूपस्य ऐष्टिकवेदिपदार्थस्य सिद्धेर्नैष्टिकवेदिकरणानुष्ठानम्।

नचैवमेकजातीयादृष्टं प्रति वेदिकरणद्वयस्य कारणत्वे व्यभिचारसङ्करयोरापत्तिः। तत्तत्क्रत्वपूर्वसाधनीभूतवेदिरूपादृष्टं प्रति तत्तद्वेदिकरणस्य कारणत्वात् दर्शादौ वेदिकरणान्तराप्रसक्तेः। प्रकृते त्वदृष्टमात्रस्यैव लाघवेनातिदिष्टतया तज्जनकवेदिकरणविशेषस्यानतिदेशादिति कौस्तुभ एव सम्मार्गाधिकरणे क्षुण्णम्।

---

इष्टिपदं चोत्तरत्र क्रियमाणसौम्यचरुपरम्। **सत्यमिति**। अत्र प्राचां ग्रन्थेषु हविरासादनरूपस्यैष्टिकवेदेः दृष्टस्वकार्यस्य सौमिकवेद्या कर्तृप्रचारार्थयापि सिद्धेर्वेदेरननुष्ठाने प्रयोजनलोपादेव ऐष्टिकवेदिकरणस्य निवृत्तिरिति भाति; सोयं वेदिकरणबाधः प्रयोजनलोपाद्दाशमिकस्संपद्यते, नत्वन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानरूपप्रसङ्गकृत इत्यभिप्रेत्यैष्टिकवेदिकरणजन्योपकारस्य वेदिरूपस्यान्यतो लाभोपपादनव्याजेन ऐष्टिकवेदिकरणाननुष्ठानरूपं प्रसङ्गं साधयति— **तथापीति**। तथा च सौमिकवेदिकरणेनैव महावेद्यन्तः पातितया ऐष्टिकवेदेर्लाभात् न तत्करणमिति भावः। यत्तु **प्रकाशकारैः** वेदिपदार्थभेदोऽपि नास्तीत्युपपादनाय परिमाणविशेषावच्छिन्नस्थलस्यैव वेदिपदार्थत्वमुक्त्वा निमित्तभूतपरिमाणभेदेपि लौकिकस्य स्थलस्यैकत्वात् सौमिकवेद्यामेव हविरासादने कृते ऐष्टिकवेद्यामपि तत्कृतमेवेत्युक्तं, तदनूद्य दूषयति—**वेदिर्हीति**। **तस्य स्वतः सिद्धत्वेनेति**। यद्यपि देशविशेषस्य स्वतः सिद्धत्वेपि तत्परिमाणविशिष्टदेशविशेषोत्पत्तिर्नान्तरेण वेदिकरणेन भवतीत्युपपद्यते विशिष्टवेषेण वेदिकरणजन्यत्वं वेदेस्तदा तादृशविशिष्टवेषरूपायाः परिमाणभेदेन प्रत्यक्षत एव भेदादेकत्वानुपपत्तेः कार्यभेदे स्वैष्टिकवेदिकरणापत्तिर्दुर्निवारेत्यर्थः। स्पष्टार्थमन्यत्।

---

## (४)—पात्रेषु च प्रसङ्गस्स्याद्धोमार्थत्वात् ॥ ११ ॥ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गस्स्यात् ॥ १२ ॥

**सौमिकानां ग्रहचमसादिपात्राणां** खरासादनोत्तरं **यान्यैष्टिकविकाराणि स्रवनीयपश्वादीनि तेषु तैरेवोपात्तैः कार्यसिद्धेः** न प्राकृतजुह्वादिपात्राक्षेपकत्वमिति **प्राप्ते**—

**न तावत्तैः सोमप्रक्षेपेण हविरन्तरप्रक्षेपसिद्धिः, तस्य पृथगनुष्ठानावश्यकत्वात्। हविरन्तरप्रक्षेपादौ च न ग्रहादीनां कारणता प्रकृते प्रामाणिकी, उपदेशातिदेशयोरभावात् प्रयाजाद्यदृष्टानां हि पुरोडाशोपकारकत्वेऽतिदेशेन सिद्धे युक्तं यत्सिद्धानामेव तेषामुपजीवनं, प्रकृते तु सौमिकानामेतत्प्रक्षेपाद्यङ्गत्वे प्रमाणाभावान्महावेदिवच्च ग्रहचमसेष्वाकारविशेषविशिष्टकाष्ठविशेषत्वादिरूपजुहूत्वादिरूपसत्त्वे प्रमाणाभावादातिदेशिकपात्राणां चाधानवेळायामेवोपात्तत्वेन लाघवन्यायस्याप्यभावात् नात्र प्रसङ्गसिद्धिः ॥**

अत एव सुत्यादिने **'युनज्मि ते पृथिवीं ज्योतिषा सहेति स्रुचमभिमृशति' इत्यादिना ऐष्टिकपात्राणामभिमर्शनं विहितम्। अत एव 'ग्रहैर्जुहोति' इत्यादिनाऽङ्गप्रधानसाधारणप्रक्षेपानुवादेनैव 'हिरण्मय्यस्स्रुचो भवन्ति' इतिवत् ग्रहादिविधानादुपदेशेनैव हविरन्तरप्रक्षेपे ग्रहादिप्राप्तेरैष्टिकपात्रबाध इत्यप्यपास्तं, तथात्वे ध्रुवादिदर्शनवैयर्थ्यात्, ग्रहादीनां सोममात्रार्थत्वे** गमकान्तराणामपि **सत्त्वाच्च।**

---

**पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात्।**

**खरासादनोत्तरमिति।** शकटसमीपे उपरवपांसुभिः निर्मिता ग्रहचमसपात्राणां स्थापनार्था वेदिः खरशब्दस्यार्थः। एतच्च सन्निहितत्वोपपत्त्यै उक्तं। **न प्राकृतेति।** यद्यैष्टिकहोमानामवैगुण्याय स्वगुणभूतजुह्वाद्याक्षेपकत्वं तदा करिष्यमाणेषु पौरोडाशिकेष्वनूयाजेषु स्वगुणकेवलाज्यापत्तिः। अतो यथा परविध्यनुष्ठापितानूयाजोपस्थितेर्नाज्यादरः तथा प्रकृतेऽपि सौमिकहोमविध्यनुष्ठापितचमसादिपात्रोपस्थितेर्न जुह्वाद्यादर इति सौमिकवेद्यां हविरासादनरूपान्यकार्यस्येव प्रसङ्गतः सिद्धेर्न जुह्वाद्याक्षेपकत्वमिति भावः। महावेदिवच्चेति व्यतिरेकदृष्टान्तः। यद्यपि याज्ञिकैरग्न आयूंषि पवसेति मन्त्रो जुह्वाद्यभिमर्शने पठ्यते तथापि भाष्यकारलिखितान्मन्त्रान्तरविनियोजकविधीन् शाखान्तरगतानुदाहरति—**अत एव सुत्येति।** युनज्मि वायुमन्तरिक्षेण ते सहेत्युपभृतं, युनज्मि वाचं सह दिवा सूर्येणेति जुहूमिति वाक्यद्वयस्य इत्यादिनेत्यादिपदेन संग्रहः।

## (५)—शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १३ ॥

**दैक्षे 'शामित्रे श्रपयति' इति विहितः पशुपाके शामित्रोऽग्निः पूर्ववदेव पुरोडाशपाके न प्रसज्यते** किन्त्वातिदेशिकगार्हपत्यकार्ये 'शालामुखीय एव अत ऊर्ध्वं गार्हपत्यो **भवति' इति वचनेन विहितश्शालामुखीय एव। न चास्य सामान्यवचनत्वादङ्गप्रधानसाधारणश्रपणानुवादेन विहितशामित्रेण शालामुखीयबाधोपपत्तिः, शामित्रशब्दस्य शमनसम्बन्ध्यग्निवाचित्वाच्छ्रपणस्य शमनसम्बन्धावगतेस्तस्य च पशावेव सामानाधिकरण्येन सत्त्वात् पशुश्रपणोद्देशेनैव शामित्रविधिप्रतीतेः।**

---

**गमकान्तराणापीति।** तैत्तिरीयशाखापठितानि उभये वा एते प्रजापतेरध्यसृज्यन्तेत्याद्यर्थवादरूपाणि गमकान्तराणि द्रष्टव्यानि।

---

**शामित्रे च पशुपुरोडाशो न स्यात्।**

सोमाहुतिस्सवनीयाहुतिश्चार्थान्तरं, तत्र युक्तं यत् सोमाहुत्यर्थेभ्यः पात्रेभ्यः पात्रान्तराणि स्वार्थानि उपादीयेरन्। अत्र तु चोदकेन प्राकृत एव पाक उभयत्रापि प्राप्यते तत्र पशोश्शामित्रस्साधनतया विहित इति पुरोडाशोऽपि तत्रैव श्रपयितव्य इति विशेषाशङ्कां स्फुटनिरसनीयत्वेनोपेक्ष्य सिद्धान्तेनैवोपक्रमते—**दैक्ष इति।** स्फुटनिरसनीयत्वमेव दर्शयति—**किंत्विति।** **अयमर्थः** प्रकृतौ "गार्हपत्ये हवींषि श्रपयति" इति हविश्श्रपणार्थे गार्हपत्यो विहितः। सोमे तु प्राचीनवंशशालायाः अन्तः पूर्वभागे शालामुखीयसंज्ञिकोऽग्निः प्रवर्तते। एतस्मादेवोत्तरवेद्यामाहवनीयप्रणयनानन्तरं प्रणीतस्याहवनीयत्वे सति अवशिष्टस्य अत ऊर्ध्वं गार्हपत्यो भवति इति वचनात् अतिदिष्टगार्हपत्यकार्यकारित्वमवगतमिति तत्रैव सिद्धेर्गार्हपत्ये पुरोडाशश्रपणे कृते प्रकृतिवत् कृतं भवतीति तदनुरोधेन न शामित्रे तच्छ्रपणमिति। अत ऊर्ध्वमित्यस्य अग्नीषोमप्रणयनोर्ध्वमित्यर्थः। **यत्तु शास्त्रदीपिकायां** पुरोडाशश्चोदकप्राप्तो गार्हपत्ये श्रपयितव्य इत्युक्तं तस्य न्यायसिद्धार्थकथनद्वारा उपदिष्टशालामुखीये गार्हपत्यकार्यकारिणि श्रपणं कार्यमित्यत्रैव कथंचित् तात्पर्यं वर्णनीयम्। स्पष्टार्थमन्यत्।

(६)—श्रपणं वाऽग्निहोत्रस्य शालामुखीयेन स्यात् प्राजहितस्य विद्यमानत्वात्॥ १४॥

सोमे आहवनीयादुत्तरवेद्यामग्निप्रणयनोत्तरमवशिष्टाहवनीयस्य शालामुखीय इति संज्ञा। स एव च 'शालामुखीय एव अत ऊर्ध्वं गार्हपत्यो भवति' इति वचनेनाग्निप्रणयनादूर्ध्वं गार्हपत्यकार्ये विनियुक्तः। गार्हपत्यस्य तु तदारभ्य प्राजहित इति संज्ञा। कौण्डपायिनामयने च परम्परया सर्वमिदमतिदिष्टं, तत्र मासाग्निहोत्रमपि सर्वोपसदुत्तरकालीनसायंकालकत्वादग्निप्रणयनोत्तरमिति तदीयं श्रपणं शालामुखीयस्य प्रवृत्तत्वात् तत्रैव स्यात्। न ह्यत्र शामित्रवन्मासाग्निहोत्रीयश्रपणे तस्याङ्गताग्राहकप्रमाणाभावः, चोदनालिङ्गातिदेशस्यैव प्रमाणत्वात्।

न च तदपेक्षया प्रबलनामातिदेशप्रापितप्राजहितेन तस्य बाधादनङ्गत्वं, कार्यान्तरे प्रवृत्तस्यैव शालामुखीयस्य लाघवादुपजीवनेन नामातिदेशस्यैव प्राजहितविषयत्वाकल्पनात्, शालामुखीयस्य प्रकृतावग्निप्रणयनोत्तरकालीनयज्ञभागधर्मत्वेन प्रधानाश्रितत्वात्, तेन नामातिदेशप्रापितस्य बाधोपपत्तेश्च, प्राजहितसमाख्यया तस्य कार्यसाधनत्वाभावप्रतीतेश्च। अतश्चोपादानलाघवानुरोधेन शालामुखीयस्यैव प्रसङ्गेन ग्रहणात् प्राजहितस्य निवृत्तिरिति प्राप्ते—

नात्र किञ्चिदुपादानलाघवं, शालामुखीयस्य कार्यान्तरे प्रवृत्तत्वेऽप्येतत्कार्यस्य पृथगनुष्ठेयत्वेन लाघवाभावात्, सन्निहितत्वमात्रस्य प्राजहितेऽपि सत्त्वाच्च। न च भागधर्मत्वेन प्रधानाश्रितत्वाच्छालामुखीयस्य प्राबल्यं, प्रधानाश्रितस्याप्यङ्गेषु कल्प्यत्वेन स्वाश्रितप्राजहितापेक्षया दुर्बलत्वात् मासाग्निहोत्रस्यापि कौण्डपायिनामयने प्रधानत्वेन प्रकरणान्तराधिकरणवार्तिके स्थापितत्वाच्च।

---

श्रपणं चाग्निहोत्रस्य।

**सर्वोपसदिति।** प्रकृतावुपसदनन्तरं औपवसथ्याहे उत्तरवेद्यामग्निप्रणयनं विहितमिति इहापि चोदकपरंपरया द्वादशोपसदनन्तरं अग्निप्रणयनं तद्दिनीयसायंप्रभृति मासपर्यन्तमग्निहोत्रमनुष्ठेयम्। तदा च शालामुखीयस्य गार्हपत्यत्वात् प्राजहितस्यापि सत्वाच्च विचार इत्यर्थः। **प्राजहितसमाख्ययेति**—प्रकर्षेण गार्हपत्यकार्ये जहितस्त्यक्तः प्रजहितः, प्रजहित एव प्राजहितः इति समाख्यार्थः। **मासाग्निहोत्रस्यापीति।** एतेन श्रपणार्थाग्निमतः कौण्डपायिनामयनस्य श्रपणार्थोऽग्निः तद्वत्त्येव तदङ्गे मासाग्निहोत्रे प्रसज्यते न वेति संशयप्रदर्शनावसरे अग्निहोत्रहोमस्य कौण्डपायिनामयनाङ्गत्वोक्तिः प्रकाशकाराणामपास्ता। यद्यप्यथवा तान्येवाग्निहोत्रादीन्यत्र

वस्तुतस्तु—नायं भागधर्मः पदार्थवत् भागस्यापि स्ववाक्ये श्रुतत्वाभावात् योग्यतया साक्षात्पदार्थधर्मत्वस्यैव युक्तत्वाच्च। अतश्चापूर्वमासाग्निहोत्रे न शालामुखीयस्याङ्गत्वप्रसक्तिः।

वस्तुतस्तु—न कौण्डपायिनामयनत्वेन एकोऽतिदेशः प्रमाणाभावात्। अपि तु तद्वृत्तितत्तत्सोमयागत्वेन भिन्न एव। अतश्च शालामुखीयस्य प्रकृतौ प्रकृतापूर्वसम्बन्धिगार्हपत्य एव विनियोगः न त्वसम्बन्धितत्कार्ये, अतश्च मासाग्निहोत्रे तदतिदेशप्रवृत्तौ प्रमाणाभावात् स्वातिदेशेन प्राजहितप्राप्तिरविकलैव। अत एव प्राजहितसंज्ञाऽपि सोमयागापूर्वसाधनीभूततत्कार्य एवेति ध्येयम्॥

---

पर्युपस्थाप्य सोमयागसहितानि सत्रप्रयोगवचनेन फले विधीयन्त इति प्रकरणान्तराधिकरणवार्तिके कर्मान्तरभूतस्याग्निहोत्रस्य फले विधानपूर्वकं प्राधान्यं पूर्वपक्षे दर्शितं, तथापि सिद्धान्ते कर्मान्तरत्वमात्रसाधनेनाकर्मान्तरत्वस्यैव खण्डनात् कर्मान्तरभूतस्यापि प्राधान्यमभ्यनुज्ञातमेव। नहि युक्तिसिद्धमपि सिद्धान्तेऽवश्यं खण्डनीयमिति नियमः, तस्याकरणात्। अत एव न्यायसुधाया मस्मिन् पक्षे प्रकरणपाठोपपत्तावपि तद्व्यापाराभावात् प्रकरणाननुग्रहेणापरितोषात् सिद्धान्ते चाग्निहोत्रादिसंज्ञानां षण्मासपरिमितानां षण्णां कर्मान्तराणां षण्मासपरिमितसोमयागसहितानां संवत्सरपरिमितसत्रप्रयोगवचनेन फलविधिसूचनार्थं स्वमतमाह---अथवेत्येवमिदं वार्तिकमवतारितम् अतस्सिद्धान्तेपि प्राधान्यमव्याहतमेवेति न विरोधः। अतश्चापूर्वे इति। यद्ययं प्रकृतौ यज्ञभागधर्मः स्यात् तदा विकृतौ तद्भागमभ्यपतितेऽपूर्वेऽपि मासाग्निहोत्रश्रपणे शालामुखीयः प्राप्नुयात् न त्वेतदस्ति किन्त्वग्निप्रणयनोर्ध्वभाविप्राकृतश्रपणादिरूपपदार्थाङ्गमेवेति नापूर्वे तदङ्गत्वप्रसक्तिरित्यर्थः। एतच्चाग्निहोत्रे चोदनालिङ्गातिदेशमङ्गीकृत्य नामातिदेशेन तस्य बाध इति प्राचां रीत्यासिद्धान्तितम्। वस्तुतस्तु नैवात्र चोदनालिङ्गातिदेशप्रवृत्तिर्येन तस्याग्निहोत्राङ्गत्वं स्यादित्याह-वस्तुतस्त्विति। ये तु नामातिदेशं विनैवात्र प्राजहितस्यानारभ्याधीतस्य प्रकृतिविकृतिसाधारणहविश्श्रपणार्थत्वात् उपदेशेनैव प्राप्तेः चोदनालिङ्गातिदेशप्राप्तशालामुखीयबाधं सिद्धान्तयन्ति तदयुक्तं "गार्हपत्ये हवींषि श्रपयति" इत्यस्यानारभ्यवादत्वेपि श्रपणद्वारकत्वेनैव गार्हपत्यस्याधिकरणत्वेन विधानात् तस्य च नित्याग्निहोत्र एवाम्नानेन पर्णतान्यायेन द्विरुक्तत्वापत्त्या वैकृतश्रपणस्य द्वारत्वासंभवेन उपदेशतः प्राप्त्यसंभवात्। अतो नामातिदेशप्राबल्येनैवात्र सिद्धान्तसाधनं युक्तम्। स्पष्टार्थमन्यत्।

---

(७)—हविर्धाने निर्वपणार्थं साधयतां प्रयुक्तत्वात् ॥ १५ ॥ असिद्धिर्वा-ऽन्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गस्स्यात् ॥ १६ ॥ अनसां च दर्शनात् ॥

सोमे सोमधारणार्थे द्वे शकटे हविर्धानसंज्ञके प्रणीय हविर्धानमण्डपे समन्त्रकं स्थापिते। तदुत्तरं च यानीष्टिविकाराणि तेष्वतिदेशप्राप्तोऽनोधिकरणको निर्वापः सोमार्थयोरेवानसोरन्यतरत्र कर्तव्यः अनस्त्वावच्छिन्नस्य साधनत्वेन विहितस्य परप्रयुक्तस्य लाभे स्वतन्त्रानोन्तराक्षेपकल्पनानुपपत्तेरिति प्राप्ते—

न तावन्मन्त्रवन्नियमेन स्वदेशस्थापितस्यानसो निर्वापदेशशालामुखीयपश्चाद्भागे नयनं सम्भवति, तयोर्द्वयोर्हविर्धारणव्यापृतयोर्हविष उत्तारणे तन्त्रिण एव वैगुण्यापत्तेः। अथ प्रसङ्गिन एव देशाभावकृतं वैगुण्यं लाघवानुरोधेन सोढ्वा हविर्धानदेश एव तदुपर्येक-देशावस्थिते सोमे सत्यपि निर्वापोपि क्रियेत, ततोऽनोन्तरग्रहणेऽपि यजमानगृहे कार्या-न्तरार्थमनोन्तरसत्त्वे लाघवस्य तुल्यत्वात् न देशाभावकृतवैगुण्यसहनम्। यदाऽपि तदभावः तदाऽपि तदाक्षेपकल्पनमेवानुपादेयदेशबाधापेक्षया युक्तमाश्रयितुम्। नह्ययं देशोऽनसोऽङ्गं अपि तु निर्वापाङ्गं, अतः पदार्थत्यागापेक्षया पदार्थाक्षेपस्यैव पाक्षिकस्य न्याय्यत्वात् न प्रसङ्गः॥

---

(८)—तद्युक्तत्वं च कालभेदात् ॥ १८ ॥

सोम एव दीक्षाकाले रात्रिजागरणमाम्नातम्, दर्शपूर्णमासयोरप्यौपवसथ्येऽहनि जागरणमाम्नातं, तदतिदेशेन सोमाङ्गेष्टिपशुषु प्राप्तं सोमाङ्गजागरणेन प्रसज्यत इति प्राप्ते—

---

हविर्धाने निर्वपणार्थं साधयतां प्रयुक्तत्वात्।

अनस्त्वावच्छिन्नस्येति। पात्राणां गार्हपत्यस्य च वैधरूपभेदात् माभूत् प्रसङ्गः अनसस्तु रूपभेदाभावात् अनोऽभावकृतवैगुण्याभावाच्च स्यादेव प्रसङ्ग इति विशेषाशङ्का अनस्त्वावछिन्नस्य साधनत्वेनेत्यनेनोक्ता। स्पष्टार्थमन्यत्।

---

तद्युक्तत्वं च कालभेदात्।

सोमाङ्गजागरणेति। सोमाङ्गपात्ररक्षणार्थजागरणस्य पाञ्चरात्रिकस्य सोमप्रयोगविधि-नैवाक्षिप्तस्य दीक्षाकाले यद्विधानं तददृष्टार्थमेवेति अदृष्टार्थपश्वर्थप्रयाजैः पुरोडाशे प्रसङ्गवदिहाप्य-

यदि तावज्जागरणं यज्ञसाधनरक्षाद्वारा अप्रमादार्थं तदा अन्यकालीनजागरणेनान्यकालीनेष्ट्यङ्गभूतपदार्थरक्षणासम्भवान्न प्रसङ्गः। न हि कापि सोमाङ्गभूता इष्टिर्दीक्षारात्रावस्ति, दीक्षणीयायास्सद्यस्कालायाः दिन एव सत्त्वात्। प्रायणीयादौ तु भिन्नकालता स्पष्टैव।

अथ 'दीक्षित एतां रात्रिं जागर्ति तया स्वप्नेन व्यावर्तते' इत्यर्थवादानुसारात् स्वप्नव्यावृत्तिफलकजागरणस्यादृष्टार्थत्वप्रतीतेः तददृष्टस्य ज्योतिष्टोमपरमापूर्वोत्पत्त्यवधिस्थायित्वात्तेनैव प्रसङ्गसिद्धेर्नेष्टिषु पृथग्जागरणमिति चेत्, तथात्वेऽपि दार्शिकजागरणस्य दृष्टार्थत्वेन प्रसङ्गानुपपत्तेस्तस्याप्यदृष्टार्थत्वेऽपि प्रकरणान्तरन्यायेन विजातीययोर्जागरणयोरेकादृष्टजनकत्वे प्रमाणाभावेन विजातीयादृष्टेन विजातीयादृष्टजनकक्रियाप्रसङ्गानुपपत्तेः।

न चादृष्टवैजात्येऽपि दर्शश्राद्धेन व्यतीपातश्राद्धस्य प्रसङ्गसिद्धिरिति कालादर्शाद्युक्तं युक्तम्। तत्रागृह्यमाणविशेषतया कालैक्येन निमित्तद्वयसन्निपाते तन्त्रत्वस्यैवोचितत्वात्। एतेनादृष्टसाजात्येऽपि नित्यकाम्यदर्शादिस्थलेऽप्यगृह्यमाणविशेषतया तन्त्रत्वमेव न तु काम्येन नित्यप्रसङ्गः मानाभावात्। कामे सति तस्यैव निमित्तस्यापि प्रयोजकत्वस्य प्रामाणिकत्वेन तदभावकल्पनायां प्रमाणाभावात्। इतरथा कामनायाः फलोत्पत्तिं प्रत्येव

---

दृष्टार्थेन सोमाङ्गजागरणेन प्रसङ्ग इति भावः। यद्यपि दीक्षाकालीनजागरणेन न पाञ्चरात्रिकसोमपात्ररक्षणं संभवति तथापि ऋतपेये सोमचमसेनानतिदेशस्यैव तस्यामेव रात्रौ तदीयपात्रसंरक्षणेन दृष्टस्य प्रयोजनस्य लाभे नादृष्टार्थकल्पनं युक्तमित्यभिप्रेत्याह—**यदि तावदिति**। निस्सन्दिग्धेपि यदिशब्दप्रयोगो वक्ष्यमाणनिर्युक्तिकादृष्टार्थत्वपक्षसंभवाभिप्रायेण कृतः। **सद्यस्कालाया इति**। य इष्ट्येति वचनात् विकृतीनां साङ्गानां द्व्यहकालत्वबाधेन सद्यस्कालत्वमित्यर्थः। अत्र प्रकाशकारैः अदृष्टभेदे दर्शव्यतीपातश्राद्धयोः प्रसङ्गासंभवात् तन्त्रत्वमुक्त्वा यत्र काम्यानुष्ठानेनैव यथापेक्षितादृष्टस्य लाभस्संभवति तत्रादृष्टसाजात्ये भवत्येव काम्येन नित्यस्य प्रसङ्गः तादृशकामाव्यभिचारिणा निमित्तेन न स्वनैमित्तिकं पृथक् प्रयुज्यते लाघवादित्युक्तं तद्दूषयति—**एतेनेति**। कामे दर्शपूर्णमासावच्छिन्नजीवने च निमित्ते सति कामप्रयुक्तमेवैतदिति विशेषनिर्धारणासम्भवेऽगृह्यमाणविशेषत्वात् तन्त्रतैव युक्ता निमित्तगतप्रयोजकत्वकल्पनाया अपि शास्त्रागतायास्त्यागे प्रमाणाभावादित्यर्थः। यदितु कामस्यैव प्रयोजकत्वसंभवे निमित्तस्यापि न तत् कल्पनमित्युच्येत तदा वैपरीत्यमेव किं न स्यादित्याह—**इतरथेति**। अतो नित्यकाम्ययोर्भेदाभावात् एकस्यामेव व्यक्तौ अन्यत उपकारलाभनिमित्ताननुष्ठानरूपप्रसङ्गासंभवात् काम्यफलोद्देशेन पापक्षयोद्देशेन च उभयोस्तन्त्रेणैवाङ्गतन्त्रवत् प्रयोगः। काम्येन नित्यस्य प्रसङ्गसिद्धिरिति प्रवादस्तु व्यक्तिभेद

कारणत्वकल्पनेन वैपरीत्यस्यापि वक्तुं शक्यत्वात् व्यक्तिभेदे परं काम्येन गोदोहनादिना नित्यचमसकार्यसिद्धिः प्रसङ्गेनेति तद्विषयोऽयं काम्येन नित्यसिद्धिः प्रसङ्गेनेति प्रवादः।

अस्तु वा तादृशस्थलेऽपि प्रसङ्गः। तथाऽप्यदृष्टवैजात्येनैव क्वचित्प्रसङ्गः। अत एव

अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने।

कृच्छ्रातिकृच्छ्रावसृक्पाते………… …।

इत्यत्रासृक्पातरूपव्याप्यनिमित्तकप्रायश्चित्तेन व्यापकनिमित्तरूपावगूरणशस्त्रपात-निमित्तकप्रायश्चित्तयोस्सजातीययोरेव प्रसङ्गसिद्धिर्विज्ञानेश्वरेणोक्ता। तत्रापि तन्त्रं प्रसङ्गो वेति तु स्वयमूह्यम्। विजातीये तु नैव क्वचिद्वचनं विना प्रसङ्ग इति प्रकृते अदृष्टार्थत्वेऽपि जागरणयोर्न प्रसङ्गः।

वस्तुतस्तु—दर्शपूर्णमासयोरपि यदि रात्रिजागरणं विहितं तदा दीक्षणीयादेस्सद्य-स्कालत्वात्तत्र तल्लोप एवेति क्व प्रसङ्गः।

---

एवेत्याह—व्यक्तिभेदे परमिति। अप्प्रणयनरूपे एककार्ये गोदोहनचमसयोर्भिन्नयोस्तन्त्रानुष्ठा-नानुपपत्तेः गोदोहनरूपान्यतः चमसकार्यस्य प्रणयनस्य लाभाच्चमसाननुष्ठानरूपप्रसङ्गसंभवाच्च तत्रैव प्रसङ्ग इति प्रवाद इत्यर्थः। कामनिमित्तयोस्सन्निपातेऽपि कामोद्देशेनैव प्रवृत्तेरानुभाविक-त्वात् कामार्थत्वेनैव गृह्यमाणविशेषतया कृताद्यागादेव पापक्षयजनकादृष्टोपकारलाभात् प्रसङ्ग-मपि नित्यकाम्यस्थले पक्षान्तरेणाङ्गीकरोति—अस्तु वेति। अवगूर्येति। अवगोर्य मारणाध्य-वसायपूर्वकं शस्त्रमुद्यम्य कृच्छ्रं, शस्त्रनिपातनेऽतिकृच्छ्रं चरेत्। शोणितकरणे कृच्छ्राति-कृच्छ्रे इत्यर्थः। तत्र कृच्छ्रातिकृच्छ्रनिमित्तेऽवगोरणनिपातनरूपनिमित्तद्वयावश्यंभावात् एतन्निमित्तद्वयं न स्वस्वप्रयुक्तं नैमित्तिकं प्रयुङ्क्ते तदनुष्ठानस्यान्यत एव लाभेन प्रसंगसिद्धिरित्यर्थः। स्वयमूह्यमिति। निमित्तत्रयसन्निपाते एतन्निमित्तप्रयुक्तमेतदिति विशेषग्रहणाभावात् त्रयाणां नैमित्तिकानां तन्त्रत्वमेव युक्तमिति भावः। वस्तुतस्तु एतादृशे दार्शपूर्णमासिकजागरणस्य प्राप्त्यभावादेव तेनैतस्य प्रसङ्गसिद्धिरिति विचारकरणमेवायुक्तमित्याह—वस्तुतस्त्विति। तल्लोप एवेति। यद्यपि वायव्ये पशौ दीक्षाकालाभावे यूपछेदनमिव रात्रिकालाभावेऽपि प्राप्नोति जागरणं तथापि तत्कार्यस्य दृष्टस्य स्वप्नव्यावृत्तिरूपादृष्टस्य वा स्वत एव सिद्धत्वात् प्रयोजनाभावेन लोप इति सद्यस्कालत्वादित्यनेन सूचितम्।

---

## (९)—मन्त्राश्च सन्निपातित्वात् ॥ १९ ॥

वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्देशभेदात् कर्तृभेदाच्च पदार्थानां न तन्त्रता इति स्थितम्। तत्र च प्रयाजादिविषये भूयोऽनुग्रहस्य न्याय्यत्वात् मारुत्यां न्यायप्राप्तः प्रसङ्गो 'यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोति' इति वचनेन बाध्यत इत्यप्युक्तमेव। अतस्ते तावत्पृथगेव कर्तव्याः। मन्त्रास्तु येऽर्थस्मरणार्थाः तेऽध्वर्युणा तावत्पठनीयाः। ततश्च तेन मन्त्रान्ते पदार्थे कृते पश्चात्प्रतिप्रस्थात्रा स्वपदार्थे क्रियमाणे अध्वर्युप्रतिप्रस्थातृकर्तव्यपदार्थयोः क्रमविधानात् प्रतिप्रस्थातृकर्तृकपदार्थस्याध्वर्युकर्तृकपदार्थेनैव उपस्थितिसिद्धेर्मन्त्रकार्यस्य प्रसङ्गसिद्ध्या न मन्त्राणां प्रतिप्रस्थात्रा पृथक्पाठ इति प्राप्ते—

निर्वपामीत्यादिमन्त्रेषु आत्माभिवादितया आत्मकर्तृकनिर्वापस्मृतेरेव कार्योपयोगितया तादृश्याश्चान्यतोऽलाभात् न प्रसङ्गः।

वस्तुतस्तु—'यदेवाध्वर्युः करोति' इत्यनेन न क्रमविधिः प्रसङ्गाभावमात्रफलकतया पदार्थकरणमात्रविधानात्, कर्तृभेदेन पाठक्रमस्याप्यनियामकत्वाच्च। अतो युगपदेव

---

### मन्त्राश्च सन्निपातित्वात्।

इति स्थितमिति। एकादशे द्वितीयपादे इति शेषः। भूयोनुग्रहस्येति। उत्तरे विहारेऽष्टौ यागा इति बहूनामनुरोधेन तत्रैव प्रयाजाद्यनुष्ठाने सति एकस्मिन् मारुतीयागे प्रसङ्गः प्राप्तोऽपि वचनात् बाध्यत इत्यपि तत्रैवोक्तमित्यर्थः। अध्वर्युणा तावत्पठनीया इति—एतेनाध्वर्युणाप्रतिप्रस्थात्रा अन्यतरेण मन्त्रा वक्तव्या इति शास्त्रदीपिकायां प्रतिप्रस्थात्रेत्युक्तमपास्तम्। यदेध्वर्युरित्यस्य क्रमविधित्वाङ्गीकारेणा वाध्वर्युप्रयोज्यत्वेनैव प्रसङ्गसिद्धिसाधनात् प्रतिप्रस्थातृकर्तृत्वेन तदसिद्धेः। क्रमविधानादिति। यदेवेति वचनेनेति शेषः। एतेन प्रसङ्गनिराकरणपरत्वाक्षेपेणैतद्विचारप्रवृत्तिरिति सूचितं—प्रसङ्गसिद्ध्येति। एतेन प्रयोगपरिमाणसामान्यात् तन्त्रावापचिंतापीयं क्रियत इति भाष्यतन्त्ररत्नदर्शिता प्रसङ्गसङ्गतिरपास्ता अध्वर्युकर्तृकमन्त्रपाठस्य स्वकर्तृकपदार्थस्मारकतया गृह्यमाणविशेषत्वेन तन्त्रत्वानुपपत्तेः गृह्यमाणविशेषत्वेनैव प्रसङ्गत उपकारसिद्धेः प्रसङ्गविचारादेव मुख्यसङ्गत्युपपत्तेरिति भावः। ननु नवहविषां ब्राह्मणपाठ क्रमेण मारुतीपूर्वहविषामध्वर्युणा पूर्वमनुष्ठानात तेन पठितानामुत्तरत्र मारुतीयागे कुतो न प्रसङ्ग इत्यत आह—कर्तृभेदेनेति। अयमर्थः एकेन कर्त्राप्रयोगविध्यवगतयौगपद्येन पदार्थानुष्ठानाशक्तौ अनियतक्रमप्राप्तौ पाठस्य नियामकत्वमात्रं, न तु अपूर्वतया क्रमविधायकत्वं अन्यथा सान्नाय्ययागयोः

**द्वाभ्यां** समन्त्रकाः पदार्थाः **कर्तव्या इति क्व प्रसङ्गावकाशः।**

---

## (१०)—धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते॥ २०॥

**दर्शपूर्णमासयोः प्रणयनोत्तरं** प्रादुष्करणोत्तरं वाऽ**ग्नीनां समन्त्रकमाद्यं** समिन्धनं **विहितं**, तदतिदेशेन **सोमाङ्गेष्टिपशुबन्धादौ दीक्षणीयादिरूपे प्राप्तमपि न कार्यं, ततः पूर्वमेव साङ्गसोमकरणार्थप्रणयनाद्युत्तरं समिन्धनस्य कृतत्वात्। यद्यपि तदमन्त्रकमर्थप्राप्तं च, तथाऽपि तादृशेनैव कार्यस्य जातत्वान्न दीक्षणीयादिषु पृथगनुष्ठानम्। नचैकवारं समिद्धस्य पुनर्दार्ढ्यार्थं समन्त्रकं समिन्धनोपपत्तिः 'ममाग्ने वर्च इति पूर्वमग्निं परिगृह्णाति' इत्यनेन प्रणयनाद्युत्तरकालीन**प्रथमाग्न्यन्वाधान एव **मन्त्रविधानात्।**

न च **पूर्वपदस्याग्निपदसामानाधिकरण्येनाहवनीयपरत्वात् प्रतिप्रधानं गुणावृत्ति-न्यायेन प्रतिधारणं मन्त्रावृत्तिः,** बोधायनेनास्य **गार्हपत्यान्वाधाने विनियुक्ततया पूर्वपदस्य**

---

तन्त्रत्वानुपपत्तेः इति पञ्चमे निर्णीतं न चेह कर्तभेदे सति यौगपद्येनानुष्ठानासम्भवोऽस्तीत्यनियत-क्रमप्राप्तेरेवाभावेन पाठस्य नियामकत्वमिति। **समन्त्रकाःपदार्था इति**। कर्तव्या इति शेषः।

---

**धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते।**

**प्रादुष्करणोत्तरं वेति**—अजस्रधारणपक्षे प्रादुष्करणोत्तरं वेत्यर्थः। भस्मनाच्छादि-तस्य बहिःप्रकटीकरणं प्रादुष्करणशब्दस्य आहवनीयदेशे नयनं प्रणयनशब्दस्य चार्थः। **आद्यं समिन्धनमिति**— गार्हपत्यात्प्रणयनेनापयातितस्याहवनीयादेर्धारणार्थं बलवत्करणरूपा-न्वाधानापरपर्यायमित्यर्थः। पशुबन्धपदमग्नीषोमीयपरम्। **प्रथमाग्न्यन्वाधाने एवेति**—ततश्च तस्य सौमिकेनैव जातत्त्वात् इष्ट्यादौ द्वितीयान्वाधाने तन्मन्त्रस्यावृत्तिरित्यर्थः। पूर्वपदस्याह-वनीयपरत्वमङ्गीकृतवतां याज्ञिकैकदेशिनां मतेन शङ्कते—**न चेति। बोधायनेनेति।** यदि पूर्व-देशस्थत्वात् पूर्वशब्देनाहवनीय एवोच्येत तदा गार्हपत्यस्याप्याहवनीयापेक्षया पूर्वत्वात् तस्यापि पूर्वशब्देनग्रहणापत्तिः। अन्यथा बोधायनवचनमूलभूतश्रुत्यन्तरकल्पनापत्तिः। अतः पूर्व-शब्दार्थसंदेहे तस्य क्रियाविशेषणत्वमेव युक्तम्। अग्निपदस्यैवोभयपरत्वात् तेनैवाहवनीयगार्ह-पत्ययोरन्यतरस्य ग्रहणे मतभेदः। यद्यपि **बोधायनेन** न पूर्वमग्निं परिगृह्णातीत्ययं विनियोग

**क्रियाविशेषणत्वमङ्गीकृत्य प्रथमान्वाधानविधिपरत्वात्। अत एव 'देवता एव पूर्वेद्युः गृहीत्वा श्वोभूते यजते' इत्यर्थवादानुरोधात् पूर्वेद्युःकालपरमित्यपि केषांचिदुक्तं परास्तं लक्षणापत्तेः, पूर्वेद्युःकालीनानेकसमिन्धने मन्त्रावृत्तिप्रसङ्गाच्च। प्रकृतौ सद्यस्कालायां समन्त्रकान्वाधानकरणानापत्तेश्च, दीक्षणीयादेस्सद्यस्कालतया प्रसङ्गसिद्धिकथनस्यानुक्तिसहत्वाच्च। अतोऽस्मदुक्तरीत्यैव आद्यान्वाधाने मन्त्रविधेर्युक्त एव दीक्षणीयादौ प्रसङ्गः।**

---

विधिरुक्तः (किन्तु) प्रत्युतामन्त्रकमेवाग्न्यन्वाधानं त्रयाणामग्नीनां विहितं तथापि द्वैतसूत्रे तेन "विहव्याभिरित्येके" इत्याम्नानात् तिसृणां तिसृणामृचां यथाक्रमं विनियोगाभिधानात् आद्यानां तिसृणामृचां गार्हपत्यान्वाधानार्थत्वं प्रतीयत इति भावः। यत्त्वत्र प्रकाशकारैः पूर्वेद्युरर्थकत्वमङ्गीकृत्य पूर्वेद्युर्विहितत्वादेवाद्यधारणार्थमन्वाधानमिति सिद्धान्तितं तदनूद्य दूषयति—**अत एवेति। पूर्वेद्युः कालेनेति।** पूर्वमग्निमित्यस्य पूर्वेद्युरग्निं परिगृह्णातीत्यर्थात् प्रथमधारणार्थत्व एव नियामकाभावात्तत्कालीनानेकसमिन्धने मन्त्रावृत्त्यापत्तिः। नहि पूर्वेद्युरेकमेव समिन्धनं, तस्याग्निरक्षणार्थं पुनः पुनरपेक्षणादित्यर्थः। **दीक्षणीयादेरिति।** यत्प्रकृतौ विहितं अन्वाधानं तत् पूर्वेद्युरेव विहितमिति सद्यस्कालायामप्राप्तेः लोपस्यैवापत्तौ सौमिकेनास्य प्रसङ्गकथनमयुक्तिसहमेवापद्येत। अतोऽन्वाधाने पूर्वेद्युः कालविहितत्वानादरेणैव कथंचित् प्रथमसमिन्धनार्थमन्त्रविशिष्टान्वाधानविधायकत्वमेव पूर्वमग्निं परिगृह्णातीत्यस्य वक्तव्यम्। एवं सति तत् सद्यस्कालायां द्व्यहकालायां वा यत्र प्राप्तं तत्रैव मन्त्रोलभ्यते प्रथमसमिन्धनार्थत्वं तु पूर्वशब्दस्य क्रियाविशेषणत्वबलादेवेत्यर्थः। यद्यपि सिद्धान्तेप्यन्वाधानस्य पूर्वेद्युःकाले विधानसत्वेपि सद्यो वा सद्यस्कालायामिति वचनान्तरेणैव सद्यस्कालायां तत्प्राप्तिर्वक्तव्येति तेनैव न्यायेन सद्यस्कालायां प्रकृतौ दीक्षणीयादिविकृतौ च प्राप्यत एवान्वाधानं केषां चिन्मतेपि। ततश्च नैतद्दूषणद्वयं समञ्जसं, तथापि मन्त्रविशिष्टान्वाधानविधौ पूर्वेद्युःकालविशिष्टत्वेनापि तद्विधानं तदा तस्मिन् पूर्वेद्युःकालावरुद्धे सद्यस्कालनिवेशासंभवात् सद्यो वा सद्यस्कालायामित्यत्रान्वाधानान्तरविधानापत्तौ गौरवम् मन्त्राप्राप्त्यापत्तिश्च। मम तु पूर्वेद्युःकालविधानाभावे मन्त्रविशिष्टाधानमात्रेऽनेन विहिते तत्रैवान्वाधाने पूर्वेद्युःकालसद्यस्कालयोः अनुत्पन्नशिष्टयोरेव समतया विधानमिति लाघवमेवात्र साधकं कथंचिदुपन्यसनीयम्। एवंच मन्त्रोऽपि तत्र प्राप्यत इति।

---

(११) तथा व्रतमुपेतत्वात् ॥ २१॥ विप्रतिषेधाच्च ॥ २२॥ सत्यवदिति चेत् ॥ २३॥ न संयोगपृथक्त्वात् ॥ २४॥

दर्शपूर्णमासयोरेव 'अग्ने व्रतपते' इति मन्त्रेण व्रतग्रहणमाम्नातम्। व्रतं नाम सत्यवदनब्रह्मचर्यादिसङ्कल्परूपम्। सत्यवदनं हि 'स वै सत्यमेव वदेत्' इति शतपथे विहितं, स इति कर्त्रुपादानेन क्रतूपयुक्तपुरुषधर्मः। अत एव 'नानृतं वदेत्' इति शुद्धक्रतुधर्मत्वात् संयोगान्तरम्। अन्यतरेणान्यतरस्य वैयर्थ्यशङ्का तु शाखान्तरीयत्वादपास्ता। एवं 'स ब्रह्मचारी अमधुमांसाशी स्यात्। इति ब्रह्मचर्यविधावपि ज्ञेयम्। स्त्र्युपगमनमांसप्रतिषेधस्तु शाखान्तरीय इति न विरोधः। तदिदमपि व्रतं सोमाङ्गेष्टिपश्वादिषु न कार्यं दीक्षणीयोत्तरं सोमार्थं कृतेनैव दीक्षारूपव्रतग्रहणेन आऽवभृथमविसृष्टेन प्रसङ्गसिद्धेः। न चैष्टिकसौमिकव्रतकरणयोर्विजातीयादृष्टजनकयोः कथं प्रसङ्गः, विजातीययोरपि तन्त्रेण परिपालितयोः विजातीयादृष्टजनकत्वोपपत्तेः।

अत एव सत्यवदननियमादिपरिपालनस्य तन्त्रत्वेऽपि सोमार्थं कृतेनैव तत्सङ्कल्पेन तत्कार्यसिद्धेः न पृथक् सङ्कल्पकरणं सकृत्सङ्कल्पितस्य पुनस्सङ्कल्पवैयर्थ्यात् व्रतवर्तमानदशायां 'व्रतं चरिष्यामि' इति मन्त्रलिङ्गानुपपत्तेश्च। न च यावज्जीवं पुरुषार्थे सत्यवदननियमसङ्कल्पे कृतेऽपि यथा दर्शपूर्णमासज्योतिष्टोमादौ पुनस्तत्सङ्कल्पकरणम्, तथा सोमार्थतया कृतेऽपि तत्सङ्कल्पे तदङ्गेष्ट्यादिषु पुनस्तत्सङ्कल्पकरणं न विरुध्यत इति वाच्यं, पुरुषार्थतया कृतस्यापि सङ्कल्पस्य क्रत्वर्थतया पुनः करणे बाधकाभावात्। सत्यवदननियमसत्त्वेऽपि ब्रह्मचर्यादिसाधारणव्रतसामान्यसङ्कल्पे बाधकाभावाच्च। प्रकृते तु सामान्यसङ्कल्पस्यैव कृतत्वादिष्ट्याद्यर्थं पुनः करणं विरुद्धमिति विशेषः।

न चैवमपि सोमार्थस्य व्रतस्य कर्तृसंस्कारद्वारा अङ्गप्रधानसाधारणतया इष्ट्याद्यर्थत्वस्यापि सत्त्वान्महावेदिवदौपदेशिकेन व्रतसङ्कल्पेनैष्टिकस्य बाध एव स्यात् न प्रसङ्ग

---

तथा व्रतमुपेयत्वात्।

**संयोगान्तरमिति**। तथा च तस्य कर्त्रधिकरणे निषेधत्वोक्तेर्न व्रतत्वमित्यर्थः। **शाखान्तरीय इति**। तथा चैतेषामपि निषेधरूपत्वादव्रतत्वमित्यर्थः। **सोमार्थं कृतेनैवेति**। यद्यपि सोमेऽपि मधुमांसादिनिषेधानामव्रतत्वं प्रतीयते तथापि कूश्माण्डहोमप्रकरणे 'न मांसमश्नीयान्न स्त्रियमुपेयात् नोपर्यासीत जुगुप्सेतानृतात् पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा वैश्यस्याथो सौम्येप्यध्वर एतद्व्रतं ब्रूयात्' इति तैत्तिरीयश्रुत्या कूश्माण्डहोमीयव्रतस्य सोमेप्यतिदेशात्

**इति वाच्यं, 'दीक्षास्सोमस्य' इति वचनेन यमनियमपरिग्रहरूपव्रतसङ्कल्परूपाया दीक्षायाः प्रधानमात्रार्थत्वे**नाङ्गसाधारणत्वाभावात् **अतो युक्त एव प्रायणीयादिषु प्रसङ्गः, दीक्षणीयायां**

---

व्रतशब्दोपसंहारात् एतादृशेषु प्रजापतिव्रतवत् सङ्कल्पलक्षणया व्रतत्वं ज्ञेयम् । यदि तु एत-द्व्रतमित्येतच्छब्देन सन्निधानात् पयआदीनामेव परामर्शात् व्रतत्वेन विधानमुच्येत तदाऽस्तु तेषां निषेधरूपत्वेऽपि व्रतान्तरेणैव सौमिकेनास्य प्रसङ्ग इति सूचयितुं दीक्षारूपेत्युक्तम् । प्रकाशाकारैस्तु स व्रतमुपेयात् इति व्रतशब्दसामानाधिकरण्यात् एतेषां व्रतरूपत्वं साधितम् । दीक्षणीयोत्तरमेव यमनियमपरिग्रहरूपदीक्षास्वीकारात ततः प्रभृत्येव सौमिकव्रतप्रवृत्तेः तदुत्तरभाविविकारेषु प्रायणी-यादिषु प्रसङ्गेन तु तत्पूर्वकालीनायां दीक्षणीयेष्टाविति दीक्षणीयोत्तरमित्यनेन सूचितं, वक्ष्यते च । ननु विजातीयादृष्टयोस्तज्जनकविजातीयक्रियाद्वयानुष्ठानं विना उत्पत्त्यसंभवात् तन्त्रेणाप्युभया-नुष्ठानावश्यकत्वे कथमितरेणेतरस्य प्रसङ्ग इत्यत आह—अत एवेति । ततश्च सौमिकव्रतेन ऐष्टिकव्रतस्य प्रसङ्गसिद्धिरिति प्रवादो व्रतसंकल्पमात्रविषयः व्रतयोस्तु तन्त्रतैवेत्यर्थः ।

यत्त्वत्र **प्रकाशाकारै**रुपात्तस्य व्रतस्य पुनरुपायनासंभवादस्याङ्गानुष्ठानप्रयुक्तः स्वप्रयोगविधेरंशे लोप इति प्रसङ्गलक्षणसंभवमुपपाद्य, वस्तुतस्तु सौमिकव्रतोपायनं दीक्षारूपं फलिसंस्कारकत्वोक्ते-फलाधानयोग्यतार्थम् । सोमफलाधानयोग्यता च ऐष्टिकफलाधानयोग्यतां विना नोपपद्यत इत्यर्था-पत्त्या ऐष्टिकव्रतोपायनयोग्यतामपि जनयति सौमिकव्रतोपायनमित्यन्यार्थानुष्ठिताङ्गजन्ययथापेक्षितो-पकारलाभलक्षणोऽपि प्रसङ्गस्संभवतीत्युक्तम् । तदयुक्तम् अर्थापत्तिमात्रेणान्यार्थेनान्योपकारजनने ऐष्टिकफलाधानयोग्यतापीष्टिगतयोग्यतांविना अनुपपद्यमाना तन्निष्ठयोग्यतामपि जनयतीत्यर्थस्याप्या-पत्तेः सौमिकव्रतोपायनेनैव सर्वाङ्गजन्योपकारलाभापत्त्या इतराङ्गानुष्ठानस्याप्यनापत्तेः । अतस्सोम-फलाधानयोग्यता ऐष्टिकफलाधानयोग्यतां विनाऽनुपपद्यमाना न तां स्वयं जनयतीति कल्पनीयं तज्जनने सौमिकव्रतस्यासामर्थ्यात् किन्तु तज्जनककृत्स्नपदार्थानुष्ठानमाक्षिपतीत्येव कल्पनीयं, नहि तस्य विजातीयादृष्टजनकस्य एकदाऽनुष्ठितस्य पुनरनुष्ठानं न संभवतीत्युपकारलाभः प्रयुक्ताननुष्ठानेन न प्रसङ्गोपपादनं युक्तम् । अङ्गसाधारणत्वाभावादिति । एतेन कर्माङ्गभूता यमनियमा व्रतं तदुपगमनार्थोयं मन्त्रो लिंगाद्विज्ञायमानो नादृष्टार्थः कल्पयितुं शक्यं, प्रयोगाङ्गभूताश्च यमनियमादयः कर्तृद्वारेण, प्रयोगश्च साङ्गस्येति दीक्षाकालोपेतेनैव सौमिकेन व्रतेन सिद्धार्थत्वात् प्राकृतं व्रतं निवर्तत इति सिद्धान्ते तन्त्ररत्नोक्तमपास्तं । तथात्वे औपदेशिकेनातिदेशिक-बाधस्यैवापत्तौ प्रसङ्गसिद्धान्तासंभवात् । तृतीये दीक्षायाः फलिसंस्कारकत्वस्यैवोक्तत्वेन कर्तृसंस्कार-

तु सोमार्थव्रतसङ्कल्पस्य दीक्षणीयोत्तरत्वात् प्रसङ्गानुपपत्तेर्युक्तावैवैष्टिकव्रतग्रहणतद्विसर्गौ। बोधायनादयस्तु तस्यामपि तौ नेच्छन्ति॥

---

(१२)—ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २५ ॥ शेषवदिति चेन्न वैश्वदेवो हि स्याद्व्यपदेशात् ॥ २६ ॥ न गुणार्थत्वात् ॥ २७ ॥

यदुक्तमग्न्यन्वाधानस्य धारणार्थत्वात् सोमाङ्गेष्ट्यादिषु अग्न्यन्वाधानं न विद्यत इति तदाक्षिप्य समाधीयते। नान्वाधानमग्निधारणार्थं, अपि तु 'देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते' इत्यर्थवादवशात् देवतापरिग्रहार्थम्। अत एव 'ममाग्ने वर्च इति पूर्वमग्निं परिगृह्णाति' इत्यत्रापि 'इन्धानाः' इति मन्त्रवर्णवशात् परिग्रहलक्षिताग्न्यन्वाधानेन प्रथमाग्निदेवतोपलक्षितास्सर्वाः प्रकृता देवतास्संस्कुर्यादित्यर्थः। अतश्चानुषङ्गिकेऽग्निधारणे जायमानेऽपि तदर्थत्वाभावात् सोमाङ्गेष्ट्यादिषु देवतापरिग्रहार्थं कर्तव्यमेवाग्न्यन्वाधानमिति प्राप्ते—

---

द्वारा प्रयोगाङ्गत्वाभिधानस्य विरुद्धत्वाच्च। तद्विसर्गाविति। अत्र च दीक्षणीयायाः पत्नीसंयाजान्तत्वेन खण्डेष्टित्वेन व्रतविसर्गस्य तदुत्तरकालीनस्य लोप एवेति विसर्गपदलिखनमनवधानकृतमेवेति ध्येयम्। अत एवापस्तंबीया विसर्गं नानुतिष्ठन्ति।

---

**ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वात्।**

आक्षिप्येते। याज्ञिकमतेनेति शेषः। ननु "पूर्वमग्निं परिगृह्णाति" इत्यत्राग्निसंस्कारार्थत्वस्यैव द्वितीयापदश्रुतिभ्यां प्रतीतेर्न युक्तं देवतापरिग्रहार्थत्वं इत्याशङ्कां परिहरति—अतएवेति। प्रकृतावाग्नेयेऽग्नेर्देवतात्वात् देवतानामग्निमुखत्वस्य तत्तदर्थवादेषु संकीर्तनात् अर्थवादगतदेवताबहुत्वानुरोधेनाग्निमुखानित्यर्थाङ्गीकारेण न तावदग्निप्रातिपदिकश्रुतिविरोधः। तादृशदेवतास्मरणरूपदृष्टसंस्कारार्थत्वाङ्गीकाराच्च न द्वितीयाश्रुतिविरोधोऽपि। एतेनान्वाधानस्य देवतापरिग्रहार्थत्वेऽदृष्टार्थत्वापादनं शास्त्रदीपिकोक्तमपास्तं; परिगृह्णातौ परमन्वाधानलक्षणा इन्धाना इति मन्त्रवर्णगतेन्धनप्रकाशनानुरोधेन सिद्धान्तेपि तुल्येति भावः। यत्तु प्रकाशकारैः परिग्रहेणैव समर्थयमाना इत्यर्थेन इन्धाना इति मन्त्रलिङ्गाविरोधसमर्थनेन परिगृह्णातेर्नान्वाधाने लक्षणेति दर्शितं, तद्देवतापरिग्रहस्य अग्निसमृद्धिकरणत्वस्य प्रत्यक्षबाधादयुक्तमित्युपेक्षितं पूज्यपादैः।

यद्यपि देवतापरिग्रहार्थं तत्, तथाऽपि तुल्यन्यायतया 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः, अग्निरवमो देवतानां विष्णुः परमो देवता एव तदुभयतः परिगृह्य दीक्षते'' इति दीक्षणीयावाक्यशेषे तस्या अपि देवतापरिग्रहार्थत्वावगतेर्युक्तस्तत्रैव प्रसङ्गः, दीक्षिष्यमाण इत्यत्र च उत्तरकालत्वमात्रं विवक्षितं न जन्यत्वमिति, तत्रापि कथञ्चिद्व्याख्यानोपपत्तेः। न च 'दीक्षास्सोमस्य' इति वचनात्तस्याः प्रधानमात्रार्थत्वावगतेः तद्देवतापरिग्रहमात्रेण नाङ्गदेवतापरिग्रहः प्रसज्यत इति वाच्यं, दीक्षायाः प्रधानमात्रार्थत्वेऽपि तदजनकीभूतदीक्षणीयाया आर्थवादिकदेवतापदसङ्कोचे प्रमाणाभावेन अङ्गप्रधानसाधारणदेवतापरिग्रहार्थत्वावसायात्।

यत्त्वत्र सूत्रकारादिभिरङ्गीकृत्यैव दीक्षणीयायाः प्रधानमात्रार्थत्वं प्रधानदेवतायां वैश्वदेवग्रहीयायां विश्वशब्दस्य सर्ववाचित्वात् सर्वेषामेव देवानां देवतात्वप्रतीतेरङ्गदेवतानामपि तत्परिग्रहेण परिग्रहात् प्रसङ्गोपपत्तिरिति समहितं, तत् विश्वदेवशब्दस्य 'आदित्यविश्ववसवः' इति त्रिकाण्डीस्मरणेन गणविशेषे रूढत्वावगतेः दीक्षणीयाया देवतापरिग्रहार्थत्वपक्षे प्रधानमात्रार्थत्वे प्रमाणाभावाच्चोपेक्षितम्। अतो देवतापरिग्रहार्थत्वपक्षेऽपि युक्त एव प्रायणीयादिषु प्रसङ्गः। दीक्षणीयायां तु तस्यामवस्थायां देवतापरिग्रहस्याजातत्वात् कर्तव्यमेव तद्देवतापरिग्रहार्थं प्राकृतमन्वाधानम्।

---

अवम इति। कनिष्ठ इत्यर्थः। परमः श्रेष्ठः तथा च कनिष्ठोत्तमदेवतयोः अग्निविष्ण्वोः दीक्षणीयायागे परिग्रहे सति प्रत्याहारन्यायेन एकसंबन्धिदर्शनेनापरसंबन्धिस्मरणविधया सर्वदेवतानां मध्यतनानां परिग्रहो भवतीत्यर्थेन सर्वदेवतापरिग्रहार्थत्वं उच्यत इत्यर्थः। यदि दीक्षणीयाया देवतापरिग्रहारार्थत्वं तर्हि कथं दीक्षिष्यमाण इति दीक्षार्थत्वप्रतिपादकलृट्श्रुत्युपपत्तिरित्यत आह— दीक्षिष्यमाण इत्यत्रेति। दीक्षणीयोत्तरं दीक्षाया भावित्वमात्रेण प्रणीताः प्रणेष्यन् वाचं यच्छतीत्यत्रेव लृट्प्रत्यय इति भावः। अत्र च ''शेषवदिति चेत्'' इति गुणसूत्रेण दीक्षणीयायाः प्रधानमात्रसंबन्धिदेवतापरिग्रहार्थत्वेपि न प्रायणीयाद्यङ्गदेवतापरिग्रहस्तेन सिद्ध्यतीत्याशङ्क्य न वैश्वदेवोहीत्युत्तरसूत्रेण यत परिहृतं तदनूद्य दूषयति—यत्त्वत्रेति। त्रिकाण्डीस्मरणेनेति। यत्तु भाष्यादिस्वारस्यात् प्रकाशकारैरुक्तं कोशेन हि वस्वादिशब्दवत् केवलं विश्वशब्दस्य गणमात्रवाचित्वमुक्तमपि लोके देवपदोपादानं विना केवलेन विश्वशब्देन तदप्रतीतेः तद्विश्वेदेवशब्दोपलक्षणपरतया समर्थनीयं तत्र क्लृप्तावयवयोगेनैवोपपत्तौ न रूढिकल्पनं युक्तं अतस्समासे रूढिबोधकव्याकरणस्येव इह कोशस्याप्रामाण्यमिति। तत्र केवलविश्वशब्दाद्रूढ्यर्थस्याप्रतीतावपि देवपदसमभिव्याहारे तस्मात्तत्प्रतीतेरनुभवसिद्धाया एव कोशे प्रतिपादनात् अप्रामाण्यकल्पनाया अयुक्तत्वात् इतरथा आदित्यपङ्कजादिपदेष्वपि रूढ्यभावप्रसङ्गात। अतो वैश्वदेव-

वस्तुतस्तु—दार्शिकान्वाधानवाक्ये अग्निपदस्योपलक्षणार्थत्वे प्रमाणाभावात् लिङ्गो-पष्टम्भश्रुत्याऽन्वाधानस्याग्निधारणमात्रार्थत्वप्रतीतेः दीक्षणीयायाश्च लट्श्रुत्या दीक्षो-त्पादकत्वावगतेर्नोभयोरपि देवतापरिग्रहार्थत्वम्। अर्थवादस्तूभयत्राप्येवकारोपबद्धत्वा-दङ्गकरणेन च प्रधानदेवतायास्सम्बन्धावश्यकत्वात् तत्रैव परिग्रहत्वोत्प्रेक्षया स्तुतिमात्रम्। अतश्च सोमार्थाग्निधारणेनैव दीक्षणीयायामपि प्रसङ्गसिद्धस्तस्यामपि नाग्न्यन्वाधानम्॥

---

## (१३)—संनहनं च वृत्तत्वात्॥ १८॥

दर्शपूर्णमासयोः 'योक्त्रेण पत्नीं संनह्यति' इति विहितं संनहनं प्रायणीयादिषु दीक्षाकालकृतेन योक्त्रकरणकपत्नीसंनहनेन प्रसङ्गसिद्धेन कार्यं दीक्षणीयायां तु कर्तव्यमेव। बोधायनेन न तत्रापि नेत्युक्तम्। न हि तददृष्टार्थं येन जागरणन्यायेन पुनःक्रियेत, वासोधारणार्थत्वरूपदृष्टप्रयोजनसम्भवे अदृष्टकल्पनस्यान्याय्यत्वात्। न चात्रान्वाधान-वदाद्यवासोधारणार्थत्वाप्रतीतेः सकृद्धृतस्यापि पुनश्शिथिलीभावसम्भवेन सवनीये यूप-दार्ढ्यातिशयार्थं परिव्याणान्तरवत् पुनस्संनहनोपपत्तिरिति वाच्यं, उपदिष्टपरिव्याणस्य विकृतौ प्रयोजनान्तरकल्पनायामपि प्राकृतस्य सनहनस्यासंनद्धसंनहनार्थत्वेन क्लृप्त-प्रयोजनस्य विकृतौ कार्यान्तरकल्पनानुपपत्तेः।

---

परिग्रहे गणविशेषस्यैव देवताभूतस्य दीक्षणीयया परिग्रहेऽपि प्रायणीयाद्यङ्गदेवतापरिग्रहासंभवात् न प्रसङ्गसिद्धिरिति दीक्षणीयायाः प्रधानदेवतापरिग्रहार्थत्वे प्रमाणाभावादेव प्रसङ्ग उपपादनीय इति भावः। वस्तुतस्तु वैश्वदेवग्रहे आग्रयणस्थसोमस्य द्रव्यत्वात् तद्ग्रहणमन्त्रात् सर्वदेवतासंबन्धात् याज्यामन्त्रतश्च सर्वदेवतानां देवतात्वप्रतीतेः रूढित्याग एव युक्त इति भक्षपेटिकायां मयाऽऽवेदित-मिति पूज्यपादानां रूढिग्रहणोक्तिश्चिन्त्येति ध्येयम्। **संबन्धावश्यंभावादिति।** अङ्गकरणेन प्रधानानुष्ठाननिश्चयात् तद्देवतासंबन्धोऽपि ज्ञात एवेत्यर्थः। **दीक्षणीयायामपीति।** देवतापरि-ग्रहार्थत्वपक्षे दीक्षणीययोत्तरत्र करिष्यमाणेष्टिदेवतापरिग्रहस्य संभवेपि दीक्षणीयादेवतापरिग्रहा-संभवात् दीक्षणीयायान्तदर्थमैष्टिकमन्वाधानं पृथक् भवत्येवेति वैषम्यं पूर्वोक्तमपिना सूचितम्।

---

संनहनं च वृत्तत्वात्।

अन्यविधानादारण्यभोजनं न स्यात्। प्रायोऽधिकरणद्वयं स्पष्टार्थम्।

यदि तु संनहनं प्रकृतावेव न वासोधारणार्थं, अपि तु करिष्यमाणकर्मणि बलाधानार्थमित्युच्येत, तथाऽपि सोमार्थसंनहनेनैव बलाधानसिद्धेश्श्लथीभावे च तस्यैव प्रकृतिवत् कर्षणोपपत्तेः प्रसङ्गसिद्ध्यविरोधः ॥

---

## (१४)—अन्यविधानादारण्यभोजनं न स्यादुभयं वृत्त्यर्थम् ॥

दर्शपूर्णमासयोरारण्याशनमाम्नातम्। तदपि सोमार्थेन पयोव्रतेनैव प्रसङ्गसिद्धेः न प्रायणीयादिषु कर्तव्यम्। न च तयोर्विजातीयतृप्तिजनकत्वेन कार्यभेदश्शङ्क्यः, तृप्तेः क्रत्वनुपयोगित्वेनानुषङ्गिकत्वेऽपि प्रयोजनत्वाभावात् प्राणधारणस्यैव क्रतूपयोगितया प्रयोजनत्वेन प्रसङ्गोपपत्तेः।

---

## (१५)—शेषभक्षास्तथेति चेत् नान्यार्थत्वात् ॥ २० ॥

एवं तर्हि यजमानकर्तृकाणां शेषभक्षाणामपि प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारकत्वस्यापि सत्त्वात् प्राणधारणार्थत्वोपपत्तेः सत्यपि द्वितीयया शेषप्रतिपत्त्यर्थत्वे अस्मदुक्त-

---

यदि तु सन्नहनमिति। पत्नीं सन्नह्यतीति विधौ पत्न्याः संस्कार्यत्वप्रतीतेः नवासस्संस्कार–कमित्यर्थः।

---

### शेषभक्षास्तथेति चेन्न भक्षार्थत्वात्।

यजमानकर्तृकाणामिति। ऋत्विक्कर्तृकभक्षाणां बलाधानार्थत्वस्य दशमे साधितत्वात् तेन न्यायेनैतेषामपि बलाधानार्थत्वेन कर्तृसंस्कारकत्वं प्राप्तमपाकर्तुमिदमधिकरणमिति यजमान-कर्तृकाणामित्यनेन सूचितं। यत्तु षष्ठे कर्तृसंस्कारकत्वनिराकरणेन द्रव्यसंस्कारार्थत्वप्रसाधनं तदत्यल्पमेव, तत्रत्याधिकरणानां कर्तृसंस्कारविषयत्वाभावात्। एतेन षष्ठे कृतस्य कर्तृसंस्कार-त्वनिराकरणस्यात्र प्रसङ्गरूपप्रयोजनमभिधीयत इत्यस्य प्रयोजनपरत्वं तन्त्ररत्नाद्युक्तमपास्तं इति भावः। प्रयाजशेषेति। यथैव प्रयाजशेषेण हवींष्यभिघारयति इत्यत्राभिघारणस्य हविरर्थत्व-श्रवणेपि कल्पितविध्यन्तरेण प्रयाजशेषप्रतिपत्त्यर्थत्वमपीति साधितं तथैव शेषार्थत्वश्रवणेपि कल्पित-विध्यंतरेण कर्तृसंस्कारकत्वं, तत्रानुमानिकस्यैव लाघवात् धारणप्रयोजकत्वं यथा तत्र कल्प्यते तद्वत् इहापीति केवलप्राणधारणार्थस्य शेषभक्षस्य सौमिकेन पयोव्रतेन प्रसङ्गसिद्धेर्न पृथक्करणमित्यर्थः।

प्रयाजशेषाभिघारणन्यायेन आनुमानिकस्यैव प्राणधारणस्य प्रयोजकत्वावगतेः तस्य च पयोव्रतेन प्रसङ्गसिद्ध्युपपत्तिरिति प्राप्ते—

आरण्याशननियमविधानात् तेनैव प्राणधारणकर्तव्यत्वप्रतीतेः यजमानभक्षस्य केवलशेषप्रतिपत्त्यर्थत्वावसायात् तस्य च प्रसङ्गसिद्ध्यभावेन भक्षयितव्य एव यजमानेन प्रायणीयादिष्वपि शेषः।

---

## (१६) भृतत्वाच्च परिक्रयः ॥ २१ ॥

दीक्षणीयादिषु चोदकप्राप्तान्वाहार्यदक्षिणा सोमार्थदक्षिणयैव प्रसङ्गादानतिसिद्धेर्न देया। न च 'दक्षिणास्सोमस्य' इत्यस्याङ्गसाधारण्यनिवर्तकत्ववत् प्रसङ्गनिवर्तकत्वमपि शङ्क्य, तथात्वे आनतिभेदेन कर्तृभेदापत्तेः अङ्गप्रधानानामश्रुतप्रयोगभेदप्रसङ्गात् अतस्सोमाङ्गदक्षिणयैवानतत्वात् तदानत्युपजीवनेऽपिच पशुप्रयाजादीनामिव तन्त्र्यङ्गत्वानपायात् न दीक्षणीयादीनां पृथग्दक्षिणाप्रयोजकत्वम्। न चैवमङ्गसाधारण्यनिवृत्तिप्रयोजनाभावः, तद्विकृतौ निरूढपश्वादौ द्वादशशतनिवृत्तिप्रयोजनकत्वात्। अत एव तत्र प्राकृतोऽन्वाहार्यो वाऽर्थाक्षिप्तयत्किञ्चिदानतिसाधनं द्रव्यं दक्षिणेत्यन्यत्र विस्तरः।

---

यद्यपि ऋत्विक्कर्तृकभक्षाणामिवैतेषामपि समानन्यायात कर्तृसंस्कारकत्वेन प्राणधारणार्थत्वं प्राप्तं तथापि वैषम्यं दर्शयति—आरण्याशननियमेति। अत एवर्त्विग्भक्षाणां एतादृशदक्षिणादाननियमविधिबलात् आनत्यर्थत्वमनुपदमेव निराकरिष्यते बलाधानार्थत्वं तु बाधकाभावादिष्टमेव। वस्तुतस्तु यथा न न्यायेन बलाधानार्थत्वं तथोपपादितं मया षष्ठे तत्रैव द्रष्टव्यं, नह्यारण्याशननियमविधिसत्रामात्रेण बलाधानार्थत्वं निषेद्धुं शक्यते शेषभक्षनियमविधिना तस्य एतदर्थत्वाभावस्य वक्तुं शक्यत्वेन वैपरीत्यस्याप्यापत्तेः। अतो द्वितीयाश्रुत्या शेषार्थत्वे सति लिङ्गमात्रेण न बलाधानार्थत्वमित्येव वक्तव्यमिति नैव प्रसङ्गशङ्केति। एतेनर्त्विग्भक्षाणामपि बलाधानार्थत्वमानत्यर्थत्वमिव निरसनीयम्।

---

भृतत्वाच्च परिक्रयः।

स्पष्टार्थम्।

---

## (१७) शेषभक्षास्तथेति चेत् ॥ ३२ ॥ न कर्मसंयोगात् ॥ २२ ॥

ऋत्विक्कर्तृकाणां शेषभक्षाणां द्वितीयया शेषप्रतिपत्त्यर्थत्वेऽपि प्रयाजशेषाभिघारणन्यायेनानत्यर्थत्वस्यापि करिष्यमाणकर्मणि बलाधानार्थत्ववत् सम्भवात्तस्यैव चानुमानिकतया प्रयोजकत्वावगतेः युक्त एव द्वादशशतदक्षिणया प्रसङ्ग इति प्राप्ते—

अन्वाहार्यदक्षिणानियमविधिबलेन शेषभक्षस्यानत्यर्थत्वाकल्पनात् केवलं द्वितीयया शेषप्रतिपत्त्यर्थत्वं प्रयाजशेषन्यायेन च ऋत्विक्प्राणधारणापरपर्यायबलाधानार्थत्वमित्युक्तं दशमादौ । अतो नात्रापि प्रसङ्गसिद्धिः ॥

---

## (१८)—प्रवृत्तवरणात् प्रतितन्त्रवरणात् प्रतितन्त्रवरणं होतुः क्रियेत ॥ ब्रह्मापीति चेत् ॥ ३५ ॥ न प्राङ्नियमात्तदर्थं हि ॥ ३६ ॥ निर्दिष्टस्येति चेत् ॥ ३७ ॥ नाश्रुतत्वात् ॥ ३८ ॥ होतुस्तथेति चेत् ॥ ३९ ॥ न कर्मसंयोगात् ॥ ४० ॥

दार्शिकं होतृवरणपि सोमार्थेन समन्त्रकेण वरणेन दीक्षणीयादिषु न प्रसज्यते प्रकृतौ तस्यादृष्टार्थत्वात् । प्रवृत्तेषु हि केषुचित् पदार्थेषु पश्चात् 'अग्निर्देवो होता देवान् यक्षत्' इत्यादिना प्रकृतौ होतृवरणमाम्नातं, अतस्तस्य प्रवृत्तत्वेन दृष्टार्थत्वानुपपत्तेरदृष्टार्थत्वावसायादप्रवृत्ताभ्यर्थनरूपतया दृष्टार्थेन सौमिकेन न प्रसङ्गसिद्धिः ।

---

### शेषभक्षास्तथेति चेत् ।

**अतो नात्रापीति** । यद्यपि दशमे देवतायै त्यक्तस्य द्रव्यस्यानीशेन यजमानेन पुन ऋत्विग्भ्यो दानासंभवात् शेषभक्षाणामानत्यर्थत्वं निराकृतमेवेति प्रकृताधिकरणं व्यर्थं तथापि यजमानस्य तत्रेशितृत्वं कृत्वाचिन्तया युक्त्यन्तरेण तन्निराकरणव्याजेन प्रसङ्गात्मकत्वाद्दाशमिकविचारप्रयोजनमात्रकथनमनेन क्रियत इति दशमादौ अत इति पदद्वयेन सूचितं ।

---

### प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियते

**समन्त्रकेनेति** । अग्निर्होता स मे होताहोऽत्स्वं मे होतासीति होतारं वृणीत इति

**न च प्रवृत्ताभ्यर्थनत्वेऽपि ब्रह्मवरणवददृष्टार्थत्वोपपत्तिः ब्रह्मवरणस्यापि पूर्वेद्युर्वेदिकरणाभ्यनुज्ञानार्थं प्रवृत्तस्यापि** प्रणीताप्रणयनात्पूर्वं **करणादिति वाच्यं, पौर्णमास्यां तावद्वेदिकरणस्य हविरभिवासनोत्तरकालीनत्वेन पूर्वेद्युःकालत्वाभावात् प्रणीताप्रणयनकालीनब्रह्मवरणस्याप्रवृत्ताभ्यर्थनरूपतया दृष्टार्थत्वोपपत्तेः, अमावास्यायामपि वेदिकरणापकर्षे तदङ्गभूताभ्यनुज्ञानार्थतया ब्रह्मवरणस्याप्यर्थक्रमेण पाठक्रमं बाधित्वा अपकर्षसम्भवेनाप्रवृत्ताभ्यर्थनरूपतया दृष्टार्थत्वोपपत्तेः।**

**न चैवं होतृवरणेऽप्यर्थक्रमानुसारात् सामिधेनीतः पूर्वं करणापत्तिः। 'अवृतः सामिधेनीरन्वाह' इति होतृवरणवाक्यशेषेण पाठक्रमाबाधकत्वप्रतीतेः। अयं हि न स्वतन्त्रस्सामिधेनीमात्रे वरणपर्युदासः, तथात्वे निविन्मन्त्रेभ्यः पूर्वं वरणापकर्षापत्तेः। किन्त्वेक**वाक्यतालाभाय **पाठक्रमाबाधमात्रतात्पर्यग्राहकः। अतश्चास्यापकर्षानुपपत्तेः प्रवृत्ताभ्यर्थनरूपत्वेनादृष्टार्थत्वान्न प्रसङ्गः। ब्रह्मवरणस्य तु दृष्टार्थत्वायुक्त एव प्रसङ्ग इति वैषम्यम्।**

---

विहितेन समन्त्रकेणेत्यर्थः। **दृष्टार्थत्वानुपपत्तेरिति।** लोके हि भाविन्यापि दक्षिणयाऽऽनतिर्दृश्यते नत्वेवं भाविना वरणेनेति प्रवृत्ते भाविवरणस्यानतिरूपदृष्टार्थत्वानुपपत्तेरित्यर्थः। **प्रणीताप्रणयनात्पूर्वमिति।** हविरभिवासनोत्तरकाले विहिते वेदिकरणे स्वाङ्गब्रह्मकर्तृकानुमतिविशिष्टे पूर्वेद्युरमावास्यायां वेदिं करोतीत्यमावास्यायामपकृष्टेपि तत्पूर्वभाविहविरासादनं तत्पूर्वभावि च प्रणीताप्रणयनं तत्कालीनं ब्रह्मवरणं च तदन्तापकर्षन्यायात् नापकृष्यत इति यथा पूर्वमित्यधिकरणे पञ्चमे उक्तम्, अत उत्तरेद्युः प्रणीताप्रणयनपूर्वकाले ब्रह्मवरणमनुष्ठेयम्, तदा वेदिकरणे अभ्यनुज्ञादानार्थं ब्रह्मणः प्रवृत्तत्वात् प्रवृत्ताभ्यर्थनरूपत्वेपि तस्य नादृष्टार्थत्वं तद्वद्धोतृवरणस्यापीत्याशङ्कार्थः। **अर्थक्रमेणेति।** प्रणीताप्रणयनात्पूर्वं पाठतः पठितमप्यर्थक्रमेण तं पाठक्रमं बाधित्वा वेदिकरणाभ्यनुज्ञादानार्थं तत्कालमेवापकृष्य कृतं सत् अप्रवृत्ताभ्यर्थनरूपमेव भवतीति दृष्टार्थत्वमुपपद्यते। नहि तदन्तापकर्षन्याय एवापकर्षे हेतुः किन्तु यावत्प्रयोजनमेव, ततश्चापकृष्यमाणं वेदिकरणं ब्रह्मानुज्ञामन्तरेणानुपपन्नं अनुज्ञामिव वरणमप्यपकर्षतीत्यर्थः। यदा तु प्रणीताप्रणयनपूर्वकाल एव तद्विधानं न तु स पाठक्रम इत्युच्यते तदा कालस्य अन्वाधानोत्तररूपस्य उपलक्षणापायेपि संभवात् न कस्यचित् बाधोऽपीति भावः। **एकवाक्यतालाभायेति।** यदि सामिधेनीपाठविषय एव वरणपर्युदासस्तदा सामिधेन्यव्यवधानेन ये निविन्मन्त्राः पठ्यन्ते तेषां सामिधेनीत्वाभावेनापर्युदसनीयत्वात् तेषामर्थेऽर्थक्रमेण वरणापकर्षे सति सामिधेनीनां निविदां चैकवाक्यतया यः पाठः स वरणेन व्यवधानात् बाध्येत। अतः पाठक्रमेण यत् प्राप्तं होतृवरणं तस्यार्थक्रमेण यो बाधः प्रसक्तः तन्निवृत्तिफलकः पर्युदासस्तथा च यत्र पाठस्तत्रैव होतृ-

न च प्रवृत्ताभ्यर्थनरूपत्वेऽपि लोके लोभवशेन सन्देहेऽपि यत्किञ्चित्कर्मणि प्रवृत्तस्यापि कर्मकरस्य मध्ये निश्चायकलिखनादेर्दृष्टार्थत्ववत् वरणसन्देहेऽपि स्वलोभेन सामिधेनीषु प्रवृत्तस्यापि होतुर्मध्ये वरणस्य दृष्टार्थत्वोपपत्तिरिति वाच्यं, सन्देहेन प्रवृत्तस्य कदाचित्परिवृत्तावङ्गप्रधानयोरेककर्तृकत्वबाधापत्तेरवश्यं यजमानेनैव सामिधेनीतः पूर्वं लौकिकस्याप्रवृत्ताभ्यर्थनाद्युपायस्य करणेनास्य वैधवरणस्यादृष्टार्थत्वावश्यकत्वात्।

अत एवावृत इत्यस्य वैधवरणशून्य इत्येवार्थः। एवं च ऋतुयाज्यावरणवद्वृतवरणत्वमेवादृष्टार्थत्वप्रयोजकं न त्वप्रवृत्ताभ्यर्थनत्वमित्यपि ध्येयम्। न चैवं सत्यप्यदृष्टार्थके वरणे वरणशब्दस्यौपचारिकत्वापत्तिः, प्रार्थनस्यैव तत्पदवाच्यत्वात्। अतश्च सौमिकेन वरणेन ब्रह्मवरणमेव प्रसज्यते न तु होतृवरणमिति सिद्धम्।

वस्तुतस्तु—सौमिकस्य वरणस्य प्राकृतवरणवदेव कर्तृसंस्कारकतया अङ्गप्रधानार्थत्वाद्दक्षिणावच्च प्रधानमात्रार्थत्वग्राहकाभावात् तेनैष्टिकब्रह्मवरणादेः बाध एव न प्रसङ्गः वैधहोतृवरणस्य तु सोऽपि नेति ध्येयम्। प्रासङ्गिकी चास्मिन् पक्षेऽध्यायसङ्गतिः।

---

वरणं कर्तव्यं न तु कार्यानुरोधात् पूर्वमपि इत्यर्थेन निविदामर्थेन तत्प्रसक्तिरित्यर्थः। अङ्गप्रधानयोरिति। सामिधेन्यनुवचनमङ्गशब्दस्य प्रधानाङ्गपुरोनुवाक्यायाज्यादिप्रधानशब्दस्य चार्थः। अतश्च द्वयोर्भिन्नकर्तृकत्वापत्त्या एककर्तृकत्वबाधापत्तिरित्यर्थः। वृतवरणत्वमेवेति। प्रार्थितवरणत्वं तच्च ऋतुयाज्यावरणे पूर्वप्रार्थनं वैधमिहतु लौकिकं तावतापि वृतस्य कार्ये प्रसक्तस्य पुनर्वरणमदृष्टार्थमित्यर्थः। न त्वप्रवृत्तेत्ययं ग्रन्थो निरर्थक एव। अप्रवृत्ताभ्यर्थनस्य दृष्टार्थत्वप्रयोजकत्वस्यैवाङ्गीकारेणादृष्टार्थत्वप्रयोजकत्वस्याप्रसक्तेर्निराकरणवैयर्थ्यात्। प्रार्थनस्यैवेति। अत एव ऋतुयाज्यावरणेऽपि वरणशब्दप्रयोगः। एवं प्राचां रीत्या सिद्धान्तिते विशेषमाह—वस्तुतस्त्विति। सोपिनेति। अदृष्टार्थस्य दृष्टार्थेन न बाधोऽपि भिन्नविषयत्वादित्यर्थः। तर्हि दीक्षणीयाद्यङ्गभूतेन सौमिकवरणेनातिदेशप्राप्तहोतृवरणबाधाबाधयोरत्र विचारणात् कथं प्रसङ्गलक्षणसङ्गतिरित्यत आह—प्रासङ्गिकी चेति। पूर्वाधिकरणे दाशमिकविचारप्रयोजनेऽभिहिते तत्प्रसङ्गाद्दाशमिकबाधाबाधविचार इति सङ्गतिरित्यर्थः। अत्र चामावास्यायां पूर्वेद्युः वेदिकरणाभ्यनुज्ञादानार्थं ब्रह्मवरणं कर्तव्यमिति मीमांसकानां यत् सिद्धान्तकरणं तद्याज्ञिकाचारेण विरुद्धं द्रष्टव्यम्। अभ्यनुज्ञाया एव प्रयोजनाभावेन तदर्थं ब्रह्मवरणस्य कैरप्यननुष्ठानात्। अतो मीमांसाभाष्यलिखनमेव ब्रह्मवरणानुष्ठाने प्रमाणमिति ध्येयम्।

---

(१९)—यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात् प्रतितन्त्रं क्रियेत न वा कृतत्वात्तदुपदेशो हि ॥ ४१ ॥

आतिथ्योपसदग्नीषोमीयार्थं साधारणमेकमौपदेशिकाश्ववालादिगुणकं बर्हिरित्युक्तं चतुर्थे। तत्र छेदनप्रोक्षणादयः तत्तदतिदेशेन भेदेन प्राप्ता अपि बर्हिष एकत्वात् भेदेन न कार्याः। न चाग्नेः पात्राणां वा एकत्वेऽपि प्रतिप्रयोगं सम्मार्गभेदवत्तत्तदपूर्वेणैव प्रोक्षणादिजन्यापूर्वनाशात् भेदेन करणोपपत्तिरिति वाच्यं, व्रीहिप्रोक्षणादिवद्यत्कार्यकूटोद्देशेन यद्व्यक्तेरुत्पत्तिस्तत्कार्यकूटाङ्गभूतफलोपहिततद्व्यक्तिगतसंस्कारजन्यादृष्टं प्रति तत्कार्यान्तिमकार्यत्वेन नाशकत्वाङ्गीकारात् अग्नीषोमीयापूर्वेणैव तन्नाशोपपत्तेः। अग्निपात्रादेस्तु यत्कार्यकूटोद्देशेनोत्पत्तिः तत्कार्यकूटाङ्गता न सम्मार्गस्य तस्य ज्योतिष्टोमाद्यनङ्गत्वात्। अतस्तत्र तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रति तत्फलीभूतान्तिमकार्यत्वेन नाशकतेति विशिष्यैव कार्यकारणभावकल्पनात् तत्तत्प्रयोगवृत्त्यन्तिमफलेनैव नाश इति प्रतिप्रयोगं भेदः।

आवश्यकश्चायं प्रकारो यूपसंस्काराणां यागत्रितयसाधारण्यनिर्वाहार्थमित्युक्तम्। तदिह तद्वदेव बर्हिष एकत्वान्न प्रोक्षणादीनां भेदः, तत्रापि न तन्त्रत्वं, आतिथ्याप्रयोगमध्यवर्तित्वेन गृह्यमाणविशेषत्वात्। अतश्चातिथ्यार्थमेव कृतानामेषां प्रसङ्गादुपसदग्नीषोमीयोपकारकत्वम्। न चेतरयोः तन्त्रमध्यपाताभावात् कथं प्रसङ्गः? तन्त्रमध्यपाताभावेऽपि तज्जन्योपकारसत्त्वेन प्रसङ्गोपपत्तेः। अत्र च छेदनं तन्त्रेणैवोपकरोति बर्हिस्साधारण्यविधेस्तन्त्रतां विनाऽनुपपत्तेः प्रोक्षणादीनां तु प्रसङ्ग इति केचित्।

वस्तुतस्तु—छेदनस्यापि गृह्यमाणविशेषत्वाविशेषादातिथ्यार्थं कृतस्यैव प्रसङ्गेनोपकारकत्वोपपत्तेः तादृशच्छेदनोपात्तस्यापि च बर्हिषो वचनात्साधारण्ये बाधकाभावात्

---

यज्ञोत्पत्त्युपदेशे।

इदमधिकरणं स्पष्टार्थमपि क्वचिदेव विशदीक्रियते—न चेतरयोरिति। उपसदग्नीषोमीययोरित्यर्थः। अत्र प्राचां ग्रन्थेषु छेदनं विनाप्रोक्षणादीनां संस्काराणां साधितस्य प्रसङ्गस्याभिप्रायवर्णनं प्रकाशकारैः कृतम्, तदनूद्य दूषयति-अत्र। चेतितन्त्रतां विनेति। यदि छेदनं पृथक् तत्तदर्थं क्रियेत तदा छिन्नस्य बर्हिषो भिन्नत्वात् तत्साधारण्यविधानमनुपपन्नमेव भवेदिति छेदनस्य तन्त्रत्वं, बर्हिरुत्पादकत्वात्, प्रोक्षणादीनां तु तदुत्पादकत्वाभावात् तत्तन्त्रतां विनापि बर्हिस्साधारण्यविधेरुपपत्तेर्न तन्त्रत्वं, किं तु बर्हिस्साधारण्यादेव प्रसङ्ग इत्यर्थः—गृह्यमाणविशेषत्वा-

तत्रापि प्रसङ्ग एव। यदि तु गृह्यमाणविशेषत्वेऽपि बर्हिषि त्रितयोद्देशात् तत्र क्रियमाणसंस्काराणामपि त्रितयोद्देशोपपत्तिरिति विभाव्यते, तदाऽस्तु सर्वत्र तन्त्रमेव। भेदाभावमात्रेण च प्रासङ्गिकी अध्यायसङ्गतिः। यूपसंस्काराणामपि चाग्नीषोमीयकालक्रियमाणानामनयैव, विधया तन्त्रत्वं, बर्हिःप्रतिपत्तेः परमग्नीषोमीयार्थत्वमेव इतरयोः खण्डेष्टित्वेन तत्र प्रतिपत्त्यनतिदेशात्।

युक्तं चैतत्संस्कारव्यक्तेरुपधेयकार्यजिज्ञासायां संस्कार्यबर्हिर्व्यक्त्युपधेयकार्यकूटस्यैव झडित्युपस्थिततत्वेन फलत्वोपपत्तावेकप्रयोगवृत्तित्वेन विलम्बोपस्थितातिथ्यामात्रोपकारकत्वकल्पने प्रमाणाभावात्। अत एव यत्र नाग्निसम्मार्गादौ कूटस्य फलत्वोपपत्तिस्तत्रोपस्थापकान्तरापेक्षायामेकप्रयोगवृत्तित्वस्यैव कार्योपस्थापकत्वात्तदुपस्थापितस्यैव फलत्वमिति।

---

## (२०)—देशपृथक्त्वात् मन्त्रो व्यावर्तते ॥ ४२ ॥

तदेव बर्हिरातिथ्योपसदर्थं प्राग्वंशे 'ऊर्णा म्रदसं त्वा' इति मन्त्रेण वेद्यामास्तृतं पुनरग्नीषोमीयार्थमपरेणोत्तरवेदिं स्तीर्यते देशभेदेन तत्तत्संस्कारकस्य तत्रास्साद्यमानहविराधारभूतबर्हिस्संस्कारकस्य वाऽऽस्तरणस्यावृत्तेः प्रयोजनानुरोधेनावश्यकत्वात्। अतः

---

विशेषादिति। आतिथ्याप्रयोगमध्यवर्तित्वस्य समानत्वादित्यर्थः। भेदाभावमात्रेणेति। आवृत्त्यभावनिरूपणेन प्रसङ्गतस्तन्त्रतेह विचारितेत्यर्थः। यूपसंस्काराणामपि चेति। एतेन यूपसंस्काराधिकरणेनैव गतार्थत्वान्नेदमारंभणीयमित्यपास्तम्। दीक्षाकालत्वेन यूपधर्माणामगृह्यमाणविशेषतया तन्त्रताशंकानिवृत्तिप्रतिपादनद्वारा द्रव्यसाधारण्यादेव तन्त्रत्वमित्यर्थप्रतिपादनार्थमारंभादिति सूचितम्। एवं च यूपसंस्काराणामातिथ्याबर्हिस्संस्कारन्यायेन एकादशे प्रसङ्गसाधने तन्त्रलक्षणासङ्गतिरपि परिहृता भवतीति ध्येयम्। प्रतिपत्त्यनतिदेशादिति। आतिथ्याया इडान्तत्वात उपसदां चाघारपुनःश्रवणेनापूर्वत्वात् खण्डेष्टित्वम्। वस्तुतस्तु अग्नीषोमीयस्यापि पत्नीसंयाजान्तत्वेन खण्डेष्टित्वस्य तुल्यतया तत्रापि पत्नीसंयाजोत्तरभाविबर्हिःप्रतिपत्तेः अनतिदेशात् नाग्नीषोमीयार्थत्वमपीति ध्येयम्।

---

देशपृथक्त्वान्मन्त्रोप्यावर्तते।

बर्हिस्संस्कारकस्य वेति। स्तरणस्य संयोगपृथक्त्वात् यथा वेदिरूपदेशसंस्कारकत्वं तथा बर्हिस्संस्कारकत्वमपीति निर्वपणलवनस्तरण इत्यधिकरणे एकादश एवोक्तमिति नान्यतरार्थत्वनिष्कर्षोऽत्र कृतः। प्रयोजनानुरोधेनेति। यद्यपि बर्हिस्संस्कारकत्वपक्षे बर्हिष एकदा

प्राकृतस्य स्तरणस्यावृत्तौ तदङ्गभूतो मन्त्रोऽप्यावर्तेत इति न तत्र प्रसङ्गस्तन्त्रं वा। आतिथ्याकालपठितमन्त्रजन्यस्मृतेरग्नीषोमीयकालीनस्तरणवेळायामविद्यमानत्वात्। सिद्धमेव चेदं शिष्यहितार्थमुक्तम्।

---

## (२१)—सन्नहनहरणे तथेति चेत्॥ ४३॥ नान्यार्थत्वात्॥ ४४॥

तस्यैव बर्हिषः प्राग्वंशे स्तीर्णस्य उत्तरवेदिसमीपे स्तरणार्थं पुनस्सन्नहनमाहरणं च क्रियते। तत्र प्राकृतौ तन्मन्त्रौ 'पूषा ते ग्रन्थिं ग्रथ्नातु, बृहस्पतेर्मूर्ध्ना हरामि' इत्येतौ किं पुनः प्रयोक्तव्यौ न वेति चिन्तायां—पूर्ववत् क्रियावृत्तावावृत्तिरिति प्राप्ते—

नेदं प्राकृतं सन्नहनं लवनोत्तरकालविहितसन्नहनस्यैव तत्त्वात् किन्त्वार्थिकं, अतश्च वैधप्राकृतसन्नहनाङ्गभूतो मन्त्रो नावैधे भवितुमर्हति। याज्ञिकास्तु तत्र मन्त्रं पठन्ति। तेषामयमाशयः—यद्यप्यार्थिकमिदं सन्नहनं तथाऽपि तस्य प्राकृतकार्यकत्वमेव। प्राकृतस्य सन्नहनस्य वेदिस्तरणार्थाहरणसिद्धिरेव प्रयोजनं न त्वन्यत्, अतश्चोक्तप्रणाड्या अपूर्वसम्बन्धिसन्नहनाङ्गं मन्त्रः उक्तविधे आर्थिकेऽपि सन्नहने स्यादेव। न हि मन्त्रं प्रति तस्य वैधत्वादिना लवनोत्तरकालीनत्वादिना वोद्देश्यता, प्रमाणाभावात्।

---

स्तीर्णस्यैकत्वात् नास्तरणेन पुनः प्रयोजनं तथापि वेद्यामनास्तृते बर्हिषि अग्नीषोमीयहविरासादने वैगुण्यापत्तेस्तदर्थं पुनरास्तरणे आवश्यके सति तदङ्गमन्त्रस्यापि पुनरावृत्तिरावश्यिकीत्यर्थः

---

### सन्नहनहरणे तथेति चेत्।

नावैध इति। वैधस्य सन्नहनस्य विहारदेशप्रापणं फलं, न तदवैधस्यास्य भवितुमर्हति विहारदेशं प्राप्तस्यैव उत्तरवेदिसमीपे नयनात्। अतश्च विहारदेशप्राप्त्यर्थं सन्नहनाङ्गभूतो मन्त्रः न प्राप्नोतीत्यर्थः। तदेतद्विहारदेशप्रापणं सन्नहनफलमिति प्राचां रीतिमनुसृत्य सिद्धान्तितं याज्ञिकाभिप्रायवर्णनव्याजेन दूषयितुं याज्ञिकाचारविरोधं तावत् तत्र दर्शयति। **याज्ञिकास्त्विति—सिद्धिरेवेति।** बर्हिषो वेदिस्तरणे विनियोगात् तदर्थस्य बर्हिषो यदाहरणं तद्वेदिस्तरणार्थं भवति आहरणस्य फलं यद्यपि विहारदेशप्रापणं तथापि असन्नद्धस्याहरणायोगात् सन्नहनस्याक्षिप्तस्याहरणमेव प्रयोजनमव्यवधानात न तु विप्रकृष्टं विहारप्रापणमित्यर्थः। एतच्चोत्तरवेदिसमीप-

वस्तुतस्तु 'बर्हिस्सन्नह्यति' इति वचनेन उक्तप्रयोजनार्थं विहितस्य सन्नहनस्यात्र प्रयोजनानुरोधेनावृत्तिरेव स्तरणवदिति मन्त्रावृत्तौ न किञ्चिद्बाधकमस्ति। आहरणे तु प्रकृतौ विहारदेशप्रापणानुकूल एव मन्त्रो विहितो न तु गार्हपत्याद्वेदिदेशप्रापणानुकूले। इह च वेदिदेशप्रापणानुकूलस्यैवावृत्तिरिति क्व मन्त्रावृत्तिशङ्का। अत एव वस्तुत उभयत्राप्यत्र प्रसङ्गाभावेऽप्यावृत्त्यभावमात्रेण प्रासङ्गिकी अध्यायसङ्गतिः।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वादशाध्यायस्य प्रथमः पादः

---

प्रापणार्थसन्नहनस्यावैधत्वमङ्गीकृत्यापि प्राकृतकार्यार्थत्वमुक्तम्। वस्तुतस्त्वस्यापि वैधत्वमेवेत्याह—वस्तुतस्त्विति।

इति भाट्टदीपिकाप्रभावल्यां
द्वादशाध्यायस्य
प्रथमः पादः

---

# अथ द्वादशाध्यायस्य द्वितीयः पादः

(१)——विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥ मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ सति चोपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांसपाको विहितप्रतिषेधस्स्यादाहुतिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा दक्षिणेऽस्मिन्ननारभ्यविधानस्य ॥ ७ ॥

आहवनीयादीनामाधानेनोत्पन्नानां प्रयोजनापेक्षायां सामर्थ्यादेवाग्निसाध्यश्रौतस्मार्तलौकिकसाधारण्येन कार्यमात्रार्थत्वं 'आहवनीये जुहोति, गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नावान्वाहार्यं पचति' इत्यादिवाक्यानि तु अवयुत्यानुवादः। अथवाऽस्त्वेतेषां विनियोजकत्वं तथाऽपि कार्यान्तराणामग्न्यपेक्षायां लाघवादेतेषामेव प्रसङ्गाद्ग्रहणं अग्न्यन्तराक्षेपे गौरवादिति प्राप्ते—

---

द्वितीयः पादः

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात्।

अत्र विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् इति सूत्रे विह्रियते सौ विहार इति व्युत्पत्त्या विहारशब्देनाहवनीयादित्रयमुच्यत इत्यभिप्रेत्याह—आहवनीयादीनामिति। श्रौतमग्निहोत्रहोमादि स्मार्तं स्थालीपाकादि, लौकिकं पाकप्रकाशादि। अवयुत्यानुवाद इति। एतेन विनियोजकप्रत्यक्षवाक्यसत्वे लिङ्गबाध इत्यपास्तं, अस्यानुवादकत्वेनाप्युपपत्तेः लिङ्गबाधे माना—भावात्। प्रत्यक्षविनियोजकश्रुतेरनुवादत्वे वैयर्थ्यापत्तेः, प्रत्यक्षविनियोजकश्रुतिसत्वे लिङ्गकल्प्यसाधारणश्रुतिकल्पनाया अप्रसरान्न सर्वार्थत्वमित्याशङ्कां सर्वाङ्गत्वाभावेऽपि तत्तद्वाक्यैर्होमाद्यङ्गतयाऽवगतानां तेषां प्रसङ्गेन सर्वोपकारकत्वविधया पक्षान्तरेण पूर्वपक्षमाह—अथवेति। गौरवादिति। अग्न्यन्तरकार्यस्य होमाद्यङ्गभूताहवनीयादिभिरेव सिद्धेः तत्सम्पादनं न कार्यं, नह्यन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानरूपे प्रसङ्गेऽन्यस्यान्याङ्गत्वेन प्रवेशो विवक्षितः येन पाकादिनिष्पत्तिकाले, होमस्याभावेन अन्याङ्गजन्योपकारालाभः शङ्क्येत; तथात्वे सौमिकपालाणामैष्टिकहोमादौ

**सामर्थ्यादेव सर्वार्थत्वप्राप्तावेतद्विशेषविनियोगविधिवैयर्थ्यादेव न सर्वार्थत्वं,** नाप्यन्यत्र प्रसङ्ग**सिद्धिः।** अत एव **नाग्न्यन्तरसाधारण्येनाप्येतेषां** ग्रहणं, आयतनाद्बहिर्भाव-**निषेधात्**, श्रौताग्निषु **पाकादिनिषेधस्य स्मृतिषु श्रवणाच्च**, स्मार्तेष्वौपासनाग्नेर्वाचनिकत्वाच्च, **तस्माच्छ्रौतेष्वेव होमादिषु विनियोगः।** अत एव 'मांसीयन्ति ह **वा एतस्याजुह्वतो यजमानस्याग्नयो यजमानमेव ध्यायन्ति यजमानं सङ्कल्पयन्ति पचन्ति ह वाऽन्येष्वग्निषु वृथा मांसं अथैतेषां नातोऽन्या मांसाशा विद्यते'** इति **पशुबन्धं विना अन्यमांसस्पर्श-निवृत्तिलिङ्गं लौकिकमांसस्य चान्याग्निषु पाकलिङ्गमुपपद्यते।**

---

प्रसङ्गानुपपत्तेः। ऐष्टिकहोमकाले सौमिकाननुष्ठानेनान्याङ्गजन्योपकारासंभवात्। अतोऽन्यत उप-कारमात्रमेवेति युक्त एव प्रसङ्ग इत्यर्थः। अत एव पूर्वपादे विचारितस्य प्रसङ्गस्य क्वचिद्विषये पूर्वत्रापवादकथनवत् अस्मिन् पादेऽप्यपवादकरणात् पादयोरापवादिकी सङ्गतिः। सर्वाङ्गत्वपूर्वपक्षे तु न सा लभ्यत इत्यपि ध्येयम्। यत्तु शास्त्रदीपिकायां पूर्वं बर्हिस्संस्काराणां साधारण्या-साधारण्ये विचारिते तत्प्रसङ्गादग्नीनां लौकिकसाधारण्यं विचारितमिति प्रासङ्गिकसङ्गत्यभिधानं तदध्यायान्त्याध्यायाद्ययोरिव पादान्त्यपादाद्ययोस्संगत्यनपेक्षणात् पूर्वपाद एव प्रासंगिकतया एतद्विचारकरणापत्तेश्च उपेक्ष्यम्। **नाप्यन्यत्र प्रसंग इति।** यदि होमार्थाहवनीयेनैवान्याग्नि-**कार्यसिद्धेः प्रसङ्ग** उच्येत तदा सामार्थ्यादेव स वक्तव्यो न तु तन्त्रमध्यपातादिति नियतस्संभवति सामर्थ्यस्येतराग्निष्वपि संभवादित्यर्थः। अथानियत एव प्रसङ्गस्तत्राह—**अत एवेति। आयतनादिति। विवा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षायति** इत्यादिना आयतनबहिर्भावनिषेधात् इत्यर्थः। अथ त्वायतनगतस्यैव प्रसङ्गोऽस्त्वित्यत आह--**श्रौताग्निष्विति।** पाकादिलौकिकपदार्थानुष्ठाने प्रसङ्गे वारिते स्मार्तेषु स्थालीपाकादिषु तदप्रसक्तिं दर्शयति—**स्मार्तेष्विति।**

> कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।
> दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥ इति

याज्ञवल्क्यवचनेन स्मार्ताग्नेरेव विधानात् आहवनीयादिविधेर्यत्रानियता प्राप्तिः तत्रैव नियमकरणेन प्रवृत्तेरनियतप्राप्त्यविषये स्मार्ते आहवनीयादिप्राप्त्यनुपपत्तेरित्यर्थः। **यद्यपि विज्ञानेश्वरेण** प्रत्यहं यत्कर्म पाकादिलक्षणमिति व्याख्यानात् पाकादिष्वेव तद्विधानं प्रतीयते **तथापि** वचना-न्तरेण स्थालीपाके तद्विधानं द्रष्टव्यम्। **अत एव मांसीयन्तीति।** इदं **वाजसनेयिब्राह्मण-**वाक्यं आपस्तंबसूत्रकृता पशुबन्धप्रकरणे "मांसीयन्ति हवा अग्नयोऽजुह्वतो यजमानस्य, ते

यत्तु—'मांसं न पचेयुस्तस्मिन्नग्नौ यत्पचेयुः क्रव्यादं कुर्युः' इति मांसपाकप्रतिषेधोऽन्यपाकाभ्यनुज्ञार्थ इति, तत् 'तस्मिन्नेवाग्नौ न मांसं पचति यस्मिन्नाहुतीर्जुहोति' इति वाक्यान्तरानुसारादाहवनीये वपाश्रपणस्य विहितस्यायं निषेध इत्यसाधकम्।

वस्तुतस्तु—विकल्पापत्तेर्दाक्षिणाग्निकहोमविधिसन्निधौ पाठाच्च वाक्यद्वयमपीदं दक्षिणाग्न्यधिकरणकपत्नीव्रतश्रपणविषयम्। यदा हि रोगादिना मांसमेव व्रतकार्ये उपादीयते तदा तत्पाकस्यायं दक्षिणाग्नौ पर्युदासः।

---

यजमानमेव ध्यायन्ति यजमानँ सङ्कल्पयन्ति पचन्ति ह वा अन्येष्वग्निषु वृथामांसमथैतेषां नान्या मांसाशा विद्यते यस्य चैते भवन्ति तन्ततो नानीजानं पशुना संवत्सरोऽतीयात् आयुष्यो ह वा अस्यैष आत्मनिष्क्रयण" इत्येवं क्रमेण पठितम्। अस्यार्थः धूर्तस्वामिभिः कृतः—आधानेनाग्न्युत्पत्त्यनन्तरं तेष्वग्निषु मांसमजुह्वतोऽस्य यजमानस्य तेऽग्नयो मांसीयन्ति मांसमिच्छन्ति सर्वदा च कदायं मांसमस्माकं दास्यतीति प्रकारेण यजमानमेव ध्यायन्ति, यदा तु यजमानो वत्सरपर्यन्तमपि पशुना न यजते तदा तु यजमानं मारयितुं सङ्कल्पयन्ति यतः कारणात् वृथामांसं नाम लौकिकं मांसं अन्येष्वग्निषु लौकिकेषु पचन्ति स्वयमश्नन्ति च, तन्मांससंबन्धः कथमपि श्रौताग्नीनां नास्ति, अविहितकर्मणस्तेष्वनुष्ठानासम्भवात्; अतः कारणात् एतेषां श्रौताग्नीनां पशुबन्धं विना मांसाशा न विद्यते केवलं पशुबन्धमेव कामयन्ते; अतः कारणात् यस्य यजमानस्याग्नयो भवन्ति निष्पन्ना अग्नयो भवन्ति। ततः प्रभृति तं पशुनानीजानं अनिष्टवन्तं यजमानं संवत्सरो नातीयात् नातिक्रमेत् संवत्सरातिक्रमस्तेन यजमानेन न कार्यः कथंचित् संवत्सरमध्ये पशुबन्धः कर्तव्यः। यतस्तस्याकरणे यजमानं मारयितुं सङ्कल्पयन्त्यग्नयः। अत एवायं पशुबन्धः आयुष्यः आयुःकर्ता अत एवास्य यजमानस्य एष पशुः आत्मनो निष्क्रयणो भवतीति। **वाक्यान्तरानुसारादिति**। नायं मांसपाकप्रतिषेधः अन्यपाकाभ्यनुज्ञानार्थः; यत आहुतिसंयोगेन हेतुना निषेधो वाक्यान्तरेणोच्यते यस्माद्यत्र आहुतिः क्रियते तत्र मांसस्य वपारूपस्य आहवनीये विहितोऽपि पाकः निषिद्ध्यत इति तस्य हेतोः अन्यपाकनिषेधेऽपि अविशिष्टत्वात् न कस्यापि पाकः कर्तव्य इति तात्पर्यमित्यर्थः। **विकल्पापत्तेरिति**। आहवनीये हि वपायाः श्रपणं विहितं तस्यैवानेन प्रतिषेधे विकल्पापत्तेरित्यर्थः। **होमविधीति**। या सरस्वति वेषमतीति मन्त्रेण दक्षिणाग्नौ होमो विहितः तद्विधिसन्निधावित्यर्थः। **पर्युदास इति**। मांसभिन्नमन्वाहार्यादि पचेयुर्यदि मांसं पचेयुस्तर्हि तमग्निं क्रव्यादं श्मशानाग्निं कुर्युरिति मांसपाकनिन्दया विधेयहोमस्तुत्यर्थोऽर्थवाद इत्यर्थः। एवमस्मिन्नधिकरणे आहवनीयादीनां लिङ्गविनि-

## (२)—सवनीये छिद्रापिधानार्थत्वात् पशुपुरोशो न स्यादन्येषामेवमर्थत्वात ॥ ८ ॥ क्रिया वा देवतार्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥

**सवनीये पशुपुरोडाशोऽतिदेशेन प्रातस्सवनीयहविर्भिः प्रसज्यते। प्रकृतौ विहितस्य 'सुषिरो वा एतर्हि पशुर्यर्हि वपामुत्खिदति यद्व्रीहिमयः पुरोडाशो भवति छिद्रस्यापिहित्यै' इत्यर्थवादाच्छिद्रापिधानार्थत्वं, सवनीयहविषामपि च 'अनुसवनं सवनीया निरुप्यन्ते अपिहित्या अच्छिद्रतायै, इत्यर्थवादादेव छिद्रापिधानार्थत्वम्। अतश्च पशुपुरोडाशकार्यस्य छिद्रापिधानस्य सवनीयहविर्भिरेव प्रसङ्गात्सिद्धेस्सवनीयपशौ पशुपुरोडाशो न कार्यः। वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यंदिने इति** लिङ्गाच्च **विकल्प इति प्राप्ते—**

**उभयत्र प्रत्यक्षविरोधादार्थवादिकछिद्रापिधानार्थत्वस्यानपेक्षितस्यानुपपत्तेः पशुपुरोडाशस्य देवतासंस्कारार्थत्वस्य दशमे स्थापितत्वाच्च आरादुपकारकैस्सोमाङ्गैस्सवनीयहविर्भिः पुरोडाशकार्यसिद्धेरभावात् प्रसङ्गानुपपत्तिः। एवं च 'पुरोडाशेन माध्यन्दिने' इत्यस्यापि न पाक्षिकत्वकल्पनेति न विकल्पः। सिद्ध एव चायमर्थः** कल्पसूत्रकाराणां **न्यायोपन्यासपूर्वकं विकल्पमभिदधानानां मतनिराकरणाय**ोक्तः।

---

योगे निरस्ते यत्र "अग्निमुपनिधाय स्तुवीत"इति सामान्येन विनियोगस्तत्राहवनीयादिग्रहणनिरासार्थं साप्तमिकमधिकरणमित्युक्तं तन्त्ररत्ने ।

---

**सवनीये छिद्रापिधानार्थत्वात्।**

**सुषिरो वेति।** सुषिशब्दाच्छिद्रवचनात् उषसुषिमधुमधोरिति सूत्रेण मत्वर्थीयो-रप्रत्ययः पशोर्वपोद्धरणेन छिद्रं यदभूत् तस्य छिद्रस्य पिधानार्थं मध्ये व्रीहिमयः पुरोडाशः कार्य इति पशुपुरोडाशस्य छिद्रपिधानार्थत्वमवगम्यत इत्यर्थः। **लिङ्गाच्चेति।** पुरोडाशेनेत्येकवचनाम्नान-माध्यन्दिनसवनमात्रनिर्देशाभ्यां वपायागप्रचारमध्यतनदेशत्वाच्च नैतल्लिङ्गं सवनीयहविःपरतया नेतुं शक्यमिति विकल्प इत्यर्थः। **कल्पसूत्रकाराणामिति।** तथा च न्यायोपन्यासपूर्वकमापस्तम्बवचनं स "कृताकृत" इति। **उक्त इति।** तेन बाधविचारोप्ययं प्रयोगपरिमाणफलत्वात् प्रसङ्गादुक्त इत्यर्थः।

---

(३)—हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता मा कुर्याद्विद्यमानत्वात् ॥ ११ ॥

दर्शपूर्णमासयोः हविष्कृदाह्वानमवघातार्थं उत्करदेशप्रापणफलकं विहितं न तत्साान्नाय्याद्यर्थम्। कृत्वाचिन्तया तद्यदि सर्वार्थं तदा पशावपि पात्रप्रोक्षणानन्तरमतिदेशेन प्राप्यते, अतश्च तदतिदेशेन सवनीयपशावपि पात्रप्रोक्षणानन्तरमाहूता हविष्कृत् तन्मध्यपातिनां प्रातस्सवनिकमाध्यन्दिनसवनिकसवनीयहविषामप्युपकरोतीति न तदर्थं पृथगाह्वातव्या। सर्वार्थत्वपक्षे हि हविष्कृदाह्वानं नोत्करदेशप्रापणफलकं, अपि तु विहारदेशप्रापणफलकं, अतश्च विहारप्रापितायास्तस्याः कार्यनिष्पत्तिपर्यन्तं सत्त्वाद्युक्त एव प्रसङ्गः।

यदि ह्यवान्तरप्रकरणादवघातमात्रार्थं हविष्कृदाह्वानमुत्करदेशप्रापणफलकं हविष्कृत्समाख्या चावघातकरणमात्रेणोपपन्ना, तदा एकावघाते कृते पुनः जघनेन गार्हपत्यमुपविष्टायास्तस्या द्वितीयावघातवेळायां पुनरुत्करदेशप्रापणफलकमाह्वानमावर्तते इत्युक्तमेवैकादशे। सर्वार्थत्वपक्षे तु विहारदेशप्रापणफलकस्याह्वानस्य सकृत्करणेनैव कार्यसिद्धेर्युक्तः प्रसङ्गः।

---

हविष्कृत्सवनीयेषु न स्यात्।

तदा पशावपीति। दैक्ष इति शेषः। अपि त्विति। यद्युत्करदेशप्राप्तिरेव फलं तदा तद्देशे क्रियमाणाज्यसान्नाय्यार्थत्वं न सिद्ध्येत् अतस्सर्वार्थत्वसिद्धये विहारदेशप्राप्तिरेव फलमित्यर्थः। कार्यनिष्पत्तीति। आहूतायास्तस्या हविष्कृत्समाख्यया यद्यपि हविष्करणं कार्यं तच्च नावघातमात्रेण भवति किंतु पाकपर्यन्तानुष्ठानेन, अतश्च तृतीयसवनगतांगपाकपर्यन्तकार्यनिष्पत्तिपर्यन्तं तस्याः सत्वात् तन्मध्यपतितेषु प्रातस्सवनिकमाध्यन्दिनसवनिकहविष्षु युक्तः प्रसङ्गः। अत एव तार्तीयसवनिकहविषां मध्यपाताभावादप्रसङ्ग उत्तराधिकरणे निराकरिष्यते। अथ वा नैव पाकपर्यन्तमेव कार्यं विवक्षितं, अपितु विहारदेशप्राप्ताया यदेव कार्यमापतति तदेव सर्वं कार्यं तस्याः इतरथा सान्नाय्यादौ अवघाताभावेन सर्वार्थत्वस्यैवानुपपत्तिरित्यभिप्रेत्याह –यदि हीति। एकावघाते इति। नानाबीजेष्वेकबीजावघाते सति द्वितीयबीजावघातवेलायां पुनराह्वानमित्यर्थः। सिद्धमेवेदमुत्तरविवक्षया स्मारितमिति युक्तपदेन सूचितं।

---

(४)—पशौ तु संस्कृते विधानात् ॥ १२ ॥ योगाद्वा यज्ञाय तद्विमोके विसर्गस्स्यात् ॥ १३ ॥

कृत्वाचिन्तार्थमेव तार्तीयसवनिकसवनीयहविष्षु सौम्यचरावाश्विनद्विकपाले च सवनीयपशुपाकोत्तरं क्रियमाणे भेदेन पुनराह्वातव्या, हविष्कृत्समाख्यया तस्या हविष्करणमात्रप्रयोजनकत्वेन वृत्ते पशुपाके तस्या अप्रवृत्तत्वादिति प्राप्ते—

समाख्याया उपलक्षणत्वात् सहायकरणमात्रार्थं सा। अतः पाके वृत्तेऽपि आसवनीयपशुतन्त्रं तस्यास्सत्त्वान्नाह्वातव्या।

वस्तुतस्तु—उपलक्षणत्वे प्रमाणाभावात् हविःकरणार्थत्वेऽपि कृतेऽपि कार्ये पत्नीसंयाजोत्तरमुत्थानविधानात् आपत्नीसंयाजान्तं तस्या विहारदेशे सत्त्वाद्युक्त एव प्रसङ्गः।

---

(५)—निशि यज्ञे प्राकृतस्यापवृत्तिस्स्यात् प्रत्यक्षशिष्टत्वात् ॥ १४ ॥ कालवाक्यभेदाच्च तन्त्रभेदस्स्यात् ॥ १५ ॥ वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥ तन्त्रमध्याविधानाद्वा तत्तन्त्वा सवनीयवत् ॥ १७ ॥ वैगुण्यादिध्मबर्हिर्न साधयेदग्नयन्वाधानं च यदि देवतार्थम् ॥ १८ ॥ अग्नयन्वाधानं च यदि देवतार्थम् ॥ १९ ॥

---

पशौ तुसस्कृते।

सौम्यचराविति —यद्यपि सौम्यचरुरेवाग्निष्टोमे प्रकृतावाम्नातस्तथापि अतिरात्रे आश्विनस्याम्नानात्तदुक्तिः। उत्थानविधानादिति। पत्नीसंयाजपर्यन्तमवस्थानस्यादृष्टार्थतापरिहाराय समाख्याप्रापितां हविष्करणमात्रार्थतामप्यतिक्रम्य ततः परमपि पत्नीसंयाजान्तं यावत्कार्यजातं तत्साहाय्यकरणार्थताप्यवगम्यते इति हविष्कृत्समाख्या गौण्येव युक्तेत्यर्थः।

---

काम्येष्टिकाण्डे '**अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत् यो रक्षोभ्यो बिभीयात्' इति यागं विधाय तस्य 'अमावास्यायां निशि यजेत' इत्यनेन कालो विहितः।** कालद्वय**विशिष्टप्रयोगविधानाच्च न वाक्यभेदः। तदिह निशीष्टौ दार्शिकं तन्त्रं प्रसज्यते न वेति चिन्तायां—**

**पशुपुरोडाशवत्तन्त्रमध्ये पाताभावान्न प्रसङ्गः। न ह्यत्र प्रकरणमस्ति येन तन्त्रमध्यपातश्शङ्क्येत।** नाप्यमावास्याशब्दस्य **कर्मवचनत्वाद्वाक्येनैव तन्त्रमध्यपातः, तस्य अमावास्यायामपराह्ण** इतिवत् **कालवाचित्वेन कर्मलक्षणानुपपत्तेः।** न च शब्देन **तन्त्रमध्यपातानवगमेऽपि दर्शप्रयोगस्य** नियमेन **दिवाऽऽरब्धत्वात् रात्रौ क्रियमाणाया अस्यास्तन्त्रमध्यपातावश्यम्भावः,** अपराह्णपर्वप्रतिपत्सन्धौ **रात्रिकालीनामावास्यायामन्वाधानपूर्वदिने क्रियमाणाया अस्यास्तत्तन्त्रमध्यपातावश्यंभावनियमाभावात्। अतोऽवश्यं साङ्गाया एव प्रयोगविधानान्नास्यां प्रसङ्ग इति प्राप्ते—**

---

**निशियज्ञे प्राकृतस्याप्रवृत्तिः स्यात् प्रत्यक्षशिष्टत्वात्।**

यदि दीक्षणीयादीनां सोमप्रकरण इवास्या दर्शप्रकरणे पाठो भवेत् तदा तद्वदेव तन्त्रमध्यपातसंभवात् प्रसङ्गशङ्कापि घटेत न त्वेतदस्तीति सूचयितुं प्रकरणान्तरताद्योतनपूर्वकं विषयवाक्यमुदाहरति—**काम्येष्टिकाण्डे** इति। अमावास्यानिशारूपकालद्वयस्य तद्यागोद्देशेन विधाने वाक्यभेदापत्तिं निवारयति—**कालद्वयेति।** कालद्वयाधिकरणकप्रयोगे विहिते अरुणैकहायनीन्यायेन द्वयोः परिच्छेद्यपरिच्छेदकभावेन पार्ष्ठिकोऽन्वयः सिद्ध्यतीत्यर्थः। नन्वमावास्याशब्दस्य कर्मवचनत्वेन कर्मणोऽमूर्तस्याधिकरणत्वं तत्तन्त्रमध्यानुष्ठानेनैव सिद्ध्येदिति तन्त्रमध्यपातात् प्रसङ्गमाशङ्क्य निराकरोति—**नापीति। अपराह्ण इतिवदिति।** यथा तत्रामावास्याकर्मणोऽधिकरणत्वेऽपराह्णस्य तत्र परिच्छेदकत्वेनान्वयानुपपत्त्याऽपराह्णपदसामानाधिकरण्यात् कालपरत्वमाश्रितं तदानीं व्यापकपरिछेदकतया व्याप्यकालस्यान्वयसंभवात्, तद्वदिहापि निशीति पदसामानाधिकरण्यात् कालपरत्वमेव युक्तमित्यर्थः। लक्षणापत्तिरपि दोषः कर्मलक्षणेति पदेन सूचितः। सिद्धान्तयुक्तिमनूद्य दूषयति--**न च शब्देनेति। नियमेनेति।** द्व्यहकालसाध्यत्वेनेति शेषः। **अपराह्णपर्वेति। अयमर्थः** रक्षोभयनिमित्ते विधीयमानेयमिष्टिः यद्यपि निमित्ताव्यवधानेनैवानुष्ठेयत्वेन प्राप्ता तथापि निश्यवच्छिन्नामावास्याकालस्य स्वतन्त्रस्य विधानात् तस्मिन् काले कर्तव्या। न हि स कालो नियमेन दर्शतन्त्रमध्य एव पतति अपराह्णे पर्वप्रतिपदोः सन्धौ "अपराह्णे यदि वा रात्रौ यदि पर्व समाप्यते। उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते"

तन्त्रमध्यपातनियमाभावेऽपि सर्वत्र प्रकृतौ विकृतौ वा अङ्गविधिषु अन्यत उपकारालाभे अङ्गानि कुर्यादित्येवमेव लाघवेन विधिकल्पनात् निशीष्टावपि यदैव तन्त्रमध्यपातस्तदैव प्रसङ्गः। न चैवमपि निशीष्टौ पूर्वकृतान्वाधानादिपदार्थप्रसङ्गेऽपि करिष्यमाणप्रयाजादिजन्योपकारस्यान्यतोऽलाभात्तदंशे न प्रसङ्गो वैपरीत्यापत्तिर्वेति वाच्यं, निशीष्ट्यर्थं क्रियमाणप्रयाजादिजन्यापूर्वाणां तत्परमापूर्वेणैव तद्ब्राह्मणतर्पणान्ते उत्पन्नेन नाशावश्यंभावेन वैपरीत्यकल्पनानुपपत्तेः। अतो दर्शप्रयोगविधानादवश्यानुष्ठाप्यानां तेषामेवोपजीवनेन निशीष्टिप्रयोगविधिर्लाघवेन दर्शब्राह्मणतर्पणान्त एव स्वपरमापूर्वोत्पत्तिमनुमन्यते। अतश्च युक्त एव तत्र कादाचित्कोऽपि प्रसङ्गः। आवश्यकश्चायमग्निप्रणयनव्रतोपायनाग्नयन्वाधानाद्यंशे भवतोऽपि।

यानि तु इध्माबर्हिः प्रभृतीनि अशक्यप्रसङ्गानि तानि त्वावर्तन्त एव। नचैवं विकृत्यन्तराणामपि सौर्यादीनां दर्शार्थान्वाधानस्य प्रातरेव कृतत्वेन तत्तन्त्रमध्यपातात्र-

---

इति लौगाक्षिवचनात्। दर्शान्वाधानस्य सन्धिदिने करणे सति तद्दिने रात्रौ प्रतिपदस्सत्वेनामावास्यारूपकालाभावात् निशीष्ट्यनुष्ठानाप्रसक्तेः। अत एवान्वाधानदिनात् पूर्वदिन एव रात्रावमावास्येति तत्रैव निशीष्ट्यनुष्ठानात् नावश्यं नियमेन तस्या दर्शतन्त्रमध्यपातप्रसक्तिः। नहि प्रवृत्तदर्शतन्त्रस्य यन्मध्यगतरक्षोभयं तदेव निमित्तमित्यत्र प्रमाणमस्तीति नियतप्रसङ्गासंभवेपि यदैव तन्त्रमध्यपातस्तदानीं तु भवेदेव प्रसङ्ग इत्यभिप्रेत्य सिद्धान्तमाह—तन्त्रमध्यपातनियमाभावेऽपीति। यदैवेति। यदाऽमावास्यायास्तदुत्तरप्रतिपदश्च सूर्योदयास्तमयस्पर्शित्वं तदाऽन्वाधानस्य प्रातः पर्वणि काललाभात् तदुत्तरप्रतिपदि यागसत्वात् अन्वाधानरात्रावमावास्यायां निशीष्ट्यनुष्ठानं प्रसक्तं तदैव प्रसङ्ग इत्यर्थः। पूर्वकृतान्वाधानेति। यत्तु वैगुण्यादिध्माबर्हिर्न साधयेत् अग्न्यन्वाधानं च यदि देवतार्थमिति सूत्रकृतान्वाधानस्य प्रसङ्गो नेत्युक्तं तत्तस्य देवतापरिग्रहार्थत्वपक्षाभिप्रायेणेति भाष्य एवोक्तमिति न विरोधः। स्वपरमापूर्वोत्पत्तिमिति। पशुपुरोडाशप्रयोगविधिः पशुपुरोडाशयागपरमापूर्वमिव पश्वर्थानुष्ठितपत्नीसंयाजोत्तरमित्यर्थः। आवश्यकश्चायमिति। अयं शब्देन कादाचित्कः प्रसङ्गः परामृश्यते। नहि निशीष्ट्यर्थं पुनः प्रणयनाद्यनुष्ठेयं भवति। प्रणीतस्य पुनः प्रणयनासंभवात् गृहीतव्रतस्य पुनर्व्रतग्रहणासंभवात् आद्यसमिन्धनाभावेनान्वाधानानुपपत्तेश्चेत्यर्थः। इध्माबर्हीति। अग्निसमिन्धनार्थं प्रतिपदि कृतेन इध्मेन निशीष्ट्यग्निसमिन्धनं न युज्यते। एवं बर्हिरास्तरणमपि प्रतिपदि क्रमतः प्रसङ्गासंभवात् अवैगुण्यायावृत्त्या कार्याण्येवेत्यर्थः। प्रभृतिशब्देन सामिधेनीनां

द्वयस्भावात् प्रसङ्गापत्तिः। सौर्यादिप्रधानेषु आतिदेशिकस्यापि प्रातःकालस्य सत्त्वेनाङ्ग-गुणविरोधन्यायेन बाधानुपपत्तेः दर्शाद्यर्थान्वाधान एव तद्बाधस्यौचित्येन विकृति-करणोत्तरमेव दर्शपूर्णमासारम्भात् प्रसङ्गानापत्तेः।

नचैवमपि यत्र साकमेधादावाद्येष्टावेवाग्निप्रणयनं कृतं तत्रेतरेष्ट्याद्यौ प्रयाजादिप्रसङ्गा-पत्तिः। तत्र पूर्वेष्टिप्रयोगस्य समाप्तावपि वचनात्तेष्वेवाग्निषु उत्तरेष्टिकरणेऽपि प्रसङ्गाना-पत्तेः। अत एव तादृशस्थले उत्तरेष्टिषु प्रणयनस्य बाध एव। व्रतोपायनं तु तत्र सर्वत्र प्रत्येकमेव, इतरथा व्रतविसर्गस्य समन्त्रकस्य विहितस्य सर्वान्ते करणेनाद्येष्टिपरमा-पूर्वस्यापि सर्वान्त एवोत्पत्तौ प्रयाजादिजन्यापूर्वाणां सत्त्वेन उत्तरेष्टिषु तेषां प्रसङ्गापत्तेः।

कल्पसूत्रकारास्तु आदौ व्रतोपायनमन्ते च व्रतविसर्गं कुर्वन्ति।

---

ग्रहणम्। प्रातःकालस्येति। य इष्टयेति विहितकालेन द्व्यहकालत्वबाधेन सद्यस्कालत्वेऽपि "प्रातरुक्तो मनीषिभिः" इत्यादिना प्रकृतौ विहितस्य प्रातःकालस्य इहातिदेशतः प्राप्तस्य प्रधानाङ्ग-त्वेन प्राबल्यात् प्रकृत्यन्वाधानस्याङ्गभूतप्रातःकालस्यैव बाधाद्विकृत्यनन्तरमेव प्रकृत्यन्वाधानमिति न तन्त्रमध्यपात इत्यर्थः। न चैवमपीति। निशीष्टावावश्यकेन प्रणयनादिप्रसङ्गेन समान-न्यायात् करिष्यमाणानां प्रयाजाद्यङ्गानां प्रसङ्गस्तदा प्रणयनवदेव पूर्वेष्टौ पूर्वं कृतानां प्रयाजादीनां सुतरामुत्तरे प्रसङ्ग आपद्येतेति एवं शब्दस्यार्थः। समाप्तावपीति। नहि उत्तरेष्टिषु प्रणयनस्य पूर्वकृतस्य प्रसङ्गः येन तन्न्यायेन इतराङ्गानामपि प्रसङ्ग आपद्येत पूर्वेष्ट्यङ्गापूर्वाणां पूर्वेष्टिपरमा-पूर्वेणैव नाशादपि तु वचनात् प्रणीतेष्वेव पूर्वाग्निषूत्तरेष्ट्याद्यनुष्ठानं क्रियते। अतो न कस्यापि प्रसङ्ग इत्यर्थः। अत एवेति। वचनादेवेत्यर्थः। एतच्च बौधायनमतेनोक्तम्। आपस्तंबानु-यायिनां तु प्रतीष्टि प्रणयनानुष्ठानात् तदप्येकविहारानुष्ठेयेष्टिपञ्चक एव। अत एव विहारान्तरे अनुष्ठेयायां पित्र्येष्टौ महाहविषि चावश्यकं पृथक् प्रणयनमनुतिष्ठन्त्येवेति ध्येयम्। कल्पसूत्रकारास्त्विति। एतदपि बोधायनपरं आपस्तंबानामुक्तार्थस्यैवानुष्ठानात्। अत्र च निशीष्टेः भेदनहोमवत् प्राकरणिकपाठाद्यभावेन क्रत्वङ्गत्वानुपपत्तेः रक्षोभयजनिताशुचिपरिहारार्थ-त्वमङ्गीकृत्य रक्षोभयनिमित्ते अशुचित्वादेवामावास्यातन्त्रारंभायोगात् तस्याममास्यायां निशीथे निशीष्टेर्नैमित्तिकत्वादादावनुष्ठानं पश्चादमावास्यातन्त्रस्य उत्कर्षं च वदन्ति याज्ञिकाः। तेषां कदापि तन्त्रमध्यपाताभावात् नैव प्रसङ्ग इति ध्येयम्।

---

## (६)—आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेन ॥ २० ॥ सकृदारम्भसंयोगात् ॥ २१ ॥ स्याद्वा कालशेषभूतत्वात् ॥ २२ ॥ आरम्भविभागाच्च ॥ २३ ॥

नावमिकाधिरणोक्तरीत्या आरम्भणीयाया दर्शपूर्णमासारम्भाङ्गत्वात् विकृतावप्यतिदेशेन तदारम्भाङ्गत्वोपपत्तेः कर्तव्यैवान्वारम्भणीया। न च तस्याः सकृत्कृताया एव प्रकृतौ सर्वप्रयोगोपकारकत्वादन्त्यदर्शपूर्णमासप्रयोगं यावत् एतज्जन्योपकारावस्थानप्रतीतेः तन्मध्यक्रियमाणविकृतिष्वप्युपकारकत्वोपपत्तेः प्रसङ्गसिद्धिराङ्का, अस्या दर्शपूर्णमासारम्भाङ्गभूताया द्वितीयादिप्रयोगानङ्गत्वात्। विस्तरेण चायमर्थो नवम एव निरूपितः। सर्वप्रयोगाङ्गत्वं वदतां तन्त्ररत्नकारादीनां च मतं निराकृतम्।

अतोऽन्वारम्भणीयाजन्यस्योपकारस्योक्तविधारम्भे कृत एव नाशादन्त्यदर्शपूर्णमासप्रयोगयावदवस्थाने प्रयोजनाभावात् तत्तद्विकृत्यारम्भाङ्गतयाऽप्यन्वारम्भणीया पृथगेव कार्या। तन्त्ररत्नकारादीनां तु तस्यास्सकृत्कृताया एव सर्वप्रयोगाङ्गत्वमिच्छतां विकृतौ प्रसङ्गापत्तिरनिवार्यैव।

---

## (७)—विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मकत्वम् ॥ २४ ॥

काम्येष्टिकाण्डे 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानाः तत्संसृष्टं प्राजापत्यं पशुकामः' इति श्रुतम्।

---

अन्वारंभणीयाविकृतौ न स्यात प्रकृतिकालमध्यत्वात्।

स्पष्टार्थमेतत्। यत्त्वस्मिन्नधिकरणेऽन्ते तन्त्ररत्नकारस्य सर्वप्रयोगाङ्गत्ववादिन[1] उपालंभकरणं पूज्यपादानां तन्नवमे पक्षान्तरेणोपपादितस्य सर्वप्रयोगाङ्गत्वस्य भवदुक्तदूषणापत्त्यैव स्वयमेव तेन निरस्तत्वात् स्पष्टमेव तेनैतदधिकरणे तस्य पूर्वपक्षतया उपन्यस्तत्वाच्च वृथैवेति ध्येयम्

---

विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् स्वधर्मत्वं।

वार्तिककारमतेनोदाहरणं दर्शयति—काम्येष्टिकाण्ड इति। चित्रेष्टिवदेवेति। यथा चित्रेष्टावनेके यागास्तथाऽष्टमे मया निरूपितं तद्वदिहाप्यनेके यागा इत्यर्थः। एतेन चित्रेष्टावप्ये-

---

1. A. दित्वोपा

**तत्र चित्रेष्टिवदेव दध्यादिद्रव्यका अनेके यागाः। तत्र आद्योऽन्त्यश्च धानायागः आग्नेय-विकारः,** स उभयकालकत्वादविरुद्धः। **ऐन्द्र एकादशकपाल ऐन्द्राग्नविकारः। दधियागो दधियागस्यैव। तयोरमावास्याधर्माः। मधुघृतोदकानां तूपांशुयाज**विकारत्वात् **पौर्णमासी-धर्माः।**

**तदिह सप्तयागेषु** सहक्रियमाणेषु **आज्यभागयोर्वार्त्रघ्नीवृधन्वतीमन्त्राणां, हविरभिमर्शने चतुर्होतृपञ्चहोतृमन्त्रयोश्च विरोधे मुख्यत्वेनासञ्जातविरोधित्वात् अमावास्याधर्मा इति प्राप्ते—**

**मुख्यधर्मानुग्रहस्य प्रथममवगतावपि भूयोनुग्रहानुरोधेन** प्राप्तबाधविधया **मुख्यस्यै-वाल्पसङ्ख्यस्य बाधमङ्गीकृत्य भूयोधर्मजन्योपकारोपजीवित्वावगतेः पौर्णमासीविकाराणां भूयसां तन्त्रित्वं अल्पानां च विरुद्धधर्मविषये प्रसङ्गित्वम्।** अविरुद्धानावृत्तधर्मांशे **त्वगृह्यमाणविशेषत्वात् सर्वेषां तन्त्रित्वमेव,** आवृत्तधर्मांशे त्वावृत्तिः। **इदं चोपांशुयाजस्या-मावास्यायामभावपक्षाभिप्रायेणोदाहरणम्। उभयत्र** तत्सत्त्वे **तूदाहरणान्तरं मृग्यम्।**

**यत्तु भाष्यकारेण 'पञ्चदशरात्रे अग्निष्टुत् प्रथममहस्तस्य नाम्ना अग्निष्टुद्यागविकार-त्वादाग्नेयी सुब्रह्मण्या। ज्योतिर्गौरायुरिति त्र्यहः तेषामपि नाम्नैवैकाहकाण्डपठितज्योति-**

---

कयागपक्षं संख्याधिकरणे साधयतो न्यायसुधाकारस्यैतदधिकरणगताज्यभागमन्त्रोदाहरण-प्रदर्शनपरवार्तिकविरोधो दर्शितः। यदि चित्रेष्टौ यागैक्यं द्रव्यभेदाच्च द्रव्यधर्मातिदेशभेदोऽङ्गीक्रियते तदा तेन न्यायेनेहापि यागैक्यापत्तावभिमर्शनस्य द्रव्यधर्मत्वात् समन्त्रकस्य दधिघृतोदकेषु अति-देशभेदेपि आज्यभागयोरारादुपकारकयोः एकयागे अतिदेशभेदाभावात् तन्मन्त्रयोर्भूयोधर्म-त्वाभावेन विरोधोदाहरणत्वायोगादिति। **स उभयकालत्वादिति।** आग्नेयस्य पौर्णमास्यमावास्यो-भयकालीनत्वात् तद्विकृतिष्वन्यतरकालीनस्य विकल्पेनातिदेशस्याष्टमे प्रसाधनात इहापि मधुघृतो-दकयागानुरोधेन पौर्णमासीस्थाग्नेयातिदेशस्यैव स्वीकारान्न विरोध इत्यर्थः। **उपांशुयाजविकार-त्वादिति।** तस्याष्टमे प्रसाधनादित्यर्थः। **सह क्रियमाणेष्विति।** एकपशुरूपफलसाधनत्वेन एकप्रयोगविधिना परिग्रहात् सह क्रियमाणेष्वित्यर्थः। **वार्त्रघ्नीति।** वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायां चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यामिति वचनैः प्रकृतौ व्यवस्थया विहितानां मन्त्राणां तत्तद्विकृतिषु व्यवस्थया प्राप्तेषु विरोध इत्यर्थः। **प्राप्तबाधविधयेति।** यथाऽतिदेशतो भ्रान्तिप्राप्तस्य पूर्वस्यापि वैकृतेन बाधे प्राप्तबाधः तथेहापि मुख्यत्वेन भ्रान्तिप्राप्तानां धर्माणां भूयस्त्वानुग्रहेणौत्तरकालीनेनापि बाधः प्राप्तबाध इत्यर्थः। **अविरुद्धेति।** प्रयाजाद्यंश इत्यर्थः। **आवृत्तधर्मांशे इति।** सन्निपत्योपकारकांश इत्यर्थः। **तत्सत्त्वेत्विति।** अमावास्यायामुपांशुयाजसत्त्वे मधुघृतोदकयागानां तद्विकारत्वस्यैवाङ्गीकारेणाग्नेय-

**रादिधर्माः तेनैन्द्री सुब्रह्मण्या। इतरेष्वेकादशसु चोदनालिङ्गातिदेशेनैव ऐन्द्री। तदिह सुत्याकालीनसुब्रह्मण्याह्वानस्य तत्तद्दिनभेदेनैवानुष्ठानात् न कश्चिद्विचारः। आतिथ्योपसत्कालीनसुब्रह्मण्याह्वानस्य तु सर्वसुत्यार्थं तन्त्रत्वस्य** साधितत्वात् **विरोधप्रसक्तौ भूयोऽनुग्रहाय ऐन्द्री कार्या' इत्युक्तम्, तत्सुब्रह्मण्याह्वानस्य देवताप्रकाशनार्थत्वात् इन्द्रप्रकाशेन चाग्निप्रकाशनरूपकार्यसिद्धेरभावात् भेदेनैवोभयदेवत्यसुब्रह्मण्याकरणावगतेरुपेक्षितम्।**

अत एवैकादशाधिकरणं **सम्प्रतिपन्नदेवताकसुब्रह्मण्याविषयम्। न चैवमभिमर्शनस्यापि द्रव्यभेदेन भिन्नानुष्ठानापत्तेः प्रसङ्गसिद्ध्यनापत्तिः। 'आसन्नानि हवींष्यभिमृशति' इति वचनान्तरविहिताभिमर्शनानुवादेन तत्तद्धविरुद्दिश्य 'चतुर्होता' इत्येताभ्यां मन्त्रविधानेनानेकेषामपि हविषां सकृदभिमर्शनसम्भवे मन्त्रमात्रानुरोधेन तदावृत्तौ प्रमाणाभावात् प्रसङ्गसिद्ध्युपपत्तेः। अत एवासम्भवे यत्राभिमर्शनस्यावृत्तिः तत्र स एव मन्त्र इति न प्रसङ्गः।**

---

## (८) मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २५ ॥ तथा चान्यार्थदर्शनम् ॥

---

यागविकारयोरिवाविरोध एव धर्मविषय इति नोदाहरणत्वं संभवतीति भावः। **साधितत्वादिति।** सुब्रह्मण्या तु तन्त्रमित्येकादशतृतीयपादाधिकरण इति शेषः। **अत एवेति।** यतस्तत्तद्देवताप्रकाशनरूपकार्यभेदस्य तन्त्रेण करणेऽनिष्पत्तिः अतस्तत्रत्यस्तन्त्रविचारः एकदेवत्यसुब्रह्मण्याविषय एवेत्यर्थः —**अनेकेषामपीति**—यथैव सन्निपात्यपि प्रोक्षणं पात्रेषु सकृदेव संभवान्नावर्तते एवमिदमभिमर्शनमपि सन्निकृष्टानां हविषां सकृदेव संभवात् नावर्तते। तत्र सकृत् क्रियमाणे मन्त्रयोः पाठे भूयसामनुग्रहः कार्य इत्यर्थः। **तत्र स एवेति।** यद्यागीयहविरभिमर्शनमसंभवादावर्तनीयं तद्यागीयातिदेशप्राप्तोऽन्यतरमन्त्र इति न प्रसङ्ग इत्यर्थः।

---

### मुख्यं वा पूर्वचोदनाल्लोकवत्

अत्र शास्त्रदीपिकायां आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे सरस्वतीमाज्यस्य यजेतेत्यध्वरकल्पावाक्यमुदाहृत्याग्नावैष्णवस्यौषधद्रव्यकत्वात् द्विदेवत्यत्वात् द्वादशकपालत्वेन ऐन्द्राग्नविकारत्वमुक्तं, तत्र प्रकाशकारैराद्यो हेतुराज्यसान्नाय्याभ्यां वैषम्याय, द्वितीय आग्नेयात् तृतीयोऽग्नीषोमीयात् वैकल्पिकैकादशकपालात् इति व्याख्याय द्वादशापराह्ण इत्यपपाठः अध्वरकल्पायां हि मध्याह्ने एकादशकपालाज्ये अपराह्णे द्वादशकपालाज्ये तदत्राद्यमेव

**यत्र तु समसङ्ख्याकयोर्विरोधः**, यथा अध्वरकल्पायां '**आग्नावैष्णवं द्वादशकपालं सरस्वत्याज्यभागाऽपराह्णे**' **इति**। अत्र हि **द्वादशकपालत्वादाद्यः ऐन्द्राग्नविकारः, तस्यापि वैकल्पिकद्वादशकपालत्वात्**। **सरस्वती** तु पूर्ववत्। **तत्राज्यभागाभिमर्शनमन्त्रयोरनियमः, परस्य वा प्राबल्यमिति प्राप्ते**—

सत्यपि **भिन्नवाक्यत्वे उभयत्र वाऽतिदेशकल्पनावश्यम्भावे** अन्यत उपकारलाभनि**मित्तस्य प्रसङ्गस्याद्येऽसम्भवेनान्त्य एव पुरस्स्फूर्तिकत्वात्** आद्य एव **धर्मानुग्रहात् तन्त्रित्वं, अन्त्ये च तद्बाधात्प्रसङ्गः**। वृत्तिकारान्तरैः **भूयस्त्वं न मुख्यत्वस्यापवादकं, किन्तु पशुकामेष्ट्यामेव भूयस्त्वेन पूर्वपक्षमभिधाय मुख्यत्वेन सिद्धान्तयित्वा ऐकाधिकरण्येन सूत्रद्वयं व्याख्येयमित्युक्तं**, तत् लोके **प्रथममल्पपुरुषावरुद्धस्यापि दुर्गस्य पश्चादागतैरपि बहुभिर्बाधदर्शनादुपेक्षितम्**।

---

द्वन्द्वमुदाहरणमित्युक्तं, अनेन चापराह्णकालीनाग्नावैष्णवस्य नियमेनाग्नीषोमीयविकारत्वात् तत्र द्वन्द्वता न संभवतीत्युक्तं भवति। तदेतदयुक्तमिति सूचयन् भाष्योदाहृतं द्वादशकपालवाक्यमेवोदाहरति—**यथेति**। तामेवायुक्ततां दर्शयति—**अत्रहीति**। **अयमर्थः** यद्येकादशकपालत्वेनैव ऐन्द्राग्नविकारत्वं माध्याह्निकस्योच्यते तदाऽग्नीषोमीयस्याप्येकादशकपालत्वात् अग्नीषोमीयविकारत्वं दुर्निवारमेव। प्रत्युत पञ्चमे स्वयमेव चतुरक्षरतद्धितान्तपदवत्त्वसादृश्यादग्नीषोमीयविकारत्वमेवोक्तमिति तद्विरोधोऽपि। यदा त्वैन्द्राग्नविकारत्वं वैकल्पिकमङ्गीकृत्योदाहरणत्वमुच्येत तदाऽऽपराह्णिकस्य द्वादशकपालस्यापि ऐन्द्राग्ने द्वादशकपालत्वैकादशकपालत्वयोः विकल्पादैन्द्राग्नविकारत्वं वैकल्पिकमङ्गीकृत्य शक्यत एव द्वन्द्वतोपपादयितुं, यस्मिंस्तु पक्षे उभयत्रापि अग्नीषोमीयविकारत्वं तदा उभयमतेपि नान्यतरत् उदाहरणमिति समानमेव। तदेतत् सर्वं तस्यापीत्यपिशब्देन सूचितम्। **पूर्ववदिति**। मधुघृतोदकयागवत् उपांशुयागविकार इत्यर्थः। **सत्यपीति**। यद्याग्नावैष्णवं द्वादशकपालमपराह्णे सरस्वतीमाज्यस्य यजेतेत्येवमेकं वाक्यं स्यात् तदाऽनेनैकेन वाक्येन द्विद्रव्यकद्विदेवताकएकयाग एवापाद्येत; तदाहि सादृश्यविशेषस्य निर्णायकस्याभावे प्रकृतिविशेषनिश्चयानापत्तेः अतिदेशकल्पनमेव न प्राप्नोत्यतः तदुपपत्तये **भिन्नवाक्यत्वे** इत्युक्तं। वाशब्दोऽप्यर्थे। यत्तु वृत्तिकारान्तरैः मुख्यं वा पूर्वचोदनाल्लोकवदिति सूत्रे वाशब्दोपादानात् पूर्वसूत्रोक्तपूर्वपक्षनिरासार्थत्वप्रतीत्या सिद्धान्तसूत्रत्वमस्येत्यभिप्रायेणैकाधिकरण्यं कृतं तदनूद्य दूषयति—**यत्त्विति**। यत्तु फलसंबन्धप्रयुक्तं मुख्यत्वं तत्तु भूयस्त्वस्य भवत्येव बाधकमित्युत्तराधिकरणे वक्ष्यते। लोके बहुभिरेव मुख्यस्य बाधदर्शनात्। आद्यत्वरूपमुख्यत्वस्य तु भूयस्त्वमेव बाधकमिति दूषयति—**तल्लोके इति**। वाशब्दस्य व्यवस्थितविकल्प-

## (९) अङ्गगुणविरोधे च तादर्थ्यात् ॥ २७ ॥

**यत्र तु मुख्यमङ्गं यथा दीक्षणीया प्रथमदिनकर्तव्या,** यत्र वा **बहून्यङ्गानि यथा औपवसत्थ्येऽह्नि उपसदग्नीषोमीयपशुपुरोडाशादीनि, प्रधानं तु जघन्यमेकं च सोमयागः पञ्चमदिनकर्तव्यः, तत्र 'य इष्ट्या' इत्यादिवाक्येन विहितपर्वकालविरोधे प्रधानस्यैव धर्मानुग्रहः अङ्गानां तु प्रधानसाद्गुण्यार्थत्वेन तद्विरोधेऽङ्गसाद्गुण्यस्या**किञ्चित्करत्वात्**। लोके प्रथमं बहुभिरवरुद्धे स्थले पश्चादागतेनैकेनापि राज्ञा तद्ग्रहणदर्शनाच्च। अतस्तत्र सोमयागस्यैव पाठतोऽनुष्ठानतश्च जघन्यस्यापि प्रधानतया पर्वकालकत्वम्।**

---

विषयत्वेन न्यायान्तरप्रतिपादकतयाप्युपपत्तेरित्यर्थः। किं चैकाधिकरण्येऽनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यादित्युत्तरत्र तन्त्रिप्रसङ्गिविषयेऽपवादकरणमनुमपपन्नं पूर्वत्र क्वचिदपि भूयस्त्वेन प्राबल्यमित्युत्सर्गतः सिद्धान्तस्याकृतत्वात् तदधिकरणस्यानेन गतार्थतापत्तिश्चेति ततोऽल्पभूयोविरोधे भूयस्त्वं तुल्यसंख्ययोर्विरोधे तु मुख्यत्वं नियामकमिति न्यायद्वयप्रतिपादकतया भिन्नमेवाधिकरणमिति।

---

**अङ्गगुणविरोधे च तादर्थ्यात्।**

**यत्र** वेति। एतेन तुल्यसंख्ययोर्दीक्षणीयासोमयागयोः अङ्गविरोधे मुख्यत्वेन दीक्षणीयाङ्गस्यैव[1]प्राबल्यमिति पूर्वपक्षकरणेन न केवलं पूर्वाधिकरणापवाद एवायं; किन्तु प्रपूर्वाधिकरणेन आतिथ्यादीनां भूयस्त्वेन तदङ्गानुग्रहस्यापि प्राप्तस्य पूर्वपक्षकरणेनापवादोऽयमिति सूचितम्। नह्यत्र दीक्षणीयासोमयागयोरेव विरोधः पूर्वपक्षविषयः भूयस्त्वन्यायेनातिथ्यादिधर्मानुग्रहस्यैव प्राप्तेः मुख्यत्वमात्रेण दीक्षणीयाविषयत्वस्यानुत्थानात्। अतः पूर्वोक्तन्यायद्वयस्याप्यपवाद इति भावः। **यद्यपि** सवनीयहवींषि पञ्च सवनीयः पशुः तत्पुरोडाशोऽनूबन्ध्याऽवभृथोदवसानीयानीत्येतेषां सुत्याकालनां द्वितीयदिनेऽनुष्ठेयेभ्योऽपि आतिथ्यादिभ्यो भूयस्त्वात् तेनैवात्रत्याधिकरणसिद्धान्तोपपत्तिसंभवादनारभ्यमेवैतदधिकरणं, तथापि भूयस्त्वन्यायबाधकं प्रधानधर्मत्वमप्यस्तीति विषयान्तरे न्यायान्तरप्रतिपादनार्थं आरम्भो नैव विरुद्ध्यते। अत्रत्यपूर्वपक्षोत्थानं तु सवनीयहविराद्यभावं कृत्वाचिन्तयेति ध्येयम्। **अकिञ्चित्करत्वादिति।** अङ्गसाद्गुण्यं हि प्रधानसाद्गुण्यार्थमपेक्ष्यते तदर्थं च प्रधानप्रयोगविधिना स्वाङ्गवदङ्गाङ्गं प्रयुज्यते। यदि तस्मिन् कृते प्रधानस्य प्रत्युत वैगुण्यमेव भवति तर्हि

---

1. A. दीक्षणीयायागस्यैव

**दीक्षणीयादेस्तु पाठतोऽनुष्ठानतश्च प्रथमोपस्थितत्वेऽप्येकादिदीक्षापक्षे न पर्वानुग्रहः।** द्वादशदीक्षापक्षे तु **अविरोधाद्दीक्षणीयायामपि सः। अग्नीषोमीयादौ** तु सर्वपक्षेऽपि **बाध एव।** अतश्च **तत्र सुत्यादिनावधिक**तत्तद्दिनकर्तव्य**ताबोधकवचनानुमिततत्तत्कालेनैव प्रसङ्गसिद्धिः पर्वकालस्येति प्रसङ्गानुनिष्पन्नबाधप्रसङ्गेनैव वा बाधविचारः प्रासङ्गिकः।**

---

## (१०)—परिधेर्द्व्यर्थत्वादुभयधर्मा स्यात्॥ २८॥

पाशुक**चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति श्रुते परिधावग्निपरिधानपशुनियोजनरूपोभयकार्यकारित्वाद**विरुद्धधर्म**विषये उभयधर्मा** इत्यविवादमेवेति **उत्तरविवक्षया प्राप्यते।**

---

## (११)—यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात्॥ २९॥ इतरो वा तस्य तत्र विधानात् उभयोश्चाङ्गसंयोगः॥ ३०॥

---

अङ्गाङ्गानुग्रहोऽकिञ्चित्कर इत्यर्थः। **द्वादशदीक्षापक्षे त्विति।** एकदीक्षापक्षे एकादश्यां तदनुष्ठानात् पर्वाननुग्रहः, द्वादशदीक्षापक्षे पूर्वपर्वणि दीक्षारम्भः एकादश्यां समाप्तिरिति तत्पञ्चमेऽहनि पर्वणि सोमानुष्ठानादविरोधात् दीक्षिणीयायामपि पर्वानुग्रहसंभवात् न विचारविषयतेत्यर्थः। **सर्वपक्षेपीति।** पक्षान्तराभावात् सर्वथेत्यर्थः। अस्य विचारस्य प्राप्तबाधविषयत्वेपि अध्यायसङ्गतिं दर्शयति— **अतश्चेति। तत्तद्दिनकर्तव्यतेति।** सोमप्रयोगस्य पञ्चाहसाध्यत्वे विहिते सति सुत्यादिनावधिकानां दिनानां चतुर्णां प्रथमे दीक्षणीया द्वितीये प्रायणीयाऽऽतिथ्या प्रवर्ग्योपसदः तृतीये प्रवर्ग्योपसदः चतुर्थे प्रवर्ग्योपसदग्नीषोमीयः पशुरित्येवं विभागेन तत्तदङ्गेषु विधानात् तत्तत्कालीनप्रसङ्ग इत्यर्थः। पक्षान्तरेण प्रसङ्गसङ्गतिमाह—**प्रसङ्गेति।** वस्तुतस्तु प्राप्तबाधविषयापि पूर्वाधिकरणद्वयापवादात् आपवादिकसङ्गतौ सत्यामध्यायसङ्गत्यभावेपि न दोष इति ध्येयम्।

---

**परिधिर्द्व्यर्थत्वादुभयधर्मास्यात्।**

**पाशुकेति।** सपशुकचातुर्मास्येष्वित्यर्थः। **अविरुद्धधर्मेति।** अविरुद्धाश्च धर्मास्सम्मार्जनपरिव्याणादयः। **अविवादमेवेति।** नवमे पञ्चधा स्थानापत्तिनिरूपणे परिधौ पशुं नियुजीतेत्यत्र स्वशब्दात् स्थानापत्तिरुक्ता तदैवैतन्निर्विवादं प्रयोजनमित्यर्थः।

---

विरोधे तु तक्षणनिखननादौ किं यूपधर्मा उत परिधिधर्मास्सत्वक्त्वोत्तराग्रत्वादय इति चिन्तायां यूपधर्माणां यागसाधनपशुसम्बन्धियूपवृत्तित्वेनान्तरङ्गत्वात् बहिरङ्गाणां यागाङ्गप्रक्षेपसाधनाग्निपरिधानसम्बन्धिकाष्ठनिष्ठानां परिधिधर्माणां दौर्बल्यावगतेर्यूपधर्मा एव कार्या इति प्राप्ते—

पुरोडाशकपालन्यायेनाग्निपरिधानसाधनरूपपरिधित्वेनैव पशुनियोजनसाधनत्वावगतेः परिधानप्रयुक्तत्वावसायात् तद्धर्माणामेव पुरस्स्फूर्तिकतया बलवत्त्वं, स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वव्यवस्थापनाच्च। एवमुभयोरप्यङ्गधर्मत्वाच्च न प्राधान्यकृताऽपि व्यवस्था। प्रथमप्रवृत्तत्वात्तु परिधिधर्माणां बलवत्त्वमित्यपि शक्यं वक्तुम्। तक्षणस्य यूपत्वोत्पादकत्वात् प्रकृते च यूपबाधेन परिधिविधानात् तत्प्राप्तिस्तावदनाशङ्क्यैवेति सत्वक्त्वादीनामविरोध एव। उत्तराग्रत्वादीनां तु बाधे अग्निपरिधानस्यैवानुपपत्तेरावश्यकत्वम्। न हि निखननं विना पशुनियोजनं न सम्भवति, स्थूलकाष्ठग्रहणेन तत्सम्भवात्। अतः परिधानधर्मा एव कार्याः।

---

## यौप्यस्तुविरोधे न स्यात मुख्यानन्तर्यात्

**विरोधे त्विति।** तक्षणनिखननादौ यूपधर्मे क्रियमाणे संति तक्षणेन सत्वक्कः परिधिर्भवतीति विहितस्य सत्वक्कत्वस्य नाशान्निखननेनोत्तराग्रत्वस्यासंभवाद्विरोध आपद्यते तथाभूते विरोधे त्वित्यर्थः। उभयोरपि युगपदतिदेशात् मुख्यत्वभूयस्त्वौपदेशिकत्वादिरूपबाधकान्तरन्यायाप्रवृत्तेः अन्तरङ्गत्वमेव नियामकमित्यभिप्रेत्य पूर्वपक्षमाह—**यूपधर्माणामिति।** न्यायान्तरेणापि यूपधर्मबाधस्संभवतीति सिद्धान्तमाह—**पुरोडाशकपालेति।** अतिदेशविशेषेपि उपजीव्योपजीवकभावेनैवात्र बाध इत्याह—**स्थानापतीति।** प्रथमं ह्यत्र परिधिः स्वधर्मकः यूपश्च सधर्मकोऽतिदेशेन प्राप्तस्ततः 'परिधौ पशुं नियुंजीत' इत्युपदेशः ततो द्वितीयेनातिदेशेन स्थानापत्तिमूलकेन परिधौ यूपधर्माः प्राप्यन्ते। तत्र पूर्वेण चोदनालिङ्गातिदेशेन योऽसौ परिधिः सधर्मकः यूपातिदेशसमकालमतिदिष्टः स उपजीव्य इति तमुपजीव्य प्रवृत्तमुपदेशमुपजीव्य प्रवृत्तः स्थानापत्त्यतिदेशः दुर्बलः इति न पूर्वप्रवृत्तपरिधिधर्मातिदेशबाधक इत्यर्थः। पूर्वाधिकरणन्यायाप्रवृत्त्यापि न यूपधर्मा इत्याह—**उभयोरपीति।** मुख्यधर्मबाधकं हि प्रधानधर्मत्वं, न ह्यत्र तदस्ति, यूपस्य परिधेश्चाङ्गत्वेनान्यतरस्यापि प्राधान्याभावेन तद्धर्मत्वाभावात्। अत एव यागाङ्गप्रक्षेपसाधनाग्निपरिधानसंबन्धिकाष्ठनिष्ठत्वेन परिधिधर्माणां दूरे प्रधानप्रत्यासत्तिर्यथा तथैव यागसाधनपश्वङ्गनियोजनाधिकरणयूपवृत्तित्वेन यूपधर्माणामपि सा दूर एवेति न सापि प्रमाणम्। अत एव समसंख्ययोरङ्गयोर्धर्मविरोधे प्रथमप्रवृत्तत्वमेव शक्यं नियामकं वक्तुमित्याह—**प्रथमेति।** नहीति।

न ह्यत्र यो होता सोऽध्वर्युरित्यत्राध्वर्युपदार्थे होतुर्वाचनिकत्ववत् निखननादौ परिधेर्वाचनिकत्वं, येनोपदेशेनातिदेशबाधश्शङ्क्येत। परिधेः पशुनियोजन एव विनियुक्तत्वात्तु निखननादेः स्थानापत्त्यतिदेशेनैव लाभान्न प्राबल्यशङ्का।

---

(१२)—पशुसवनीयेषु विकल्पस्स्यात् वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥३१॥
पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३२ ॥
पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३३ ॥

सवनीयपशुर्वपाप्रचारादिभेदेन सवनत्रयेऽपि विततः, सवनीयपुरोडाशाश्च 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते' इति वचनेन विहिताः। तत्र माध्यंदिनसवनिकतार्तीयसवनिकानां तावत्पशुतन्त्रमध्यपातात् विस्पष्टमेव प्रसङ्गित्वम्। प्रातस्सवनिकानां तु यद्यपि सहैव पशुनोपक्रम इति न तदालोचनया कस्य तन्त्रित्वं कस्य प्रसङ्गित्वमिति नियन्तुं शक्यम्। तथाऽपि पशुयागस्य तृतीयसवने समाप्यमानत्वात् निशीष्टिवत् तन्त्र-

---

यदि निखननं विना पशुनियोजनं न भवेत् तदौपदेशिकनियोजनसाधनत्वाक्षिप्तनिखननानुरोधेनातिदेशिकोत्तराग्रत्वादीनां बाधोऽपि भवेन्न त्वेतदस्ति पशुनियोजनसमर्थस्यैव परिधेः करणेन शयान एव तस्मिन् नियोजनसंभवादित्यर्थः। स्पष्टार्थमन्यत्।

---

**पशुसवनीयेषु**

वितत इति। अत एव सवनत्रये प्रचारात् सवनीयसमाख्यापि तस्मिन्नुपपद्यते। **पुरोडाशा इति।** पुरोडाशपदं सवनीयहविषां पञ्चानामप्युपलक्षणम्। **पशुतन्त्रमध्यपातादिति।** प्रातस्सवन एवाश्विनग्रहग्रहणोत्तरं सवनीयस्य पशोरुपक्रमात् तृतीयसवने च समाप्तेः तन्मध्ये क्रियमाणानां माध्यंदिनसवनिकतार्तीयसवनिकानां मध्यपातात् विस्पष्टमित्यर्थः। **नियन्तुं शक्यमिति।** यस्य पूर्वमुपक्रमे सति पश्चात् समाप्तिर्भवति तस्य तन्त्रित्वमिति दैक्षदर्शादौ क्लृप्तम्। अत एव तन्मध्यपतितयोः पुरोडाशनिशीष्ट्योः प्रसङ्गित्वं भवति। अत्र तु प्रातरनुवाककाले सहोपक्रमे सति पशोरेवोपक्रमाभावात् तन्त्रित्वं नियन्तुं न शक्यमित्यर्थः। **समाप्यमानत्वादिति।** पूर्वमुपक्रमाभावेपि पश्चात् समाप्त्या पशोर्विततन्त्रत्वावगमात् निशिष्टिवदार्थिकः तन्त्रमध्यपातः

**मध्यपातात्रगतेर्युक्तमेव पशुयागस्य तन्त्रित्वं पुरोडाशानां च प्रातस्सवन एव समाम्यमानत्वात् प्रसङ्गित्वमिति नियन्तुं शक्यम्। पशुयागस्य हि प्रधानमेव तृतीयसवने। अनूयाजाश्चाग्निमारुतादूर्ध्वमुत्कृष्टास्तत्रैव।**

**न चानूयाजानां पुरोडाशीयत्वस्यापि सम्भवात् पशुयागीयमात्रत्वे प्रमाणाभावः। प्रातस्सवनिकपुरोडाशाङ्गभूतानूयाजानां तृतीयसवनेऽप्रसक्तानामेवाग्निमारुतोत्तरकालत्वविधौ गौरवात्। पाशुकानां तु प्रधानोत्कर्षेणोत्कृष्टानामाग्निमारुतोत्तरत्वस्या**ध्वरकल्पावद्वि**धाने लाघवोपपत्तेः। अत एव तदुत्तरकालीनस्य 'अग्निमद्य होतारमवृणीतायं यजमानः' इति** सूक्तवाकप्रैषस्यापि **दैक्षादतिदेशेन प्राप्तस्य 'अग्निमद्यहोतारमवृणीतायं सुतासुती यजमानः' इत्यादियत्किञ्चिद्विकारयुक्तस्य पाठोऽपि पशुतन्त्रस्यैव नितत्वं गमयति।**

**न ह्यस्य पुरोडाशाङ्गत्वं युज्यते, तेषु दार्शिकस्य** 'इषिता दैव्या होतारः' **इत्यस्यैव प्राप्तेःतस्यैव दैक्षवद्विकारविधौ 'अग्निमद्य' इत्यादिपदानामपि विकारतया विधानापत्तेः। अस्मन्मते तु दार्शिकस्य दैक्षे अतिदेशप्राप्तस्य 'अग्निमद्य' इत्यादिविकारस्य दैक्षप्रकरण एव विधानात्ततोऽतिदेशप्राप्तस्य सवनीयपशौ** 'सुतासुती' इत्यादिविकार**मात्रस्यैव विधाने** लाघवात्।

---

सवनीयहविषां भवति। दीर्घतन्त्रं ह्यल्पकालसाध्यैरुपजीवितुं शक्यं न त्वल्पकालतन्त्रं पूर्वमेवापवृत्तं दीर्घकालीनेनेत्यर्थः। अध्वरकल्पावदिति। यथैवाध्वरकल्पायां पुरा वाचः प्रवादितोर्निर्वपेदिति श्रुतौ निर्वापापकर्षः प्रातःकालीनहविषामेव। तेषामेव पूर्वाह्णेनियमेन यत्र क्वचित् प्राप्तेर्निर्वापे कालनियमकरणे लाघवात्। न तु माध्यंदिनीयापराह्णिकहविषां निर्वापस्येत्येकादशे साधितं तद्वदिहापि येषामनूयाजानां तृतीयसवने उत्कर्षप्रसक्तौ अनियतकालप्रसक्तिः तेषामेवाग्निमारुतोर्ध्वकालनियमकरणे लाघवादप्रसक्तोत्कर्षप्रातस्सवनिकसवनीयहविरङ्गभूतानूयाजेषु तत्कालविधाने गौरवापत्तिरित्यर्थः। **सूक्तवाकप्रैषस्यापीति।** सान्नाय्यातिदेशत 'इषिता दैव्या होतार' इति सूक्तवाकप्रैषस्य प्राप्तस्य दैक्षे पशौ वाचनिको विकारः "अग्निमद्यहोतारमवृणीतायं यजमान" इति श्रुतः तदतिदेशेन सवनीयेस्मिन् प्राप्त एव विकारान्तरेण पाठः श्रुतः। तस्मात् पशुरेव तन्त्रीति निश्चीयते। अन्यथा सवनीयहविषां तन्त्रित्वे तदीयस्य इषिता दैव्या इत्यस्यैव प्राप्तेः अनियमेन तन्त्रित्वे नित्यवदाम्नानवैयर्थ्यापत्तेरित्यर्थः। **सुतासुतीत्यादिविकारेति।** अग्निमद्येत्यादिषण्णां पदानां दार्शिकसूक्तवाकपदबाधकतया इहापि अपूर्वतया विधाने गौरवम्। यदा तु दैक्षसंबन्धिसूक्तवाकस्यैव विकारत्वेन विधानं तदा अग्निमद्येत्यादीनां षण्णां पदानां दार्शिकपदबाधकतया प्राप्तत्वेनाविधानात् सुतासुतीत्येतावन्मात्रस्यैव विधानाल्लाघवमित्यर्थः।

यत्तु भाष्यकारेण सोमान्ते 'संस्थिते यज्ञे प्रस्तरं प्रहरति सस्वरुं' इति पाशुकस्वरोः प्रतिपत्तिदर्शनादपि सवनीयपशुतन्त्रस्य विततत्वमित्युक्तं, तत् स्वरोः पशुत्रयसाधारण्यादेव अन्ते प्रतिपत्तिदर्शनोपपत्तेर्नासाधारणं सवनीयतन्त्रविततत्वे लिङ्गमित्युपेक्षितम्।

नन्वेवं 'दीक्षासु यूपं छिनत्ति' इत्यादिना पशुत्रयार्थयूपच्छेदनाद्यारम्भेण तन्त्रेण पशुत्रयप्रयोगारम्भादन्ते च स्वरुप्रतिपत्तिदर्शनेन तथैव समाप्तेः पशुत्रयार्थे तन्त्रेणाङ्गानि प्रयाजादीनि तन्मध्यपतितप्रायणीयादौ च प्रसङ्गसिद्धिरस्त्विति चेत्: आतिथ्यादौ 'चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजान् यक्ष्यन् भवति' इत्याद्यनूयाजाभावमात्रस्य

---

अत्र च तन्त्ररत्नानुरोधेन सर्वेषां सुतासुतीपदघटितसवनीयसूक्तवाकपाठलिखनमयुक्तं, प्रैषाध्याये अग्निमद्य होतारमवृणीतायं सुन्वन्यजमान इत्येवं सुन्वन्नित्येव पाठादिति ध्येयम्। वस्तुतस्तु प्रातरनुवाककाले सवनीयपशोः सवनीयहविषां च सहोपक्रमाभिधानमपि तन्त्ररत्नकारादीनामयुक्तं प्रातरनुवाककाले "प्रतिप्रस्थातस्सवनीयान्निर्वपस्व" इति प्रैषदानेन सवनीयहविषामुपक्रमेऽपि तदनन्तरं दीर्घेण कालेनाश्विनग्रहणोत्तरं सवनीयपशूपक्रमात्। प्रत्युत सवनीयहविरुपक्रमस्यैव पूर्वत्वात् सवनीयवपायागानन्तरं च सवनीयहविषां प्रचारात् वपायागस्यैव तत्तन्त्रमध्यपातित्वम्। यदि तु औपवसथ्येऽहनि शाखेध्माबर्हिर्हरणानुष्ठानेन पशोरुपक्रमस्तृतीयसवने च समाप्तिरिति विभाव्यते तदापि ततः पूर्वं पयस्यार्थे शाखाहरणात् सवनीयहविषामेवोपक्रमात् प्रातरनुवाककाले पशूपक्रमाभिधानं पशोः प्रसङ्गित्वपूर्वपक्षकरणं च सर्वथा युक्तमेव।

यदपि तन्त्ररत्नादौ सवनीयानां तन्त्रित्वे सूक्तवाकप्रैषस्याध्वर्य्वादिऋत्विक्चतुष्टयान्यतरकर्तृकत्वापत्तौ तेन पशौ प्रसङ्गाङ्गीकारे मैत्रावरुणकर्तृकप्रैषस्य पश्वङ्गभूतस्याननुष्ठानात् वैगुण्यापत्तिः, तत्परिहारार्थं तस्मिन्मैत्रावरुणकर्तृकत्वस्वीकारे सवनीयहविर्गतर्त्विक्चतुष्टयनियमभङ्गाद्वैगुण्यापत्तिः। अतो न सवनीयानां तन्त्रित्वमित्युक्तं, तत् अग्नीषोमीयपशुपुरोडाशयागे प्रयाजादिप्रसङ्गस्वीकारे कालदेशाद्यभावकृतवैगुण्यपरिहारस्येवेहापि पशौ प्रसङ्गस्वीकारे मैत्रावरुणकर्तृकत्वाभावकृतवैगुण्यपरिहारोपपत्तेरयुक्तमित्युपेक्षितं पूज्यपादैः। नहि सवनीयहविर्भ्यः पशौ प्रैषजन्योपकारलाभे सति पाशुकप्रैषस्यानतिदेशेन तत्पृष्ठभावेन मैत्रावरुणकर्तृकत्वस्य प्रापकप्रमाणाभावादेवाप्राप्तौ तदभावकृतं वैगुण्यं प्राप्नोति। अतः पूर्वोक्तयुक्त्यैव प्रसङ्गित्वं सवनीयानां तन्त्रित्वं च पशोरिति। लाघवादिति। विधानोपपत्तेरिति शेषः। यत्त्वित्यारभ्याधिकरणान्तं स्पष्टार्थमपि व्याख्यायते। प्रायणीयादौ चेति। यद्यपि पश्वर्थानुष्ठास्यमानप्रयाजोपकारमध्ये पशुपुरोडाशस्येव न प्रायणीयादीनां पाठः येन प्रसङ्गः शङ्क्येत तथापि लाघवादुत्पन्ने प्रायणीयाद्यपूर्वे

चतुर्गृहीतत्वित्वे हेतुत्वानुवादात् प्रयाजादिसत्त्वाप्रतीतेर्न तावत्प्रायणीयादौ प्रयाजादि-प्रसङ्गापत्तिशङ्का। गमकान्तराणि चैवंविधान्यन्यान्यप्युद्भावनीयानि। अतश्च यूपच्छेद-नादि पशुप्रयोगबहिर्भूतमेव। औपवसथ्येऽहन्येव च दैक्षप्रयोगारम्भ इति न पशुत्रयस्य तन्त्रप्रयोगत्वशङ्काऽपि।

न चैवमपि दैक्षप्रयोगस्य स्वरूपप्रतिपत्त्यैव समाप्तेः तन्मध्यपतितानां सवनीयपश्वा-दीनामपि प्रसङ्गसिद्ध्यापत्तिः, पशुपुरोडाशस्य तत्तद्देवतासंस्कारकत्वेन भेदेनैवानुष्ठेय-तया पुरोडाशेन माध्यन्दिने इत्यस्याविरोधात्, अनूयाजानां च दैक्षसम्बन्धिनामेवाग्नि-मारुतोत्तरत्वविध्युपपत्तेरिति वाच्यम्। प्रस्तरभेदे प्रमाणाभावेन सूक्तवाकप्रैषस्य द्विविधस्य द्विःपाठवैयर्थ्यात्। 'पत्नीसंयाजान्तो दैक्षः पशुः, पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते' इत्यादिगमकानुपपत्तेश्च। अत एव स्वरूपप्रतिपत्तिरपि दैक्षादिप्रयोगबहिर्भूतैव तयोरङ्गं तत्परमापूर्वस्थापिका ज्योतिष्टोमोपकारजननानुकूलतन्निष्ठयोग्यताजनिका वेत्यपि ध्येयम्। इतरथा दैक्षपरमापूर्वोत्पादकत्वे प्रसङ्गानिवारणात्।

---

## (१३)—अपूर्वे च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात॥

यास्तावत् काम्या नित्या वा विकृतयस्तासां 'य इष्ट्या' इत्यनेन पर्वकालविधानात् पर्वणि सद्यस्कालास्ताः कृत्वा प्रकृतेरन्वाधानमिति नैव तत्र तन्त्रप्रसङ्गविचारः। यत्रापि पवित्रनाशादिनिमित्तकेष्ट्यादौ नियमेनैव प्रकृतिप्रयोगमध्ये निमित्तपातः तत्र तस्या एव

---

परमापूर्वजननानुकूलयोग्यताधानस्य पशूत्पत्त्यपूर्वयोग्यताधानकाल एवोत्पत्तिस्वीकारादुत्तरभाव्यङ्गानां पशुपुरोडाश इव युक्तः प्रसङ्ग इति भावः। गमकान्तराणीति। शंय्वन्ता प्रायणीया इडान्ता आतिथ्या सन्तिष्ठत इत्यादीनीत्यर्थः। तयोरङ्गमिति। दैक्षसवनीययोरित्यर्थः।

---

### अपूर्वे च विकृतौ।

अत्राधिकरणमालायां प्रकृतेः काम्यविकृतेश्च तन्त्रित्वप्रसङ्गित्वविचारः कृतः, तदयुक्त-मिति सूचयितुं नैमित्तिकविकृतीनामपि यथाभाष्यमुदाहरणत्वं दर्शयन्नादावुदाहरणविवेकं करोति —यास्तावदिति—नित्याश्चातुर्मास्यादयः काम्यास्सौर्यादयः। तत्र तस्या एवेति। नैमित्तिकेष्टे-रेवेत्यर्थः। तत्र नैमित्तिकेष्टिरूपायां विकृतौ यद्यपि सामिधेनीगतसाप्तदश्यादि प्रकृतिविरुद्धं भवेत्तथापि तत्रान्यतस्सामिधेनीजन्योपकारलाभे सामिधेनीनां स्वतोऽनपेक्षणात् न तदङ्गसाप्तदश्यानुष्ठानमपि तु

प्रसङ्गित्वमिप्यविवादम्। तत्र प्रायशो नैव साप्तदश्यादि, यद्यपि वा भवेत्तथाऽपि तस्य निरवकाशत्वात् तदंशे प्रकृतेरेव प्रसङ्गित्वं प्रयाजाद्यंशे तु विकृतेरिति ध्येयम्।

यत्र तु प्रयोगमध्ये गृहदाहेष्ट्यादि तत्र प्रकृतेरेव तन्त्रित्वं साप्तदश्यादेः प्रयोगबहिर्भूतनिमित्तपातस्थले सावकाशत्वात्। यत्र तु प्रकृत्युपक्रमवेळायामेव यस्या इष्टेर्नियतो निमित्तपातः तदाऽपि वस्तुतो विकृतिं सद्यस्कालां कृत्वैव प्रकृत्यारम्भ इति न कश्चित्प्रसङ्गशङ्कावकाशः। प्रकृतिविकृत्योस्तादृशस्थले कृत्वाचिन्तया तु प्रयोगद्वयं विचार्यते विरुद्धपदार्थांशे कस्य तन्त्रित्वं कस्य प्रसङ्गित्वमिति। तत्र विकृतेः प्रकृत्युपजीवकत्वात्तस्या एव प्रसङ्गित्वं प्रकृतेस्तु तन्त्रित्वं तस्याङ्गग्राहकत्वाभावेऽतिदेशस्यैवानापत्तेरिति प्राप्ते—

तस्याः पाञ्चदश्याग्राहकत्वेऽपि इतराङ्गग्राहकत्वे बाधकाभावात् विकृत्यङ्गभूतस्य च साप्तदश्यस्य निरवकाशत्वात्तस्या एव तद्विषये तन्त्रित्वं प्रकृतेश्च प्रसङ्गित्वम्। प्रयाजादिविषये तु तस्या एव तन्त्रित्वं विकृतेश्च प्रसङ्गित्वमङ्गग्राहकत्वानुरोधादिति ध्येयम्।

———

प्रकृत्यनुरोधेन पाञ्चदश्यमेवेत्याह—**तत्र प्रायश इति**। यदि सामिधेनीपृष्ठभावेन अतिदेशात्साप्तदश्यं प्राप्येत तदा सामिधेनीनामप्राप्तौ साप्तदश्यं न स्यात्। यदा तु साप्तदश्यमुपदिष्टं तदौपदेशिकसाप्तदश्यजन्योपकारस्यान्यतोऽलाभात् तस्यानुष्ठाने आवश्यके तेनैव प्रकृतेरुपकारसिद्धौ प्रसङ्गित्वमेवेत्याह —**यद्यपि चेति**। **तत्र प्रकृतेरेव तन्त्रित्वमिति**। सामिधेनीसंख्यांशेपीति शेषः। **साप्तदश्यादेरिति**। दर्शपूर्णमासयोः पञ्चदशसामिधेन्यः, सप्तदशेष्टिपशुबन्धानामित्यापस्तम्बेन विहितस्येत्यर्थः। अत्र प्राचीनैः प्रकृतेः तन्त्रित्वे पूर्वं प्रवृत्तत्वं हेतुः पूर्वपक्षे उक्तः ; तत्र यदि पूर्वविहितत्वरूपा पूर्वप्रवृत्तिरुच्येत तदाऽस्याः बाधहेतुत्वेऽपि न तस्या अङ्गप्रसङ्गहेतुत्वम्। या तु तद्धेतुः पूर्वोपक्रमविधिरूपा तस्यास्तु यावज्जीविकैकप्रयोगनिरासात् प्रतिपर्व क्रियमाणानां भिन्नानां प्रयोगाणां विकृतिप्रयोगेण सहारंभं कृत्वाचिन्तनादसंभव इति प्रकृतिगततन्त्रित्वहेतुत्वायोगात् तं हेतुमुपेक्ष्य हेत्वन्तरेण पूर्वपक्षमाह—**प्रकृत्युपजीवकत्वादिति**। **तस्या इति**। प्रकृतेरङ्गग्राहकत्वाभावे प्रकृतेर्विकृतिसादृश्येनोपस्थितावपि क्लृप्तोपकाराकाङ्क्षाविशिष्टत्वाभावात् प्रकृतिवदित्यतिदेशस्यैवासंभवे विकृतेस्तंत्रित्वायोगात् न प्रकृतेः प्रसङ्गित्वं, अपि तु तन्त्रित्वमेवेत्यर्थः। **तस्याः पाञ्चदश्येति**। प्रकृतेरित्यर्थः। **तस्या एवेति**। विकृतेरेवेत्यर्थः।

———

## (१४)—अधिकश्च गुणः साधारणे विरोधात् कांस्यभोजिवदमुख्येऽपि ॥

आग्रयणे 'ऐन्द्राग्नो द्वादशकपालः वैश्वदेवश्चरुर्द्यावापृथिव्य एककपालः' इति त्रयो यागाश्श्रुताः। तत्रैककपालो वैश्वदेविकैककपालप्रकृतिक इत्युक्तम्। तेन तत्र प्रसूनमयं बर्हिः। आद्ययोर्द्वयोर्दर्शपूर्णमासातिदेशादनियमः। तत्र जघन्यैकद्यावा-पृथिव्यानुरोधेन मुख्ययोरनेकयोरपि प्रसूनमयत्वनियम एव। नहि तयोरनियमो नाम कश्चित्पदार्थोऽङ्गं, येन जघन्यैकवृत्तित्वान्नियमो बाध्येत बर्हिर्मात्रं तु तदङ्गं अतश्च कांस्यभो-जिन्यायेन दुर्बलानुरोधेनापि प्रसूनमयत्वग्रहणे न कश्चिद्दोषः।

---

## (१५)—तत्प्रवृत्त्या तु तन्त्रस्य नियमस्स्यात् यथा पाशुकं सूक्तवाकेन ॥

## न वाऽविरोधात् ॥ ३७ ॥ शास्त्रलक्षणत्वाच्च ॥ ३८ ॥

न चैवं विरुद्धेष्वपि नवप्रयाजत्वादिषु द्यावापृथिव्यस्यैव धर्मानुग्रहादितरयोः प्रसङ्ग-सिद्धिः, इतराभ्यां बर्हिर्मात्रग्रहणेन प्रसूनमयत्वस्य तदनुपकारकत्वेन तदंशे इतरयोः प्रसङ्गि

---

### अधिकश्चगुणस्साधारणे।

इत्युक्तं। सप्तम इति शेषः। प्रसूनमयत्वेति। प्रसूनं पुष्पितं लूनशेषात् पुनरुत्पन्नं चेत्यर्थः माधवीयायाम्। एककपालस्य तु अनियतबर्हिरुपादाने प्रसूनमयत्वनियमबाधेन वैगुण्यापत्त्या प्रसूनमयस्यैव ग्रहणमित्युपसंहरति---अतश्चेति। कांस्यभोजिन्यायेनेति। गुरोः न कांस्यभोजित्वनियमः शिष्यस्य तु कांस्य एव भोक्तव्यं गुरोरुच्छिष्टमेवेति च द्वौ नियमौ। तत्र शिष्यस्यामुख्यस्याप्यनुरोधेन गुरुः कांस्य एव भुंक्ते अविरोधादिति कांस्यभोजिन्यायो द्रष्टव्यः।

---

### तत्प्रवृत्त्या तु।

न चैवमिति। यथा सवनीयपशोः अपूर्वसूक्तवाकप्रैषाम्नानात् तंत्रित्वं सवनीयानां प्रसंगित्वं तथैव प्रसूनमयत्वस्यापूर्वस्याम्नानात् द्यावापृथिवीयस्यैव तंत्रित्वे इतरयोश्च प्रसंगित्वे सिद्धे विरुद्धधर्मेष्वपि तस्य तंत्रित्वमितरयोः प्रसंगित्वं भवत्वित्याशंकार्थः। इतराभ्यामिति। यदि प्रसूनत्वगुणः इतरयोरप्यङ्गं भवेत् तदा तत्कृतोपकारस्य द्यावापृथिवीयार्थगुणादेव लाभादितरयोः प्रसंगित्वमन्यस्य तंत्रित्वं भवेत् न त्वेतदस्ति बर्हिर्मात्रस्यैव तयोरङ्गत्वेनाविरोधात्।

त्वाभावात्। अतश्च नवप्रयाजत्वादिविरुद्धधर्मविषये मुख्यत्वभूयस्त्वाभ्यामितरयोरेव-तन्त्रित्वादेककपालस्य प्रसङ्गित्वमेव। अविरुद्धसर्वधर्मांशे तु तन्त्रित्वमेव सहोपक्रमेणा-गृह्यमाणविशेषत्वात्। अत्र नवसु पञ्चानामविरोधात् नवप्रयाजत्वमपि न विरोधीति प्रतिभाति।

याज्ञिकास्तु तथा नानुतिष्ठन्ति। पशुपुरोडाशादौ तु यत्र तन्त्रमध्यपातादिना गृह्य-माणविशेषता तत्र विरुद्धाविरुद्धोभयांशेऽपि प्रसङ्ग एव।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वादशाध्यायस्य द्वितीयः पादः॥

---

प्रसूनग्रहणेऽपि बर्हिरङ्गेन साधारणेन सर्वेषामेव तंत्रित्वावगमेन इतरयोः प्रसंगित्वाप्रसक्त्या विरुद्धेषु तंत्रित्वानुपपत्तिः। पाशुकसूक्तवाकप्रैषस्य त्वसाधारण्येन पश्वङ्गत्वात् तंत्रित्वमिति वैषम्य-मित्यर्थः। तथा नानुतिष्ठन्तीति। अविरोधे विद्यमानेऽपि न नवप्रयाजत्वादिकमनु-तिष्ठन्ति अपि तु पंचप्रयाजत्वादिकमेवेत्यर्थः। स्पष्टार्थमन्यत्।

इति श्रीकविमण्डनशंभुभट्टविरचितायां
भाट्टदीपिकाप्रभावल्यां द्वादशस्य
द्वितीयः पादः

---

# अथ द्वादशाध्यायस्य तृतीयः पादः

## (१)—विश्वजिति वत्सत्वङ्नामधेयाहृतमितरथा तन्त्रभूयस्त्वादहृतं स्यात् अविरोधो वा उपरिवासो हि वत्सत्वक् ॥ २ ॥

अष्टरात्ररूपे अहीने विश्वजित्प्रथममहः ततोऽभिप्लवषडहः ततोऽभिजित्। तत्र विश्वजित्येकाहकाण्डपठितविश्वजितो नामातिदेशः ततश्च 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति विहिता वत्सत्वक् विश्वजिति प्राप्यते, इतरेषु तु चोदनालिङ्गातिदेशादहतं वासः। तत्र यद्यपि नामातिदेशप्रापितवत्सत्वच एव प्राबल्यात्तदेव चान्याहस्सु प्रसज्येत, तथाऽपीतरेषामह्नां भूयस्त्वात्प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य ज्यायस्त्वन्यायेनाहृतस्यैव प्राबल्यावगतेस्तेनैव विश्वजित्येकस्मिन् प्रसङ्गसिद्धिः।

नह्यत्र तार्प्यादौ 'वासांसि विस्रंसयति' इतिवत् समुच्चयज्ञापकमस्ति, येन दशमाधिकरणपौनरुक्त्यं शङ्क्येत। न च कौपीनाच्छादने तार्प्यादिवदेव वत्सत्वचोऽयोग्यत्वादुपरिधारण एव वत्सत्वचो विधेयत्वप्रतीतेरत्राप्यहतेन समुच्चयश्शङ्क्यः। एकस्या वत्सत्वचोऽयोग्यत्वेपि अनेकासां सन्धानेन कौपीनाच्छादनेऽपि कच्छादिदानसम्भवेन योग्यत्वोपपत्तेः। एकवचनस्य पाशाधिकरणन्यायेन बहुत्वलक्षणयाप्युपपत्तौ प्रातिपदिकोपदेशस्योपरिधारणमात्रविषयत्वसङ्कोचे प्रमाणाभावात्। तार्प्यादौ तु ज्ञापकबलेन सङ्कोचाङ्गीकारान्नैकवचने लक्षणेति विशेष इति प्राप्ते—

---

### तृतीय पादः

#### विश्वजिति वत्सत्वङ्नामधेयात्

**प्रमेयबलाबलस्येति।** नामातिदेशगतं प्राबल्यं प्रमाणबलं यद्विषयकश्चोदनालिङ्गातिदेशः तद्गतं भूयस्त्वं प्रमेयं तद्बलवदित्यर्थः। **नह्यत्रेति।** एतच्च घृताक्तकंबलरूपतार्प्यस्य दार्भस्य च केशतृणमयत्वेन कौपीनाच्छादनायोग्यत्वेऽपि वत्सत्वचो दुग्धस्नेहादिना श्लक्ष्णत्वात् तद्योग्यतास्यादित्यस्याः, अथवा वक्ष्यमाणाया वा अधिकाशङ्काया उपलक्षणार्थं द्रष्टव्यं, अन्यथा वासांसि विस्रंसयतीत्येतद्वाक्याभावं कृत्वाचिन्तात्वस्यैव दाशमिकाधिकरणे उक्तत्वेन तादृशज्ञापकाभावयुक्तेरकिंचित्करत्वेन गतार्थत्वापरिहारात्। **ज्ञापकबलेनेति।** तार्प्यस्यानेकैस्सन्धाने सुतरां कौपीनाच्छादनायोग्यत्वरूपज्ञापकबलात्, अथवा वासांसीति बहुवचनज्ञापकबलात्

उपरिधारणे सहस्रशः परिदधातीति प्रयोगात् तत्रैकस्या एव वत्सचो विधानसम्भवे मेष्यधिकरणन्यायेन एकवचनलक्षणाया अन्याय्यत्वात् सन्धानेऽपि च कौपीनाच्छादनस्य तथाकर्तुमशक्यत्वात् उपरिधारण एव वत्सत्वचो विधानं, तत्रैव च तेन स्मृतिप्राप्ताहतनिवृत्तिः। अतश्चैकाहकाण्डपठितविश्वजित्येव कौपीनाच्छादने अहतस्य सत्त्वादष्टरात्रविश्वजित्यप्यहतनिवृत्त्यभावेन वत्सत्वचस्समुच्चयप्रतीतेः न वत्सत्वचा इतरेषु प्रसङ्गः, न वा अहतेन विश्वजिति वत्सत्वचः प्रसङ्गः। न चैवमपि भूयोऽनुग्रहानुरोधेनोपरिधारण एवाहतेन वत्सत्वचो निवृत्तेः कथं समुच्चय इति वाच्यं, उपरिधारणे साधनानेकत्वेऽपि बाधकाभावेन तत्तत्क्रत्वनुरोधेनाहतवत्सत्वचोःसमुच्चयसम्भवात्।

---

(२)—अनुनिर्वाप्येषु भूयस्त्वेन तन्त्वानियमस्स्यात् शिष्टकृद्दर्शनाच्च ॥ आगन्तुकत्वाद्वा स्वधर्मा स्यात् श्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥ स्वस्थानत्वाच्च ॥ ५ ॥ स्विष्टकृच्छ्रपणान्नेति चेत् विकारः पवमानवत् ॥ ६ ॥ अविकारो वा प्रकृतिवच्चोदनां प्रतिभावाच्च ॥ ७ ॥

---

इत्यर्थः। सहस्रश इति। 'कम्बलं परिधत्ते' 'रौरवं परिधत्ते' इत्यादिष्वित्यर्थः। मेष्यधिकरणन्यायेनेति। यथा प्रास्मा इति मन्त्रस्य पुंस्त्वांशे लक्षणया न मेष्यां प्रवृत्तिः पुंपशूनादायापि तन्निर्वाहे लक्षणायोगादिति नवमे न्याय उक्तः तेन न्यायेनेत्यर्थः। न वत्सत्वचेति। एकोपकारजनकत्वाभावेन नान्यतरेणान्यतरस्य प्रसङ्गसिद्धिरित्यर्थः। समुच्चयसंभवादिति। वस्तुतस्तु भूयोनुरोधेनाहतेनैवोपरिधारणे कृते तेनैवोपकारलाभे विश्वजिति वत्सत्वगुपरिधारणस्य संभवतोऽपि नानुष्ठानं युक्तं प्रसङ्गेन तदुपकारलाभात् इतरथा पशुपुरोडाशादावपि तत्तत्क्रत्वनुरोधेन प्रयाजाद्यनुष्ठानापत्तेः अतो नोपरिधारणेन समुच्चय इत्येव सिद्धान्तकरणं युक्तम्। एवं चाच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् इत्यधिकरणेन दाशमिकेन पौनरुक्त्यमपि नापद्यत इति ध्येयम्।

---

**चयनादावग्नीषोमीयपुरोडाशानन्तरं 'अग्नीषोमीयस्य पुरोडाशमनु** देवसुवां हवींषि **निर्वपति', तथैव अनूबन्ध्यादौ 'देविकाहवींषि निर्वपति'** इति **च** श्रुतम्। तदेषामनुनिर्वाप्याणां **हविषां बहुत्वात् तन्त्रित्वं पुरोडाशस्यैव तु पश्वपेक्षया क्लृप्तप्रसङ्गित्वस्य प्रसङ्गित्वम्।**

---

**अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात्।**

**देवसुवां हवींषीति।** तानि चाष्टौ "अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुं सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणां रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुं इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मित्राय सत्यायांबानां चरुं वरुणाय धर्मपतये यवमयं चरुं" इति वाक्यैः विहितानि देवं यजमानं सुवते ऐश्वर्यादिदानेऽभ्यनुज्ञां प्रयच्छन्तीति देवसुवः प्रकृताग्न्यादयोऽष्टौ देवताः तासां हवींषीत्यर्थः वेदभाष्ये। **तथैवानूबन्ध्यादाविति।** पशुपुरोडाशमनु देविकाहवींषि निर्वपतीति श्रुतमित्यर्थः। तानि च पञ्च "धात्रे पुरोडाशं द्वादशकपालं निर्वपति अनुमत्यै चरुं राकायै चरुं सिनीवाल्यै चरुं कुह्वै चरुम्"इति वाक्यैः अनारभ्य फलार्थं विहितानि तेषामेवानुबन्ध्याङ्गत्वं वचनादित्यर्थः। अतुल्यसंख्ययोः धर्मविरोधे भूयस्त्वस्य नियामकत्वेनोक्तस्य पूर्ववदपवादोऽयम्। **प्रसङ्गित्वमिति।** अत्र च पुरोडाशतन्त्रमध्यपाते सति भूयस्त्वस्य तन्त्रितानियामकत्वासम्भवेन पुरोडाशे प्रसङ्गित्वपूर्वपक्षासम्भवमभिप्रेत्य "स्विष्टकृच्छ्रवणान्नेति चेत् विकारः पवमानवत्" इति पूर्वपक्ष्युक्तयुक्त्यनुभाषणतत्परिहारसूत्रद्वयस्वारस्येन **प्रकाशकारैः** संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीतिवत् संस्थाप्येत्यश्रवणात् तृतीयाभावाच्च पुरोडाशमन्वित्युक्तेः प्रधानानन्तरमेव देवसुवां विधानात् तत्प्रधानानन्तरं तदीयस्य पूर्वस्य च पुरोडाशीयस्य स्विष्टकृतः साहित्यं प्राप्तमेव समवद्यतीत्यनूद्य स्विष्टकृच्छब्दकत्वमेव "स्विष्टकृते समवद्यति" इति वाक्ये विधीयते। तद्विधानाच्च "अग्निं स्विष्टकृतं यज" इत्येव प्रैषः संप्रतिपन्नदेवताको भवति न तु पशुपुरोडाशे स्विष्टकृति स्विष्टकृत्पदरहितस्याग्नेर्विधानात् विप्रतिपन्नदेवताकोऽग्नये प्रेष्येति। अतोऽनुनिर्वाप्याणामेव साधर्म्यं पुरोडाश एव प्रसङ्गीति पूर्वपक्षं प्रापय्य संस्थाप्येत्यश्रवणेऽपि तृतीयाभावेऽपि वेदं कृत्वा वेदिं करोतीत्यत्र मध्ये क्षुतादिनिमित्ताचमन इव स्वाङ्ग स्वस्याव्यवधायकमिति न्यायेन मध्ये स्विष्टकृति कृतेऽपि पशुपुरोडाशमन्विति विधिविरोधाभावात् स्विष्टकृतस्सहत्वाप्राप्तेस्तदेव स्विष्टकृते समवद्यतीति वाक्ये विधेयं न स्विष्टकृच्छब्दकत्वं तस्यापि विधौ वाक्यभेदात् स्विष्टकृच्छब्दस्तु शेषभाजोऽग्नेरुपलक्षणमिति सिद्धान्तितं; **तदयुक्तमिति** सूचयन् पक्षान्तरेण पूर्व-

यदि तु अनुशब्दयोगात् 'वैमृधमनुनिर्वपति' इतिवदुत्तरकालत्वप्रतीतेस्तस्य च प्रयोगान्वयित्वात्पशुपुरोडाशप्रयोगविधिविहिताङ्गोपेतपशुपुरोडाशानन्तरमनुनिर्वाप्याणां स्वाङ्गोपेतानां प्रयोगविधिरिति विभाव्यते, तदाऽस्तु वैमृधवत् प्रयोगभेद एवेति नानयोर्मिथः तन्त्रिप्रसङ्गिभावः। अतश्च यथैव वपायागोत्तरं पशुपुरोडाशप्रयोगविधानाद-न्यतोऽलब्धोपकाराणां निर्वापस्विष्टकृदादीनां पशुपुरोडाशप्रयोगविधिविधेयानां वपायागोत्तरमेव करणम्, तथैव देविकाहविषामपि स्वप्रयोगविधिविधेयनिर्वापस्विष्टकृदाद्यङ्गोपेतानां साङ्गपशुपुरोडाशोत्तरकालमेव करणमिति न मिथः प्रसङ्गः। उभयोरपि तु पशुतन्त्रमध्ये पाठात् पाताद्वा तदीयप्रयाजादिप्रसङ्ग इति प्राप्ते—

नात्र पशुपुरोडाशवत्प्रयोगविधिः, तथात्वे तद्वदेव स्विष्टकृद्भेदापत्त्या शतपथे पशुपुरोडाशयागमभिधाय तस्य 'सोऽनिष्टस्विष्टकृत्' इत्यनेनानिष्टस्विष्टकृत्त्वलक्षणं गुणं विधायानुनिर्वाप्यप्रधानकरणबोधकवाक्यसन्दर्भानुपपत्तेः। तेनात्रानुशब्देनानुनिर्वाप्यपशुपुरोडाशयोः तत्तदङ्गप्रधानानां तत्तदङ्गप्रधानोत्तरत्वस्यैव विधानात् समानतन्त्रत्वस्यैव

---

पक्षमाह--यदि त्विति। अयं भावः तृतीयाद्यभावेपि अनुशब्देन तदुत्तरकालवाचित्वात् कालविधाने सति तदुत्तरकालविशिष्टप्रयोगान्तरमेवानुनिर्वाप्याणां विधीयत इति न प्रधानमात्रानन्तरानुष्ठानेन स्विष्टकृतस्सहत्वं प्राप्यते येन तत्प्राप्तया स्विष्टकृच्छब्दकत्वविधानमूलकः पूर्वपक्षः सिद्ध्येत्। किंच यदि पुरोडाशीयस्विष्टकृत्यपि स्विष्टकृच्छब्दकत्वविधानेन सप्रतिपन्नदेवताकोऽग्निं स्विष्टकृतं यजेति इति प्रैषः, तथापि स अनुनिर्वाप्याणामिव पशुपुरोडाशस्यापि भवतीति प्रवृत्ततन्त्रत्वस्योभयत्रापि साम्ये केन विशेषेणानुनिर्वाप्याणां तन्त्रित्वपूर्वपक्षस्सिद्ध्यति। अतः प्रवृत्ततन्त्रत्वाविशेषे प्राचामिव भूयस्त्वमेव नियामकं वक्तव्यमिति वृथैव स्विष्टकृच्छकत्वविधित्वेन पूर्वपक्षकरणम्। यदपि साहित्यविधानेन सिद्धान्तोपपादनं तदपि सिद्धान्ते निराकरिष्यते अतः पूर्वोक्तयुक्त्या न मिथस्तन्त्रित्वप्रसङ्गित्वमित्येव पूर्वपक्षकरणं युक्तमिति। न चानन्तर्यापरपर्यायक्रमपर एवानुशब्द इति वाच्यं, क्रमापेक्षया प्रथमतः प्रयोगान्वयिनः कालस्यैवापेक्षितत्वेन कालान्तरालाभे कालपरत्वस्यैवौचितत्वात्। अत एव संस्थाप्येति कालान्तरश्रवणात् वैमृधवाक्येऽनुशब्दस्य क्रमपरत्वमेवेति वैषम्यम्। प्रयाजादिप्रसङ्ग इति। स्विष्टकृतस्तु भेदेनैवानुष्ठानमित्यर्थः। सोऽनिष्ट इति। नामैकदेशे नामग्रहणमिति न्यायात् इष्टपदेनेष्टकृत्पदमुच्यते। ततश्च स्विष्टकृत्संज्ञको यागः स्विष्टकृत्पदरहितदेवताकः कार्य इति मध्ये गुणविशेषमात्रविधानानन्तरमनुनिर्वाप्यहविषां विधानात् पशुपुरोडाशस्विष्टकृद्यागात्पूर्वं तेषामनुष्ठानं पाठक्रमात् प्रतीयते तदनुरोधेनानुशब्दोऽपि क्रमपर एव न कालपरः अतो न प्रयोगविधिरित्यर्थः। अनुनिर्वाप्यपशुपुरोडाशयोरिति अस्य

**प्रतीतेः न तावद्वयोरपि प्रयोगभेदः। वपायागोत्तरकालं पुरोडाशयागप्रयोगविधौ तु न किञ्चिद्बाधकम्। प्रत्युत तदीयस्विष्टकृत्यग्नेर्निर्गुणत्वविधिः प्रयोगभेदतात्पर्यग्राहक एव। ततश्चानुनिर्वाप्येषु पशुपुरोडाशनिर्वापाद्येकपदार्थं कृत्वा तदीयनिर्वापाद्येकैकपदार्थकरणं स्विष्टकृति तु क्रमेण सर्वोत्तरार्धानवदाय सकृत्करणमिति वस्तुस्थितिः।**

**तदिहाविरुद्धाङ्गेषु तन्त्रतैव। विरुद्धेषु तु सत्यपि देविकाहविषां बहुत्वेऽनुशब्देन पशुपुरोडाशानुगुणत्वप्रतीतेस्तत्तन्त्रपातावगमात् तत्प्रयुक्ताङ्गोपजीवनावगमाद्वा प्रसङ्गित्वमेव। अत एवानुनिर्वाप्यप्रधानकरणोत्तरं 'अग्नये स्विष्टकृते समवद्यति' इत्युक्त्वा 'अग्नये स्विष्टकृते प्रेष्य' इति मैत्रावरुणं प्रति प्रैषाम्नानमपि शतपथब्राह्मणे सङ्गच्छते। अनुनिर्वाप्यतन्त्रित्वे तु होतारं प्रत्येवैष्टिकातिदेशेन 'अग्निं स्विष्टकृतं यज' इति प्रैषापत्तेः। अत एव पशुपुरोडाशतन्त्रित्वेन स्विष्टकृति निर्गुणस्यैवाग्नेः प्राप्तौ स्विष्टकृच्छब्दप्रतिप्रसवार्थत्वेन 'अग्नये स्विष्टकृते समवद्यति' इत्यस्य सार्थक्यम्।**

यत्तु **सूत्रकारेणैवंविधं सार्थक्यमुक्त्वा** धात्वर्थ एवात्र विधीयते, स्विष्टकृच्छब्दस्तु

---

समानतन्त्रत्वस्यैव प्रतीतेरित्यनेनान्वयः। **तत्तदङ्गप्रधानानामिति** । अनुशब्देनानुक्रमस्य विधाने सति पशुपुरोडाशनिर्वापोत्तरमनुनिर्वाप्यनिर्वापः पशुपुरोडाशप्रधानप्रचारानंतरमनुनिर्वाप्यप्रधानप्रचार इत्येवमङ्गानां तत्तदङ्गोत्तरत्वस्य प्रधानानां तत्तत्प्रधानोत्तरत्वस्य विधानान्न प्रयोगभेद इत्यर्थः। **न किञ्चिद्बाधकमिति**। प्रचर्येति कालाम्नानादित्यर्थः। **प्रत्युतेति** । यदि पशुपुरोडाशयोरेकप्रयोगत्वं स्यात् तदा स्विष्टकृतस्तन्त्रेणैवानुष्ठानात् स्विष्टकृद्भेदाभावे पशुपुरोडाशे निर्गुणाग्निमात्रदेवताविधानमनुपपन्नं स्यादतोऽपि प्रयोगभेद इत्यर्थः। **प्रैषापत्तेरिति**। मैत्रावरुणकर्तृकपुरोनुवाक्यापाठे सर्वत्र चतुर्थ्यन्तं समुच्चार्य प्रेष्येति नियमस्य होतृकर्तृकतत्पाठे द्वितीयान्तमुच्चार्य यजेति नियमस्य व्यवस्थया विधानादिति भावः। अत्र च पशुपुरोडाशस्य देवसूदेविकाहविषां चाग्नये स्विष्टकृते समवद्यति इति वचनेनाग्निस्विष्टकृद्देवतानुवादलिंगात् अनुनिर्वाप्याणां तन्त्रित्वमिति पूर्वपक्ष्युक्तानुभाषणं स्विष्टकृच्छ्रवणान्नेति चेदिति सूत्रेण, तत्परिहारार्थं विकारः पवमानवदित्यपरं सूत्रं। नेन च स्विष्टकृच्छब्दरूपस्य विकारस्य पशुपुरोडाशे विधानं क्रियते इति परिहारं कृत्वा "अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च" इति सूत्रान्तरेणाप्राप्तस्विष्टकृदनुवादेन देवसूहविषां पुरोडाशस्य च साहित्यस्य स्विष्टकृच्छब्दस्य च विधाने वाक्यभेदापत्तेः प्रकृतितो यथाप्राप्ति स्विष्टकृच्छब्दकत्वस्यानुवादक एव स्विष्टकृच्छब्दोऽवदानसाहित्यमेव तु विधीयत इति प्रकारान्तरं प्रदर्शितं तदनूद्य दूषयति—**यत्त्विति। धात्वर्थ एवात्रेति**। यद्यपि धात्वर्थानुवादेन साहित्यमात्रविधानं प्राचां ग्रन्थेषु दृश्यते न धात्वर्थस्यैव विधानं अतो धात्वर्थ-

अविवक्षितार्थ इति प्रकारान्तरमुक्तं तत्प्रौढिमात्रम्। तस्मात्पुरोडाशोऽपि स्विष्टकृदादि-विषये तन्त्री अनुनिर्वाप्याः प्रसङ्गिन इति सिद्धम्।

वस्तुतस्तु काण्वशाखायां 'अग्निं स्विष्टकृतं यज' इति प्रैषाम्नानात्तेषामपि तन्त्रित्वा-वगतेर्विकल्प एव युक्तः।

---

एवात्र विधीयत इत्यनुपपन्नं, तथापि साहित्यवाचकपदान्तराभावे समित्युपसर्गस्यैव तत्परत्वावश्यकत्वे एकप्रसरताभङ्गापत्तिभिया साहित्यावच्छिन्नावदानान्तरस्यैव विधेयत्वात्, अथवा अतिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण विशिष्टविधेरावश्यकत्वात्तदभिप्रायेण तदुक्तिरिति ध्येयम्। अयमर्थः पुरोडाशस्य तन्त्रित्वे प्रसङ्गेनानुनिर्वाप्याणां स्विष्टकृद्यागजन्योपकारलाभेन पृथगनुष्ठानाप्रसक्तौ साहित्यविधानानुपपत्तिः। प्रसङ्गसिद्ध्यर्थमेवावदानसाहित्यं तु न्यायत एव प्राप्तं नैव विधेयं अतः पशुपुरोडाशस्य देवमूहविषामग्निस्विष्टकृद्देवताविधानमेव क्रियते तत्रानुनिर्वाप्येषु विशिष्टाया देवतायाः पशुपुरोडाशे च विशेष्यस्याग्नेः प्राप्तत्वात् प्राप्ताप्राप्तविवेकेन पशुपुरोडामात्रांशेऽप्राप्त-स्विष्टकृच्छब्दकत्वविधान एव तात्पर्यं युक्तम्। अत एव स्विष्टकृदिदं समानमित्यापस्तंबसूत्रानु सारात् अग्निमात्रस्यैव देवतात्वमङ्गीकृत्य 'अग्नये प्रेष्य' इति प्रैषानुष्ठानं समानतन्त्रत्वेऽपि याज्ञि-कानां तदपास्तमिति। अतोऽनुनिर्वाप्याणामर्थे न पृथक् स्विष्टकृदनुष्ठानमित्युपसंहरति—तस्मादिति। वस्तुतस्तु समानतन्त्रत्वपक्षे दर्शपूर्णमासयोरिव भवन्मते देवतैक्यात् स्विष्टकृतस्त-न्त्रत्वस्यैव प्राप्तौ न पशुपुरोडाशीयस्विष्टकृतानुनिर्वाप्यस्विष्टकृतः प्रसंगसिद्धिः स्वयमपि तथैव पूर्वमुपपादितत्वादपि तथा, एवं चाग्नये स्विष्टकृते समवद्यतीत्यनुवादबलात् यदनुनिर्वाप्याणां तन्त्रित्वं पूर्वपक्षिणोपन्यस्तं तदन्यपरत्वेन परिहरणीयम्, तत्राग्निस्विष्टकृद्देवताविधानापेक्षया अनुक्रमविधानेन देवताभेदेन स्विष्टकृद्भेदे प्राप्ते साहित्यावच्छिन्नधात्वर्थविधानमेव युक्तं वक्तुम्। ततश्च स्विष्टकृदनुवादवचनस्य साधारणत्वात् नैकतरस्य तन्त्रित्वे नियामकतेत्यर्थे सिद्धे पूर्वोक्त-युक्त्या प्रेष्येति प्रैषाम्नानाच्च पशुपुरोडाशस्यैव तन्त्रित्वं निर्णेयम्। तावतापि नाऽनुनिर्वाप्य-स्विष्टकृतः प्रसङ्ग इति भ्रमितव्यं साहित्येनोभयोर्विधानात्। किन्तु तदानीं पशुपुरोडाशस्विष्टकृति केवलाग्नेर्देवतात्वात्तदीयस्यैवाग्नये प्रेष्येति प्रैषस्य प्राप्तेस्तेनैवानुनिर्वाप्यप्रैषस्य प्रसङ्गसिद्धिरित्येव प्रासङ्गिकत्वं ज्ञेयमिति मम भाति। एवं च याज्ञिकाचारोऽप्यनुगृहीतो भवति। अत एव साहित्यविधिमूलकसमानत्वविधायकापस्तम्बवचनात् अनुनिर्वाप्यस्विष्टकृत्यपि शुद्धस्यैवाग्नेर्देवतात्व-मिति न प्रसङ्गस्य न वा स्विष्टकृत्तन्त्रत्वस्य विघातः। अस्तुवा अग्नये स्विष्टकृते प्रेष्येति प्रैषा-म्नानबलादस्यापि पुरोडाशस्विष्टकृति सगुणाग्निदेवताविधायकत्वमेव पूज्यपादोक्तविधया, तथापि तदीयप्रैषेणेतरस्य प्रैषस्य प्रसङ्गसिद्धिरित्येव तात्पर्यमिति ध्येयम्। वस्तुतस्त्विति। यथैव माध्यन्दि—

(३) एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ८ ॥

वाक्येनैकाघारार्थत्वेन विहितानामपि 'ऊर्ध्वमाघारयति, सन्ततमाघारयति, ऋजुमाघारयति' इत्यादिना ऊर्ध्वत्वादीनामवान्तरकार्यभेदात् प्रयाजादिवदेव प्रधानप्रयोग विधिना सर्वेषां युगपद्ग्रहणेन समुच्चयावगतेर्न विकल्पमङ्गीकृत्य एकस्य एकेन प्रसङ्गसिद्धिः, ऊर्ध्वत्वं हि यथा दृष्टविधया आघारजनकं न तथा सन्ततत्वम्। तत्तन्नियमादृष्टभेदस्तु स्फुट एव। अवघातपेषणादिवदेवैतेषां समुच्चयः।

---

(४)—एकार्थास्तु विकल्प्येरन् समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ ९ ॥ अभ्यस्येतार्थवत्त्वादिति चेत् ॥ १० ॥ नाश्रुतत्वात् विकल्प-वच्च दर्शयति कालान्तरार्थवत्त्वं स्यात् ॥ ११ ॥

यत्र त्ववान्तरकार्यमप्येकं यथा व्रीहियवादौ

---

नानां श्रुतौ "आश्राव्याहाग्नये स्विष्टकृते प्रेष्य" इति प्रैषाम्नानात् पुरोडाशस्य तन्त्रित्वमेवं काण्वानां श्रुतौ "आश्राव्याहाग्निं स्विष्टकृतं स्विष्टकृतं यज" इति प्रैषाम्नानात् अनुनिर्वाप्याणामपि तन्त्रित्वं प्रतीयते ततः तन्त्रित्वे उभयोर्विकल्पः। अधिकरणं तु न्यायव्युत्पादनमात्रार्थं कृत्वाचिन्तयेति द्रष्टव्यमित्यर्थः। यत्तु कर्केण विकल्पपक्षमुक्त्वा भूयस्त्वानुग्रहोऽनुरूपतर इति यजप्रैष एवेति स्वमतमुक्तं तत् श्रुतिविरोधात् मीमांसान्यायविरोधात् उपेक्षितं पूज्यपादैः।

---

एककर्मणि शिष्टत्वात् गुणानां सर्वकर्म स्यात्। स्पष्टार्थमेतत्।

---

एकार्थास्तु विकल्पेरन्

अवान्तरकार्यमप्येकमिति। पुरोडाशनिष्पत्तिरूपमित्यर्थः। अत्र च विकल्पे प्रयोजकं सूत्रकृता यद्यप्येकार्थत्वमभिहितं, अन्यत्र च निबन्धकारैर्दृष्टार्थत्वं, न चैतद्युक्तं अरुणैक-हायन्यादीनामपि एकक्रयार्थत्वेन विकल्पापत्तेः स्वर्गपश्वाद्येकफलानां कर्मणां दृष्टार्थत्वाभावेन

तत्र समुच्चयग्राहकप्रमाणाभावाद्विकल्प एव। न च तत्र प्रयोगविधिना युगयदुभयोपसङ्ग्रहात् समुच्चयः, विनियोगानुसारेणैव हि प्रयोगविधिकल्पनात्। यत्र प्रमाणान्तरेण विनियोगविधिवेळायामवान्तरकार्यैक्यं न निर्णीतं यथा प्रयाजादौ तत्रैव प्रयोगविधिना एकवाक्योपादानेन साहित्यावगमात्समुच्चयः। शक्यते च प्रयाजादौ कारणतावच्छेदकवैजात्ये कार्यतावच्छेदकवैजात्यस्यौत्सर्गिकत्वादवान्तरकार्यभेद एव निर्णीत इति वक्तुम्। प्रकृते तु पुरोडाशनिष्पत्तिरूपावान्तरकार्यस्यैकत्वावधारणात् प्रथमावगतविनियोगविध्यनुरोधेन प्रयोगविधिनाऽपि विकल्पेनैव ग्रहणम्।

यद्यपि तेषामर्थाधिकरणकौस्तुभोक्तरीत्या व्रीहित्वयवत्वादिरूपकरणतावच्छेदकभेदेनाग्नेयत्वादिव्याप्यधर्माणां कार्यतावच्छेदकत्वकल्पनं, तथाऽप्याग्नेयत्वरूपव्यापकधर्मावच्छिन्ननिरूपितसाधनताकपुरोडाशनिष्पत्तिरूपावान्तरकार्यभेदे प्रमाणाभावात् तदैक्यनिर्णयस्स्फुट एव। विशिष्य च तत्तद्वाक्ये तृतीयया निरपेक्षसाधनत्वावगमात् नियमविधिबलेन च स्वेतरसकलनिवृत्तिप्रतीतेः नैकस्मिन्नपि कार्ये व्रीहियवयोस्समुच्चयसम्भव इति व्यक्तं हेत्वधिकरणे कौस्तुभे।

---

विकल्पानापत्तेश्च। नापि भिन्नवाक्योपात्तत्वे सत्येकार्थत्वमरुणैकहायन्यादिव्यावृत्तं तत्। ऊर्ध्वमाघारयति ऋजुमाघारयति इति भिन्नवक्यविहितोर्ध्वत्वादीनामेकाघारार्थतया विकल्पापत्तेः। नापि निरपेक्षसाधनत्वबोधकभिन्नवाक्योपात्तत्वे सत्येकार्थत्वमवघातप्रोक्षणादीनामेकव्रीह्यर्थत्वेन विकल्पापत्तेः। न चावघातादौ तृतीयाद्यभावात न निरपेक्षसाधनत्वबोधः सर्वपदविधौ सामर्थ्यापेक्षणात। अत एव शब्दान्तराधिकरणवार्तिके सोमेन यजेत हिरण्यमात्रेयाय ददातीत्यादावुक्तं "न च समुच्चयं प्रतिपद्यन्ते धात्वर्थाः एकस्यां भावनायां करणांशावरोधादन्योन्यनिरपेक्षभिन्नशब्दोपादानाच्च" इति आधानपवमानेष्ट्योरपि विकल्पापत्तेश्च। अथ तु तत्र "सद्यो निर्वपेत्" "द्वादशरात्रिषु निर्वपेत्" इत्यादिसमुच्चयवचनात् समुच्चयप्रमाणाभावे सतीत्यपि विशेषणीयं तर्हि लाघवात् समुच्चयप्रमाणाभाव एव तत्प्रयोजकोऽस्तु "दण्डेन दीक्षयति मेखलया दीक्षयति" इत्यादौ सत्यप्येकार्थत्वे पञ्चमे तेषां दीक्षाभिव्यक्त्यर्थतोक्तेः दीक्षायाश्च यमनियमपरिग्रहरूपत्वेऽपि दीक्षणीयाजन्यादृष्टसंस्कारसंस्कृतस्य तद्योग्यत्वात् तादृशाभिव्यक्तेश्च व्रीह्यादिनेव यागस्य एकेन सिद्धिदर्शनात्। एकेन प्रयोगविधिना तदभिव्यक्त्यर्थतया सर्वेषां ग्रहणात् समुच्चयः अतस्समुच्चयप्रमाणाभावस्यैव सूत्रगतैकार्थपदेनोपलक्षणात् स एव विकल्पप्रयोजक इत्यभिप्रेत्याह—समुच्चयग्राहकेति। विशिष्य चेति। अत्र च शास्त्रदीपिकादिग्रन्थात्।

व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनम्।

अतश्च व्रीहियवस्थले यागावृत्त्या मिश्रीकरणेन वा समुच्चयासम्भवात् विकल्पमङ्गीकृत्यैकेनैव तत्कार्यसिद्धौ तत्प्रयोगे इतरस्य प्रसङ्गः। अत एव सर्वसाधारणमस्मदुक्तं प्रसङ्गलक्षणमप्यत्र सुस्थम्। एवं च शास्त्रान्तरपर्यालोचनया यवाद्यनादृतप्रयोग एव व्रीह्यादेरङ्गत्वावगमात् तत्प्रयोगे तदितरस्यानङ्गत्वादेव न क्रतुवैगुण्यमपि।

---

यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते" इतिस्मृतिपादगतवार्तिकतन्न्यायसुधादिग्रन्थस्वारस्याच्च निरपेक्षसाधनत्वं विकल्पप्रयोजकं भाति। न च तद्युक्तं पूर्वोक्तदूषणापरिहारात् दण्डादीनां निरपेक्षसाधनानामपि समुच्चयदर्शनाच्च। अतो निरपेक्षसाधनत्वं मिश्रताव्यावृत्तिद्वारा समुच्चयप्रमाणाभावोपपादकतामात्रोपयोगीति विशिष्य चेत्यनेन सूचितम्। **नियमविधिबलेन चेति।** पुरोडाशप्रकृतित्वेनानियतद्रव्यप्राप्तौ व्रीह्यादिशास्त्रैर्णैकैकद्रव्यनियमकरणात् व्रीह्यादिव्यतिरिक्तसकलद्रव्यनिवृत्तेर्न मिश्रत्वं युक्तम्। किंचैतद्विध्यभावे यादृशी पाक्षिकी प्राप्तिः तद्विषय एव नियमो विधेयः। नहि पक्षे मिश्रितद्रव्यप्राप्तिरस्ति। प्रकृत्युपादित्सया एकस्मिन्नेव द्रव्ये प्रवृत्तेरित्यर्थः। यागावृत्त्येति। एतेन सोमयागाभ्यासस्येवेहापि एकदा व्रीहिभिः कृतस्य यागस्य पुनर्यवैरभ्यासेन समुच्चय इत्यपास्तम्। पुरोडाशनिष्पत्तिरूपकार्यस्यैकेनापि सिद्धेः अन्यापेक्षाभावात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात्। सोमे तु अदृष्टार्थानां द्रव्यदेवतासंबन्धानां बहूनामपर्यायविधानस्यावृत्तिं विनानुपपत्तेरभ्यास इति वैषम्यमित्यर्थः। अत्र शास्त्रदीपिकायां अधिकरणान्ते—ननु चान्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्गः ;

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।
एवमत्र प्रसङ्गः स्याद्विद्यमाने स्वके विधौ॥

इति वचनात्। अत्र तु द्वयोरप्याग्नेयार्थत्वात् नास्ति प्रसङ्गस्वरूपमित्याशङ्क्य सत्यमेतावान्विशेषः तथापि अन्येन कार्यसिद्धेरन्यस्य निवृत्तिरित्येतावता सामान्येनात्र सङ्गतिरित्युक्तं, तत्रान्यार्थेनान्यस्य कार्यसिद्धिरित्येवं प्रसङ्गस्वरूपस्यैवानङ्गीकारात् अन्यत उपकारलाभप्रयुक्ताङ्गानमुष्ठानमित्यस्यैव प्रसङ्गस्वरूपस्याङ्गीकारात् सङ्गत्युपपत्तेः सादृश्यमात्रेण तदुपपादनं वृथैवेति सूचयितुमाह—**अत एवेति।** यथा चान्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्ग इति लक्षणमयुक्तं तथा प्रथमत एवोपपादितम्।

---

## (५)—प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः ॥

प्रायश्चित्तानि कर्मवैगुण्यनिमित्तदोषनिर्घातार्थानि । तेषु यानि एकस्मिन्नेव वैगुण्ये अनेकानि निरपेक्षाणि तत्तद्वाक्यैर्विधीयन्ते तेष्वपि सत्यप्यदृष्टार्थत्वे पूर्ववत् विकल्पः । यथा 'यदि सामतो यज्ञ आर्तिमियात् सुवरित्याहवनीये जुहुयात्' इति कस्यांचिच्छाखायामध्वर्युकर्तृको होमः । अपरस्यां न 'यदि सामतो यज्ञ आर्तिमियात् स्वरित्याहवनीये' इति ब्रह्मकर्तृको होमः । इदं चैकजातीययज्ञार्तावेव तत्परिहारार्थं प्रायश्चित्तद्वयम् । तथा दर्शपूर्णमासातिक्रमण एव क्वचित्पाथिकृतीष्टिः क्वचिच्च वैश्वानरीति । तदत्रापि दर्शपूर्णमासातिक्रमनिमित्तप्रत्यवायपरिहारार्थत्वमपेक्षितविधिबलाद्वाक्यशेषाच्चावगम्यते । अतश्च व्रीहियवादिवदेव तत्तद्विनियोगविधिवेळायामेवैकवैगुण्यध्वंसरूपावान्तरकार्ये नैरपेक्ष्येण साधनत्वावगमात् युक्तोऽत्रापि विकल्पः ।

न च कारणतावच्छेदकवैजात्याद्धर्मव्यवस्थासिद्धेः चावान्तरापूर्वभेदस्यावश्यकत्वात् कथं न प्रयाजादिवत्समुच्चयः । तद्भेदेऽपि नैरपेक्ष्येणैव विनियोगविधिदशायां उभयोस्तददृष्टयोरेकवैगुण्यध्वंसजनकत्वावगतेः प्रयाजादिवदौत्तरकालिकेन प्रयोगविधिना समुच्चयाप्रतीतेः ।

न ह्येकादशोक्तरीत्या एकस्मिन् प्रधानोपकाराख्ये महाकार्ये प्रयाजादीनां सर्वेषामङ्गानां प्रयोगविधिना साहित्यावगमवदवान्तरकार्येऽपि साहित्यावगमः, तथात्वे उत्पत्तिविनि

---

प्रायश्चित्तेषु चैकार्थ्यात् ।

तेषु यानीति । एतेन "यद्यृक्तो यज्ञ आर्तिमियात् भूःस्वाहेति गार्हपत्ये जुहुयात् अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति । यदि सामतः स्वः स्वाहेत्याहवनीये यद्यविज्ञाते भूर्भुवः स्वः स्वाहेत्याहवनीय एव" इति भाष्यकारेणोदाहृतान्यपि वाक्यानि समाधानार्थप्रायश्चित्तदृष्टान्ततयोपात्तानि न तु विकल्पसमुच्चयचिन्ताविषयत्वेन तेषां निमित्तभेदेन विहितानां निमित्ताभावे समुच्चयस्य एकतरनिमित्तसत्त्वे विकल्पस्य वा संभवात्, एवं चैतान्यपि विकल्प्यन्त इति यदधिकरणमालायां सिद्धान्तितं तदयुक्तमिति सूचितम् । प्रकृतचिन्तायोग्यान्येव वाक्यानि दर्शयति—यथेति । क्वचित्पाथिकृतीति । "योऽमावास्यां पौर्णमासीं वातिपातयेदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् योऽमावास्यां पौर्णमासीं वातिपातयेत् वैश्वानरं द्वादशकपालं निर्वपेत्" इति वाक्यद्वयेनैकस्मिन्निमित्ते विहितमिष्टिद्वयमित्यर्थः । अपेक्षितविधिबलादिति । विधिविहितभावनाया भाव्यापेक्षायामुपस्थितत्वाद्दर्शाद्यतिक्रमनिमित्तप्रत्यवायपरिहारार्थत्वकल्पनात् अनारभ्याधीनत्वाच्च न भेदनहोमवत् कर्माङ्गतेत्यर्थः । वाक्यशेषाच्चेति । "अग्निर्वै देवानां पथिकृत्

योगावगतनैरपेक्ष्यबाधापत्तेः। अतस्तस्य विनियोगवाक्यप्रमितावान्तरकार्यनिरूपितत्वस्यावश्यकत्वाद्युक्तो विकल्पः।

न चैवमपि प्रकृते नैरपेक्ष्यस्य तत्तदवान्तरापूर्वनिरूपितत्वेनैवोपपत्तेः वैगुण्यध्वंसनिरूपितत्वे प्रमाणाभावः, तस्य वैगुण्यध्वंसनिरूपितनैरपेक्ष्यावगमोत्तरकालं धर्मव्यवस्थादिसिद्ध्यर्थं कल्पितस्य तद्बाधकत्वानुपपत्तेः।

---

## (६)—समुच्चयस्त्वदोषातिघातार्थेषु ॥ १३ ॥

यानि दोषग्राहकप्रमाणाभावाच्च दोषनिर्घातार्थानि अपि तु केवलं निमित्ते नैमित्तिकानि अदृष्टार्थानि तत्रैकनिमित्तकानेकनैमित्तिकस्थले प्रयाजादिवत्समुच्चय एव। यथा अन्वाधानोत्तरं चन्द्रसूर्योपरागे इडाभक्षणात्पूर्वमपि 'उद्वयं, उदुत्यं, चित्रं' इति मन्त्रत्रयकरणकहोमत्रयविधौ। न हि तत्र कश्चिद्दोषः वेधादिप्रयुक्तस्यापीडाभक्षणात्पूर्वमप्रवृत्तेः। एतादृशविषये प्रायश्चित्तसमाख्या तु प्रायश्चित्तकाण्डपठितत्वमात्रेणौपचारिकी, यजमानकर्तव्यसामवैदिकपदार्थेषु औद्गात्रसमाख्यावत्। न तु पापविशोधकत्वेन, पापादेरेवाप्रसिद्धेः।

यत्त्वत्र भाष्यकारेण सूर्योदयात्पूर्वमग्निहोत्रहोमाकरणे प्रायश्चित्तद्वयाम्नानमुदाहृतं, तत्—

---

तमेव स्वेन भागधेयेनोपासीरन् स एवैनं पन्थानमपिनयति स एनं व्रतमालंभयति" इति भाष्यलिखिताद्वाक्यशेषादित्यर्थः। स्पष्टार्थमन्यत्।

---

### समुच्चयस्तु अदोषनिर्घातार्थेषु।

**इडाभक्षणात्पूर्वमिति।** यद्यपि श्रौतकर्मणि सर्वदा न वेधादिदोष इति इडाभक्षणात्पूर्वमित्यविशेषकरं तथापि इडाभक्षणे कदाचिदृत्विजां भोजनादाविव दोषसंभावनाभिप्रायमात्रेण तदुक्तिरिति ज्ञेयम्। **प्रायश्चित्तद्वयाम्नानमिति।** यस्याहुतमग्निहोत्रं सूर्योऽभ्युदीयात् मैत्रं चरुं निर्वपेत् सौर्यमेककपालं यस्याहुतमग्निहोत्रं सूर्योभ्युदीयात् अग्निं समाधाय वाचं यत्त्वा दंपती सर्वाहमुपासीयातामिति वाक्यद्वयेन प्रायश्चित्तद्वयाम्नानमित्यर्थः। अत्र च भाष्यलिखितोदाहरणे यस्याहुतमिति विशेषणात् सूर्योदयात् पूर्वमग्निहोत्रहोमाकरणे सति यदि सूर्य उदीयादित्यर्थेनानुदितकालातिक्रम एव प्रायश्चित्तविधानप्रतीतेस्सूर्योदयात् पूर्वमग्निहोत्रहोमकरणे तथोदितहोमिनां कालातिक्रमनिमित्तदोषनिर्घातार्थत्वप्रतीतेरित्यादिलिखनं प्रमादपतितमेव। अतस्सूर्योदयात्

रूपं कालोऽनुनिर्वापो देवता श्रपणं तथा।
आदौ ये विधृताः पक्षास्त इमे सर्वदा स्मृताः॥

इति छन्दोगपरिशिष्टानुसारादनुदितहोमिनां कालातिक्रमनिमित्तदोषनिर्घातार्थत्वोपपत्तेः। इतरथा उदितहोमिनां सर्वदा प्रायश्चित्तकरणापत्तेरुपेक्षितम्। यदपि पार्थसारथिना 'भिन्ने जुहोति' इत्याद्युदाहृतं तदपि क्रत्वङ्गकपालभेदननिमित्तवैगुण्यसमाधानार्थत्वोपपत्तेः द्वितीयप्रायश्चित्तालिखनाच्चोपेक्षितम्।

---

पूर्वमग्निहोत्रहोमाकरणे अग्रे चानुदितहोमिनामिति लिखितुं युक्तमिति ध्येयम्। वैकल्पिकानामादितोऽवधारणनियमप्रदर्शनपरेयं कारिका—रूपमिति। अस्यार्थः रूपं द्रव्यं, कालोऽनुदितोदितरूपः, अनुनिर्वाप्यो वैमृधादिः, तस्य समानतन्त्रत्वं वैकल्पिकं, देवता इन्द्राग्नी क्वचित् अग्नीन्द्राविति विकल्पेन विहिता, श्रपणं गार्हपत्ये आहवनीये वा वैकल्पिकं, एतेषु वैकल्पिकेषु पदार्थेषु मध्ये य एवादौ नियमेनादौ परिगृहीतः पक्षःस एवान्तं कर्तव्यो न तु मध्येऽनियमः कार्य इति। इतरथेति। यदि दोषनिर्घातार्थतामनङ्गीकृत्यैव केवलमदृष्टद्वाराग्निहोत्रहोमाङ्गमिदं प्रायश्चित्तद्वयमुच्येत तदा येषामुदितहोमिनां सूर्योदये जातेऽपि न दोषप्रसक्तिस्तेषामपि नित्यवदनुष्ठानापत्तिरित्यर्थः। यदपीति। अङ्गनाशे हि सति विध्यतिक्रमात्तेन च दोषोत्पत्तेः आसादितस्य कपालस्याङ्गभूतस्य नाशे उत्पन्नदोषनिर्घातार्थत्वमेवेति पूर्वत्रैवोदाहरणत्वं युक्तमित्यर्थः। द्वितीयेति। यदि द्वितीयं प्रायश्चित्तं कल्पसूत्रकारैः लिखितं भवेत् तदा तस्य तद्दोषनिर्घातार्थत्वसंभवेऽस्य तदर्थत्वं नैव कल्प्येत न त्वेतदस्ति। अथ वा यदि तत्रापि कपालभेदेन द्वितीयं प्रायश्चित्तं लिखितं भवेत् तदा एकनिमित्तकानेकनैमित्तिकानां विकल्पसमुच्चयचिन्ताविषयत्वं भवेत। न त्वेतदस्ति, द्वितीयस्याभावात्; अथैकनिमित्तकत्वाभावेप्येवंजातीयकानां भिन्ननिमित्तकानामेव प्रत्युदाहरणमात्रेण समुच्चयचिन्तेति चेत्, तेषां यथानिमित्तोत्पत्त्यनुष्ठाने विकल्पाप्रसक्तौ समुच्चयस्य सिद्धत्वेन दोषनिर्घातार्थत्वाभावप्रयुक्तसमुच्चयचिन्ताविषयत्वानुपपत्तेरित्यर्थः। एतेन यत्र दोषनिर्घातो नास्ति तादृशमश्वप्रतिग्रहेष्टिः जंजभ्यमानमन्त्रवचनं वात्रोदाहरणमिति प्रकाशकारोक्तमपास्तम्। तत्रापि द्वितीयप्रायश्चित्तानाम्नानेन प्रकृतचिन्ताविषयत्वासंभवात्।

---

## (७)—मन्त्राणां कर्मसंयोगस्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १४ ॥ विद्यां प्रति विधानाद्वा सर्वकारणं प्रयोगस्स्यात् कर्मार्थत्वात्प्रयोगस्य ॥ १५ ॥

अध्यायानध्यायपरिपालनादयोऽध्ययनधर्माः कर्मकालीनमन्त्रप्रयोगरूपाध्ययन एव स्युः ग्रहणाध्ययनस्य धारणाध्ययनस्य वा दृष्टार्थत्वेन तत्र स्वरूपे कार्ये वाऽदृष्टार्थधर्मविधिवैयर्थ्यादिति प्राप्ते—

अध्ययनपदार्थस्य गुरुमुखोच्चारणरूपस्य प्रयोगकाले अभावात् उच्चारणमात्रस्यापि च प्रकरणाद्यभावेन क्रतुकालीनस्यैवानुपस्थितेः, प्रकरणात्

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना ॥

इति स्मृतेश्च धर्माणामध्ययनमात्राङ्गत्वावगतेः। यत्रादृष्टार्थके ब्रह्मयज्ञाध्ययनेऽपि ते न धर्माः तत्र कः प्रसङ्गः कर्मप्रयोगमध्ये धर्माणाम्। न चाध्ययने तत्कार्य एव वाऽर्थज्ञाने धर्माणामनुपयोगः, निर्विघ्नपरिसमाप्त्यर्थत्वेन उपयोगसम्भवात्। विधिबलेन धर्माणामकरणे अध्ययने विघ्नकल्पनात्।

---

### मन्त्राणां कर्मसंयोगे

अध्ययनधर्मा इति। "पर्वणि नाध्येतव्यं पाते नाध्येतव्यं स्तनयित्नौ नाध्येयं इति वचनविहिता निषेधरूपास्तथा स्वाध्यायतिथावध्येतव्यमिति विहिता अध्यायपदोपात्ता इत्यर्थः। ग्रहणाध्ययनस्येति। स्वाध्यायोऽध्येतव्य इत्यनेन विधीयमानमध्ययनं नार्थकर्म किंतु स्वाध्यायप्राप्तिद्वारा स्वाध्यायसंस्कारकर्म नहि तत्रादृष्टार्थस्य पर्वनिषेधादेः धर्मस्य दृष्टार्थेऽध्ययने उपयोगस्संभवति। अतः पर्वणि नाध्येयमित्यध्ययनपदेन उच्चारणमात्रमुच्यते। तदुच्चारणमनूद्य विधीयमानो धर्मो यत्रैवार्थवान् तत्रैव प्रवर्तत इति कर्मकाल एव मन्त्रोच्चारणे कर्मजन्यादृष्टसिध्यर्थमेते धर्मा अनुष्ठेया न तु लौकिकाध्ययन इव ग्रहणाध्ययनेपीत्यर्थः। उपयोगसंभवादिति। ग्रहणाध्ययनप्रकरणे पाठात् तत्रैव कथञ्चिदुपयोगस्य कल्पनादित्यर्थः। विघ्नकल्पनादिति। स्पष्टमेवं च विघ्नबोधकं स्मृतिवचनं—

अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी।

न चैतावता प्रयाजादीनामपि निर्विघ्नयागप्रयोगसमाप्त्यर्थत्वकल्पनं, करणनिष्ठ-योग्यतायाः जनकाकाङ्क्षायां क्रतूपकारजनकत्वस्यैव तत्र कल्पयितुं युक्तत्वात् प्रयाजादीनां प्रयोगानङ्गत्वाच्च। न चात्राप्यध्ययननियमादृष्ट एव धर्माणामुपयोगः, अध्ययननिय-मादृष्टस्य क्वचिदप्यनुपयोगेनाकल्पनीयत्वात् कल्पनायां प्रमाणाभावाच्च। इदं चाधिकरणं प्रसङ्गानुपयोग्यपि करिष्यमाणमन्त्रविचारोपस्थितमन्त्रप्रसङ्गादुक्तमिति द्रष्टव्यम्।

---

## (८)——भाषास्वरोपदेशे ऐरवत्प्रायवचनप्रतिषेधस्स्यात् ॥ १६ ॥ मन्त्रो-पदेशो वा न भाषिकस्य प्रायोपपत्तेर्भाषिकश्रुतिः ॥ १७ ॥

**कर्मकाले प्रयोक्तव्यानां मन्त्राणां 'अजपन्यूङ्खसामसु** तानस्वरेण **प्रयोगः'** इत्युक्तम्। **जपादिषु तु आम्नातस्वर एव। तत्र ये** मन्त्रास्समाम्नाये **स्वरान्तरसमाम्नाताः ब्राह्मणे च** स्वरान्तरेण **प्राप्ताः, तत्र कतरस्स्वरो जपादावुपयोक्तव्य इति चिन्तायां—**

**ब्राह्मणेन मन्त्राणां सस्वरकाणामेव विनियोगादविनियुक्तमन्त्रसमाम्नायस्थस्वरस्यार्थ-निर्णयादौ पारायणादौ च उपयोगसम्भवेन कर्मकालप्रयोज्यत्वे प्रमाणाभावात् ब्राह्मणस्वर एव प्रयोक्तव्य इति प्राप्ते—**

---

ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेत्। इति द्रष्टव्यम्। अत्र **शास्त्रदीपिकायां** पूर्वपक्षे विधीयमानानां धर्माणां मन्त्रप्रयोगार्थत्वेन कर्मकालेऽपि प्राप्तेः तद्विधयः स्वाध्याय-समयवर्तिन एव प्रसंगात् कर्मकालेप्युपकुर्वन्तिं सिद्धान्ते तु नेत्येवंविधप्रसङ्गविचारात् सङ्गतिरि-त्युक्तं, तदनुष्ठेयपदार्थप्रसङ्गस्यैवाध्यायार्थत्वेन विधिप्रसङ्गस्य तद्रूपत्वाभावे मुख्यसङ्गत्यनुपपत्तेः अयुक्तमित्युपेक्ष्य स्वयं प्रसङ्गसंगतिं दर्शयति——**इदं चेति।**

---

### भाषास्वरोपदेशात् ऐरवत्।

**तानस्वरेणेति।** यज्ञकर्मण्यजपन्यूङ्खसामस्विति सूत्रेण जपन्यूङ्खसामव्यतिरिक्तमन्त्राणां यज्ञकर्मणि प्रयोगे एकश्रुत्यपरपर्यायस्तानस्वरो विहितस्तेनेत्यर्थः। **इत्युक्तं। नवम** इति शेषः। **ये मन्त्रा इति।** जपमन्त्रा इत्यर्थः। **स्वरान्तरेण।** उदात्तानुदात्तप्रचयरूपत्रैस्वर्येण संहितायां पठिताः। इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्यादिविनियोजकब्राह्मणे

**विनियोजकवचनस्य शाब्दमन्त्रस्वरूपमात्रविनियोजकत्वेनाशाब्दस्वरविनियोगपरत्वे प्रमाणाभावात् ब्राह्मणस्वरस्य च पूर्ववाक्यप्रवृत्तस्वराविच्छेदार्थत्वेनान्यथासिद्धतया स्वतो विनियोगान्तरकल्पनानुपपत्तेः मन्त्रसमाम्नानसिद्धस्वरस्य चानन्यथासिद्धतया स्वाध्याय-विधिबलेन** विनियोगान्तरकल्पनया **क्रतुमध्यप्रयोज्यत्वावधारणात् तस्यैव जपादौ पाठः।**

**यत्तु पार्थसारथिना लिङ्गविनियुक्तमन्त्रविषये ब्राह्मणे गुणार्थवादपरिसङ्ख्याद्यर्थत्वेन पुनश्श्रवणेऽपि मन्त्रविनियोगफलकत्वस्यैवाभावे सुतरां स्वरविनियोगस्याप्रसक्तेः न ब्राह्मणस्वरप्रसक्तिरिति दूषणान्तरमुक्तं, तत् लिङ्गविनियुक्तमन्त्राणां जपतिचोदनाचोदित-त्वाभावे जपत्वे प्रमाणाभावात्, यत्र** जपतिचोदनाचोदितत्वसत्व एव **लिङ्गविनियोगस्तत्र ब्राह्मणे पुनश्श्रवणसत्त्वे** व्याख्येयम्।

---

(९)—विकारः कारणाग्रहणे तन्न्यायत्वाददृष्टेऽप्येवम् ॥ १८ ॥ तदु-त्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ १९ ॥

**ये पुनर्मन्त्रसमाम्नाये नाधीताः ब्राह्मण एवोत्पन्नाः जपमन्त्रास्तेषां स्वरान्तराभावाद्-सत्यपि स्वरश्रुतेः विनियोगविधौ यथापठितमन्त्रपाठबलेन स्वरस्यापि स्वाध्यायविधिवशेन विनियोगकल्पनात् भाषास्वरोऽपि तत्र प्रयोक्तव्य एव। भाषास्वरश्च—**

> **छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।**
> **उच्चनीचस्वरं प्राहुस्स वै भाषिक उच्यते ॥**

**इति वचनलक्षितो ब्राह्मणस्वर एव।**

---

प्रतीकग्रहणवेलायामन्येन स्वरेणेत्यर्थः। **विनियोगान्तरकल्पनयेति।** स्वाध्यायाध्ययन-विधौ स्वाध्यायस्य संस्कार्यत्वात तदुपयोगकल्पनायां अधीतेन स्वाध्यायेन यच्छक्नुयात तत्कुर्यादिति विनियोगविधिना सस्वरकस्यैव स्वाध्यायस्य क्रतुषु विनियोगात्तस्यैव सर्वस्य कर्मकाले जपादौ पाठ इत्यर्थः। **जपतिचोदनाचोदितत्वसत्व एवेति।** इतरथा जपभिन्नानां लिङ्गविनियोज्यानां मन्त्राणां तानस्वरस्यैव विशेषतो विधानेन समाम्नायस्वरस्याप्रसक्तेरित्यर्थः। अत्र च मूलग्रन्थेषु ब्राह्मणस्वरो भाषिकशब्देनाध्ययनस्वरः प्रावचनिकशब्देन व्यवहृतः। अत्र च ब्राह्मणस्वरस्य बाधादेव न द्वयोः स्वरयोः विकल्पेन प्रसङ्ग इति प्रसङ्गापवादात् सङ्गतिः।

---

**विकारः।** स्पष्टार्थम्।

---

(१०)—मन्त्राणां करणार्थत्वात् मन्त्रान्तेन कर्मादिसन्निपातस्स्यात् सर्वस्य वचनार्थत्वात् ॥ २० ॥

ये करणमन्त्रास्तेषामनुष्ठेयक्रियाप्रकाशनप्रयोजनकत्वात् सकलमन्त्रजन्यप्रकाशनस्यैव क्रियानुष्ठानकरणत्वावगतेः मन्त्रान्त एव कर्मादिस्सन्निपात्यः न तु क्रियावाचकपदोच्चारणानन्तरमेव अवशिष्टपदानां वैयर्थ्यापत्तेः।

यत्तु 'मन्त्रान्तेन कर्मादिस्सन्निपात्यः' इति कल्पसूत्रकारादिवचनं तेनाप्ययमर्थस्सिद्धयत्येव, तथाऽपि न्यायेनापि सिद्ध्यतीत्येतदर्थं तदुपन्यासः। न चैवं न्यायेनैव सिद्धेः वचनानर्थक्यं, तस्य 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इत्यादौ यत्रैकमन्त्रसाध्यान्यनेकानि सन्ततानि कर्माणि तत्र सकृन्मन्त्रपाठेनैव वेदिप्रोक्षणन्यायेन स्मृत्यविच्छेदात् होमत्रयकरणापत्तौ विहितकर्मादेः मन्त्रान्तसन्निपातविधानात् मन्त्रावृत्तिप्रयोजनकतया सार्थक्यात्। अत एव नेदं कल्पसूत्रं न्यायप्राप्तानुवादकम्।

---

(११)—सन्ततवचनाद्धारायामादिसंयागः ॥ २१ ॥ कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २२ ॥

---

मन्त्राणां करणार्थत्वात्।

ये करणमन्त्रा इति। यथा इषेत्वेति शाखामाच्छिनत्ति देवस्य त्वा सवितुः प्रसव इत्याद‍त्ते इत्येवं विनियुक्तास्ते करणमन्त्रा ज्ञेयाः। सकलमन्त्रजन्येति। अध्ययनविध्यध्यापितस्यासमवेतार्थानामपि पदानां विनियोगं विनाऽपूर्वं प्रत्यैदमर्थ्यानवगत्या प्रयोजनानवाप्तेः येन समवेतार्थकपदेन एकवाक्यत्वमवधारितं तत्सहितानामेवैकमन्त्रत्वेनैव लिङ्गेन वचनेन च विनियोगः क्रियते न समवेतार्थपदमात्रस्य। अतः सकलमन्त्रेणैवार्थप्रकाशनं कृतं यावदनपभ्रष्टं तदव्यवधानेनैव कर्मानुष्ठेयमित्यर्थः। उत्तरग्रन्थः स्पष्टार्थः।

---

सन्ततवचनात्।

अत्र शास्त्रदीपिकायां सन्ततां वसोर्धारां जुहोतीत्यस्मिन्नेव वाक्ये सातत्यविशिष्टस्य वसोर्धारासंज्ञिकस्यैकस्यैव कर्मणो विधाने सति तस्यैव साहित्यरूपसान्तत्याश्रयत्वप्रतीतावप्येकस्मिन्

**अग्नौ 'द्वादश द्वादशानि जुहोति' इति सङ्ख्याभिन्नानि द्वादश कर्माणि वसोर्धारासंज्ञकानि विहितानि। तत्र च 'संततां वसोर्धारां जुहोति' इति वचनेन** भाष्यकाराद्युदाहृतेन **सान्तत्यं विहितं, काम्यमपि तत् प्रकृतसर्वकर्माश्रितं 'यं कामयेत प्राणानस्यान्नाद्यं सन्तनुयामिति सन्ततां तस्य जुहुयात्' इति वचनेन विहितम्।**

**यदि तु तैत्तिरीयशाखायां नित्यसान्तत्यविधेरनाम्नानादनाश्वासस्तदाऽस्तु तत्काम्यमेव। तैत्तिरीयशाखास्थं 'वसोर्धारां जुहोति' इति सामान्यवचनं तु सामान्यतो द्वादशानां विधानार्थम्। तत्प्रयोजनं च अवान्तरप्रकरणसिद्धिद्वारा द्वादशानामपि**

---

तदनुपपत्तावनुपात्तमन्त्रसाहित्यमादायैव तत्पर्यवसानात् मन्त्रकर्मणोः साहित्यसंपत्तये मन्त्रादावेव कर्मादिसन्निपात इति पूर्वं पक्षं कृत्वा "द्वादश द्वादशानि जुहोति" इति विधिना संख्यया भिन्नानां द्वादशकर्मणां विधानात् तदुद्देशेनैव सन्ततवाक्येन सातत्यमविच्छेदापरपर्यायं विधीयते, न तु क्रमेण क्रियमाणानां द्वादशहोमानां साहित्यरूपमसंभवात् अतस्तत्तन्मन्त्रान्त एव तत्तद्धोमादि अविच्छेदेन कर्तव्यमिति सिद्धान्तितम्। एवं च पूर्वपक्षे सन्ततवाक्यस्यैवैककर्मविधायकत्वमङ्गीकृतं सिद्धान्ते तु संततवाक्यस्य गुणमात्रविधित्वं, कर्मविधित्वं तु द्वादशवाक्यस्यैवेति प्रतीयते। तत्र सिद्धान्त्यभिमतं तत्तद्विधित्वं वाक्यद्वये अङ्गीकृत्यापि पूर्वपक्षमारचयन् विषयवाक्यार्थं दर्शयति। **अग्नाविति**। संख्याभिन्नानीत्यस्योपपादनं अग्रे करिष्यते। **वसोर्धारासंज्ञकानीति**। वसोर्धनस्य धारा ययाऽऽहुत्या लभ्यते सेयमाहुतिर्वसोर्धारेति योगार्थस्य वसोर्मे धारेत्यर्थवादे प्रदर्शनात् वसोर्धारासंज्ञिकानीत्यर्थः। **भाष्यकाराद्युदाहृतेनेति**। सान्तत्यस्य काम्यत्वमेवेति ये मन्यन्ते तान् प्रति नित्यतावेदकं वचनं विश्वसनीयमिति ज्ञापयितुं भाष्यकारेत्युक्तं; तथा च वसोर्धारासंज्ञिकाहुत्युद्देशेन सातत्ये विहिते प्रतिप्रधानं गुणावृत्तिन्यायात् यावद्वसोर्धारासंज्ञिकाहुत्युद्देशेन सांतत्यं विहितमित्यर्थः। अत्र **प्रकाशकारैः** सातत्याश्रयत्वमानन्तर्यात् द्वादशहोमानामेव प्राप्तं बाधितुं वसोर्धारां जुहोतीति सामान्यतो वक्ष्यमाणानामधिपतिश्च स्वाहेत्येतन्मन्त्रसाध्यानां सर्वेषामेव होमानां विधानं क्रियते। अतो द्वादशहोमभिन्नानामप्याश्रयत्वमित्युक्तं, तदयुक्तमिति सूचयन्नाह—**द्वादशानां विधानार्थमिति**। यदि सामान्यविधिरयं द्वादशानां न भवेत तदा वसोर्धारावाक्यविहितस्यैकस्यैव होमस्य पूर्वं स्त्रीलिङ्गतयोपस्थितत्वात् आश्रयत्वं स्यात्। अतस्तद्व्यावृत्तिफलकतया आनन्तर्याबाधेनैव द्वादशहोमानामाश्रयत्वसिद्ध्यर्थं तद्विध्युपपत्तौ नानन्तर्यबाधमाश्रित्य सर्वहोमविधानं युक्तमित्यर्थः। अत एवाधिकरणमालायामेतेषु च होमद्वादशकेषु मध्येमध्ये विलंबाभावः सान्तत्यमित्युक्तम्। तन्त्र-

रत्नादिषु प्राचां ग्रन्थेष्वपि न "वसोर्धारां जुहोति" इति वाक्यविहितमेकं कर्म, किन्तु द्वादश द्वादशानि जुहोतीति संख्यया भिन्नानि कर्माणीत्युक्तेस्तावतामेव कर्मणां वसोर्धारासंज्ञकत्वं, तत्रैव च सातत्यमिति प्रतीयते। एवं स्थिते याज्ञिकानां सर्वेषामान्तं धारानुष्ठानं तत् वसोर्धाराकर्मण एकत्वात् तत्रैव चैकादशानुवाकानामङ्गतया विधानात् मन्त्रादौ कर्मादिसन्निपाताभिप्रायेणेति न दोषः। येषां तु मीमांसकानां याज्ञिकोक्तमेव पूर्वपक्षं कृत्वा द्वादशवाक्यानां विधायकतया द्वादशकर्माणीति सिद्धान्तः। तेषां तु द्वादशानामेव वसोर्धारात्वम्। अत एव यदा प्राचां पूर्वपक्षे वसोर्धारां जुहोतीति वाक्येन एकमेव कर्म विधीयते तदापि द्वादशवाक्येन वसोर्धारासंज्ञककर्मण-स्संख्यया भिन्नान्येव कर्माणि विधीयन्ते अनेकगुणोपादानात्। "अन्नं च मे क्षुच्चमइत्याह" इत्याद्यग्रिममन्त्राणामग्रे विनियोगाद्धि तत्पूर्वमन्त्राणां सामान्येनोपस्थितानां "वाजश्च म" इत्यादीनां "कूयवाश्च मे" इत्यन्तानां त्रयस्त्रिंशदधिकशतसंख्यानां एकैकं द्वादशकं एकैकस्मिन् कर्मणि विनियुज्यते। अत एव कूयवाश्च मे इत्यन्तस्य द्वादशवारमावृत्तिर्भवति। मन्त्रविध्यभावे तूक्त-क्रमसाजात्याभ्यामपि द्वादशैकादशका एव द्वादशसु कर्मस्वङ्गं भवेयुः। न 'कूयवाश्च म' इत्यपि। नतरां तस्यावृत्तिः सिद्ध्येत्। अतो द्वादशवाक्यविहितकर्मान्तराणामनेकत्वेऽपि वसोर्धारा-कर्मण एकत्वात् तत्सामानाधिकरण्येन विधीयमानं साहित्यं मन्त्रसाहित्येनैवोपपादनीयमिति यत्प्रकाशकारैः द्वादशवाक्यस्यापि विधायकत्वं दर्शितं तद्भ्रमसात्।

तथाहि—प्राप्ते कर्मणि अनेकगुणविधानं न संभवतीति हेतोः द्वादशवाक्ये विशिष्ट-कर्मान्तरविधित्वं वदताऽनेकार्थप्रदर्शनं कर्तव्यं, तत्र तावत् प्राप्ते वसोर्धाराख्ये कर्मणि द्वादशत्वस्य द्वादशमन्त्राणां च विधानेन संभवति तदानीं मन्त्रविधिपक्षे द्वादशद्वादशकानां विधानात् एकैकं द्वादशकमेकैकस्मिन् विनियुज्यत इत्यर्थस्यासंभवापत्तेः। यदि तु द्वादशवाक्यसमूहात्मकस्य मन्त्रस्य तदुद्देशेन द्वादशसङ्ख्यायाश्च विधानेनानेकगुणविधानमुच्येत तदा कर्मणां द्वादशस-ङ्ख्यत्वे प्रमाणाभावात् एकैकस्मिन् कर्मणि इति द्वादशसु कर्मस्वङ्गं भवेयुरित्यस्य चासङ्गतत्वापत्तिः। अथ द्वादशकानां विनियोगविध्यन्यथानुपपत्त्या यथा कूयवाश्चम इत्यस्यावृत्त्या अग्रिमद्वादशकल्प-नमेवं तदन्यथानुपपत्त्यैवैकस्यैव वसोर्धाराकर्मणः आवृत्त्या कर्मणो द्वादशत्वकल्पनमित्युच्यते तदा अभ्यादाने वचनात् चतुर्मन्त्रसमुच्चयस्येव इहाप्येकस्मिन् कर्मणि द्वादशद्वादशकानां समुच्चय संभवेन कर्मावृत्तौ प्रमाणाभावे सति द्वादशद्वादशकोत्तरमेव स्वाहाकारानुष्ठानापत्तिः। अस्तु वा कर्मावृत्तिस्तथापि प्रतिकर्मद्वादशके द्वादशक एव स्वाहाकारानुष्ठानापत्तिः। नह्येवं याज्ञि कानामाचरणं दृश्यते इयानेव हि याज्ञिकानां मिथो मतभेदः यदेकस्मिन् वसोर्धारासंज्ञिके कर्मणि वाजश्चम इत्याद्येकादशानुवाकात्मक एको मन्त्रः तदन्ते स्वाहाकार इत्युपदेशमतम्। इदमेव

वेदभाष्यकारैरादृतं, मतान्तरे तु त्रिपदानां चतुष्पदानां प्रत्येकमन्त्रत्वात् प्रतिमन्त्रं स्वाहाकारः। मतभेदेऽपि मूलं द्वादशादिवाक्यान्येव। तत्र यदा विधित्वं तदापि न भवदुपपादितरीत्या तत्, पूर्वोक्तदोषापत्तेः किन्तु द्वादशभिर्द्वादशभिर्मन्त्रैः जुहोतीत्येवं द्वादशानां द्वादशानां मन्त्राणां प्रत्येकं साधनत्वविधयैव। तस्य चोत्तरावध्यपेक्षायामर्धेन्द्राणि जुहोतीति विधिविनियोज्यमन्त्रा एव तत्त्वेनार्थतस्संबध्यन्ते। अत एव द्वादशवाक्यप्रभृति जुहोति जुहोतीत्येवं रूपेणाष्टसु वाक्येषु यत्र स्पष्टविध्याम्नानं तेषामेव मन्त्रविनियोजकविधित्वं, उत्तरेषां च पूर्वपूर्वावधिकत्वमित्यर्थे सिद्धे च अन्नं च मे क्षुच्च म इत्याहेत्यादीनि वाक्यानि मध्येमध्ये आम्नातानि तानीहोपनिबद्धत्वात् विधित्वानर्हाण्यर्थवादरूपाण्येव। ततश्च वाजश्चम इत्यादिवाक्यमारभ्य सर्वेषामेव वाक्यानां विनियोगात् प्रत्येकं मन्त्रत्वेन प्रतिवाक्यं स्वाहाकारे सत्येकस्यैव कर्मण आन्तमावृत्तिर्भवति। यदा त्वेकस्यैवैकादशानुवाकात्मकावयविनो मन्त्रस्य अवयवरूपेणैव प्रशंसार्थं तत्र तत्र विधानं, अथ वा सर्वस्याप्येतद्भागस्यार्थवादत्वमङ्गीकृत्य सिद्धवदनुवादान्यथानुपपत्त्या एकावयविमन्त्रविधिकल्पनं तदा एकमन्त्रस्यैव विधानात् अन्ते स्वाहाकारस्संपद्यते।

अत एव **वेदभाष्ये** आज्येन जुहोतीत्येतद्व्यतिरिक्तभागस्य प्रशंसार्थत्वं सूचितम्। उभयमतेपि कर्मण एकत्वात् अभ्यासेपि वा मन्त्रपाठक्रमेणानुष्ठीयमानानां साहित्ययोगात् मन्त्रसाहित्यपर्यवसाने मन्त्रादावेव कर्मादिसन्निपात इत्यर्थ एव मीमांसकैः पूर्वपक्षरूपेण प्रदर्श्यते। एवं स्थिते वेदभाष्ये अन्नं च मे क्षुच्चम इत्यन्तानां चतुश्चत्वारिंशदधिकशतसंख्याकत्वं लिखितमिव भाति। तल्लेखकप्रमादेन पुस्तकाशुद्धिपरंपरयैव पतितमेवेति तद्भ्रमेण कूयवाश्चम इत्यस्य द्वादशवारमावृत्त्यभिधानं न प्रामाणिकानां लिखितुं युक्तम्। विशेषतश्च कूयवाश्च म इत्यन्तानां न त्रयस्त्रिंशदधिकशतसंख्यत्वं तावतां चतुस्त्रिंशदधिकशतसंख्यत्वात्। अत एव **आण्डबिलाकारादिभिः** प्राचीनैर्नवीनैश्च प्रयोगपद्धतिकारैः कूयवाश्चम इत्यस्यावृत्तिविशेषो नाभिहितः। अतोऽत्राग्निश्चम इन्द्रश्चमेत्यर्धेन्द्रमन्त्रेभ्यः पूर्वं गतिश्चम इति समाप्तिपर्यन्तं यानि पञ्चदशद्वादशकानि तेषामशीत्यधिकशतसङ्ख्यया निष्पन्नानां वाक्यानां मासत्वकल्पनया द्वादशमासात्मकसंवत्सररूपेण प्रशंसेत्येव युक्तं। किंच यदि मन्त्रविनियोगानुपपत्त्याद्वादशकर्मकल्पना तदा तद्विनियोजकविध्यभावेऽन्नं च मे क्षुच्च म इति अग्रिमविनियोगदर्शनेनोपस्थितानां कूयवाश्चम इत्यन्तानामेव विनियोगप्राप्तौ यथाविनियोगमेव कर्मकल्पनोपपत्तेः द्वादशकर्मत्वनिश्चयाभावे द्वादशैकादशका एव द्वादशसु कर्मसु अङ्गं भवेयुः। न तु कूयवाश्चम इत्यस्य नतरां तदावृत्तिः सिद्ध्येदिति लिखनमयुक्तं। किञ्च यद्यस्मिन् पूर्वपक्षे द्वादशवाक्यं द्वादशकर्मान्तरविधायकं वसोर्धारावाक्यं एकस्य कर्मणो भिन्नस्यैव विधायकं एतस्यैव च "सन्ततां

**होमानां सान्तत्याश्रयत्वसिद्धिः।** तदिह **सान्तत्यशब्दस्य साहित्यवाचित्वान्मन्त्रकर्मणो-स्साहित्यप्रतीतेर्नात्र मन्त्रान्तेन कर्मादिसन्निपात इति प्राप्ते—**

**अविच्छेदेऽपि सन्ततशब्दस्य लोके प्रयोगात् कर्मणामेवाविच्छेदरूपसाहित्य-विधानोपपत्तेः न न्यायाद्यवगतमन्त्रान्तोत्तरकालताबाधकत्वेनानुपस्थितमन्त्रसाहित्य-विधायकत्वम्। न चैवं** नित्यप्रयोगे **तत्साहित्यस्य प्रयोगविध्यवगतप्रयोगप्राशुभावबलेनैव**

---

सन्तनुयात्'' इति फलवाक्ये सन्ततामिति स्त्रीलिङ्गनिर्देशात् स्त्रीलिङ्गस्य वसोर्धाराकर्मण एवा-श्रयत्वं न तु द्वादशानामित्यर्थसिद्धावपि वसोर्धाराकर्मणो मन्त्राभावापत्तिः। अतो द्वादशवाक्यस्य कर्मान्तरविधित्वाश्रयणे पूर्वपक्षे वसोर्धारावाक्यस्य प्रयोजनान्तरार्थं द्वादशकर्मविधायकत्वोपपत्तौ कर्मान्तरविधित्वासंभवात् कर्मैकत्वपूर्वपक्षस्यैवानुत्थानात् तत्सिद्ध्यर्थं द्वादशवाक्यस्य विधायक-त्वानुपपत्त्या स एवोचितः कर्मैकत्वप्रयुक्तपूर्वपक्षोपपादने। सूचितश्च प्राचां ग्रन्थेषु पूर्वोत्तरपक्षप्रतिपादनेन। अतः सिद्धान्त एव द्वादशद्वादशरूपेणार्थानेकताप्रयुक्तवाक्यभेदापत्त्या कर्मान्तरत्वं साधनीयं तत्पूर्वपक्षेपि तुल्यमित्येवमर्थतो याज्ञिकमतखण्डने सूचितेपि कथं तद्वधि-करणपूर्वपक्षसिद्धिरित्याशङ्कापरिहारं सूचयन् पूर्वपक्षमुपपादयति—तदिहेति। मन्त्रकर्मणो-रित्यस्मात् पूर्वं मन्त्रपाठक्रमेणानुष्ठीयमानानां द्वादशानां होमानां साहित्यस्यासंभवादिति हेतुः स्पष्टत्वान्न लिखितः। **नित्यप्रयोग इति।** पूर्वमधिकरणारम्भे सातत्यं विधीयमानं नित्यं काम्यं चेत्युक्तं, तत्र नित्य एवाविच्छेदापरपर्यायसान्तत्येन द्वादशानां कर्मणां प्रयोगस्तदा तस्य प्रयोग-विधिनैव प्राप्तेः तस्यैव फलार्थं विनियोगान्तरकरणेन काम्यविधेस्सार्थक्येपि नित्यसातत्यविधिवैयर्थ्य-मित्यर्थः। **स्पष्टार्थमन्यत्।**

अत्र यद्यपि द्वादशद्वादशमन्त्ररूपार्थानेकताप्रयुक्तवाक्यभेदापत्त्या तादृशानेकार्थविशिष्ट-कर्मविधौ न कर्मणां द्वादशत्वं मीमांसकमते सिद्ध्यति, संख्यायाः कर्मसामानाधिकरण्याभावात्; तथापि तव मते वाक्यभेदापत्त्या न गुणविधिरयं किन्तु कथंचित् कर्मान्तरविधित्वमेवाङ्गीकर्त-व्यमित्यापादनमात्रेणैव स्वेष्टसाधने न कोऽपि दोषः। तत्र द्वयी गतिः, द्वादशानीति पदं वक्ष्यमाणरीत्या वाजश्चम इत्यादिपञ्चदश पञ्चदशमन्त्रान्ते प्रत्येकमनुष्ठाने सति प्रचयशिष्टपञ्च-दशद्वादशसाध्यत्वस्य होमेषु प्राप्तत्वात् तत्प्रख्यन्यायेन होमरूपकर्मनामधेयं द्वादशसंख्याकानि द्वादशहोमाख्यानि कर्माणि कुर्यादिति; अथ वा तन्त्ररत्नादौ द्वादशकर्माणीति नियमानुक्तेः द्वादशानीत्यस्यापि गुणविशिष्टपरत्वमङ्गीकृत्य द्वादशगुणितद्वादशसंख्यापरिच्छेद्यानि कर्माणि कुर्यात् इत्येवंविधिरूपेण वा, आद्ये गतिश्चम इत्यन्तानां मन्त्राणां समानविभागन्यायेन पञ्चदशानां मन्त्राणां

**प्राप्तेस्तद्विधिवैयर्थ्यमिति वाच्यं, कल्पितविधिविहिततद्दोषनिमित्तकाविज्ञातप्रायश्चित्त-विनिवृत्त्या याजुर्वेदिकाङ्गभ्रेषनिमित्तकप्रायश्चित्तप्राप्त्यर्थं तद्विधानात्।**

---

प्राप्तेस्तावत्संख्याकमन्त्रान्ते एकैको होमो विच्छेदेन कर्तव्यः। द्वितीये चतुश्चत्वारिंशदधिकशत-होमेषु तावतामेव मन्त्राणां क्रमेण प्राप्तेः अवशिष्टषट्त्रिंशन्मन्त्राणां निवेशो दुर्घट एवेति तेषां लोपादिकल्पना निष्प्रामाणिकी प्रसज्येत। अत आद्य एव पक्षो युक्त इत्यभिप्रेत्यैव **पूज्यपादैः प्रकाशकारैश्च** द्वादशकर्माणीति **तन्त्ररत्नाद्यनुक्तमपि** दर्शितम्।

अत एवार्धेन्द्राणि जुहोतीत्याद्युत्तरवाक्येषु वाक्यभेदापत्त्यभावेन द्वितीयां तृतीयार्थे प्रकल्प्य तत्तन्मन्त्रविशिष्टहोमादिविधानमेव। एतज्ज्ञापकबलादेव पूर्वतनेषु द्वादशहोमेषु अन्नं च मे क्षुच्च म इत्याद्येत्यादितत्तदर्थवादानुगृहीतार्धेन्द्रमन्त्रप्राक्तनमन्त्राणां विनियोगविधिकल्पना। यद्यपि वा अर्धेन्द्राणीतिवत् द्वादशानीत्यत्रापि द्वादशवाक्यसमूहैरित्यर्थेन तत्परं गुणपरं तथापि पञ्चदशद्वादशकानामेव पूर्वोक्तरीत्याङ्गत्वं सिद्ध्येत् न**त्वधिकरणमालो**क्तरीत्या एकैकेन द्वादश-केनैकैकाहुतिरिति रीत्या होमानां द्वादशत्वं द्वादशवाक्यसमूहगतद्वादशत्वस्याबोधनात् इत्यपि ध्येयम्। एष्वार्धेन्द्रादिहोमेषु मीमांसकमतेन सातत्यमिति जुह्वा मन्त्रसङ्ख्यहोमसमसङ्ख्यानि चतुर्गृहीतानि गृहीत्वा तत्तन्मन्त्रान्ते नारिष्ठहोमानामिव मध्येमध्ये विच्छिद्यैवानुष्ठानम्। तेषां द्वादशहोमानां तु द्वादशवारं चतुर्गृहीतं गृहीत्वा यदानुष्ठानं तत्र यद्यपि मन्त्रान्ते कर्मादिसन्निपातस्यैतदधिकरण-सिद्धस्यापत्तौ अर्धेन्द्रादिहोमवदेव होमानां विच्छेद एव सिद्ध्यतीति न सातत्यविध्यर्थानुष्ठान-सिद्धिस्तथाप्यविलम्बेन प्रक्षेपाणामनुष्ठानेनैव तदर्थसिद्धिर्द्रष्टव्या। अत एवाज्यधाराया अपि नाविच्छेदेन करणं, याज्ञिकमते तु वाजश्चम इति वाजादिपदप्रभृत्येव प्रक्षेपाचरणाय धारैक्यकरण-मिति विशेषः प्रागेव सूचितः।

वस्तुतस्तु प्रक्षेपेषु सातत्यविधानं प्रक्षेपाश्रितस्य तस्य फलार्थं वा विधानमिति पक्षद्वयेपि प्रक्षेपेषु यथा साहित्यस्यासंभवस्तथा मन्त्रान्ते तदनुष्ठानपक्षे पूर्वोक्तरीत्या विच्छेदस्याप्यसंभवात् अवि-लंबेनापि तदनुष्ठाने विच्छेदस्यानिवार्यत्वे सति "यं कामयेत प्राणानन्नाद्यं विच्छिन्द्याम्" इत्यर्थवादे विच्छेदनिंदापूर्वकाविच्छेदप्रशंसानुपपत्तेः प्रक्षेपेष्वसंभवात् सातत्यं प्राङ्मुखत्वं कर्तृद्वारा भोजन इव धाराद्वारैव तेषु निविशत इति "संततमाघारयति" इत्यत्रेव धारासातत्य एव विधिपर्यवसानं; संभवति च धारासांतत्यकरणेन तज्जनकप्रक्षेपाणां सातत्यं तनश्चाद्यपंचदशमन्त्रान्ते धारया प्रक्षेपानुष्ठाने कृते तस्या एव सातत्यं, यावत द्वितीयपंचदशमन्त्रान्तो भवति तावत्कृतं चेत् तावत्प्रथमप्रक्षेपस्या-

## (१२)—आघारे च दीर्घधारत्वात् ॥ २३ ॥

'सन्ततमाघारयति' इत्यत्र कर्मैकत्वात् तदविच्छेदविधानानुपपत्तेर्मन्त्रसाहित्यमेव विधीयत इति मन्त्रादेः कर्मादेश्च सन्निपात इति प्राप्ते—

क्षणिकस्य कर्मणो बह्वक्षरघटितमन्त्रसाहित्यानुपपत्तेः दीर्घधारस्याघार्यमाणस्य द्रव्यस्य सान्तत्यमनेन विधीयत इति नात्रापि मन्त्रान्तोत्तरकालताबाधः। एतान्यपि पञ्चाधिकरणान्युपस्थितमन्त्रप्रसङ्गान्निरूपितानीति द्रष्टव्यम्।

---

## (१३)—मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पस्स्यात् ॥ २४

---

वस्थानं भवति तदैव च द्वितीयप्रक्षेपस्य तथैव धारयारंभात् धारायाः प्रक्षेपाणां चान्तमविच्छेदस्संपद्यते। अयमेव हि प्रक्षेपक्रियाया अविच्छेदो नाम यत् द्वितीयप्रक्षेपावध्यनुवृत्तिकरणं, एवमुत्तरत्र प्रक्षेपाणामपि। एवं स्थिते एतादृशधारासातत्येन प्रक्षेपसातत्यस्य याज्ञिकमते समानत्वेपि साहित्यरूपं सातत्यमङ्गीकृत्य वाजश्रम इत्यारभ्यैव यद्धाराकरणं तदेव प्रयोजनभेदकं ज्ञेयम्। एतदेवाभिप्रेत्याण्डविलायां 'स्वाहेत्यादिसंततधारयेति मीमांसका' इति मीमांसकमतमुक्तम्। अतो मीमांसकमतेऽपि धारैक्यकरणं, तदप्यर्धेन्द्रहोमपर्यन्तमेव। याज्ञिकानां त्वान्तम्। अत एव धारासातत्यसामर्थ्यादेव होमेषु चतुर्गृहीतनिवृत्तेः आज्येन जुहोतीत्याज्यस्य धारापर्याप्तस्य विधिरुपपद्यते। एतादृशसातत्यस्य प्रयोगविधिलभ्यत्वाभावे "न चैवं नित्यप्रयोग" इत्याशङ्कायास्तदुत्तरस्य च करणं पूज्यपादानां व्यर्थमेवेत्यलं विस्तरेण।

---

**आघारे च दीर्घधारत्वात्।**

इहापि याज्ञिकसिद्धान्तेन पूर्वपक्षमाह—**कर्मैकत्वादिति। दीर्घधारस्येति।** दीर्घमाघारयतीति वाक्यान्तरेण विधीयमानं दीर्घकालत्वं क्षणिकस्य कर्मण आवृत्तिं विनाऽनुपपन्नमिति आवृत्तिः प्राप्ता मा प्रसज्यतामित्येतदर्थोऽयं सातत्यविधिः दीर्घकालमाघार्यमाणद्रव्यस्याविच्छेदेन कर्तव्यमित्यर्थे पर्यवस्यतीत्यर्थः।

---

तदेवमुपस्थितमन्त्रप्रसङ्गागते विचारे समाप्ते अधुना मन्त्रेषु प्रसङ्गविचार एव क्रियते। ये करणमन्त्रा एकक्रियाप्रकाशनार्थाः 'भगो वां विभजतु' इत्यादयोऽनेके तेषां व्रीहियवन्यायेन विकल्पात् एकेनापरस्य प्रसङ्गसिद्धिः। न च प्रकाशितस्यापि पुनः-प्रकाशनसम्भवात्समुच्चयः, प्रकाशनस्यानुष्ठानार्थत्वेन सकृत्प्रकाशनेनाप्यनुष्ठानसिद्धौ प्रकाशनान्तरानुपयोगात् ॥

---

## (१४) सङ्ख्याविहितेषु समुच्चयोऽसन्निपातित्वात् ॥ २५ ॥

ये तु सङ्ख्यायुक्तवचनविनियुक्ताः यथा 'तां चतुर्भिरभ्रिमादत्ते' इत्यादौ तेषां समुच्चय इत्युक्तं मन्त्राधिकरणकौस्तुभे। न चैकेन स्मृते पुनः प्रकाशनानुपपत्तिः, स्मृतस्यापि संस्कारदार्ढ्यार्थं पुनस्स्मरणसम्भवात्। अत एव वचनबलात्पूर्वेषां मन्त्राणां संस्कार-द्वारा, अन्त्यस्य तु साक्षादेवानुष्ठानोपयोग इति वैषम्यकल्पनेऽपि न दोषः।

---

**मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात्।**

एकक्रियाप्रकाशनार्था इति। पुरोडाशविभागरूपक्रियाप्रकाशनार्थाः। इत्यादय इति। आदिपदेनार्यमा वां विभजतु पूषा वां विभजत्वित्यादीनां ग्रहणम्। न चैकार्थास्तु विकल्पेरन्नित्य-नेन गतार्थत्वमित्याशङ्कां परिहरन् तदाक्षेपसमाधानार्थत्वमाशङ्काव्याजेन दर्शयति। न चेति। व्रीहिभिः कृतस्य पुरोडाशस्य यवैः करणासंभवात् तत्र युक्तो विकल्पः मन्त्रस्य तु प्रकाश-कत्वात् प्रकाशितस्यापि प्रकाशनं शक्यमेव, अशक्यतायां हि संख्याविहितेष्वपि समुच्चय उत्तरा-धिकरणे वक्ष्यमाणोऽनुपपन्न एव स्यात्। तथा याज्यानुवाक्ययोरपि। अतो न विकल्प इत्याक्षेपार्थः। यद्यपि प्रकाशितस्य प्रकाशनं शक्यं तथापि अनुष्ठानार्थायाः स्मृतेरेकेनैव सिद्धौ कर्मणो निराकां-क्षत्वान्मन्त्रान्तेन कर्मादिसन्निपातान्न समुच्चय इत्येवं परिहरति—प्रकाशनस्येति।

---

**संख्याविहितेषु समुच्चयोऽसन्निपातित्वात्।**

चतुर्भिरित्यादाविति। आदिपदेन द्वाभ्यां खनति षड्भिराहरतीति विहितसंख्यायुक्त-मन्त्रान्तरसंग्रहः। इत्युक्तं मन्त्राधिकरण इति। तेन च कदाचित् केनचिन्मन्त्रेणाभ्यादानात् चतुर्भिरित्यनुवादः। अथवा ये चत्वारो मन्त्राः तैरादत्त इत्येव स्वरूपानुवाद इति न चतुस्संख्या-विधानात् समुच्चयः, किंतु विकल्प इत्याशङ्का तत्रैव निराकृतेति सूचितम्। अत एव वचनबलादिति ग्रन्थेन पूर्वाधिकरणोदाहरणवैलक्षण्यं दर्शितम्।

---

(१५)—ब्राह्मणविहितेषु च सङ्ख्यावत् सर्वेषामुपदिष्टत्वात् ॥ २६ ॥ याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ २७ ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ २८ ॥ गुणार्थत्वादुपदेशस्य ॥

---

ये तु सङ्ख्यां विनैव ब्राह्मणेनानेके मन्त्राः प्रत्येकं विनियुक्ताः, येषु वा लिङ्गविनियुक्तेष्वपि ब्राह्मण एवार्थवादाद्यर्थं प्रत्येकं पुनश्श्रुतिः, तत्र ये तावद्वचनविनियुक्तास्तेष्वदृष्टार्थत्वादेव प्रयाजादिवत्समुच्चयः अन्यथा तद्विनियोगवैयर्थ्यापत्तेः। लिङ्गविनियुक्तेष्वपि 'उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति उरु ते यज्ञपतिरिति पुरोडाशं प्रथयति' इत्यादिषु यथा आर्थवादिकं पुनश्श्रुतिप्रयोजनं तथा समुच्चयोऽपीति मन्यमानस्योत्तरं, दृष्टार्थत्वेऽपि वचनविनियोगस्य 'इषेत्वेति शाखां छिनत्ति' इतिवत् तत्र तत्र प्रयोजनान्तरार्थत्वेनोपपत्तेः न दृष्टार्थत्वसम्भवे तत्कल्पनम्। अतश्च निरपेक्षसाधनत्वबलाद्विकल्प एव।

एवं लिङ्गविनियुक्तेष्वपि मन्त्रपुनश्श्रुतेरर्थवादमात्रार्थत्वान्न मणिमन्त्रौषधन्यायेन समुच्चयकल्पकता। अत एव तत्र प्रथनमेवाध्वर्युकर्तृकत्वाद्यर्थं तत्तच्छाखासु विधीयत इत्युक्तम्।

---

ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात्।

ये तावद्वचनविनियुक्ता इति। लिङ्गरहिता अत एवार्थप्रकाशनरूपदृष्टप्रयोजनासंभवात् अदृष्टार्था इति समुच्चय इत्यर्थः। अन्यथेति। यदि ते दृष्टार्था भवेयुस्तदा लिङ्गेनैव तत्प्राप्तौ अनर्थको विनियोगविधिरन्यार्थः कल्प्येत न त्वेतदस्ति ; अतो दृष्टार्थत्वेन विधायकत्वेनैव विनियोगविधिसार्थक्यमन्यथा वैयर्थ्यापत्तेरित्यर्थः। अदृष्टार्थत्वेनोक्तं समुच्चयं तावन्निराकरोति— दृष्टार्थत्वेपीति। ये लिङ्गरहिता अपि मन्त्रास्तेषां लक्षणादिना प्रकाशकत्वेन दृष्टार्थत्वस्वीकारेपि विनियोगविधिर्यथा शाखां च्छिनत्तीति विनियोगः मन्त्रविभागप्राप्त्यर्थः तथेहापि प्रयोजनान्तरार्थमुपपद्यत एवेति न तद्बाधेनादृष्टार्थतयैव विनियोजक इति नादृष्टार्थत्वेन समुच्चयकल्पनं युक्तमित्यर्थः। समुच्चयकल्पकतेति। तत्तन्मन्त्रगतनिरपेक्षसाधनत्वबाधापत्तेः न समुच्चयकल्पकतेत्यर्थः। अर्थवादमात्रार्थत्वादिति। उरुप्रथस्व उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयतीत्यत्र मन्त्रविशिष्टप्रथनस्य विधानं मन्त्रस्य लिङ्गादेव प्राप्तेः मन्त्रांशो व्यर्थः तथापि यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयतीत्यर्थवादार्थं, अन्यथा पुरोडाशप्रथनमात्रविधाने सति यज्ञपतिप्रथनत्वेन स्तुत्यनुपपत्तेः मन्त्रविधाने तु पुरोडाशप्रथनस्यैव यज्ञपतिप्रथनत्वेनाशासितत्वात्

(१६)—वषट्कारे नानार्थत्वात्समुच्चयः हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥

समुच्चयो वा हौत्राणाम् ॥ ३१ ॥ समुच्चयं च दर्शयति ॥ ३२ ॥

ये तु क्रियमाणानुवादिनो हौत्रा मन्त्राः तेषामपि क्रियमाणकर्मस्मृतिजनकत्वेन दृष्टार्थत्वस्यैव मन्त्राधिकरणे कौस्तुभे स्थापितत्वात् करणमन्त्रवत् विकल्प इति प्राप्ते—

करणमन्त्रजन्यस्मृतेरनुष्ठानजनकत्वेन एकेन सिद्धावितरस्य वैयर्थ्यापत्तौ विकल्पः। प्रकृते त्वध्वर्युणा क्रियमाणस्य बहुक्षणव्यासक्तस्य कर्मणस्स्मृत्यविच्छेदार्थं पुनःपुनस्स्मरणादनेकैरपि मन्त्रैस्तत्तद्व्यापाराणां स्मरणोपपत्तेः अदृष्टदोषदुष्टविकल्पायोगेन युक्त एव समुच्चयः। अत एव 'त्रिः प्रथमामन्वाह त्रिरुत्तमां', 'ज्योतिष्मतीरनुब्रूयात्' इत्यादिकानि लिङ्गान्यपि सङ्गच्छन्ते।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वादशाध्यायस्य तृतीयः
पादः.

---

पुरोडाशप्रथनस्य यज्ञपतिप्रथनत्वोपपत्तेः अर्थवादार्थमित्यर्थः। अस्तु तर्हि अर्थवादार्थं मन्त्रमात्रविधानं, प्रथनं तु पुनः किमर्थं विधेयमित्यत आह—अत एवेति। शाखाभेदेन विधानात् न वैयर्थ्यमित्यर्थः।

---

हौत्रास्तु विकल्पेरन्नेकार्थत्वात्।

अत्राधिकरणमालायामस्य वर्णकद्वयमङ्गीकृत्य आद्ये वर्णके "उद्दिवँस्तभानाम्" इत्यध्वर्युपठनीयस्य करणमन्त्रस्य उच्छ्रयस्व वनस्पत इति मन्त्रेण क्रियमाणानुवादिना होत्रा उच्यमानेन सह विकल्पसमुच्चयचिन्ता कृता सा अयुक्ता सामान्यतः करणोपकारजनकत्वेन प्रयाजानूयाजादीनामिव विहितार्थस्मृत्यर्थत्वेनैकार्थ्यादपि करणमन्त्रस्यानुष्ठानप्राक्कालीनस्मृतिरूपकार्यार्थत्वात् क्रियमाणानुवादिनश्चानुष्ठानकालीनस्मृतिरूपकार्यार्थत्वात् भिन्नावान्तरकार्यभेदेन समुच्चयस्यैवापत्तौ विकल्पपूर्वपक्षस्यैवानुत्थानात्। सूत्रभाष्ययोश्च हौत्राणामेव विकल्पसमुच्चयचिन्ताविषयत्वप्रतीतेश्च। अत्र उच्छ्रयस्वेत्येका ऋक् समिद्धःश्रयमाण इति द्वितीया, ऊर्ध्वं ऊषुण इति तृतीया, ऊर्ध्वो नः पाहीति चतुर्थी इत्येवं क्रियमाणानुवादिमन्त्रचतुष्टयं होत्रा पठ्यते। तथाभूतेष्वेव क्रियमाणानुवादिषु परस्परं प्रकृतचिन्तामभिप्रेत्याह—ये त्विति। अत एव त्रिरिति। सामिधेनीमन्त्राणां क्रियमाणानुवादिनां विकल्पे प्रथमोत्तमशब्दयोर्ज्योतिष्मतीरिति बहुवचनस्य चानुपपत्तेस्समुच्चये लिङ्गत्वम्।

इति भाट्टदीपिकाप्रभावल्यां द्वादशस्य तृतीयः पादः

---

# अथ द्वादशाध्यायस्य चतुर्थः पादः

## (१)—जपाश्वाकर्मसंयुक्तास्स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयस्स्यादाशीःपृथक्त्वात् ॥ १ ॥ समुच्चयं च दर्शयति ॥ २ ॥

सन्ति जपसंज्ञकाः केचिन्मन्त्राः 'वैष्णवीमृचं जपति' इत्येवं जपतिचोदनया विनियुक्ताः। तत्र जपत्वं, नाम जपतिचोदनाचोदितत्वं, न तूपांशुप्रयोज्यत्वं जपत्वं, तथात्वे उपांशुयाजाङ्गभूतयाज्यायामपि जपत्वापत्तौ चातुस्स्वर्यापत्तेः। नाप्यर्थाविवक्षयाऽदृष्टार्थोच्चारणकत्वं तत्, मन्त्रजन्यार्थप्रकाशनस्यैव दृष्टाभावे अदृष्टार्थत्वकल्पनोपपत्तावर्थाविवक्षायां प्रमाणाभावात्। अत एव—

---

### अथ चतुर्थः पादः

#### जपाश्वाकर्मसंयुक्तास्स्तुत्याशीरभिधानाश्च।

समुच्चयतदभावमात्रं पादार्थः। तत्र समुच्चयाभावस्य विकल्पपर्यवसायित्वाद्विकल्पे प्रसङ्गस्य तदभावे समुच्चये सति तदभावाल्लक्षणसङ्गतिः। तत्र जपाश्वाकर्मसंयुक्तास्स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयःस्यादाशीः पृथक्त्वादिति सूत्रे जपस्तुत्यभिधायकानां मन्त्राणामुदाहरणतयोपादानात् तेषामेव विविच्य स्वरूपं दर्शयन् विचारविषयत्वमाह—सन्तीति। अत्र भाष्यकारेण जप व्यक्तायां वाचीत्यनुशासनेन जप्यते तद्वचनं जप इत्यवयवयोगेन जपशब्दार्थमुक्त्वा योगस्य स्तुत्यादिमन्त्रेष्वपि सत्त्वाज्जपत्वेपि ब्राह्मणपरिव्राजकन्यायेनेह स्तुत्याशीरभिधायकमन्त्रव्यतिरिक्तानामेव जपशब्देन ग्रहणमुक्तं तद्दूषयति। न त्विति। यद्यपि प्रयोज्यत्वमात्र एव स्मरणानुसारादिति हेतुः, न तूपांशुत्वेऽपि स्मरणस्य तावत्पर्यन्तव्यापाराभावात्, तथापि लोके उपांशुप्रयुज्यमानस्यैव जपत्वप्रसिद्धेः उपांशुत्वस्य प्रापकप्रमाणान्तरमभिप्रेत्योपांशुपदं प्रयुक्तम्। तथात्वे इति। प्रकृतसूत्रे जपपदेन ब्राह्मणपरिव्राजकन्यायेन स्तुत्यादिव्यतिरिक्तानां ग्रहणसंभवेपि याज्यादिमन्त्राणां वस्तुतो जपत्वाङ्गीकारे जपत्वेन पर्युदस्ततानस्वरानापत्त्या उदात्तानुदात्तस्वरितप्रचयरूपचातुस्स्वर्यस्यैवापत्तेरित्यर्थः। वार्तिककृतां जपलक्षणमनूद्य दूषयति—नापीति। स्वरयुक्ते जपादाविति। इन्द्रशत्रुर्वर्धस्वेत्यादौ विवक्षितार्थनिर्णायकस्वराभावे विवक्षितार्थाप्रतीतावुक्तायामर्थात्तादृशस्वरयुक्तेन विवक्षितार्थप्रतीतिर्भवतीति यदुक्तं तदर्थविवक्षायां प्रमाणमित्यर्थः। यदपि जप-

मन्त्रो हीनस्स्वरतौ वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। इति स्वरयुक्ते जपादावर्थप्रकाशनं दर्शयति। अत एव जपतिचोदनाचोदितेष्वपि न सर्वत्रादृष्टार्थत्वं करणमन्त्रत्वादेरपि सम्भवात्। स्तुतिस्तु गुणतात्पर्यकमभिधानमदृष्टार्थकमित्युक्तमेव स्तोत्रशस्त्राधिकरणे। फलाशासनमाशीः। तेषामपि श्रद्धाजननादिद्वारा कर्मण्युपयोगः। गुणविशिष्टगुणिप्रकाशनं अभिधानम्। एतेषां च क्वचित्साङ्कर्येऽपि न दोषः तत्तदुपाधेरसाङ्कर्यात्। तत्र ये तावदनुष्ठेयार्थप्रकाशकाः जपादयः तेषां करणमन्त्रत्वादेव विकल्पः, ये त्वननुष्ठेयसमवेतप्रकाशनार्थास्तेषां प्रकाश्यैकत्वेऽपि श्रद्धाजननादिद्वारा कर्मण्युपयोगादधिकतरश्रद्धाजननार्थं समुच्चय एव। ये त्वदृष्टार्थासमवेतप्रकाशनार्थास्तेषां प्रयाजादिवदेव समुच्चयः।

न चैकजपादिसमाख्यायोगादेककार्यत्वावगतेर्विकल्पाशङ्का, दृष्टार्थजपादौ कार्यभेदस्यावश्यकत्वेन सकलजपसाधारणैककार्यकल्पनानुपपत्तेः॥

---

## (२)—याज्यानुवाक्यासु तु विकल्पःस्याद्देवतोपलक्षणार्थत्वात्॥ ३॥ लिङ्गदर्शनाच्च॥ ४॥

ऐन्द्राबार्हस्पत्ये कर्मणि द्वे याज्यानुवाक्यायुगळे श्रुते। तयोर्देवताप्रकाशनरूपदृष्टार्थ-

---

मन्त्रमात्रस्यादृष्टार्थत्वं सामान्यत उक्तं तदप्ययुक्तमित्याह—अत एवेति। करणमन्त्रत्वादेरिति। आदिपदेन जपत्वेपि पाशमन्त्रस्य क्रियमाणानुवादित्वं पाशाधिकरणे वार्तिककृतोक्तं संगृह्यते। ततश्च क्रियमाणानुवादित्वेन यथा दृष्टार्थत्वं एवं करणमन्त्रत्वस्यापि संभवे भवत्येव तदित्यर्थः। क्वचित्साङ्कर्येपीति। तदुक्तं भाष्यकारेण एकस्मिंश्च मन्त्रे त्रितयमपि संभवति स्तुतिरभिधानं जपश्च, इदं विष्णुर्विचक्रमे इति यदि विष्णुर्बोध्यते ततः स्तुतिः। अथान्यस्मै वृत्तान्त आख्यायते ततोऽभिधानं। अथात्मनावधार्यते ततो जप इति। एवं च स्तुत्यादिस्वरूपस्यैकमन्त्रे समावेशेऽपि येनोपाधिना स्तुत्यादित्वं सिद्ध्यति तस्योपाधेस्तु पार्थक्येनैव सत्वेनासाङ्कर्यान्न दोष इत्यर्थः। स्पष्टार्थमन्यत्। अत्र च सूत्रे याजमानेष्विति प्रायिको निर्देश इति भाष्ये। तेनाध्वर्यवादिमन्त्राणामपि एतादृशानामुदाहरणत्वं ज्ञेयं; आशीः पृथक्त्वादिति च तत्तन्मन्त्रकार्यपृथक्त्वस्याप्युपलक्षणं तेनैतेषामेव परस्परं न विकल्पः, अपि तु समुच्चय इत्यर्थः।

---

याज्यानुवाक्यासु तु विकल्पः स्यात् देवतोपलक्षणार्थत्वात्।

द्वे याज्यानुवाक्यायुगले इति। 'इदं वामास्ये हविः' अय वां परिषिच्यत इत्येकं युगलं 'अस्मे इन्द्राबृहस्पती' 'बृहस्पतिर्नः परिपातु'' इत्यपरमित्येवं याज्यानुवाक्यायुगलद्वयमित्यर्थः।

त्वाद्विकल्प एव। **पुरोनुवाक्यायास्तु** याज्यया सह **पुरोनुवाक्यासमाख्याबलादेव समुच्चयः॥**

---

## (३)—क्रयेषु तु विकल्पस्स्यादेकार्थत्वात् ॥ ५ ॥ समुच्चयो वा प्रयोगद्रव्यसमवायात् ॥ ६ ॥ समुच्चयं च दर्शयति ॥ ७ ॥

सत्यपि **गुणात् क्रयाणां भेदे एकसोमप्राप्त्यर्थत्वाद्विकल्पः।** न च **विक्रेत्रानतिरूपकार्यानुरोधेन समुच्चयः** सम्भवत्समुच्चयो **वा, एकद्रव्यानतस्यैव विक्रेतुर्निरपेक्षसाधनत्वानु-**

---

**याज्ययासहेति।** पुरःपूर्वमनूच्यत इत्यवयवयोगेन निष्पादनीयायां पुरोनुवाक्यासमाख्यायां पूर्वत्वस्यापेक्षितस्य याज्यानिरूपितत्वं विनानुपपत्तेः पुरोनुवाक्यामनूच्य याज्यया जुहोतीति वचनेन तत्तद्भिन्नकालीनदेवताप्रकाशनरूपकार्यभेदावगतेश्च समुच्चय इत्यर्थः।

---

क्रयणेषु तु विकल्पः स्यादेकार्थत्वात्।

अत्र **प्राभाकरेण** सूत्रगतक्रयणपदानुरोधेन एकहायन्यादिद्रव्याणामेव क्रयसाधनानां विकल्पसमुच्चयचिन्तां कर्तुं क्रयस्तावन्नाजया क्रीणातीत्यादिवाक्येषु विधीयते ; तथात्वे अरुणावाक्ये क्रयानुवादेनानेकगुणविधाने वाक्यभेदापत्तेः। अतोऽरुणावाक्य एव विशिष्टक्रयविधानं, तत्रैवाजादिवाक्यैर्देशानां द्रव्याणां विधानमित्युपपादितम् ; तदयुक्तं, अरुणावाक्येन विहिते क्रये उत्पत्तिशिष्टैकहायन्यवरोधेऽजादीनां निवेशायोगात् द्रव्याणां विधानानुपपत्तेः, अतो गुणात्तत्तद्वाक्येषु भिन्ना एव क्रया विधीयन्त इत्येव युक्तम्। यद्यपि क्रयाणां तत्तद्द्रव्यकाणां भेदेन न क्रयद्रव्यगतविकल्पसमुच्चयचिन्ता शक्यते कर्तुं एकार्थत्वाभावात्, तथापि क्रयाणामेव तच्चिन्ताविषयत्वं सौत्रं च क्रयणपदं भावल्युडन्तत्वेन उपपादनीयमित्यभिप्रेत्याधिकरणपूर्वपक्षमाह-**सत्यपीति।** अत्र व्रीहिभिः कृतः पुरोडाशो न यवैः कर्तुं शक्यत इतीतरस्य द्रव्यस्य निवेशायोगात् भवतु विकल्पः, क्रयाणां तु पार्थक्येन विक्रेत्रानतिबाहुल्यसंपादकतया एकसोमप्राप्तिरूपे कार्ये निवेशसंभवात् सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहाय युक्तः समुच्चय इति प्राचीनैः सिद्धान्तितमनूद्य दूषयति —**न चेति। संभवत्समुच्चयो वेति।** समुच्चयस्य वचनविहितत्वाभावेनादृष्टार्थत्वाभावात् आनतिरूपदृष्टकार्यवशेन कल्पनीये तस्मिन् यावद्भिरेवानताद्विक्रेतुः सकाशात् सोमप्राप्तिः संभवति

**रोधेन** सम्पादनीयत्वात्। अन्यथा **दक्षिणानामपि प्राकृतानां ऋत्विगानत्यनुरोधेन समुच्चयापत्तौ प्रसङ्गबाधाद्यनापत्तेरिति प्राप्ते—**

'तं वै **दशभिः क्रीणाति' इत्यनुवादबलात् समुच्चयः। इदं हि विध्यन्तरैकवाक्यतापन्नत्वादनुवादसरूपत्वाच्चानुवाद एव। अतश्चैतत्तात्पर्यग्राहकानुरोधेन यावता विक्रेतुरानतिस्तावतां समुच्चयः। दक्षिणासु तु एवंविधज्ञापकाभावान्न समुच्चयः। एतदभिप्रायेणैव क्रयवत्सम्भवत्समुच्चयो विविदिषार्थकर्मणामित्युक्तं पितामहैः।**

**यदि तु पाक्षिकानुवादत्वपरिहारार्थमस्यैवोपरिधारणवत् विधित्वं विधिकल्पकत्वं वा विभाव्यते तदाऽस्तु समुच्चय एव।** पितामहानां **सम्भवत्समुच्चयोक्तिस्तु दार्ष्टान्तिकमात्रविषयिणीति** ध्येयम्।

---

तावतामेव समुच्चय इत्यर्थः। **संपादनीयत्वादिति। यदपि** यदा कदाचिदेकेनानतिर्न भवति तदा अवश्यं द्रव्यान्तरमपेक्ष्यं तच्च लाघवाच्छ्रुतमेव ग्राह्यं नाक्षेप्यमश्रुतं गौरवात्, तत्र वैरूप्यपरिहारार्थं सौकर्यं चालोच्याश्वशफादीनां निरपेक्षाणां क्रयसाधनत्वायोगाच्च प्रकरणात् सर्वेषामन्योन्यसापेक्षत्वं प्रकल्प्य स्वाननात् सोमः क्रीतोऽङ्गमित्येव सर्वाण्येव समुच्चित्य प्रयोगविधिर्गृह्णातीति प्राचां सिद्धान्तोपपादनं तत्प्रतिबन्द्या दूषयति—**अन्यथेति**। एवं न्यायेन समुच्चयसिद्धान्तासिद्धिमभिप्रेत्य "तं दशभिः क्रीणाति दशाक्षरा विराट् विराजमेव प्राप्नोति"इति वचनादेव तत्सिद्धिमाह—**तं वै इति। अनुवादसरूपत्वादिति** । वैशब्दोपबन्धादित्यर्थः। **एतभिप्रायेणैवेति।** अनुवादरूपत्वेन दशभिरेवेति नियमविध्यभावाभिप्रायेणैवेत्यर्थः। **पितामहानामिति।** क्रयवदिति समुच्चयमात्र एव दृष्टान्तः। तत्र समुच्चये यत्संभवत्वमुक्तं तद्दार्ष्टान्तिकविषयं तत्र सर्वकर्मसमुच्चयस्य ब्रह्मणापि संपादयितुमशक्यत्वादित्याशयः। **एतेन** न्यायप्राप्तानुवादकत्वे संभवति विधित्वाङ्गीकारस्यायुक्तत्वात विधित्वे च सत्यतत्यपूर्वपक्षायोगेन कृत्वाचिन्तात्वापत्तेः अनुवादकत्वमेव युक्तमिति **प्रकाशकारोक्तमपास्तं,** न्यायतः पूर्वोक्तरीत्या प्राप्तयसंभवे विधित्वस्य शतशोऽङ्गीकारात्। आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यादिति दाशमिकाधिकरणे वासांसि विस्रंसयतीति सिद्धवदनुवादान्यथानुपपत्तिकल्पितसमुच्चयविध्यभावमङ्गीकृत्य कृत्वाचिन्तात्वस्य स्वयमत्रत्यतृतीयपादाद्याधिकरणे स्वीकृतस्येहापि कृत्वाचिन्तात्वाङ्गीकारे बाधकाभावाच्च। प्रत्युत तत्रैव न्यायप्राप्तानुवादकत्वसंभवे विधित्वकल्पनमयुक्तं प्रकृते च युक्तमिति वैषम्यमिति।

---

## (४)— संस्कारे च तत्प्रधानत्वात् ॥८॥

दैक्षे पशौ 'गुदेनोपयजति' इति श्रुतानामुपयाजानां पशुगणे प्राप्तानां किं वैकल्पिकगुदसाधनता उत समुच्चिता इति चिन्तायां—

तृतीयया गुदस्य करणत्वावगमात् निषादस्थपत्यधिकरणन्यायेन लक्षणानुपपत्तेः उपयाजानामर्थकर्मत्वावसायात् उपादानलाघवानुरोधेन प्रकृतगुदग्रहणेऽपि विवक्षितसङ्ख्यात्वादेकस्यैव ग्रहणेन गुदानां विकल्प इति प्राप्ते—

अस्मदुक्तप्रयाजशेषाभिघारणन्यायेनोपयुक्तस्य गुदस्य प्रतिपत्त्यपेक्षत्वात् उपयाजप्रक्षेपांशेन वाक्यान्तरकल्पनया प्रतिपत्तित्वोपपत्तेश्श्रूयमाणकरणत्वाविघातात्तत्र च सङ्ख्याया अविवक्षितत्वात् सर्वेषामेव गुदानां समुच्चयः।

---

संस्कारे च तत्प्रधानत्वात्।

प्रतिपत्तिकर्मत्वं हि किं लोहितनिरसनकृष्णविषाणाप्रासनन्यायेन, अथवा प्रयाजशेषन्यायेन अथवा त्र्यङ्गन्यायेन वा भवेत्। न चात्र तद्धेतुरस्ति। तद्वत् द्वितीयाद्यभावात् प्रयाजशेषे तु प्रयाजशब्दसमासेन पूर्वकर्मसंबन्धावगतेः शेषशब्दश्रवणाच्च; परकीयत्वेनोपस्थितेः प्रतिपत्तिसापेक्षत्वेपीह तदभावाच्च स्विष्टकृद्यागस्य प्राकृतत्वेन प्रतिपत्तित्वावधारणादप्राकृतकार्यत्वापत्त्या तृतीयाभङ्गेनापि अनिज्याशेषाणि त्र्यङ्गाणि प्रति प्रति पत्तित्वोपपत्तावपीहोपयाजानामपूर्वाणां प्रतिपत्तित्वाऽनिश्चयात्। अतो जाघनीशब्दवत् गुदशब्दस्यावयवमात्रवाचित्वात् तत्साधनकमर्थकर्मैव पत्नीसंयाजा इवोपयाजाः। तत्र चैकेनाप्युपयाजयागनिष्पत्तेः संभवात् अन्यतमविकल्प इत्यभिप्रेत्य पूर्वपक्षमाह—तृतीययेति। दृष्टार्थत्वलाभाय प्राचां प्रयाजशेषवाक्य इव तृतीयाभङ्गाश्रयणशङ्कां निराकरोति—निषादेति। उपयुक्तस्येति। एकादशावदानगणमध्ये गुदतृतीयस्य भागस्य सत्वात् तेन कृते योगेऽवशिष्टस्याकीर्णकरतानिवृत्त्यर्थं प्रतिपत्तिसापेक्षत्वात् यागं प्रति गुणत्वेनान्वयेपि तदकाङ्क्षोपशमाभावात् प्रक्षेपांश एव तस्य प्रतिपादक इति वाक्यान्तरकल्पनया प्रक्षेपांशं प्रति प्रतिपाद्यत्वेन प्राधान्यात् यावत्प्रधानं प्रक्षेपाख्यसंस्कारस्य तन्त्रेणानुष्ठानात् समुच्चय इत्यर्थः। श्रूयमाणकरणत्वाविघातादिति। त्यागं प्रति करणत्वादविरोध इत्यर्थः। न चैवं प्रयाजशेषाभिघारणाधिकरणेन गतार्थत्वं, तत्रेह सिद्धस्यैव प्रतिपत्तित्वस्य धारणप्रयोजकत्वाप्रयोजकत्वविचारार्थमनूद्यमानत्वेन विषयभेदात्। अत एव स्विष्टकृद्वदेव उत्पत्तौ येन संयुक्तमिति न्यायेन प्रतिपत्तित्वसिद्धावपीह तत्प्रयोजनमात्रं कथ्यत इति न पौनरुक्त्यदोषः।

---

(५)—सङ्ख्यासु तु विकल्पस्स्यात् श्रुतिप्रतिषेधात् ॥ ९ ॥

अग्न्याधेयाङ्गदक्षिणानां 'एका देया षड्देया' इत्यादीनां निरपेक्षसाधनत्वात्समुच्चये सङ्ख्यान्तरोपजननापत्तेर्विकल्प एव। न चैकवाक्यतालाभायोपजायमानसङ्ख्यान्तर एव लक्षणा सर्वेषामिति वाच्यं, प्रत्यक्षविधिश्रवणेन वाक्यभेदस्यैव प्रामाणिकत्वात् ॥

---

(६)—द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात् तया विकल्पेन नियमप्रधानत्वात् ॥ १० ॥ द्रव्यत्वेऽपि समुच्चयो द्रव्यकर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥ कपालेऽपि तथेति चेत् ॥ १२ ॥ न कर्मणः परार्थत्वात् ॥ १३ ॥ प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ श्रुतेऽपि पूर्ववत् स्यात् ॥ १५ ॥ विकल्पोऽन्वर्थकर्मनियमप्रधानत्वात् शेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥

पशुगणेऽतिदेशप्राप्तपत्नीसंयाजेषु जाघनीनां समुच्चयो विकल्पो वेति चिन्तायां—

दर्शे तावत्पत्नीसंयाजानामर्थकर्मत्वादाज्येन सह जाघन्या विकल्पेन गुणभावोऽविवाद एव। दैक्षेऽपि च तथैवातिदेशेन प्राप्तौ पुनश्श्रूयमाणं 'जाघन्या पत्नीस्संयाजयन्ति' इति वचनं लाघवादाज्यव्यावृत्तिफलकजाघनीनियमार्थमेव, न तु पत्नीसंयाजानां जाघनीप्रति-

---

संख्यासु विकल्पः स्यात् श्रुतिविप्रतिषेधात्।

षड्देयेत्यादीनामिति। आदिपदेन द्वादश देया इत्यस्य संग्रहः। सङ्ख्यान्तरेति। सप्तैकोनविंशतिसंख्यान्तरोपजननापत्तेः श्रुतैकषडादिसंख्याविप्रतिषेधापत्तेश्च विकल्प इत्यर्थः।

---

द्रव्यविकारं च पूर्ववदर्थकर्म स्यात्।

न त्विति। सौत्रामण्यामाश्विनसारस्वतसुत्रामदेवताकेषु पशुषु चोदकप्राप्तानां संस्कारकर्मणां पशुपुरोडाशयागानामिन्द्रवरुणसवितृदेवत्यत्वविधानात् अर्थकर्मत्वात् अप्राकृतकार्यत्वं ;

पत्त्यर्थत्वेन विधानार्थं, सत्यप्यत्र जाघन्याः प्रतिपत्त्यपेक्षत्वे पत्नीसंयाजानामप्राकृत-कार्यकारित्वप्रसङ्गेन प्रतिपत्त्यर्थत्वकल्पनानुपपत्तेः ।

अत एवास्य वचनस्य नियममात्रपरत्वेऽपि प्रयाजशेषाभिघारणन्यायेन पार्थ-सारथ्युक्तरीत्या नियमस्यैव जाघनीसंस्कारार्थत्वकल्पनमित्यप्यनाशङ्क्यं, नियमस्यापि प्रकृतौ क्लृप्तप्रयोजनत्वात् । अस्मदुक्तरीत्या पत्नीसंयाजानामेव प्रतिपत्त्यन्तरविधिकल्पना त्वनाशङ्क्यैव । अतश्चानेन वचनेन यथाप्राप्ताया गुणभूताया विवक्षितसङ्ख्यायाश्च नियम-मात्रकरणादुपादानलाघवानुरोधेन प्रतिपत्त्यन्तराभावेनोपस्थितायास्तस्यास्त्यागे प्रमाणा-भावाच्च प्रकृतग्रहणेऽपि पशुगणे एकसङ्ख्याया एव विकल्पेन ग्रहणम् ॥

---

## (७)—उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥ तस्य च देवतार्थत्वात् ॥ १८ ॥ विकारो वा नित्यस्याग्नेः काम्येन

---

तद्वत् पत्नीसंयाजानामप्यप्राकृतकार्यत्वं न दोषाय । इयांस्तु विशेषः; तत्र देवतान्तरविधानबलात् संस्कारकर्मणस्सतः अर्थकर्मत्वं, इह तु जाघन्यास्तद्व्यतिरिक्ताग्नीषोमीयदैवत्यैकादशावदानार्थलब्ध-पशवनुविष्पन्नाया लोहितशकृद्वत् प्रतिपत्त्यपेक्षत्वात् दृष्टार्थत्वाच्चाप्राकृतकार्यार्थमेव वचनमिति न नियमार्थत्वेनैव वचनस्यार्थवत्त्वे संभवति अप्राकृतकार्यार्थत्वकल्पने मानाभावात् । पशुपुरोडाशानां तु वचनानुपपत्त्या तत्कल्पनमिति विशेष इत्यर्थः । क्लृप्तप्रयोजनत्वादिति । यदि नियमस्य प्रयोजनं कल्प्यं स्यात् तदा जाघनीसंस्कार एव तत्त्वेन कल्प्येत तत्तु क्लृप्तमेव प्रकृतौ जाघनीति-यमात् अदृष्टं ; तत्तु प्रकृतावाज्येनापि कदाचित्सिद्ध्यति कदाचिज्जाघन्या तत्रेह पुनर्विधानाज्जाघनी सर्वदा साधनं भवति नाज्यमित्येतावत्कल्प्यते न प्रयोजनान्तरं । हविरभिघारणे त्वक्लृप्त-प्रयोजनस्य हविराधारतानियमस्य कल्प्यमाने फले हविस्संस्कार एव युक्तः तत्त्वेन कल्पयितुमिति वैषम्यमित्यर्थः । अनाशङ्क्यैवेति । पत्नीसंयाजानामप्राकृतकार्यार्थतापत्त्या कर्मान्तरता-पत्तेरिति शेषः । अत एव यत्र त्र्यंगैः स्विष्टकृतं यजतीत्यादौ स्विष्टकृतो न प्राकृतकार्यार्थत्वबाधः तत्रेष्टमेव त्र्यङ्गप्रतिपत्तित्वमिति भावः । अभिघारणस्य तु प्रतिपत्त्यर्थत्वकल्पने नैव दोष-प्रसक्तिरित्यर्थः । त्यागे मानाभावाच्चेति । गुणत्वेनान्वयेपि नान्तरीयकतया प्रतिपत्तेरपि जननात् प्रतिपत्त्याकांक्षोपशम उपपद्यत इति भावः ।

---

तदुक्तहेतुः ॥ १९ ॥ वचनादसंस्कृतेषु कर्म स्यादिति ॥ २० ॥ संसर्गे चापि दोषस्स्यात् ॥ २१ ॥ वचनादिति चेदथेतरस्मिन्नुत्सर्गापरिग्रहः कर्मणः कृतत्वात् ॥ २२ ॥

अग्नौ उख्यः अग्निः 'सन्तापेनाग्निं जनयति' इत्यनेनोत्पन्नः। तत्रोखा आहवनीयाग्निधारणपात्रं यजमानगळे शिक्येनाब्दमात्रं ध्रियते। तस्मिन् पात्रे ध्रियमाणाहवनीयोऽग्निरुख्यः। तत्र दीक्षोत्तरकालत्वादग्निहोत्रहोमाद्यकरणेऽपि क्रत्वर्था होमाः क्रियन्ते। तं प्रकृत्य 'वृक्षाग्रात् ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यात् आग्रादन्नाद्यकामस्य' इति श्रुतम्। तदिह काम्यप्रयोगे नित्यस्योख्यस्याहवनीयादेर्बाधविधया प्रसङ्गसिद्धिरस्ति न वेति चिन्तायां—

नात्रोखाधिकरणकावधानश्रितो आग्रादिरग्निः फलोद्देशेन विधीयते येन गोदोहनेनेव चमसस्य प्रसङ्गसिद्धिराशङ्क्येत। अवधानस्य विध्यन्तरविहितत्वाभावेनाश्रयत्वानुपपत्तेः। अतोऽवधानमेवाग्निविशिष्टमुखाधिकरणकं फलोद्देशेन विधीयते। आहवनीयाग्निधारणप्रयुक्तोखोपजीवकत्वाच्च न बहिः प्रयोगः। उख्यस्याहवनीयाग्नेरग्न्यन्तरसंसर्गोऽपि च वाचनिकत्वान्न दुष्यति। अतश्च फलार्थमग्न्यन्तरावधानमात्रकरणेऽप्याहवनीयरूपस्य नित्यस्योख्यस्य बाधाभावादत्रैव होमादीनीति प्राप्ते—

विध्यन्तरविहितत्वाभावेऽपि होमार्थमेव धारणाक्षिप्तावधानस्यार्थप्राप्तत्वेनोपस्थितत्वादाश्रयत्वोपपत्तेर्लाघवाद्गुणफलसम्बन्ध एवायमिति नित्यस्योख्यस्य निवृत्त्या प्रसङ्गसिद्ध्युपपत्तिः॥

---

उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात्।

अग्निहोत्रहोमाद्यकरणेपीति। तदकरणे दीक्षितो न ददाति न जुहोति इत्यादि निषेधप्रवृत्तेर्हेतुत्वं दीक्षोत्तरकालत्वादित्यनेन सूचितम्। बाधविधयेति। इतः पूर्वं समुच्चयतदभावविचारेऽपि समुच्चयाभावस्य विकल्पपर्यवसानेन विकल्पेऽन्यतरेणान्यतरस्य कार्यसिद्धेः प्रसङ्गमभिप्रेत्य सङ्गतिः सूचिता। अत्र तु समुच्चयाभावस्यैकतरबाधपर्यवसानविधया एकेन बाधितस्य कार्यसिद्धेः प्रसङ्गात सङ्गतिरवधेयेत्यर्थः। अवधानाश्रित इति। अवधानं नियोगापरपर्यायं उखायां धारणं। नित्यस्योख्यस्येति। तथा च पुरुषार्थसमासक्तेः काम्यं नित्यस्य बाधकं विशेषतश्च सामान्ये पूर्वप्राप्ते प्रवर्तनादिति तार्तीयन्यायेन बाधात् उक्तस्यस्य नित्यस्य निवृत्तिरित्यर्थः।

---

(८)—स आहवनीयस्स्यादाहुतिसंयोगात् ॥ २३ ॥ अन्यो वोद्धृत्य धारणात् ॥ २४ ॥

**सोऽयं काम्याग्निराहवनीयपदवाच्यस्स्यात् होमसाधनत्वात्। अतस्तत्राहवनीयधर्मा गतश्रीधारणाद्याः कार्या इति** सम्भवमात्रेणाशङ्का। आधानजन्य**संस्कारविशेषवाचका आहवनीयादिशब्दाः नासति तस्मिन् संस्कारे वर्तितुमर्हन्ति। तस्मान्नात्र गतश्रीधारणादयः।**

वस्तुतस्तु—**गतश्रीत्वे निमित्ते आहवनीयधारणं पुरुषार्थमिति नासौ तद्धर्मः क्रतुप्रकरणाभावात् स्वरूपे आनर्थक्याच्च।** इदं च **सुहृद्भूत्वा प्रसङ्गादुपदिष्टम्। एवमग्रेऽपि।**

---

**स आहवनीयः स्यादाहुतिसंयोगात्।**

**संभवमात्रेणेति।** अयमर्थः न ह्याहवनीयशब्दे अवयवयोगार्थप्रतीतिः कस्यचिदप्यस्ति औपासनादावतिप्रसंगात् अहुतिसंबन्धात्प्रागपि आहवनीयपदप्रयोगाच्च। इतरथा गवादिपदानामपि रूढत्वानापत्तेः। अत आहवनीयपदवाच्यत्वाभावेऽपि धार्यो गतश्रिय इत्यत्र धार्य इति कृत्यप्रत्ययेनाध्येतव्य इत्यत्र स्वाध्यायस्येव आहवनीयस्य संस्कार्यत्वावगतेः धारणमिदं संस्कारकर्म आहवनीयस्थानापन्ने काम्याग्नावपि भवत्येवेति। अत एव होमसाधनत्वात् आहवनीयपदवाच्यत्वं यदुक्तं तदपि होमसाधनत्वहेतुकस्थानापत्त्या आहवनीयस्थानापन्नत्वतात्पर्यकमेवेति संभवपदेन सूचितम्। प्रथमत आहवनीयशब्दस्य यौगिकत्वासंभवेन सिद्धान्तमाह—**आधानजन्येति।** स्थानापत्त्या धर्मप्राप्तिं निरस्यति—**वस्तुतस्त्विति।** अस्यानारभ्याधीतत्वेन कर्मानङ्गसंस्कारस्य वैयर्थ्यात् आहवनीयस्य सतो धारणविधानात् आहवनीयस्वरूपेप्युपयोगासंभवात् नाहवनीयसंस्कारकमिदं धारणम्। अत एव तव्यप्रत्ययमनीप्सितकर्मार्थकमङ्गीकृत्याग्निहोत्रदर्शपूर्णमासादियत्किंचित्कर्मार्थोद्धृताहवनीयगुणकं धारणं फलार्थमेव विधीयत इति पुरुषार्थमित्यर्थः। अत्र तन्त्ररत्ने प्रासंगिकमेतदधिकरणमित्युक्तं तदाहवनीयकाम्याग्न्योः पूर्वत्रेवेहाप्याहवनीयधर्माणां बाधसमुच्चयचिन्तनात पादसंगतेः आतिदेशिकयाश्चानन्तरसंगतेश्चोपपत्तेरनादरणीयमित्युक्तं प्रकाशकारैः, तदयुक्तमिति सूचयितुमाह—**इदं चेति।** **अयमर्थः**, न केवलं बाधाभ्युच्चयचिन्तामात्रेण मुख्या लक्षणसङ्गतिः संभवति, धारणादिधर्मबाधस्य प्रसङ्गोपयोगित्वाभावात्। यदि हि बाधकेनैव बाध्यमानस्य कार्यं सिद्ध्येत् तत्र भवति प्रसङ्गो यथा काम्याग्निना नित्याग्नेः, न त्वेवमिह धारणस्य कश्चन धर्मो बाधकोऽस्ति येन धारणकार्यस्यान्यतस्सिद्ध्या प्रसङ्गः स्यात्।

(९)—तस्मिंस्तु संस्कारकर्म शिष्टत्वात् ॥ २५ ॥ स्थानात्तु परिलुप्येरन् ॥

अत एव काम्येऽग्नौ नाधानादयस्संस्काराः असंस्कृतस्यैव तस्य आश्वादिपदवाच्यत्वात् तस्मिन् मथनाद्यसम्भवाच्च। आधानस्य क्रत्वर्थत्वाभावेन तस्मिन् प्राप्त्यभावाच्च। क्रत्वपूर्वसाधनीभूतास्तु परिस्तरणसम्मार्गादयो भवन्त्येव ॥

---

अतो द्वारलोपात् बाधविचारस्य दशम एव कर्तव्यस्येह लक्षणार्थप्रसंगानुपयोगात् प्रसंगिकी—सङ्गतिस्तन्त्ररत्नोक्ता युक्तैवेति। अत्र च नवमे धारणे च परार्थत्वादित्यधिकरणे साधितेन पुरुषार्थत्वेन धारणादीनामप्राप्तिः सिद्धापि पुनरिह शिष्यहितार्थमुक्तेति सुहृत्पदेन सूचितम्।

---

तस्मिन् संस्कारकर्म शिष्टत्वात्।

गतश्चेधारणस्याहवनीयसंस्कारकत्वाभावात् अस्त्वप्रवृत्तिः आधानस्य तत्संस्कारत्वात् तत्स्थानापन्ने स्यात इत्यधिकरणान्तरारंभः। तत्राधाने मन्थनं, मथितस्य संभारेषु स्थापनमिति पदार्थद्वयं तत्र मन्थनस्योत्पत्त्यर्थत्वात् तस्य वृक्षादित एव संभवेन स्थानापत्त्या निवृत्तावप्याधानस्य तु होमकार्यादृष्टार्थत्वात् स्थानापन्ने काम्येऽग्नावपि भवत्येव प्राप्तिरिति वृक्षादाहृतमाधानेन संस्कृत्य होतव्यमिति प्राप्तामाशंकां निराकरोति—अत एवेति। यत एव आश्वाद्याहृताग्नेः नाहवनीयपदवाच्यत्वमत एव ये आहवनीयरूपादृष्टोत्पत्त्यर्था आधानादयः तेनेत्यर्थः। असंस्कृते आहवनीयपदवाच्यत्वाभावं द्रढयति—असंस्कृतस्यैवेति। आहवनीयस्य साङ्गाधानजन्यत्वेऽपि मथनमात्रस्य पूर्वोक्तरीत्या बाधेपीतराङ्गमात्रसहिताधानादेव प्रमाणवलात् गोदोहनजनितप्रणयनात् दर्शपूर्णमासापूर्वस्येव आहवनीयत्वस्यापि काम्येऽग्नौ उत्पत्तिः संभवति, तथापि स एव धर्मः स्थानापत्त्याऽतिदिश्यते, यः स्थानापन्ननिवर्त्यपदार्थस्य कार्यं प्रति अङ्गभूतः, यथा प्रणीताकार्यश्रपणाङ्गभूता धर्मा दधिपयसोः यथा वा यागांगभूतास्सोमधर्माः तत्स्थानापन्ने फलचमसे। अतश्च नित्योस्त्यकार्यहोमांङ्गभूतधर्माणां प्राप्तावपि आधानस्य होमानङ्गभूतत्वात् न प्राप्तिस्संभवतीत्यभिप्रेत्याह -आधानस्येति। आधानस्य गार्हपत्याहवनीयरूपाग्निद्वयजनकत्वस्वाभाव्यात् गार्हपत्ये विद्यमाने पुनस्तदुत्पत्तेः प्रयोजनाभवात अग्निद्वयजनकाधानस्य नैव प्राप्तिरिति तन्त्ररत्नोक्तयुक्त्यंतरस्याप्युपलक्षणमेतम्। स्पष्टमन्यत। इहाप्याहवनीयधर्माणामाधानादीनां बाधाभ्युच्चयचिन्तया प्रकाश-

(१०)—नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधस्स्यात् ॥ २७ ॥ नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ २८ ॥

नित्ये तूख्ये गतश्रीत्वे निमित्ते आहवनीयत्वादेव प्राप्तमप्यजस्रधारणं 'न प्रतिसन्दध्यात्' इत्यनेन पर्युदस्तत्वान्न कर्तव्यमेवेत्यपि प्रासङ्गिकमेव ॥

---

काराणां मुख्यसङ्गतित्वोपपादनं तत्पूर्वोक्तरीत्याऽयुक्तमिति अत्रापि प्रासङ्गिकी सङ्गतिरिति एवमग्रेपीत्यनेन प्रागेव सूचितम् ।

---

**नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात् ।**

अधिकरणद्वयेन काम्योख्ये धर्माणां बाधसमुच्चयचिन्तां प्रासङ्गिकीं परिसमाप्य प्रसङ्गादेव नित्योख्ये गतश्रीत्वप्रयुक्तधारणधर्माणां उपस्थानादिधर्मैः पाक्षिकस्य समुच्चयस्य बाधस्य च विचारार्थमधिकरणान्तरम् । अत एव नित्योख्यस्याहवनीयात सन्तापनेन जनितस्याधानेन पूर्वसंस्कृतत्वात् आधानानुष्ठानाभावात् नाधानेन समुच्चयबाधचिन्ता किंतु गतश्रीधारणरूपधर्म एव व्यवहित एवेत्यपि ध्येयम् । तत्रैव यथैव गार्हपत्यात् प्रणीतस्याहवनीयस्य न गार्हपत्यत्वं तथैवाहवनीयादुत्पादितस्योख्यस्यापि नाहवनीयत्वमित्याहवनीयविषयस्य गतश्रीधारणविधेः पुरुषार्थतया च तत्स्थानापन्नत्वेनाप्रवृत्तेर्धारणाप्राप्तौ "न प्रतिसमिन्धीत यत्प्रतिसमिन्धीत तत् भ्रातृव्यमस्मै जनयति" इति धारणनिषेधानुपपत्तेः निषेधान्यथानुपपत्त्या कल्प्यमानतद्विधेर्गतश्र्यगतश्रीसाधारणप्राप्तिकल्पने विहितप्रतिषिद्धत्वात् विकल्पः । तेन गतश्रियाऽगतश्रिया वा विकल्पेन नित्योख्यधारणं कर्तव्यमित्याशङ्कां निराकरोति—**नित्ये तूख्य इति**। पिता गार्हपत्यः पुत्र आहवनीय इति व्यवस्थितनिर्देशात् विनियोगभेदाच्चाहवनीयस्य गार्हपत्यत्वायोगेपि प्रकृते तादृशभेदकव्यवस्थितनिर्देशाभावे आहवनीयत्वाभावे प्रमाणाभावात् यदेव पुरुषार्थं धारणं आहवनीयस्य गतश्रीत्वे निमित्ते विहितं तस्यैवोख्यविषये पर्युदासः । तच्च गतश्रीकस्यैव प्राप्तं पर्युदस्यत इति अगतश्रीकेणेव गतश्रीकेणापि उख्यस्याहवनीयस्य धारणं नित्यं न कार्यमित्यर्थोपपत्तौ न विध्यन्तरकल्पनं युक्तमित्यर्थः। अत्र च नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात्, नित्यधारणाद्वा प्रतिषेधो गतश्रिय इति पूर्वोत्तरपक्षप्रतिपादकसूत्रयोर्यद्यपि प्रतिषेधपदं श्रुतं तथापि विहितप्रतिषिद्धत्वे विकल्पापत्तेः पर्युदासपरतया नेयमिति सूचयितुमाह—**पर्युदासत्वादिति** ।

---

(११)—परार्थान्येकः प्रतियन्तिवत्तत्राहीनयोर्यजमानगणेऽनियमोऽविशेषात् ॥ २९ ॥

**सत्राहीनादावप्यनेकयजमानसमवाये यानि न यजमानसंस्कारार्थानि शुक्रान्वारम्भणौदुम्बरीसम्मानादीनि तान्येकेनैव यजमानेन कर्तव्यानि कर्तुर्गुणत्वेन विवक्षितसङ्ख्यात्वात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वाच्च इतरेषां तेनैव प्रसङ्गात् फलसिद्धिः।** नतोऽहीनादाव**नियम** एव ॥

---

(१२)—मुख्यो वा विप्रतिषेधात् ॥ ३० ॥

सत्रे तु **गृहपतिरेव तानि कुर्यात् इतरेषामार्त्विज्यावरोधात्** ,

---

**परार्थानि एकः यजमानगणे**

यद्यपीह समुच्चयतदभावरूपविचारस्य पादार्थभूतस्यासंभवः शुक्रान्वरंभणादौ यजमानसमुच्चयपूर्वपक्षसंभवेप्यौदुम्बरीसम्मानादौ सर्वयजमानसमुच्चयासम्भवेन तदसम्भवात्। अतस्समुच्चयाभावनिरूपणप्रसङ्गादिहापि तदभावः प्रसङ्गफलकः प्रतिपाद्यते उत्तरविवक्षयेति प्रासङ्गिकी सङ्गतिः। अनियमो वा विशेषादित्युत्तरसूत्रार्थं लाघवादत्रैव दर्शयति—**तेनाहीनादाविति।**

---

**मुख्यो वा विप्रतिषेधात्।**

सूत्रे पूर्वोक्तानियमस्य अपवादमाह—**सत्रे त्विति।** एतेन मुख्यो वा विप्रतिषेधादित्यत्रत्यसूत्रे सत्रे गृहपतेरसंयोगात् हौत्रवदित्युत्तरसूत्रगतं सत्रे इति पदं काकाक्षिगोलकन्यायेनेहापि सम्बन्धनीयमिति सूचितम्। **आर्त्विज्यावरोधादिति।** यद्यप्यौदुंबरीसंमानादौ नार्त्विज्यविरोधः[1] तथापि शुक्रग्रहान्वारंभे सर्वैः क्रियमाणे तत्कालीनऋत्विक्कर्तव्यपदार्थलोपापत्तेः विरोध इत्यर्थः। ननु शुक्रान्वारम्भकाले सुब्रह्मण्यकार्यकारिणस्तावद्यजमानस्य नान्यत्कर्मास्ति एवमन्यस्यापि यस्य नान्वारंभतुल्यकालीनं कर्म तस्य तु नैव विरोध इति अन्वारंभकर्तृता सम्भवत्येव। अत एव यस्य होत्रादेः सदोमण्टपस्थित्यादिकर्मास्ति तत्तुल्यकालीनं तस्य विरोधान्न तत्कर्तृकत्वं, न ह्येतावता

1. A. नार्त्विज्याव

गृहपतिसमाख्याया नियामकत्वाच्च । 'यो वै सत्रे बहूनां यजमानानां प्रत्येता स भूयिष्ठामृद्धिमाप्नोति' इति तस्य फलाधिक्यश्रवणेन यजमानश्रेष्ठत्वावगमाच्च ।

---

(१३)—सत्रे गृहपतिरसंयोगाद्धौत्रवत् आम्नायवचनाच्च ॥ ३१ ॥ सर्वैर्वा तदर्थत्वात् ॥ ३२ ॥ विप्रतिषेधे परम् ॥ ३३ ॥ हौत्रे परार्थत्वात् ॥ वचनं परम् ॥ ३५ ॥

ये पुनर्यजमानसंस्काराः ते सर्वेषामेव । सत्यपि गृहपतेः फलभूयस्त्वे अन्येषामपि फलभोक्तृत्वावश्यंभावात् कर्तृत्वाविशेषाच्च द्विविधानामपि संस्काराणामविशेषप्रतीतेः ।

---

विरुद्धानां सम्भवतामपि अन्वारंभकर्तृकत्वत्याग इति अनियम एवाहीन इव दुर्वार इत्यतो हेत्वन्तरमाह—गृहपतिसमाख्याया इति । गृहस्य कर्मणः पतिरित्यर्थकसमाख्यया इतरापेक्षयाऽस्याकर्मकरत्वगुणेन यजमानकर्मकर्तृत्वस्यासाधारण्येन प्रतीतेः तस्यैव नियमः । अत एव सूत्रे विप्रतिषेधस्य हेतुत्वेन उपादानमभ्युच्चययुक्तित्वेन सत् समाख्यारूपहेतूपलक्षणमेव ज्ञेयमिति भावः ।

---

**सत्रे गृहपतिरसंयोगात् हौत्रवदाम्नायवचनाच्च ।**

गृहस्य कर्मणः पतिरित्येवं प्रवृत्ता समाख्या, कर्मपतित्वं च कर्मजन्यफलभोक्तृत्वं, तच्च सर्वेषामेवाविशिष्टमिति एकस्मिन्नेव गृहपतिसमाख्याऽनुपपन्ना सती फलविशेषस्वाम्येनैवोपपादनीया । नहि फलविशेषो निर्निमित्तस्संभवतीति सामग्रीभूयोल्पत्वमवश्यं कल्पनीयम् । तत्र प्रधानमालस्य तु सर्वैरप्यनुष्ठानात् तत्कृतसामग्रीभूयस्त्वस्य वक्तुमशक्तेः ये फलयोग्यतार्थाः संस्काराः योग्यताजननद्वारा फलसामग्र्यन्तर्गताः तैरेव सामग्रीभूयस्त्वं कल्पनीयमिति ते संस्काराः समाख्योपपत्त्यै गृहपतेरेव भवेयुः न त्वन्येषामित्याशङ्कां निराकरोति—ये पुनरिति । सत्यपीति । अयमर्थः न समाख्या फलविशेषस्वाम्येन; किन्तु यथाऽन्यो गृहपतिः कर्म न करोति अन्ये पुनः कर्मकरा भवन्ति एवमयमपि कर्मकरत्वाभावादेवेतरापेक्षया गृहपतिरिति व्यपदेष्टुं शक्यत्वात् अन्यथानुपपत्त्यभावेन नैकल्यैव फलसामग्रीभूयस्त्वकल्पनं प्रमाणवत् । यत्तु पूर्वोदाहृतवाक्ये गृहपतेः

यत्र त्वार्त्विज्यसंस्कारयोर्विरोधः तत्र द्विविधस्यापि संस्कारस्यार्त्विज्यं प्रति गुणत्वादङ्गगुण-विरोधन्यायेनार्त्विज्यस्यैवानुग्रहो न संस्काराणाम्। 'ये यजमानास्त ऋत्विजः' इति प्रत्यक्ष-वचनेनार्त्विज्ये यजमानकर्तृकत्वस्य प्रत्यक्षशिष्टतया चोदकप्राप्तसंस्कारबाधोपपत्तेश्च ॥

---

(१४)—प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ३६ ॥ स्मृतेर्वा स्याद्ब्राह्मणानाम् ॥ ३७ ॥ फलचमसविधानाच्चेतरेषाम् ॥ ३८ ॥ साम्नाय्येऽप्येवं प्रतिषेधस्सोमपीथत्वात् ॥ ३९ ॥ चतुर्धाकरणे च निर्देशात् ॥ ४० ॥ अन्वाहार्ये च दर्शनात् ॥ ४१ ॥

प्रसङ्गात् ब्राह्मणस्यैवार्त्विज्यं उत त्रयाणामपि वर्णानामिति चिन्तायां—विद्वत्त्वाविशेषात्त्रयाणामपि।

---

फलविशेषश्रवणं न तत् फलसामग्रीभूयस्त्वेन प्राप्तानुवादकं किन्तु वचनेनैवावबोधितमिति कल्पनान्नैव विरुद्धमतो द्विविधा अपि संस्कारास्सर्वेषामपि कर्तव्या इति विप्रतिषेधे परमिति अतत्यसूत्रान्तरेण दर्शितमर्थमाह—यत्र त्वार्त्विज्येति। अध्वर्य्वादीनां स्वस्वसंस्कारतुल्यकालीनः तत्तत्कर्तृक एवार्त्विज्यः पदार्थोऽनुष्ठातुं प्रसक्तः। तत्र द्वयोरेककालेऽनुष्ठानविरोधः तत्रेत्यर्थः। आर्त्विज्यं प्रति गुणत्वादिति। यद्यपि कर्तृसंस्काराणां कर्तृसंस्कारत्वात् कर्तुश्च साङ्गप्रयोगाङ्गत्वात् कर्तृद्वारा प्रधानाङ्गत्वस्येवार्त्विज्यं प्रत्यङ्गत्वं संभवति, फलिसंस्काराणामञ्जनादीनां तु तृतीये फलिसंस्कारत्वस्यैवोक्तेः प्रकरणादिनावगताङ्गभावानां सर्वतोपि प्रधानभूतफलप्रतिग्रहार्थत्वात् प्रधानकल्पत्वमेवेति नार्त्विज्यं प्रति गुणत्वमुपपद्यते तथापि अञ्जनादीनामपि कर्तृसंस्कारकत्वे विद्यमानेपि वरणस्येव दृष्टकर्तृत्वानुपयोगात् यावत् तत्कर्तृसंपाद्यफलमङ्गप्रधानसाधारणं तद्भोक्तृत्वांशे उपयोगकल्पनेन प्रधानफले योग्यताधानवत् आर्त्विज्यजन्योपकारांशेपि योग्यताधानोपपत्तेः तत्प्रत्यपि गुणत्वमिति भावः। विप्रतिषेधे करणः समवायविशेषात् इति तार्तीयन्यायेनातिदेशिकापेक्षयैवोपदेशिकस्य प्राबल्यादप्यार्त्विज्यस्यैव करणमित्याह—ये यजमाना इति।

---

प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात्।

विप्रतिषेधे परमिति पूर्वसूत्रे आर्त्विज्यप्राबल्ये उक्ते तत्प्रसङ्गादागतं विचारमाह— प्रसङ्गादिति। यद्व्याख्यास्याम इति। ब्राह्मणा ऋत्विज इत्यस्य दर्शपूर्णमासादिप्रकरण-

यत्तु 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका' इत्यनेन ब्राह्मणस्यैव याजनमुक्तं तत्पुरुषार्थम्। अतश्च क्षत्रियवैश्ययोः प्रत्यवायं सोढ्वाऽपि आर्त्विज्यकरणे न क्रतुवैगुण्यमिति प्राप्ते—

'यज्ञं व्याख्यास्यामः' इत्युपक्रम्य 'ब्राह्मणाः ऋत्विजः' इति कल्पसूत्रकारैः कात्यायनादिभिरार्त्विज्योद्देशेन ब्राह्मण्यविधानात् मन्त्रार्थवादेतिहासादौ तत्तद्भ्रमकसत्त्वाच्च ब्राह्मणस्यैवार्त्विज्यमिति सिद्धम्। तदेवं निरूपितौ द्वादशभिरध्यायैर्धर्माधर्मौ।

---

पाठाभावेनानारभ्याधीतत्वात् पुरुषार्थ एव याजनादौ ब्राह्मण्यविधानोपपत्तेः ब्राह्मण्यस्य क्रत्वङ्गत्वे मानाभाव इत्याशङ्कमपाकर्तुं यज्ञं व्याख्यास्याम इत्युपक्रम्येत्युक्तम्। ततश्च यत् प्रातिस्विकवाक्यैः यज्ञपरिभाषारूपेणाग्रे विधीयते तस्य यज्ञार्थत्वज्ञापनार्थोऽयं यज्ञं व्याख्यास्याम इत्ययमुपक्रमः। तेन यज्ञमात्राङ्गार्त्विज्योद्देशेन ब्राह्मण्यविधानात् तदन्यार्त्विज्ये यज्ञवैगुण्यं स्यादेवेत्यर्थः। मन्त्रार्थवादेति। दर्शपूर्णमासयोः पुरोडाशचतुर्धाकरणेऽध्वर्युणा कृते याजमाने प्रतिदिशं भागव्यूहने यजमानपठनीये ब्राह्मणानामिदं हविः सौम्यानां, निर्भक्तो ब्राह्मणः नेहाब्राह्मणस्यास्तीति मन्त्रेऽब्राह्मणानां शेषभक्षणाभावप्रतीतेः सोमार्हाणां सोमपीथिनामिति विशेषणाच्च न क्षत्रियवैश्ययोः आर्त्विज्यं, तस्य सोमभक्षस्य निषेधेन, तत्स्थाने यदि राजन्यमित्यनेन वचनेन फलचमसभक्षविधानेन सोमपीथित्वायोगात्। अत एव सोमपीथित्वाभावेनैवार्थवादोक्तेन हेतुना सान्नाय्ये राजन्यवैश्ययोः भक्षं प्रतिषेधति "न राजन्यो वैश्यो वा सान्नाय्यं पिबेत् असोमपीथो ह्येष" इति। तथा दार्शपूर्णमासिकान्वाहार्यदक्षिणाविधिवाक्यशेषः—त एते वै देवा हुतादो यत् ब्राह्मणा यदन्वाहरतीति। तथा महाभारते राजयाजकयाज्येषु यथा दत्तं हविर्नश्येदिति हविर्नाशो राज्ञो याजकत्वनिमित्त उक्तः। एवं रामायणेपि—

क्षत्रियो याजको यस्य चण्डालस्य विशेषतः।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः॥

इति। अतः क्षत्रियवैश्ययोर्याजकत्वे क्रतुवैगुण्यस्यैव तत्र तत्र प्रतीतेः ब्राह्मणपदश्रवणाच्च तस्यैवार्त्विज्यं नेतरयोः इति। द्वादशलक्षणात्मकमीमांसाशास्त्रप्रमेयमर्थं विचारितमुपसंहरति—तदेवमिति। एवं द्वादशलक्षणमीमांसाशास्त्रार्थसङ्ग्राहकग्रन्थकरणं चित्त—

जैमिनेर्विमलसूक्तिषु मग्नं
शुद्धिमाप निमलां मम चेतः ॥
प्रीतिमेतु नृहरेः पदपद्मे
येन जन्मनिवहो न पुनस्स्यात् ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वादशाध्यायस्य चतुर्थः पादः
भाट्टदीपिका
समाप्ता

---

शुद्धयुत्पादनद्वारा मम चेतसो भगवच्चरणयोः प्रीत्युत्पादकं भूयादिति प्रार्थयते—जैमिनेरिति। मग्नं सदित्यर्थः। तया शुद्धया प्रतिबन्धकापगमात् प्रीतिमेत्वितियोजना।

गुरूपदेशाच्च विभावनाभिः निर्णीय मूलार्थमतिश्रमेण।
कृतं मया टिप्पणमेतदार्यैः संशोधनीयं गुणदोषविद्भिः ॥ १ ॥

न यस्य शास्त्रेस्ति गतिर्न बुद्धेः कुशाग्रता नो बुधसङ्गतिश्च।
अथापि सोऽहं प्रचकार टीकां गुरुप्रसादैकसमाश्रयेण ॥ २ ॥

जानन्तु मूलार्थमथाक्षिपन्तु स्वच्छन्दमन्ये च समर्थयन्तु।
तथापि यश्श्रीगुरुसेवनाप्ततत्वार्थवक्ता विरलस्स कोऽपि ॥ ३ ॥

अधीतिकाले कथितं प्रमेयं यत्पूज्यपादैर्लिखितं मया तत्।
अतिक्रमस्तेन चिरन्तनानां जातोऽपि नासौ मम दोषकारी ॥ ४ ॥

श्रीबालकृष्णकविमण्डनसूनुशंभोः श्रीखण्डदेवचरणाम्बुजसेवकस्य।
एषा कृतिर्विविधदोषयुतापि दृश्या मूलार्थशोधनकरीति सदाशयानाम् ॥ ५ ॥

प्रभावली हार्दतमोविनाशिनी मीमांसकानां स्पृहणीयदर्शना ।
श्रीपार्वतीवल्लभपादपद्मयोः नीराजनार्थं भवतादियं मम ॥ ६ ॥

यः खण्डदेवनामा सन् श्रीधरेन्द्राभिधां गतः ।
स गुरुर्मे विजानातु टीकाकृतिपरिश्रमम् ॥ ७ ॥

वेदर्तुमुनिविधुभिर्गुणिते वत्सरे शुभे ।
ज्येष्ठे कृष्णे रुद्रतिथावियं टीका समापिता ॥ ८ ॥

वर्षे नेत्रद्विसप्तद्विजपतिगणिते मासि ज्येष्ठे करर्क्षे
वारे जैवे प्रभाते सकलपितृतिथौ प्रोष्ठपद्याः परस्य ।
काश्यां श्रीब्रह्मनाले निरुपमचरितः खण्डदेवाभिधानः
प्राप्तः श्रीब्रह्मभावं विबुधवरगुरुः श्रीधरेन्द्रो यतीन्द्रः ॥ ९ ॥

**इति श्रीपूर्वोत्तरमीमांसापारावारीणधुरीणश्रीखण्डदेवान्तेवासि-**
**कविमण्डनबालकृष्णभट्टात्मजश्रीशम्भुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां द्वादशाध्यायस्य**
**चतुर्थः पादः ।**
**समाप्तश्चायमध्यायः ।**
**ओं श्रीगणेशशारदागुरुभ्योनमः ।**

# Index of Adhikaraṇasūtras

## INDEX OF CITATIONS

# ERRATA

| *Page* | *Line* | *For* | *Read* |
|---|---|---|---|
| ४९४ | १५ | बाधास्तु | बाध्यास्तु |
| ५१७ | ५ | दद्गिणा | दक्षिणा |
| ५२४ | १ | अ ९ | अध्या १० |
| ५३४ | १४ | प्राजापत्यय | प्राजापत्यम् |
| ५३४ | १९ | धेबू | धेनू |
| ५६२ | ६ | वैर्थ्य | वैयर्थ्य |
| ५९८ | १४ | साबन्धिेन | सम्बन्धेन |
| ८५१ | ९ | वाग्विसर्जोहवित्कृता | वाग्विसर्गो हविष्कृता |
| ८३० | ७ | स्यत् | स्यात् |
| ८५२ | १ | वग्यमा | वाग्यमा |
| ९२८ | १२ | वरणपि | वरणमपि |
| ९६४ | १ | शिदत्वा | शिष्टत्वा |
| ९६८ | ६ | तिर्घाताथषु | निर्घातार्थेषु |
| ९९९ | ८ | परस्य | परस्य ? |
| १०२३ | ८ | हवींत्य | हवींष्य |
| १०२३ | ११ | आहवतीये | आहवनीये |
| १०२३ | १२ | यज्ञवात्रैः | यज्ञपात्रैः |
| १०२५ | ५ | गृहोतो | गृहीतो |

# ERRATA

| *Page* | *Line* | *For* | *Read* |
|---|---|---|---|
| ३२ | ३ | सिद्धरि | सिद्धेरि |
| ६३ | १० | अतिदेशप्राप्ते | प्राप्तेः |
| ६४ | ७ | विधियते | विधीयते |
| ११३ | १७ | अमिक्षो | आमिक्षो |
| ११६ | १२ | प्यस्तु | प्यहस्तु |
| १२० | १४ | विधिवा | विधिरेवा |
| १३८ | ४ | यागाप्रयुक्ता | यागप्रयुक्ता |
| १६० | २२ | तथाप्युनु | तथाप्यनु |
| १८१ | १ | प्रातिप्रतिक | प्रातिपदिक |
| १८२ | १२ | नारयणेन | नारायणेन |
| १८३ | २० | चतुर्थन्तो | र्थ्यन्तो |
| १८४ | ३ | तियमात् | नियमात् |
| १८४ | १८ | द्रेव्यत्वे | द्रैव्यत्वे |
| २८८ | ११ | ऋृगक्षर | ऋगक्षर |
| २८९ | १२ | अत | अतो |
| २९७ | २१ | दशमिक | दाशमिक |
| ३७२ | ४ | ड्देश्य | उद्देश्य |
| ३८२ | १९ | इत्युम् | इत्युक्तम् |